जनसमाज ] को इसका अध्ययन, श्रवण और मनन करना चाहिये। महर्षियों ने धर्म के विषय में इसे परम प्रमाण माना है और अपने शास्त्रों की प्रामाणिकता तथा प्रतिष्ठा के लिये बड़े आदर से इसके सिद्धान्तों और वाक्यों को उद्धृत किया है। इसमे वेदों के अर्थों का ही संग्रह और उपदेश है, तथा आप्त महाजनों ने इसे आचार-व्यवहारों मे चिर परम्परा से अपनाया है; इस कारण भी मनुष्यों के लिये श्रेयस्कर और अभ्युदय-विधायक यह मानव धर्मशास्त्र सर्वथा पठनीय और मननीय है।

## ७ अस्य व्याख्यानयोग्यता

[२६]वेदशास्त्रार्थसारत्वात्, [२७]सूत्रवद्बहुसूचनात्, नानार्थशब्दभूयस्त्वाद्, अस्तीदं सर्वतोमुखम्;
अतः सर्वपथीनानि व्याख्यानानि मनीषिणाम्, (१)नित्य-(२)सामयिकाऽर्थानि जयन्तीह मनुस्मृतौ।
वस्तुतस्त्वार्षशास्त्रार्थो विश्वरूपस्त्रिकालगः, शब्दा ऋषिप्रयुक्ताश्च सर्वे सर्वार्थवाचकाः।
त्रिकालाबाधितं वाक्यं सत्यार्थं विश्वतोमुखम्, सर्वार्थदर्शनादार्षं, शास्त्रं सर्वार्थशासनात्।
एतदेवार्षवाक्यानामार्षत्वं परमाद्भुतम्, यतस्त्रैकालिका भावा उन्मिषन्ति नवा नवाः।
अतो मानवशास्त्रेऽपि नानाव्यार्थदर्शनम्, नैव टीकाकृतां किंचिद् दूषणं, किन्तु भूषणम्।
वस्तुतः सर्व एवार्थाः प्राचां ग्रन्थेषु संस्थिताः, तन्नवीकरणं भाष्यैरिष्टं लोकप्रवृत्तये।
यथा मन्दचमत्कारं जीर्णवस्त्रं नृभिः पुनः क्षालितं धार्यते, तद्वत्-शास्त्रं च प्रतिसंस्कृतम्।
सर्वथा लोकविक्रुष्टं, पुमर्थाऽनुपयोगि वा, शास्त्रं वस्त्रमिवाऽत्यन्तं शीर्णं सद्भिरुपेक्ष्यते।
तदा चावश्यकं शास्त्रं नवीनं, नववस्त्रवत्, किन्तु नो सर्वथा किंचिन्नवीनं भवितुं क्षमम्।
यद्यपि प्रकृतिः सूते विश्वं नित्यं नवं नवम्, तथापीह यथापूर्वं सर्वभावोऽनुवर्तते[२८]।
दृश्यतेऽत्यन्तसादृश्यं पूर्वपूर्वस्य वस्तुनः, उत्तरोत्तरभावेषु, तस्मा "न्नाऽनीदृशं जगत्"।
एवं पुंसां विचारोऽपि सर्व एव पुरातनः, वर्त्तमानो, भविष्यंश्च, प्रवाहादनुवर्त्तते।
अतः प्रवाहनित्यत्वं शास्त्राणामुपवर्णितम्, तस्मान्नाऽनीदृशं शास्त्रं किंचिदत्र प्रवर्तते।
प्राचीनता नवेष्वस्ति, प्राचीनेषु नवीनता, सा, सामान्य-विशेषाभ्यां, शास्त्रार्थेष्वनुवर्तिषु।
तस्माच्छास्त्रस्य साधुत्वे तद्योग्यत्वं प्रयोजकम्; पुराणत्वं, नवत्वं वा,[२९] तत्राकिंचित्करं मतम्।
सर्वप्राचीनशास्त्रार्थः सर्वदैवानुवर्तते, नव्यभाष्यादिरूपेण नानावाङ्मयजन्मना।
नवत्वे रमणीयत्वं,[३०] ततो लोकरुचिग्रहः, ततः प्रवृत्तिर्, इत्यर्थं शास्त्रेऽपि नवतेष्यते।
वारम्वारं यथापूर्वं कृतं, लौकिककार्यवत्, नव्यरूपार्थवच्छास्त्रं पुनरुक्तं च रोचते।
वस्तुतस्तु जगत्सर्वं पुनरावर्त्ति दृश्यते, पुना रात्रिंदिवं तत्तदेवमादि निदर्शनम्।
एवमावर्तते शास्त्रे पूर्वाचार्यपरम्परा, साम्यादस्ति विचाराणां शास्त्रार्थः पुनरुक्तवत्।

---

२६. मनु० २, ७ भाष्यं द्रष्टव्यम्।

२७. "अल्पाक्षरम्, असंदिग्धं, सारवद्, विश्वतोमुखम्, अस्तोभम्, अनवद्यं च सूत्रं सूत्रविदो विदुः" [ माध्वभा० १, ११ ] इति वेदान्तिनः। धर्म-गृह्य-श्रौत दर्शन-व्याकरणादिसूत्राणि बहूनि सन्ति। शाब्दिकास्तु—"संज्ञा च, परिभाषा च, विधिर्, नियम, एव च, अतिदेशोऽधिकारश्च, षड्विधं सूत्रलक्षणम्" इत्याहुः। "नाटकोपकरणं प्रस्तावः सूत्रम्" इति नाट्यशास्त्रिणः। 'तन्तुः' इति लौकिकाः। शास्त्रीयवह्वर्थसूचकसंक्षिप्तवाक्यविशेषः सूत्रम्।—२८. "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" [ तै० आ० ना० उ० १, १४ ] [ मनु० १, २८-३० भाष्यं द्रष्टव्यम् ] वा० पु० ५७-३९-४९। मात्स्ये० १४२, ४०-४९।

२९. "पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यम्,
सन्तः परीक्ष्यान्यतरद्भजन्ते, मूढः परप्रत्ययनेयबुद्धिः" [ मा० अ० १, २ ]

३०. "क्षणे क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः" [ शि० व० ४, १७ ]

देश-कालादिभेदेन मिथोऽज्ञातविचारयोः पुंसोरुद्यन् समो भावः प्रमाणं पुनरुक्तिषु।
तदेतन्मानवं शास्त्रं व्याख्यानार्हं युगे युगे; पुनरुक्तोऽपि शास्त्रार्थः श्लाघ्यो लोके नवोदयः।
एकं चापि यथा ह्यन्नं नानारूपेण साधितम्, रोचते, स्वदते, चैवं पुंभ्यः शास्त्रं नवार्थकम्।

यह मानव धर्मशास्त्र वेद-शास्त्रों का सार और सूत्र-रूप है। अतः विद्वानों ने इस पर नाना विचार के अनेक उत्तमोत्तम व्याख्यान बनाये हैं। आर्ष वाक्य स्वभावतः व्यापक अर्थ वाले और काल की बाधा से रहित होते हैं। सभी कालों पर उनका समान प्रभाव रहता है और यही उनकी विशेषता है कि समयानुसार उनसे नये नये अर्थ निकलते हैं। अतः आर्ष मानव धर्मशास्त्र पर से अनेक नवीन अर्थों को अभिव्यक्त करना टीकाकारों का कोई दूषण नहीं, प्रत्युत भूषण है। वस्तुतः तो कोई भी वस्तु या विचार नवीन नहीं है। जगत् की तरह ही विचारों की परम्परा भी अनादि और अनन्त है। दिन, रात, मास, ऋतु और उनके प्रभावों की तरह ही, पूर्वकालीन अत्यन्त समानताओं के साथ, विचारों की भी पुनरावृत्ति होती रहती है। विभिन्न देश-कालों में उत्पन्न, विभिन्न भाषावाले, और परस्पर के विचारों से सर्वथा अपरिचित, दो विद्वानों के हृदयों में कभी कभी अत्यन्त समान भाव उठता है, इससे भी विचारों की पुनरावृत्ति और प्रवाहनित्यता सिद्ध होती है। अतः सभी शास्त्र वस्तुतः पुनरुक्त होते आये हैं और आगे भी होते जायँगे। किन्तु इस पुनरुक्ति, आवृत्ति, या परिवर्तन, में ही जीवन, आकर्षण, और व्यावहारिकता है। अतः नये नये व्याख्यानों द्वारा शास्त्रों की भी पुनरुक्ति आवश्यक होती है। उसमें पूर्व का बहुत अर्थसाम्य रहने पर भी, बहुत भिन्नता और विशेषता भी होती है। उसका, नई भाषा और नई पद्धति के द्वारा, नये रूप में परिणत हो जाना ही लोकाकर्षण और प्रवर्तन का हेतु होता है। अतः मनुस्मृति के ऐसे सर्वतोमुख आर्ष शास्त्र का व्याख्यान, यथाप्रयोजन, प्रत्येक पीढी में होना चाहिये।

## ८ पूर्वव्याख्योपयोगः

देश-कालादिभेदेन[31] व्यवस्थापरिवर्तनात्, भाष्य-टीका-निबन्धानां जायते हि प्रयोजनम्।
अतस्तदनुरोधेन स्वकालोचितयुक्तिभिः, विद्वद्भिरार्षशास्त्राणां व्याख्यानं क्रियते नवम्।
तत्सर्वं साधु मन्तव्यं बुद्धिसंमर्दनिर्मितम्, उत्तरोत्तरवंशानां क्रमशो ज्ञानवर्धनम्।
ऋषीणामृणशोधं यज् ज्ञानयज्ञेन पूर्वजाः, कुर्वन्ति, तत्फलं ग्रन्थैः परलोकेषु* जायते।
तस्मात्परम्पराप्राप्तं ज्ञानं ग्रन्थेषु सञ्चितम्, धनं पैत्रमिवादेयं उत्तरैरधिकारिभिः।
खण्डनं, मण्डनं, सर्वं युक्तिमत्त्वेन बुद्धिजम्, विमृश्यकारिणा ध्येयं विचारस्य विशुद्धये।
दोषदृष्टिर्न कर्तव्या मतभेदेऽपि पूर्वजे, तद्विचारोपयोगः स्यादात्मबुद्धिविशोधने।
किन्तु लोकेऽननुष्ठानान्मृता ये पूर्वजोदिताः शास्त्रार्था,स्तत्र कर्तव्यं पुनर्भाष्यं नवार्थकम्,
अतोऽस्मिन्मानवे शास्त्रे मेधातिथ्यादयो बुधाः[32], तत्तत्कालोचितैरर्थैः स्वव्याख्याः समयोजयन्।

---

३१. "मनु० १, ८५ भाष्यं द्रष्टव्यम्। * उत्तरकालीनजनेषु।

३२. (१) 'असहायः' "अतोऽसहाय—मेधातिथि—प्रभृतीनां व्याख्यानमेव चतुरस्रं, न भारुचेः [भागुरेः]" इति या० स्मृ० २, १२४ मिताक्षरायाम्। "अत्रासहायेनोक्तम्" इत्यादि मनु० ९, १८२ विषये विवादरत्नाकरे पुत्रातिदेशतरङ्गे पृ० ५८३ च द्रष्टव्यम्। अयं 'असहायः' ई० ६००-७५० कालीनः संभाव्यते। (२) 'भर्तृयज्ञः' "व्याख्यानान्तराणि भर्तृयज्ञेनैव सम्यक्कृतानि, इति तत एवावगन्तव्यानि सर्वथा प्रमाणमूलानि" इति मनु० ८, ३ मेधातिथिभाष्यम्। अयं ई० ८०० कालिकः। (३) 'यज्वन्' मनु० ८, १५१, तथा १५६ मे० भा० उदाहृतः। (४) 'उपाध्यायः' मनु० २, १०९। ४, १६२। ५, ४३। ९, १४१ तथा १४७ मे० भा० स्मृतः। (५) 'ऋजुः' मनु० ८, १५२ मे० भा० उद्धृतः।

"इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम् ,सर्वं न्याय्यं युक्तिमत्त्वाद् ,विदुषां किमशोभनम्[33]"
एतन्न्यायेन ताः सर्वा आदर्त्तव्या भवन्ति नः पूर्वव्याख्याः,स्वबुद्धौ स्याद्भूयसी तत्सहायता ।

देश, काल, परिस्थिति, लोकप्रवृत्ति, और सामाजिक आवश्यकताओं के अनुसार, लौकिक-पारलौकिक आचार-व्यवहारों के परिवर्तन से, उनके मूलभूत विचारों और शास्त्रीय व्यवस्थाओं में भी परिवर्त्तन हो जाता है; अतः तदनुकूल नये भाष्य, टीका और निबन्धग्रन्थों की आवश्यकता होती है । इस लिये विद्वान् लोग, परम्परागत प्रमाणभूत मूल आर्ष शास्त्रों पर, अपने समय के उपयुक्त, नवीन व्याख्यान बनाते हैं । यद्यपि उस समय के निकल जाने पर, कालिक प्रभाववाले ग्रन्थों की लोकोपयोगिता और व्यावहारिक आवश्यकता मन्द पड़ जाती है; तथापि पूर्वजों के ऋषि-ऋणशोधक ज्ञान-यज्ञ का फल, ग्रन्थों के द्वारा ही, भावी सन्तानों को मिलता है, और उससे उत्तरोत्तर मानव ज्ञान का संवर्धन होता है । अतः ग्रन्थों में निहित परम्परागत ज्ञान को, पैतृक सम्पत्ति की तरह, योग्य उत्तराधिकारियों को, अपनी बुद्धि की शुद्धि और समृद्धि के लिये, अपनाना चाहिये । बुद्धिपूर्वक और युक्तियुक्त किया गया खण्डन या मण्डन, सब कुछ बुद्धि के मार्जन और विकास के लिये उपादेय है; अतः पूर्व ग्रन्थकारों से मतभेद होने पर भी, उनमें दोषदृष्टि या हेय-बुद्धि नहीं करनी चाहिये । हाँ, अवश्य ही, पूर्व व्याख्याकारों से समर्थित भी, जो आचार-व्यवहार लोक में प्रयुक्त न होने से स्वतः मर चुके हों, उनके विषय में नये भाष्यों द्वारा नई व्यवस्था करनी ही चाहिये । इसी लिये इस मानव धर्म शास्त्र पर भी, मेधातिथि-प्रभृति महापण्डितों ने अपने समय के उपयुक्त भाष्य बनाये । ऋषियों ने मूल शास्त्रों में भी नाना रूप मे विभिन्न पद्धतियों से तत्त्वों का निरूपण किया है, वह सभी युक्तिसङ्गत होने से न्यायतः उपयुक्त है, सद्बुद्धियुक्त जो मतभेद है, वह विद्वानों का दूषण नहीं है। इस लिये मनुस्मृति की सद्युक्तिमयी पूर्व व्याख्यायें भी हमें आदरणीय हैं; उनके समय की सामाजिक अवस्था उनसे हमको विदित होती है; और अन्ततः उनसे अपने विचारों में तो बड़ी सहायता मिलती ही है ।

## ९ एतद्भाष्य-प्रयोजनम्

तासु ये शाश्वता धर्मा ऋषिदृष्टा निरूपिताः , ते तथैव समादेयाः सर्वदैव महाजनैः ।
ये तु सामाजिकाऽऽचार-व्यवहारा निवेशिताः , देशकालस्थितिप्रोत्था,स्तद्व्याख्याऽपेक्ष्यते नवा ।

---

( ६ ) 'कोवरविष्णुस्वामी' मनु० ९, २५३ मे० स्मृतः । ( ७ ) 'भागुरिः "एतच्च भागुरि-मेधातिथि-वृत्तिकाराणामनुमतमित्याह" विवाद-रत्नाकरे अस्वामिविक्रयतरंगे मनु० ८, १९८ विषये [ वि० र० पृ० १०४ ]

( ८ ) 'मेधातिथिः' "मनुभाष्य" कारः; ई० ८२५-९०० मध्ये स्थितः ।

( ९ ) 'भोजदेवः' मनु० ८, १८४ कुल्लूकेन स्मृतः; ई० १०००-१०५० मध्यवर्ती । ( १० ) 'गोविन्दराजः' "मन्वाशयानुसारिणी"कारः; ई० १०५०-११०० कालीनः । ( ११ ) 'धरणीधरः' मनु० २,८३ । ४, ५० कुल्लूक निर्दिष्टः; ई० ११००-१२०० मध्यकालभवः । ( १२ ) 'कुल्लूकः' "मन्वर्थमुक्तावली"कृत्; ई० ११५०-१३०० कालभवः । ( १३ ) 'नारायण-सर्वज्ञः' "मन्वर्थविवृति"कारः; ई० ११००-१३०० मध्ये जातः । ( १४ ) 'उदयकरः' वि० र० पृ० ४५५, ५६०, ५८३, ५९०, "मनु टीकायामुदयकरः" इत्यादि निर्दिष्टः; ई० १३०० कालिकः । ( १५ ) 'राघवानन्द सरस्वती' "मन्वर्थचन्द्रिकाकृत"; ई० १४०० । ( १६ ) 'नन्दनाचार्यः' "नन्दिनी"कारः । ( १७ ) 'गङ्गारामसूनुः-मणिराम दीक्षितः' "सुखबोधिनी"कृत् । ( १८ ) 'रुचिदत्तः' । ( १९ ) 'रामचन्द्रः' । ( २० ) 'काश्मीरी' कश्चित् । अपरे च बहवो मनुटीकाकृतः श्रूयन्ते ।

३३ भा० ११, २२, २५ ।

अतश्च स्मृतिभेदोऽपि दृश्यते युगभेदतः[३४], "प्रतिमन्वन्तरं चैवं श्रुतिरन्या विधीयते[३५]"
मूलशास्त्रेऽपि चेदेवं योग्यं स्यात्परिवर्त्तनम्, का कथा भाष्य-टीकादेर्नवायां प्रतिसंस्कृतौ।
मन्वाशयबुभुत्सूनामस्मिन् काले सहायकम्, मूलतात्पर्यसात्म्यार्थं, भाष्यं किंचिदपेक्ष्यते।
तस्मादत्र नवं भाष्यं मनोः शास्त्रे विधीयते, भूयसाऽऽर्षमहावाक्यैर्विद्यास्थान* समुद्धृतैः।
वस्तुतः प्राच्यमेवैतद्भाष्यं, तत्संग्रहो नवः, प्राचां शास्त्रे विकीर्णस्य मनुभाष्यस्य संग्रहात्।
चिरादार्षी विलुप्ताऽस्ति वाङ्निर्वचनपद्धतिः, रूढिवादेन शब्दानां यौगिकार्थाश्च बाधिताः,
तत्प्रवर्तनमात्रं नः, प्रायः प्राचीनशब्दतः, अत्रेष्टं न स्वतन्त्रं तु किञ्चिदर्थप्रकल्पनम्;
तस्मादन्वर्थकं नाम ग्रन्थस्यास्य सुनिश्चितम्, 'आर्षभाष्य' मिति, प्रायेणार्षवाक्यैः प्रभाषणात्।
सर्वज्ञानमयो वेदः, सर्ववेदार्थविन्मनुः, अतस्तद्वाङ्मयं शास्त्रं सर्ववेदमयं मतम्।
तस्माद्वेदवदेवास्य यथायोग्योपबृंहणम् इतिहास-पुराणाभ्याम्, एतद्भाष्यप्रयोजनम्[३६]।

उन प्राचीन टीकाओं में प्रतिपादित आर्ष सनातन धर्म [ वर्णाश्रमाचार, दशक धर्मादि, मनु० ६, ९२ ] तो सदा ही जनता के ग्राह्य हैं; किन्तु देश, काल, परिस्थिति आदि से उत्पन्न जो सामाजिक आचार-व्यवहार [ विवाह, पुत्रातिदेश, जातीय उच्च-नीचता, अस्पृश्यता, और विषम दण्डप्रणयन आदि ] उनमें विहित हैं, उनके विषय में परिवर्तित परिस्थिति के अनुसार नई व्यवस्था की आवश्यकता है। ऐसी व्यवस्थायें युगानुरूप शास्त्रप्रणयन-द्वारा सदा से होती आई हैं। युग युग मे, या प्रत्येक मन्वन्तर मे, श्रुति-स्मृतियों का भी परिवर्तन और व्यास-समास होता रहता है, भाष्य-टीका आदि के नवीकरण की तो बात ही क्या ! इस समय भी इस मानव धर्मशास्त्र के रहस्य-जिज्ञासुओं की सहायता के लिये, मूल आशय को प्रकाशित करनेवाला भाष्य अपेक्षित है। इस लिये, प्रायः विद्यास्थान-वेदादिशास्त्रों से उद्धृत आर्ष महावाक्यों द्वारा ही, इस पर नवीन भाष्य किया जा रहा है। वस्तुतः तो यह भाष्य प्राचीन ही है, यहां पुरातन आर्ष शास्त्रों में बिखरे हुए मनुभाष्य का यथास्थान संग्रहमात्र नया हो रहा है। शास्त्रीय शब्दों के निर्वचन की आर्षी प्रक्रिया बहुत समय से लुप्त हो गई है, और रूढिवाद से आर्ष शब्दों के यौगिक अर्थ बाधित हो गये हैं। पूर्वाचार्यों के ही शब्दों में पुनः उनका प्रचार करना मात्र यहाँ हमारा ध्येय है; अतः इस भाष्य में किसी अर्थ की मनमानी कल्पना नहीं की जायगी। प्रायः आर्ष वाक्यों द्वारा ही सम्पादित होने के कारण इस ग्रन्थ का 'आर्षभाष्य' यह सार्थक नाम रखा गया है। वेद सर्वज्ञानमय है, और मनुजी सभी वेदों के अर्थज्ञ हैं, सुतरां उनका धर्मशास्त्र सर्ववेदमय है, अतः वेद की तरह ही इसका भी इतिहास-पुराणों के द्वारा उपबृंहण करना इस भाष्य का प्रयोजन है।

---

३४ परा० स्मृ० १, २२। म० भा० शां० २३१, २७; तथा २६०, ८। मनु० १, ८५ भाष्यं द्रष्टव्यम्। अत्र पश्चाद्दत्तं १४ संख्यकं टिप्पणं पश्यत।

३५. मात्स्ये १४५, ५८। वायौ च ५९, ५६।

* विद्यासंविभागं [ ४ प्रकरणं ] पश्यत।

३६. "सर्वस्यैव हि शास्त्रस्य, कर्मणो वापि कस्यचित्, यावत्प्रयोजनं नोक्तं, तावत्तत्केन गृह्यते। सिद्धार्थं, ज्ञातसम्बन्धं, श्रोतुं श्रोता प्रवर्तते; शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः"। [ श्लो० वा० १२ तथा १७ ] "येष्वपि तद्ग्रन्थेषु विस्पष्टानि आदित एवारभ्य प्रयोजनानि ज्ञायन्ते, न चैषां श्रवण-ग्रहण-धारणेषु महान् खेदः, तेष्वपि जिज्ञासूत्साहार्थं पूर्वं प्रयोजनानि एव निबध्यन्ते, 'धर्मं व्याख्यास्यामो' 'यज्ञं व्याख्यास्याम' इत्येवमादिभिः" [ मी० तं० वा० १, ३, ८, २४ ]

## १० व्याख्यानपद्धतिः

अत्र वाक्यावतारेषु, पूर्वापरसमन्वये, विरोधपरिहारे च, तात्त्विकार्थप्रदर्शने,
अन्यार्थाऽऽलोचने, किञ्च, मूलशब्दनिरुक्तिषु, स्वीयाः श्लोकाः प्रयोक्ष्यन्ते, परेषां तत्समर्थने;
तत्राऽपि मुख्यतस्त्वार्षं वाक्यमेव प्रयोक्ष्यते, क्वचित्तदविरोधेन विद्वद्वाक्यं च युक्तिमत्।
अत्र नित्यार्थकं वाक्यम्, एकवाक्यतया मनोः, मीमांसाप्रक्रियायोगात्सर्वं व्याख्यास्यते स्फुटम्।
ऐतिहासिकपद्धत्या कालिकार्थं तु योक्ष्यते, सर्वत्रार्षी तु नैरुक्तप्रक्रियाऽनुसरिष्यते।
एवं व्यास-समासाभ्यां[३७] युक्तं यावत्प्रयोजनम्, अन्यूनाऽनतिरिक्तार्थम् 'आर्षभाष्यं' विधास्यते।
असंस्कृतज्ञजिज्ञासुलोकसंग्रहवाञ्छया, संक्षेपादाशयो हिन्दीभाषयाऽपि प्रवक्ष्यते।

इस भाष्य में मूल वाक्यों की अवतरणिकायें, आगे-पीछे के विचारों के समन्वय, पारस्परिक विरोधों के परिहार, वास्तविक अर्थों के प्रकाशन, अन्य व्याख्यानों पर विचार, और मूल शब्दों के निर्वचन, अपने श्लोकों से किये जायंगे, और उनके समर्थन में प्रमाण रूप से दूसरों के वाक्य उद्धृत होंगे। तिस पर भी प्रधानतः आर्ष वाक्यों का ही प्रयोग किया जायगा, किन्तु कहीं कहीं ऋषिकल्प आचार्यों और आप्त विद्वानों के आर्ष-अविरुद्ध और युक्तिसङ्गत वचनों का प्रयोग भी होगा। इस में मनु के, सनातन-आध्यात्मिक-अर्थवाले, वाक्यों का व्याख्यान, मीमांसकपद्धति से, एकवाक्यतापूर्वक, किया जायगा, किन्तु सामयिक अर्थों का समन्वय ऐतिहासिकपद्धति से होगा। परन्तु आर्षी नैरुक्त पद्धति का उपयोग सभी स्थलों पर समानरूप से किया जायगा। आवश्यकता के अनुसार, विस्तार और संक्षेप के साथ, केवल अपेक्षित अर्थ में यह भाष्य होगा। संस्कृत न जानने वाले जिज्ञासु सज्जनों की सुविधा के लिये, संक्षेप से सब का भावार्थ हिन्दी में भी लिख दिया जायगा।

## ११ प्रमाणप्रयोगः

भाष्य-टीका-निबन्धेषु, स्वप्रोक्तार्थप्रमाणने, धृताऽन्यदीयवाक्यानां, मूलस्थानं न सूचितम्;
"इत्युक्तं केनचित्", "केचिदित्थमाहुर्", इतीदृशैः निर्देशैर्, अन्यवाक्यानां प्रायेणोद्धरणं[३८] कृतम्;
तेन, मूलेषु तत्सत्त्वे, केषांचित्संशयो भवेत्, सत्त्वे वाऽन्वेषणे तेषां, भूयानस्ति परिश्रमः;
तस्माद्, अत्र प्रयुक्ताऽन्यग्रन्थवाक्यस्थलं मया, अधस्ताट्टिप्पणे, तत्तत्संकेतेन, निदर्शितम्।
ग्रन्थनामाद्यवर्णानामन्ते शून्यं समासकं विन्यस्या,-ऽग्रे धृता अङ्का अध्यायादिप्रदर्शकाः;
पूर्वं मुख्यविभागाङ्कास्, ततोऽवान्तरभेदकाः, अन्ते श्लोकादिसङ्ख्याश्च, तत्तदीयाः प्रदर्शिताः।

---

३७. "इष्टं हि विदुषां लोके समास-व्यासधारणम्" [ म० भा० आ० १, ५१ ]

३८. यथा पूर्वमीमांसाभाष्यकृता श्रीशबरस्वामिना "न चैतद्विद्मो, वयं ब्राह्मणा वा स्मो-,ऽब्राह्मणा वा" इति गोपथब्राह्मणवाक्यमुद्धृतं, किन्तु तदीयं मूलस्थानं [ गो० ब्रा० पू० ५, २१ ] न सूचितम् ( मी० शा० भा० १,२,१,२ ); एवमेव प्रायः सर्वत्रैव स्वभाष्ये कृतम्।

यथा च शाबरभाष्यतन्त्रवार्तिककृता श्रीमता कुमारिलभट्टेन—

"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये दृश्यन्ते तानि तान्येव, तथा भावा युगादिषु",

[ वि० पु० १,५,६५ ] इति विष्णुपुराणवाक्यम् ( मी० तं० वा १,३,३,७ ); तत्रैवाग्रे—
"एवं च विद्वद्वचनाद्विनिर्गतं, प्रसिद्धरूपं कविभिर्निरूपितम्-, सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" [ अभि० शा० १,२२ ] इति महाकविकालिदासपद्योत्तरार्धं चोद्धृतं, किन्तु तन्नामाऽपि न गृहीतम्। दिङ्मात्रमिदमुदाहृतम्, एवं प्रायः सर्वत्रैव प्राचीनभाष्य-टीका-निबन्धेषु तत्र तत्र द्रष्टव्यम्।

यथा,-[३९] ऋक्संहितावाक्ये,मण्डलाङ्काः पुरोद्धृताः, ततः सूक्तानि, मन्त्राश्च, तत्तदंकैः प्रदर्शिताः।
[४०]ब्राह्मणं त्वैतरेयाख्यं विभक्तं पञ्चिकादिषु ; अत्र संक्षेपतोऽध्याय-खण्डाङ्काः क्रमशो धृताः।
क्रमाद्-आरण्यका-ऽध्याय-खण्डाङ्का ऐतरेयके , आरण्यके विनिर्दिष्टा, मूलस्थानोपलब्धये।

संस्कृत वाङ्मय मे पहले के जो भाष्य, टीका, और निबन्ध ग्रन्थ मिलते हैं, उनमे प्रमाणरूप से उद्धृत किये गये अन्य शास्त्रीय वाक्यों का पूरा पता प्रायः नहीं दिया गया है; 'किसीने यह कहा है', 'कोई ऐसा कहते हैं'—इस प्रकार की उक्तियों से दूसरों के वचन उद्धृत किये गये हैं; अतः कुछ पाठकों को यह सन्देह हो सकता है कि वे उद्धृत वाक्य अपने मूल ग्रन्थों में हैं वा नहीं, और यदि वे अपने मूलस्थानों पर हों, तो भी उनके खोजने मे बहुत परिश्रम पड़ता है; इस लिये, यहां ( मानवार्षभाष्य मे ) जो दूसरे शास्त्रों के वचन उद्धृत किये गये हैं, उनका पूरा पता, नीचे टिप्पणी मे, उन शास्त्रों के निजी सङ्केत के अनुसार ही सर्वत्र यथास्थान दे दिया गया है । जिस ग्रन्थ का वाक्य उद्धृत किया गया है, उसके नाम के प्रथम अक्षर के अन्त में संक्षेपक शून्य दे कर, आगे क्रम से अध्याय आदि के सूचक अङ्क लिख दिये गये हैं; सब से पहले उस ग्रन्थ के प्रधान विभाग के, उसके बाद अन्तर्विभाग के, और अन्त मे श्लोक आदि के अङ्क दिये गये हैं ।

जैसे—इस भाष्य मे जहां कोई ऋग्वेद संहिता का वाक्य उद्धृत किया गया है, वहां के टिप्पण मे 'ऋ० सं०' ऐसा सङ्केत करके, उसके आगे क्रमशः पादविराम (कॉमा) से विभक्त तीन अङ्क लिखे गये हैं, जिनमे पहला मण्डल का, दूसरा सूक्त का, और तीसरा मत्र या ऋचा का बोधक है ( पीछे टि० सं० ८ और ९ देखिये ) । ऋग्वेदीय ऐतरेय ब्राह्मण में चालीस अध्याय हैं, जो पांच पांच अध्यायों की आठ पञ्चिकाओं मे संगृहीत हुए हैं, और उनका प्रत्येक अध्याय खण्डों या कण्डिकाओं मे विभक्त किया गया है । किन्तु मूल स्थल की शीघ्र उपस्थिति मे अन्वेषकों की सुविधा के लिये, मैंने इस भाष्य मे उसके क्रमिक अध्यायों और खण्डों के ही अङ्क लिखे हैं । ऐतरेय आरण्यक के उद्धरणों मे, क्रम से आरण्यक, अध्याय और खण्ड के अङ्क दिये गये हैं ।

---

३९. "तत्र ऋग्वेदस्याष्टौ स्थानानि भवन्ति" [ च० व्यू० कं० १, सू० ४ ]

"तत्र ऋग्वेदस्याष्टभेदा भवन्ति, शाकल-बाष्कलौ, ऐतरेयब्राह्मणा-ऽऽरण्यकौ, शाङ्खायन-माण्डूकौ, कौषीतकिब्राह्मणाऽऽरण्यकौ" [ तत्रत्यं भाष्यम् ]

..."एतेषां शाखाः पञ्चविधा भवन्ति । शाकला, बाष्कला, आश्वलायनाः, शाङ्खायना, माण्डूकायनाश्चेति" [ च० व्यू० कं० १, सू० ७-८ ]

इति शौनकीयचरणव्यूहपरिशिष्टसूत्रोक्तास्वपि पञ्चसङ्ख्यऋक्शाखासु विलुप्ताऽवशिष्टा, सम्पूर्णसुलभा, सम्प्रति सर्वत्र लब्धप्रचारा च, शाकलशाखीयऋक्संहितैवास्माभिरत्रभाष्ये प्रयोजिता ।

अखिलवेदशाखादिविषयको विचारः—अत्रानुपदमग्रे, मनु० १, २३।२, ६—भाष्ये च द्रष्टव्यः।

४०. ऋग्वेदीयं ब्राह्मण-द्वयमेव साम्प्रतमुपलभ्यते, तयोराश्वलायनशाखीयम् ऐतरेयब्राह्मणमेव सर्वत्राधीयमानं प्रधानतममस्ति । तत्र चत्वारिंशद् अध्यायाः पञ्चिकाष्टकत्वेम संविभक्ताः सन्ति । ऐतरेयारण्यकं च तद्ब्राह्मणस्यैव कश्चिद्भागः; तत्र पञ्चारण्यकानि, अष्टादशाध्यायाश्च ७५ खण्डेषु प्रविभक्ताः समुपलभ्यन्ते । ऋग्वेदीयमन्यद्ब्राह्मणं शांखायानापरनामधेयं कौषीतकि-ब्राह्मणं, तच्च त्रिंशदध्यायात्मकं; तदङ्गभूतमेव पञ्चदशाध्यायात्मकं कौषीतकारण्यकं नाम शाङ्खायनारण्यकमिति ध्येयम् ।

तैत्तिरीययजुर्वाक्ये[४१], काण्डं, प्रपाठकस्, ततः अनुवाकश्च, खण्डश्च, क्रमाद् अङ्कैः प्रदर्शिताः। तद्ब्राह्मणेऽपि, काण्डादेः, स एव रक्षितः क्रमः ; आरण्यके, प्रपाठा-ऽनुवाक-मन्त्राङ्कदर्शनम्। काण्वे, माध्यन्दिनीये वा, शुक्ले यजुषि, तत्क्रमात्, अध्याय-मन्त्रयोरङ्कास् तत्तदग्रे निवेशिताः। एवं शतपथे, काण्डम्, अध्यायो, ब्राह्मणं, ततः खण्डश्च, क्रमविन्यस्तैर अङ्कैरत्राऽस्ति सूचितः।

कृष्ण यजुर्वेद की तैत्तिरीय संहिता के वाक्य-उद्धरण में क्रमिक अङ्कों द्वारा उसके काण्ड, प्रपाठक, अनुवाक, और खण्ड, दिखलाये गये हैं। तैत्तिरीय ब्राह्मण के स्थलनिर्देश में भी वही क्रम रखा गया है। किन्तु उसके आरण्यक में प्रपाठक, अनुवाक, और मन्त्र के अङ्क दिये गये हैं। शुक्ल यजुर्वेद की काण्वी और माध्यन्दिनी संहिताओं के उद्धरणों में उन्हीं के क्रमानुसार उनके सङ्केतित नामों के आगे क्रम से अध्याय और मन्त्र के अङ्क लिखे हैं। इसी प्रकार क्रमशः लिखित अङ्कों के द्वारा शतपथ ब्राह्मण के काण्ड, अध्याय, ब्राह्मण, और खण्ड सूचित किये गये हैं।

---

४१. "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र चरका नाम द्वादशभेदा भवन्ति; चरका, आह्वरकाः, कठाः, प्राच्यकठाः, कपिष्ठलकठाः, [ आष्ठलकठाः ] चारायणीयाः, (पा) वारायणीया, वार्त्तान्तवेयाः, श्वेताश्वतरा, औपमन्यवः, पाताण्डनीया, मैत्रायणीयाश्चेति। तत्र मैत्रायणीया नाम ( षड् ) सप्तभेदा भवन्ति; मानवा, वाराहा, दुन्दुभाः, छागलेया, हारिद्रवीयाः, [श्यामाः] श्यामायनीयाश्चेति।

...तत्र तैत्तिरीयका नाम द्विभेदा भवन्ति; औखेयाः, खाण्डिकेयाश्चेति। तत्र खाण्डिकेया नाम पञ्चभेदा भवन्ति; कालेता, [ कालापा ] शाट्यायनी, हिरण्यकेशी, [ सत्याषाढी ] भारद्वाजी, [ बौधायनी ] आपस्तम्बी चेति।...

वाजसनेया नाम पञ्च(सप्त)दशभेदा भवन्ति; जाबाला, बौधायनाः, काण्वा, माध्यन्दिनेयाः, शाफे(पे)याः, ता(पाय)पनीयाः, कापालाः, पौण्ड्रवत्साः, आवटिकाः, परमा( वौधेयाः )वटिकाः, पाराश(र्या)रीया, वैणे(ने)या, [ वैरेया ] औधेया, बौधेया, गालवा, बैजवाः, [ शातातपीयाः ] कात्यायनीयाश्चेति।" [च० व्यू० कं० २। नि० आ० पृ० १७५। काण्वसं० भा० उ० सायणीया। वै० सा० च० पृ० २१३] इति चरणव्यूहाद्यनुसारतो यजुर्वेदस्य चरकाध्वर्युः, वाजसनेयी, तैत्तिरीया चेति तिस्र एव मूलशाखाः सम्पद्यन्ते, अन्यास्तु आसामेवोपशाखाः सन्ति। ता इमाः सङ्कलनया द्विचत्वारिंशच्छाखा यजुर्वेदीया भवन्ति। तत्र तैत्तिरीया सर्वाऽपि शाखोपशाखा 'कृष्णयजुर्वेद' इति, वाजसनेयी तु 'शुक्लयजुर्वेद' इति च प्रसिध्यति। यजुर्वेदीयसर्वशाखासु विलुप्ताऽवशिष्टाः—कठी, मैत्रायणी, तैत्तिरीया [ औख्या ], आपस्तम्बी, काण्वी, माध्यन्दिनी चेति षट्शाखा अद्यापि जयन्ति।

यजुर्वेदीयचरकाध्वर्यूणां कठशाखायां, मैत्रायणीयशाखायां च, तत्तत्संहितान्तर्गता गद्यभागा एव ब्राह्मणत्वेनाऽभिमताः; पृथगपि मैत्रायणीयब्राह्मणमेकमस्तीति श्रुतं; तत्संहितागतं चतुर्थकाण्डमेव तदिति केचिन्मन्यन्ते।

कृष्णयजुर्वेदीयतैत्तिरीयशाखायां तु संहिताबहिर्भूतं प्राचीनतमं त्रिकाण्डं ब्राह्मणमपि पृथगेवोपलभ्यते, अस्यैव ब्राह्मणस्याङ्गं तैत्तिरीयारण्यकमिति प्रसिद्धम्। आपस्तम्बब्राह्मणस्यापि नाम श्रूयते, परमंशतोऽपि नेदमद्यावधि दृष्टमस्माभिः।

शुक्लयजुर्वेदीयवाजसनेयशाखायां 'शतं पन्थानो यस्मिन्निति' व्युत्पत्त्या, शताध्यायनिबद्धत्वादन्वर्थनामधेयं सप्तदशकाण्डात्मकं काण्वं, चतुर्दशकाण्डात्मकं माध्यन्दिनीयं च 'शतपथब्राह्मणम्' अद्यापि जगति विजयतेतराम्।

साम्नः[४२] पूर्वार्चिकेऽध्यायो,दशत्,मन्त्रस्;तथोत्तरे, सूक्तानि दशतिस्थाने, दर्शितानि यथाक्रमम् ।

४२. "छन्दस्येकैकशोऽधीता ऋचः, सामोद्भवाय हि;
स्तोमनिष्पत्तये, सूक्तान्युत्तरायामधीयन्ते" [ उत्तरार्चिकभाष्योपक्रमे श्रीसायणाचार्यः ]

'छन्दसि' पूर्वार्चिके, सङ्गतिमनपेक्ष्याऽपि सामोद्भवमात्रप्रयोजनाय, एकैकशः ऋचः पठिताः, सामोद्भवो हि एकस्यामृचि भवितव्य एव, परं स्तोमनिष्पत्तिस्तु तथा न भवेत्, तस्मात् उत्तरार्चिके तृचात्मकानि सूक्तानि अधीयन्ते, इत्यर्थः ।

'सामगानाय स्वपठाय द्वौ ग्रन्थौ विद्येते. 'छन्दः' 'उत्तरा' चेति । तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एवर्चः पठिताः । उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि । एकस्मिंस्तृचे छन्दोगता योन्यृक् प्रथमा, इतरे द्वे उत्तरे" । [ मी० न्या० ९, २, ५ । सामभाष्योपक्रमे च ]

सामसंहितायाः—'छन्दआर्चिको' नाम प्रथमो भागः, 'महानाम्न्यार्चिको' द्वितीयः, उत्तरार्चिकश्च तृतीयः । तत्र पूर्वार्चिके षडध्यायाः, प्रपाठका वा सन्ति । तत्र १–४ अध्यायेषु प्रत्यध्यायं द्वादश दशतयः, पञ्चमेऽध्याये एकादश, षष्ठे तु पञ्च दशतय एव सन्ति । ताश्च सङ्कलनया ६४ दशतयो भवन्ति । प्रतिदशति च प्रायेण दश मन्त्राः सङ्घटिताः, तेऽपि सङ्कलनया ६४० सङ्ख्यकाः सम्पद्यन्ते । महानाम्न्यार्चिके तु दशैव मन्त्राः सन्ति । उत्तरार्चिके द्वाविंशतिरध्यायाः, सायणमतेन तदीयविंशैकविंशयोरध्याययोरेकत्वाद् एक-विंशतिरेव वाऽध्यायाः, नव वा प्रपाठकाः; प्रायेण तृचानि ४०२ सूक्तानि; १२२३ मन्त्राश्च सन्ति । एवं च सामसंहितायां मध्यमार्चिकाऽतिरिक्ता अष्टाविंशतिः, सप्तविंशतिर्वाऽध्यायाः, मध्यमार्चिकेन सह सङ्कलनया १८७३ मन्त्राश्च भवन्ति ।

"वस्तुतः सामवेदेऽस्मिन् १५४९ मन्त्राः सन्ति । ते च आर्चिकाख्ये भागद्वये विभज्य विन्यस्ताः । आर्चिकमिति ऋचां समूह इत्यर्थः । अनयोरार्चिकयोरवान्तरविभागप्रकारो नैकरूपः । तथा हि प्रथमार्चिकं षड्भिः प्रपाठकैः विभक्तम् । तत्र षष्ठवर्जमितरेषु प्रपाठकेषु प्रत्येकं मन्त्रदशात्मिका दश दशतः संघटित्ताः । षष्ठे तु केवलं नवैव ।... द्वितीयमार्चिकं नवभिः प्रपाठकैर्विभक्तम् । तेषामेकैकोऽपि प्रपाठकः प्रायेण द्वेधा क्वचित् त्रेधा च प्रविभक्तः । सर्वेऽप्येते प्रविभागाः प्रायेण मन्त्रत्रयघटिताः" [ वै० सा० च० पृ० २१० ]

चरणव्यूहे तु तृतीयखण्डे—

"अष्टौ सामसहस्राणि, सामानि च चतुर्दश,
अष्टौ शतानि; नवतिदशतिर्वालखिल्यकं
सरहस्यं, ससुपर्णप्रेक्षं, तत्सामदर्पणम्,
सारण्यकानि, सौर्याणि; ह्येतत्सामगणं स्मृतम्" इत्युक्तम् ।

"अष्टौ सामसहस्राणि' इत्यस्यार्थः अङ्कतो ज्ञातव्यः—८८१४ इति ।

अन्यशाखासङ्ख्यामाह 'नवतीति' । सुपर्णप्रेक्षः कश्चित् शाखाभेदः तेन सह वर्त्तमानः ससुपर्णप्रेक्षः । सुपर्णप्रेक्षेण सहितो वालखिल्यः शाखाभेदो नवतिदशतिः । नवतिसङ्ख्याका दश दशतयो यस्मिन्, स 'नवतिदशतिः' । दशतिरिति दशसङ्ख्यासञ्ज्ञा, दशगुणा नवतिरित्यर्थः अङ्कतोऽपि ९०० । 'सारण्यकानि' आरण्यकेन उपनिषद्भागेन सह वर्त्तमानानि, 'सौर्याणि' सूर्यदेवत्यानि सूक्तानि, तत्र वालखिल्यशाखायामेव । आरण्यकं, सूर्यसूक्तं, सुपर्णप्रेक्ष-वालखिल्यानि मिलित्वा नवशतानीत्यर्थः" इति तद्भाष्यम् ।

"सामवेदस्य किल सहस्रभेदा भवन्ति ( शाखासहस्रमासीत् । एष्वनध्यायेष्वधीयानास्ते ( सर्वे ) शतक्रतुवज्रेणाऽभिहताः ( शक्रेण विनिहताः प्रनष्टाः ( प्रलीनाः ), तत्र केचिदवशिष्टाः प्रचरन्ति; ( शेषान्व्याख्यास्यामः ) तद्यथा ( तत्र ) राणायनीयानां सप्तभेदा भवन्ति,–राणायनीयाः; शाट्यमुग्राः ( साद्यमुग्राः सात्यमुग्राः सात्यमुद्गलाः ) कालो(ला)पाः, महाकालो(ला)पाः, लाङ्गलायनाः ( लाङ्गलिकाः ), शार्दूलाः, कौथुमाश्चेति" [ च० व्यू० खं० ३ ]

"तत्र कौथुमानां षड्भेदा भवन्ति,–कौथुमा, आसुरायणाः, वातायनाः, प्राञ्जलिद्वैनमृतः, प्राचीनयोग्याः, नैगमीयाः" इति तद्भाष्ये महिदासः ।

सामवेद का विभाग तीन आर्चिकों (ऋक्समूहों) मे हुआ है। उनमें पहला 'छन्दआर्चिक' दूसरा 'महानाम्न्यार्चिक' और तीसरा 'उत्तरार्चिक' कहलाता है। पूर्वार्चिक में ६ अध्याय वा प्रपाठक हैं और प्रत्येक अध्याय मे प्रायः दश दश मन्त्रों की कुछ न्यूनाधिक दश 'दशत्' वा 'दशति' हैं। 'महानाम्न्यार्चिक' मे सब दश ही मन्त्र हैं, इसी लिये उसका विशेष विभाग नहीं हुआ है। 'उत्तरार्चिक' मे ९ प्रपाठक वा २२ अध्याय हैं। किन्तु उनमे दशतियों के स्थान पर प्रायः तीन तीन ऋचाओं के सूक्तों का संघटन हुआ है। "तृचं सामसूक्तम्"। अतः पूर्वार्चिक के उद्धरणों मे अध्याय, दशति, और मन्त्रों की, एवं उत्तरार्चिक के उद्धरणों में अध्याय, सूक्त, तथा मन्त्रों की सूचना की गई है।

तन्महाब्राह्मणे ताण्ड्ये, ऽध्याय-खण्डाङ्कपूर्वकः मन्त्राङ्कः स्थापितः, शीघ्रं तदन्वेषणसिद्धये।
अन्येषु[43] सामवेदीयब्राह्मणेषूद्धृतेष्विह, मूलस्थानं यथास्थानं नामग्राहं निवेदितम्।
[44]अथर्वसंहितावाक्ये, काण्ड-सूक्ताङ्कपूर्विका मन्त्रसंख्याऽत्र विन्यस्ता, तन्मूलस्थलसूचिका।

---

अथर्वपरिशिष्टे तु कौथुमानामिमे षड्भेदाः प्रोक्ताः—सारायणीयाः, वातरायणीयाः, वैतधृताः, प्राचीनाः, तेजसाः, अनिष्टकाश्चेति। चरणव्यूहपरिशिष्टसूत्रभाष्यकृता महिदासेन सामशाखाभेदा अन्यथाऽपि व्याख्याताः। तद्यथा "आसुरायणीयाः, वासुरायणीयाः, वार्त्तान्तरे(वे)याः, प्राञ्जलाः, ऋग्वैनविधाः, [ ऋग्वर्णभेदाः ] प्राचीनयोग्याः, [ ज्ञानयोग्याः ] राणायनीयाश्चेति। तत्र राणायनीयानां नवभेदा भवन्ति–राणायनीयाः, शाट्यायनीयाः, शाट्यमुग्राः, [ सात्वलाः ] खल्वलाः, महाखल्वलाः, लाङ्गलाः, कौथुमाः, गौतमाः, जैमिनीयाश्चेति।...आसां षोडशशाखानां मध्ये तिस्रः शाखा विद्यन्ते। ताश्च–गुर्जरदेशे कौथुमी प्रसिद्धा, कर्णाटके जैमिनी (या) प्रसिद्धा, महाराष्ट्रदेशे राणायनीया प्रसिद्धेति" [ च० व्यू० ख० ३ भाष्यम् ]

४३. "अष्टौ हि ब्राह्मणग्रन्थाः—'प्रौढं' ब्राह्मणमादिमं,
'षड्विंशाख्यं' द्वितीयं स्यात्, ततः 'सामविधि'र्भवेत्,
'आर्षेयं' 'देवताध्यायं' 'मन्त्रं' वोपनिषत्', ततः
'संहितोपनिषद्' 'वंशो' ग्रन्था अष्टावितीरिताः"

इति ताण्ड्यादिभाष्योपक्रमेषु सर्वत्र श्रीसायणाचार्यः प्राह। अत्र यदुक्तं 'प्रौढ'मिति, तदेव 'पञ्चविंश'मिति, 'ताण्ड्य'मिति च प्रसिद्धम्। यच्चोक्तं 'षड्विंश'मिति, तस्यैवान्तिमोऽध्यायः—'अद्भुतब्राह्मण'-मुच्यते। यत्तूक्तमुपनिषदिति, तदेव 'छान्दोग्यं' नाम ब्राह्मणं, अस्यैवादितोऽध्यायद्वयं 'मन्त्रब्राह्मणम्' अन्तिमाऽष्टाध्यायी तु 'छान्दोग्योपनिषद्' इत्यभिधीयते।

श्रीसायणाचार्योक्ता इमे अष्टावपि ब्राह्मणग्रन्थाः कौथुमशाखीया एव। एतद्भिन्नं राणायनीयमपि जैमिनीयाऽपरनामधेयं तलवकार ब्राह्मणं विद्यते। तच्च पञ्चकाण्डात्मकं; तत्रादिमं त्रिकाण्डं ( अध्यायं वा ) कर्मविषयकं; चतुर्थं काण्डं तु गहनार्थत्वाद् 'उपनिषद्ब्राह्मणम्' इत्यभिधीयते; अत्रैव स्वल्पाक्षराऽपि बह्वर्थवती 'केनोपनिषद्' गर्भीकृता। 'आर्षेयब्राह्मणम'पि अस्यैव ( तलवकारब्राह्मणस्य ) अन्तिमो भाग इति निश्चितम्।

४४. अथर्ववेदस्य नवभेदा भवन्ति,—पैप्पलाः, शौनकाः, [ दान्ताः ] दामोदान्ताः, औतापनाः, जाबालाः, ब्रह्मपलाशाः, कुनखी, देवदर्शी, चा( च )रणविद्याश्चेति।" [ च० व्यू० कं० ४ ]

ऋग्यजुःसामवेदवत् अथर्ववेदेऽपि शाखानाम—भिन्नता, नाम्नां पाठान्तरता च भूयसी दृश्यते। अस्तु, सम्प्रति तु अथर्वसंहितायाः पाठद्वयमेवोपलभ्यते; तत्रैकः पैप्पलादानाम्, अपरः शौनकानाम्। तत्राऽपि शौनकीयाथर्वसंहितैव सायणभाष्यसनाथा सर्वत्र लोके प्रचरति। अस्यां संहितायां विंशतिः काण्डानि, ७३० सूक्तानि, प्रायेण ६००० मन्त्राश्चोपलभ्यन्ते।

अथर्ववेदीयं ब्राह्मणं तु एकमेव 'गोपथं' नाम अद्ययावदस्माभिर्दृष्टम्। तच्च पूर्वार्धोत्तरार्धभागद्वयात्मकम्। तस्य पूर्वभागे पञ्च, उत्तरभागे च षट् प्रपाठकाः सन्ति।

गोपथे, 'पू०' 'उ०' सङ्केतः कृतः पूर्वोत्तरार्धयोः , ततः परं प्रपाठाङ्काः, कण्डिकाङ्काश्च दर्शिताः ः।

सामवेद के द्वादश ब्राह्मणों का उल्लेख मिलता है और वे सभी इस समय भी सुलभ हैं। उनके नाम ये हैं— १ 'जैमिनीय' वा 'तलवकार' ब्राह्मण; इसी का चतुर्थ काण्ड— २ 'उपनिषद्ब्राह्मण' है, सुप्रसिद्ध 'तलवकारोपनिषद्' या 'केनोपनिषद्' इसी से निकली है। तलवकार ब्राह्मण का ही अन्तिम भाग— ३ 'आर्षेयब्राह्मण' कहलाता है।— ४ 'पञ्चविंश' ब्राह्मण, इसे ही 'प्रौढ ब्राह्मण' और 'ताण्ड्यमहाब्राह्मण' भी कहते हैं।— ५ 'षड्विंश' ब्राह्मण, वस्तुतः यह पञ्चविंशब्राह्मण का ही परिशिष्ट ( २६ वां अंश ) है, और इसी का अन्तिम ( पञ्चम अध्याय )— ६ 'अद्भुतब्राह्मण' कहलाता है।— ७ 'छान्दोग्य' ब्राह्मण, इसी के प्राथमिक दो अध्याय— ८ 'सामवेदब्राह्मण' वा 'मन्त्रब्राह्मण' कहे जाते हैं, और अन्तिम आठ अध्याय 'छान्दोग्योपनिषद्' नाम से प्रसिद्ध हैं। इनके अतिरिक्त चार और खण्डब्राह्मण वा अनुब्राह्मण हैं, यथा— ९ 'सामविधानब्राह्मण'— १० 'वंशब्राह्मण'— ११ 'दैवताध्याय' वा 'दैवतब्राह्मण' और— १२ 'संहितोपनिषद्ब्राह्मण'। वस्तुतः तो सामवेद के 'तलवकार, 'ताण्ड्य' और 'छान्दोग्य' ये तीन ही मुख्य ब्राह्मण हैं, और अन्य ब्राह्मण इन्हीं के परिशिष्ट वा अनुब्राह्मणमात्र हैं। कई विद्वानों का यह भी मत है कि चालीस अध्यायों का एक ही सामब्राह्मण था, जो पश्चात् पचीस अध्यायात्मक पञ्चविंशब्राह्मण, पञ्च अध्यायात्मक षड्विंशब्राह्मण, दो अध्यायात्मक मन्त्रब्राह्मण, और अष्ट अध्यायात्मक छान्दोग्योपनिषत्, इन चार भागों में विभक्त हो गया है। अन्य सामवेदीय ब्राह्मण इसीके परिशिष्ट वा स्वतंत्र खण्डकृतिरूप अनुब्राह्मण हैं।

इनमें ताण्ड्यमहाब्राह्मण के उद्धरणों में अध्याय, खण्ड और मन्त्र के अङ्क दिये गये हैं। शेष ब्राह्मणों का प्रायः पूरा पता उद्धरणस्थलों पर ही लिख दिया गया है, अथवा स्पष्ट सङ्केत से सूचित कर दिया गया है।

इस भाष्य मे उद्धृत अथर्वसंहिता के वाक्यों के मूलस्थल की सूचना के लिये क्रम से उसके काण्ड, सूक्त, और मन्त्र की संख्या लिखी गई है। अथर्ववेदीय 'गोपथब्राह्मण' के पूर्वार्ध के लिये 'पू०' और उत्तरार्ध के लिये 'उ०' सङ्केत करके अनन्तर क्रमशः प्रपाठक और कण्डिका के अङ्क लिखे हैं।

मूलतः संहितास्वेव, [४५] ब्राह्मणा-ऽऽरण्यकेषु च, वैदान्तिकप्रमाणेष्वा मुख्योपनिषदः स्थिताः ;

---

४५. अथ ऋग्वेदीया उपनिषदः,—तत्र ऐतरेयारण्यके द्वितीयारण्यकस्यान्त्याऽध्यायचतुष्टयं [ ४, ५, ६, ७ अध्यायाः ] 'ऐतरेयोपनिषत्'। शाङ्खायनाऽपरनामधेय–कौषीतकारण्यकस्य तृतीयादारभ्य षष्ठपर्यन्ताश्चत्वारोऽध्यायाः [ ३-४-५-६ ] 'कौषीतकोपनिषत्'।

अथ सामवेदीया उपनिषदः,—तत्र जैमिनीयान्यसंज्ञस्य तलवकारब्राह्मणस्य चतुर्थं काण्डमुपनिषद्ब्राह्मणं, तत्रत्यचतुर्थाध्याये दशमोऽनुवाकः चतुःखण्डात्मकः [ आदितः खं० १८–२१ ] 'केनोपनिषत्संज्ञः। केनोपनिषद्भाष्यारम्भे श्रीशङ्कराचार्यास्तु—"केनेषितम् इत्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारंभः। प्रागेतस्मात्, कर्माण्यशेषतः परिसमापितानि; समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि; कर्माङ्गसामविषयाणि च। अनन्तरं च गायत्रसामविषयं दर्शनं वंशान्तमुक्तम्" इति तलवकार ब्राह्मणस्य विषयविभागं, तत्र केनोपनिषदो नवमाध्यायात्मकत्वं च प्राहुः। सम्प्रति मुद्रितोपलब्धजैमिनीयोपनिषद्ब्राह्मणपुस्तके तु श्रीशङ्कराचार्यप्रदर्शिताद्भिन्न एवाध्यायादिक्रमो दृश्यते। स एव प्रागत्र मया निर्दिष्टः।

आदिमाऽध्यायद्वयवर्जं सामवेदायछान्दोग्यब्राह्मणमेव 'छान्दोग्योपनिषन्नाम। "ॐ इत्येकाक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषद्" इति तद्भाष्यारम्भे श्रीशङ्करोक्तिः।

अतस्तासु विभागोऽपि तत्तद्वेदवदिष्यते, किन्तु भिन्नक्रमो जातः, पृथक् तासां प्रचारतः ;
तस्माच्चोपनिषत्स्वेव, सम्प्रयुक्तः स्वतन्त्रतः, अध्यायादिक्रमो, भाष्ये मयाऽपीह समुद्धृतः।
तासामति प्रसिद्धत्वात्, तद्विभागः पृथक्पृथक् प्रत्येकं सूच्यते नाऽत्र, यथास्थानं तु दर्शितः,
पूर्वं तूपनिषन्नाम्नः सङ्केतो विहितस्, ततः अध्यायादिविभागाङ्कास्तत्तदीयक्रमाद् धृताः।

वेदान्तियों ने जिन उपनिषदों को 'प्रमाण' माना है, वे सभी मूलरूप से वेदों की संहिताओं, ब्राह्मणों, और आरण्यकों मे ही विद्यमान हैं; अतः उनके अध्याय-आदिका विभाग भी उन उन वेदभागों की तरह ही होना चाहिये जिनसे वे निकली हैं। किन्तु उपनिषदों का अलग प्रचार हो जाने से उनके विभागक्रम मे भी भेद हो गया है; इस लिये जो विभाग स्वतन्त्ररूप से उपनिषदों में ही किये गये हैं, उन्हीं का उल्लेख मैने भी इस भाष्य मे किया है। द्वैत, द्वैताऽद्वैत, विशिष्टाद्वैत, शुद्धाद्वैत, और अद्वैत आदि वेदान्त प्रस्थानोंके सम्प्रदायाचार्यों ने उपनिषदों को ही अपने मत का आधार बनाया है, इस लिये वे अत्यन्त प्रचरित और सुप्रसिद्ध हो गई हैं; अतः उनके विभागों की एक एक करके अलग अलग सूचना यहां नहीं दी जाती है, किन्तु उद्धरण के स्थानों पर ही उन के अध्याय-आदि सूचित कर दिये गये हैं। पहले उदाहृत उपनिषत् के नाम का सङ्केत करके आगे क्रमशः उसके अध्याय, अनुवाक, प्रपाठक और खण्ड आदि के अङ्क दे दिये गये हैं।

---

अथ यजुर्वेदीया उपनिषदः,—तत्र तैत्तिरीयारण्यकस्य सप्तमाष्टमनवमाः प्रपाठकाः 'तैत्तिरीयोपनिषत्, तत्र सप्तमः प्रपाठकः-शिक्षावल्ली-'सांहिती' उपनिषद् इति, अष्टमः प्रपाठकः—ब्रह्मानन्दवल्ली, तथा नवमः प्रपाठकः—भृगुवल्ली च 'वारुणी' उपनिषद् इत्युच्यते। तस्यैव दशमस्तु प्रपाठकः याज्ञिकोपनिषदपरनामधेया 'महानारायणोपनिषत्' चास्तीति प्रत्यक्षम्। 'मैत्रायणोपनिषत्' तु तत्संहितायामेव क्वचित् द्वितीयकाण्डत्वेन, क्वचित् पञ्चमकाण्डत्वेन च पठ्यमाना श्रूयते, इयमेव 'मैत्रायणीया' 'मैत्री'ति चाऽभिधीयते। 'कठोपनिषद्' हि तैत्तिरीयब्राह्मणे [ कां० ३, प्र० ११, अनु० ८ ] वर्णितं नाचिकेतोपाख्यानमालम्ब्य निबद्धा दृश्यते, अतः स ब्राह्मणभागः कठशाखासम्बद्धः पुरा कदाचिदासीदिति संभाव्यते, पश्चात् केनचित् कारणेन तैत्तिरीयब्राह्मणे समाविष्टः स्यादित्यपि अनुमीयते। अन्यथा तदीयोपनिषत् काठकसंज्ञा न स्यात्। 'श्वेताश्वतरोपनिषद्'पि कृष्णयजुर्वेदीयैवास्ति। 'ईशोपनिषत्' तु शुक्लयजुर्वेदसंहिताया अन्तिमः ( ४० तमः ) अध्याय एव। शतपथब्राह्मणस्यान्तिमा षडध्यायी [ श० कां० १४ अ० ४–९ ] 'बृहदारण्यकोपनिषदिति' 'वाजसनेयिब्राह्मणोपनिषद्' इति चोच्यते। "उषा वा अश्वस्येत्येवमाद्या 'वाजसनेयिब्राह्मणोपनिषद्'' [ तद्भाष्यारम्भे श्रीशङ्कराचार्यः ]

अथ अथर्ववेदीया उपनिषदः,—तत्र "ॐ ब्रह्मा देवानामित्याद्याथर्वणोपनिषद्" इति मुण्डकभाष्यप्रस्तावे श्रीशंकराचार्योक्तेः मुण्डकोपनिषदः अथर्ववेदमन्त्रभागान्तर्गतत्वं सिध्यति; यतः, तेनैवाचार्येण प्रश्नोपनिषद्भाष्यारम्भे "मन्त्रोक्तस्यार्थस्य विस्तराऽनुवादीदं ब्राह्मणं [प्रश्नोपनिषदात्मकं] आरभ्यते" इति पूर्वव्याख्यातस्य मुण्डकस्य मन्त्रत्वं स्पष्टमेवाऽभिहितम्। सेयं 'मुण्डकोपनिषद्' मुण्डितमुण्डानां संन्यासिनां धर्मान्, मुण्डकव्रतं ( शिरोव्रतं ) वा उपदिशन्ती तन्नाम्नाऽऽहूयते। अस्यां मुण्डकाख्यास्त्रयो भागाः सन्ति। प्रश्नोपनिषत्तु अथर्ववेदीयपिप्पलादशाखासम्बन्धिनीति श्रूयते। माण्डूक्योपनिषत् तु वस्तुतः 'माण्डूक्याऽभिधानऋक्शाखासम्बन्धिनी, किन्तु तत्सम्बन्धस्यास्फुटत्वादियम् अथर्वोपनिषदां मध्ये परिगणिता अनुमीयते। अथापीयं वेदान्तेषु परमप्रमाणत्वेनादृता। इयमेव अद्वैतवेदान्तशिरोरत्नायमानस्य गौडपादकारिकाग्रन्थस्य मूलाधारभूता।

एतदतिरिक्ता अपि बहुसङ्ख्या उपनिषदोऽथर्ववेदीयत्वेन प्रथन्ते। ताश्च सप्तविंशतिरिति केचिदाहुः। किन्तु जाबालादिद्वित्रोपनिषद्वर्जमन्याः सर्वास्ता अथर्ववेदसम्बन्धविरहिता अर्वाचीनतराः साम्प्रदायिकैः प्रणीता इति सुनिश्चितम्।

वेदग्रन्थेषु काण्डादेः क्रमो नैकविधो मतः, नाम-सङ्ख्यादिभेदोऽपि, न्यूनाधिक्यं च दृश्यते ;
एकस्मिन्नपि तद्ग्रन्थे मूलभाष्यादिकल्पितः[४६], काण्डादिप्रविभागोऽस्ति भिन्ननाम-क्रमानुगः।
एतस्य कारणं तु स्याद् एकग्रन्थे विमिश्रणं तत्तद्वेदीयशाखानां, तद्विभागादिभिः समम्।

वैदिक ग्रन्थों मे काण्ड-आदि के विभाग का क्रम एकरूप वा एकसा नहीं है। विभागों के नाम और संख्या मे भी भेद और कमी-वेशी दिखाई देती है। प्रायः एक ग्रन्थ मे भी मूल और भाष्य के अनुसार किये गये भिन्न नाम और विभिन्न क्रमवाले विभाग पाये जाते हैं। इसका कारण, एक वेद की कई शाखाओं का, अपने विभागक्रम के सहित एक संहिता में मिल जाना ही है।

यथा-ऋक्संहितायां[४७] स्तो मिश्रे 'वाष्कल-शाकले*' सन्ति वा शैशिरीयाद्याः शाखाः पञ्चापि 'शाकलाः'[४८]

---

४६. "मूले मदृष्टेषु षडधिकपुस्तकेषु सर्वत्रैव 'दशति' इत्येव पाठः, उदीच्यमुद्रितेऽपि तथैव। विवरण ग्रन्थे 'दशत्या' इत्येवम्। सायणमते तु 'खण्ड' इत्येव साधुः। इह मूलाऽनुरोध एवाश्रितः" इति सामसंहितायाः प्रथमपुष्पिकाटिप्पणे श्रीसत्यव्रताचार्यः।

"स च ग्रन्थः [ साम्न उत्तरार्चिकः ] एकविंशतिसङ्ख्यातैरध्यायैरुपेतः" इति श्रीसायणाचार्यवचन-टिप्पणे [ सामोत्तरार्चिकभाष्योपक्रमे ]—"मूलपुस्तकस्य तु अध्यायसंख्या नवैव दृश्यते, परमस्ति तत्र प्रत्य-ध्यायस्यार्धाध्यायः, अध्यायद्वयेऽर्धाध्यायद्वयं च; पदग्रन्थे च तथा; विवरणादावप्येवमेव; सायणमते तु अर्धाऽध्यायाऽनङ्गीकारः, ततश्चैकविंशतित्वं सुलभमिति। अध्यायेति व्यवहारश्च सायणीय एव, वस्तुतः सामवेदे प्रपाठकव्यवहार एव सर्वमूलपुस्तक-पदपुस्तक-गानपुस्तकादौ, विवरणकारमते च प्रसिद्धः" इति श्रीसत्यव्रत-सामश्रमी।

"सप्तप्रपाठकात्मकस्यास्य प्रथमकाण्डस्य भाष्यपुष्पिकोक्त्या नवाऽध्यायीत्वेन परिच्छेदीकरणं तस्य ( सायणस्य ), हरिस्वामिनश्च कथं संगच्छते ?" इति 'शतपथब्राह्मण'भूमिकायां श्रीसत्यव्रतः सामश्रमी।

"प्रत्यध्यायं खण्डविभागस्तु खण्डप्रारम्भसूचीलाभेन प्राक्तन एव, न नवीनः। प्रतिखण्डं लघुवाक्य-विभागकल्पना तु सन्दर्भशुद्धि-समासिज्ञानसौलभ्याय दाधिमथैरस्माभिरेवोपज्ञाता 'वृद्धिरादैजदेङ् गुण इकोगुण-वृद्धी' इत्येवं पाणिनेः संहितापाठे वृत्तिकारैः सूत्रविभक्तिरिव" [ निरुक्तभूमिकायाम् ] इत्यादिदर्शनात्तु इदमपि सिध्यति, यदुत, न केवल प्राञ्चो भाष्यकारादय एव, अपि तु आधुनिकाः संस्कर्तारोऽपि नवं नवं ग्रन्थपरिच्छेद-प्रकारमाविष्कुर्वन्ति, इति।

४७. "परः सन्निकर्षः संहिता" [ पा० १, ४, १०९ ] "पदप्रकृतिः संहिता" [ ऋ० प्रतिशा० २, १ ] "वर्णानामेकप्राणयोगः संहिता" [ य० वा० प्रा० १, १५८ ] इति निरुक्ते ( १, १७, ४ ) संहितालक्षणम्। वेदेषु मन्त्र—ब्राह्मणात्मकेषु मन्त्रभाग एव 'संहिता' इति-अभिधीयते। सा च पाठतो 'निर्भुजसंहिता' प्रतृण्णसंहिता चेति द्विधा भिद्यते। तत्र "अग्निमीले पुरोहितम्" [ ऋ० सं० १, १, १ ] इत्यादिरूपा निर्भुजसंहिता, सैव 'आर्षी संहिता' इत्यप्युच्यते। प्रतृण्णसंहिताऽपि द्विविधा—पदसंहिता, क्रमसंहिता चेति। तत्र "अग्निम्, ईळे, पुरःऽहितम्" इत्येवं पठ्यमाना 'पदसंहिता' इति; "अग्निम्, ईळे, ईळे पुरोहितम्; पुरोहितमिति, पुरःऽहितम्" इत्येवं तु 'क्रमसंहिता' इति संगीयते। इमां क्रम-संहितामेवाश्रित्य जटाद्या अष्टविधा विकृतयः प्रवृत्ताः, ताश्च—

जटा, माला, शिखा, लेखा, ध्वजो, दण्डो, रथो, घनः,
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः"

इति विकृतिवल्ल्याम् ( १, ५ ) उक्ताः। तदासां जटादीनामपि क्रममूलात्मकत्वेन प्रतृण्ण-संहितात्वमेव। तदेवमेकैकमन्त्रस्य एकादशप्रकाराः संहितापाठा भवन्ति। एवं पाठप्रकारभेदाद् बहुशाखा-ऽपि सार्षी संहिता तत्त्वतः प्रतिवेदमेकैकैवेति सत्यम्।

* "पूर्वमृग्वेद एकविंशतिशाखाप्रकारभिन्न इत्युक्तम्। तत्रेदानीं शाखाद्वयमेवोपलभ्यते। तत्रैका बाष्कलशाखा, अपरा शाकला इति। ते अपि न परस्परं विविक्ते उपलभ्येते, अल्पीयानेव भेदस्तत्राऽपि।

अतस्तस्यां विभागोऽपि भिन्नशाखाद्वयानुगः मण्डला-ऽष्टक-वर्गादिरूपेण [४९] दृश्यते कृतः।

उदाहरण के लिये 'ऋग्वेदसंहिता' को ही लीजिये। शास्त्रीय प्रमाणों से, विमर्शक विद्वानों की बातों से, और प्रत्यक्ष देखने से भी, यह ज्ञात होता है कि वर्त्तमान 'ऋक्संहिता', बाष्कल और शाकल, इन दोनों शाखाओं का संयुक्त रूप है। वस्तुतः तो शैशिरीया, साङ्ख्या, ( मौद्गली ) वात्स्या, बाष्कला, और आश्वलायनी, ये पांच, शाकलशाखा की ही उपशाखायें थीं; जो अब उपलब्ध ऋक्संहिता मे मिल कर एक हो गई हैं। किन्तु उनमे शैशिरीया, और बाष्कला वा आश्वलायनी, ये दो ही प्रधान रही होंगी, अत एव उनके योग से बनी हुई ऋक्संहिता में दो ही प्रकार के परिच्छेद मिलते हैं; ( १ ) मण्डल, अनुवाक, सूक्त, और मन्त्र, तथा ( २ ) अष्टक, अध्याय ( प्रपाठक ) वर्ग, और मन्त्र वा ऋचा। इनमे पहला विभागप्रकार शाकल की पहली उपशाखा 'शैशिरीया' का, और दूसरा 'बाष्कला' वा 'आश्वलायनी' उपशाखाओं का, कहा जाता है।

---

यत्र मण्डल-सूक्तादिना विभागः कृतः सा शाकलसंहिता, यत्र च अध्याय-वर्गादिना विभागः सा बाष्कल-संहितेति। परन्तु अर्वाचीनकाले तयोर्भेदमुपेक्ष्यैव मण्डलसंख्या अध्यायसंख्या चैकत्रैव निवेशिता।

ऋग्वेदे—चतुःषष्ट्यध्यायाः, अष्टावष्टकानि. दश मण्डलानि, षड्डुत्तरं सहस्रद्वयं वर्गाः, सहस्रं सूक्तानि, पञ्चाशीतिरनुवाकाः, दशसहस्राणि चत्वारिंशदधिकानि चतुःशतं च मन्त्राः'' [श्रीविद्याधरशर्म्मणः का० श्रौ० भू० पृ० १३ ]

४८. "शाकलस्य शतं शिष्या नैष्ठिकब्रह्मचारिणः,
पञ्च तेषां गृहस्थास्ते धर्मिष्ठाश्च कुटुम्बिनः
शिशिरो, बाष्कलः, साङ्ख्यो, वात्स्य,श्चैवाश्वलायनः,
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः'' [ अष्टवि० १, ४ टी० ]
''ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमं,
प्रमाणमनुवाकानां सूक्तैः श्रृणुत, शाकलाः'' [ अनुवा० श्लो० ९ ]

''शिशिरनाममहर्षिप्रोक्तायां...शाकलस्य संहितायामित्यर्थः'' इति तद्वृत्तौ षड्गुरुशिष्यः।

''पञ्चशाखानां पारायणं 'तच्छँय्योरावृणीमहे' इत्यत्र समाप्तिः, एकवेदत्वात्। उक्तं च—'साङ्ख्या-ऽऽश्वलायनौ चैव, माण्डूका, बाष्कलास्तथा, बह्वृचा ऋषयः सर्वे पञ्चैते . ह्येकवेदिनः'' [ चरणव्यूहभाष्ये श्रीमहिदासः ]

''तदित्थं शाकलेनाध्यापिता एकैव ऋक्संहिता देशकालपात्रभेदतः, शिशिरादिपञ्चाचार्यकृताध्यापन-शैली-पाठक्रमोच्चारणा–ऽनुष्ठानभेदात्, किञ्चित्पाठन्यूनाधिक्याच्च पञ्चविधत्वं गता, शैशिरीयादिपञ्चनामभिः, शाकलैकनाम्ना च प्रसिद्धाऽद्यापीति सर्वमनवद्यम्।'' [ श्रीसत्यव्रतसामश्रमिणः ऐ० आलो० पृ० १३० ]

४९. ऋक्संहितायां मण्डला-ऽनुवाक-सूक्त-मन्त्रैः कृतो विभागः शाकलानां शैशिरीयोपशाखानुगः, सैव दशमण्डलात्मिकेति 'दाशतयी' इति व्यपदिश्यते। ''पञ्चाशीतिर्दाशतयेऽनुवाकाः'' इत्यनुवाकानुक्रमण्यां ( श्लो० ३७ ); "दाशतये, दशमण्डलयोगिनि वेदे'' इति तद्वृत्तौ च मण्डलादिपरिच्छेदैः शैशिरीयाया एव ऋक्संहिताया विभागस्योक्तत्वात्। अष्टका-ऽध्याय-वर्ग-मन्त्रैः कृतस्तु परिच्छेदः शाकलानामेव बाष्कला-ऽऽश्वलायनादिशाखाप्रवर्त्तितः।

''सेयमाश्वलायनी तत्त्वतोऽष्टतय्येव, सर्वेष्वेतत्पुस्तकेषु अष्टका-ऽध्याय-वर्गनामत्रिविधपरिच्छेदानां प्राधान्यदर्शनात् दशतय्यष्टतय्योः सम्मिलनाच्च दशतयीत्वाऽनुकूला मण्डला–ऽनुवाक-सूक्तेति त्रिविधपरिच्छेदा अपीह लेखकादिभिः सूचिता यथायथं सर्वत्रैवेति'' [ ऐ० आ० पृ० १४१–४२ ]

सूक्त-मन्त्रादिसङ्ख्यायां,[५०] पारायणक्रमादिषु , ग्रन्थैकत्वेऽपि यो भेदः, शाखामिश्रणजस्तु सः ।

शाखाओं की इस खिचड़ी के कारण ही एक ही ऋक्संहिता मे सूक्त, मन्त्र, आदि की संख्या मे न्यूनाधिक्य, और पाठ-क्रम आदि मे भी भेद पाया जाता है । क्योंकि 'चरणव्यूह' और 'अनुवाकानुक्रमणी' आदि प्राचीन ग्रन्थों में शैशिरीयशाखीय ऋक्संहिता के १० मण्डल, ८५ अनुवाक, और १०१७ सूक्त गिनाये गये हैं, इसके विपरीत 'आश्वलायनी शाखा के अनुसार ११ वालखिल्य-सूक्तों को मिलाकर सूक्त संख्या १०२८ होती है । मन्त्रसङ्ख्या में भी १०५८०। १०४०२। इत्यादि बड़ा मतभेद और बहुत तारतम्य पाया जाता है, जो नीचे संस्कृत टिप्पण में स्पष्ट कर दिया गया है ।

एवमन्येषु* वेदेषु शाखामिश्रणकारणात् , संवृत्तः, प्रविभागोऽपि नानारूपः, पृथक्क्रमः । तस्मादन्वेषणे तत्र भ्रमः स्यात् , तन्निवृत्तये , तत्तत्संस्करणादीनां सूची चादौ निवेशिता ।

इसी प्रकार अनेक शाखाओं की एकत्र खिचड़ी हो जाने से, दूसरे ( साम-आदि ) वेदों मे भी नाना प्रकार का, भिन्न क्रमवाला विभाग-सङ्कर हो गया है । किन्तु हमारे लिये संक्षेप और सुविधा की दृष्टि से उन विभाग-प्रकारों मे से किसी एक के अनुसार ही उद्धरणों का स्थल-निर्देश करना संभव है, जैसा कि ऋग्वेद मे शैशिरीय प्रकार का ही, और उस मे भी 'अनुवाक' को

---

५०. "एतत्सहस्रं, दश, सप्त, चैव; अष्टावतो बाष्कलकेऽधिकानि ।
पञ्चाशीतिर्दाशतयेऽनुवाका दृष्टाः पुराणैरृषिभिर्महात्मभिः ,
तान्पारणे शाकले शैशिरीये वदन्ति शिष्टा, न खिलेषु विप्राः ।...
अध्यायानां चतुःषष्टिर्, मण्डलानि दशैव तु ,
वर्गाणां तु सहस्रे द्वे सङ्ख्याते च षडुत्तरे ,
सहस्रमेतत्सूक्तानां निश्चितं, खैलिकैर्विना ,
दश, सप्त, च पठ्यन्ते; [ सङ्ख्यातं वै पदक्रमम् ]...
ऋचां दश सहस्राणि, ऋचां पञ्चशतानि च ,
ऋचामशीतिः, पादश्च; पारणं संप्रकीर्तितम् ।"
[ च० व्यू० कं० १। अनुवाकानुक्रमणी श्लो० ३६–४३ ]

"अथ सर्वमण्डलसूक्तसङ्ख्यामाह—'एतत्' सूक्तजालं सप्तदशाधिकं सहस्रं सूक्तानि । 'बाष्कले' संहितापाठे 'अतः' शाकलात् अधिकानि 'अष्टौ' सूक्तानि, पञ्चविंशत्यधिकसहस्रमित्यर्थः ।...

शिष्टा अनुवाकानस्मिञ्शाकल एव वदन्ति, न खिलेष्वित्यर्थः ।...वर्गाः षडधिकद्विसहस्रमित्यर्थः । [ अनुवा० वृत्तिः ]

"एवं दश सहस्राणि, शतानां तु चतुष्टयं
ऋचां द्व्यधिकमाख्यातमृषिभिस्तत्त्वदर्शिभिः" [ छ० सं० ११ ]
"गौतमादौशिजः कुत्सः, परुच्छेपाद्दषेः परः ,
कुत्साद्दीर्घतमा, इत्येष तु बाष्कलकः क्रमः" [ अनुवा० २१ ]

"अथ बाष्कलकेऽस्य विशेषमाद्यमण्डले आह—'उपप्रयन्तो नासत्याभ्याम् अग्निं होतारम् इमं स्तोमं वेदिषद' इति बाष्कलकः क्रमः; 'उपप्रयन्त इमं स्तोमं नासत्याभ्याम् अग्निं होतारं वेदिषद' इति शाकलकः क्रम इत्यर्थः । अथैवमुक्तेरुत्तरमण्डलनवके न क्रमविपर्यासः" इति तद्वृत्तिः । एतेन शाकल-बाष्कलयोः क्वचिन्मन्त्रपाठक्रमादिभेदेऽपि ग्रन्थैकत्वमक्षुण्णमिति सिद्धम् ।

* दृश्यतामनुपदमेवात्र लिखितं ४६ टिप्पणम् ।

छोड़ कर केवल 'मण्डल' 'सूक्त' और 'मन्त्र' का ही निर्देश किया है। पर एक ही ग्रन्थ मे दो प्रकारके विभागों के अङ्कित रहने से उनका पता लगाने मे जिज्ञासुओं को अधिक श्रम और कहीं कहीं भ्रम भी हो सकता है; अतः उस की निवृत्ति के लिये इस ग्रन्थ के आरंभ में उद्धरणीय वेदादि-शास्त्रग्रन्थों की एक सूची भी लगा दी गई है, जिसमे उनके संस्करण, मुद्रणकाल, विशेषता, और संक्षिप्त चिह्नों के विवरण दे दिये गये हैं।

## ( प्रसङ्गतः शाखापदार्थविमर्शः )

"विश्वरूपा" "अनन्ता वै वेदा"[५१] इत्यादिकश्रुतेः, वेदशब्दस्य मुख्यार्थो 'ज्ञान'मेव प्रतीयते। विषयाणामनन्तत्वाज्, ज्ञानानन्त्यं स्वतः स्थितं, 'वेदो' ज्ञानस्य पर्यायो ज्ञानार्थ 'विद' धातुजः। ज्ञानोपदेशसम्बन्धात्, तन्मयत्वाद् ऋगादिषु, ग्रन्थेष्वपि च वेदत्वं गौणमिष्टं महाजनैः। तत्र ज्ञानात्मके वेदे साक्षादानन्त्यमीक्ष्यते, "सर्वज्ञानमयो" (वेदः) स्मृतश्चात्र मनुस्मृतौ* यस्तु ऋक्संहिताद्यर्थे योगरूढः† प्रयुज्यते, 'वेद'-शब्दः‡, इहास्यैव शाखाभेदो विमृश्यते।

इस प्रकरण मे 'शाखा' की चर्चा बहुत हुई है, अतः प्रसङ्गवशात् इसके स्वरूप पर विचार करना, यहां अनुचित न होगा।

वेद 'विश्वरूप' और 'अनन्त' हैं, ऐसी बातें वैदिक ग्रन्थों मे भी लिखी हैं, तदनुसार 'वेद' शब्द का मुख्य अर्थ 'ज्ञान' ही प्रमाणित होता है। यद्यपि तत्त्वतः 'ज्ञान' एक ही है, तथापि अनन्त वस्तुओं के सम्बन्ध से ( घट का ज्ञान, पट का ज्ञान, इत्यादि रूप से ) अगणित भेदवाला हो जाता है, अत एव इसे 'विश्वरूप' वा 'अनन्त' कहते हैं। वेद शब्द ज्ञानार्थक 'विद'-धातु से व्युत्पन्न हुआ है, इस लिये भी यह प्रधानतः 'ज्ञान' का ही वाचक है। ऋक्संहिता

---

५१. "यस्मिन्वेदा निहिता विश्वरूपाः" [ अ० सं० ४,७,६ ]
"वेदा वा एते, अनन्ता वै वेदाः" [ तै० ब्रा० ३,१०,११,४ ]

* मनु० २, ७। † यत्र शब्दे अवयवशक्तिविषये समुदायशक्तिरप्यस्ति, स 'योगरूढः'। अत्र व्युत्पत्तिस्तु—योगो रूढिश्चैते एकसजातीयार्थबोधकतया स्तोऽस्य ( अच् ) इति।

‡ "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति, स वेदः"
"प्रत्यक्षेणा,-ऽनुमित्या वा, यस्तूपायो न बुध्यते,
एतं विदन्ति वेदेन, तस्माद्वेदस्य वेदता",
"प्रत्यक्षा-ऽनुमाना-ऽऽगमेषु ( प्रमाणेषु ) अन्तिमो वेदः",
"समयबलेन सम्यक्परोक्षानुभवसाधनं वेदः",
"अपौरुषेयं वाक्यं वेदः", "मन्त्र-ब्राह्मणात्मकः शब्दराशिर्वेदः",
इत्यादि सायणीयं वेदलक्षणं तद्भाष्यभूमिकादौ द्रष्टव्यम्।
"वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन, स वेदः",
इति बह्वृक्-प्रातिशाख्यवृत्त्युपक्रमादौ।
"मन्त्र-ब्राह्मणयोराहुर्वेदशब्दं महर्षयः,
विनियोक्तव्यरूपो यः स मन्त्र इति चक्षते,
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि" [ सर्वानु० भू० ]
"आम्नायः पुनर्मन्त्राश्च, ब्राह्मणानि च" [ कौ० सू० १, १, ३ ]
"मन्त्र-ब्राह्मणयोर्वेदनामधेयम्" [ आप० यज्ञप० २४, १, ३१। का० प्रतिज्ञाप० १, १ ]
"मन्त्रब्राह्मणमित्याहुः" [ बौ० गृ० २, ६२ ]

आदि सद्ग्रन्थ, ज्ञान का ही उपदेश देते हैं, अत एव वे भी 'ज्ञानमय' हैं, इसी लिये गुणयोग से उन्हें भी 'वेद' कहते हैं । इन दो प्रकार के वेदों [ ज्ञान और शास्त्र ] मे से ज्ञानरूप वेद की [ विषय भेद से ] अनन्तता का तो प्रत्यक्ष ही अनुभव सब को होता है, 'क्योंकि विषय-विषयिभेद से, सत्त्व आदि गुणों के अनुसार, बुद्धि की बहुत शाखायें, और अनन्त भेद हो जाते हैं' । किन्तु यहाँ तो हमें उसी वेद की शाखाओं के विषय मे विचार करना है, जो 'ऋक्संहिता' आदि लोकप्रसिद्ध आर्ष ग्रन्थों के अर्थ मे 'योगरूढ' हो गया है ।

"एकविंशतिभेदेन ऋग्वेदं कृतवान्पुरा ; शाखानां तु शतेनैव यजुर्वेदमथाऽकरोत् ; सामवेदं सहस्रेण शाखानां प्रविभेद सः ; अथर्वाणमथो वेदं विभेद नवकेन तु ।"*
"एकविंशत्यध्वयुक्तम् ऋग्वेदमृषयो विदुः ; सहस्राध्वा सामवेदो; यजुरेकशताध्वकम् ; नवाध्वा-ऽथर्वणो,-ऽन्ये तु प्राहुः पञ्चदशाध्वकम् ।"†
"एकशतमध्वर्युशाखाः;[52] सहस्रवर्त्मा सामवेदः ; एकविंशतिधा बाह्वृच्यं; नवधाऽऽथर्वणो वेदः" [ पा० म० भाष्ये पस्पशायाम् आ० १ पृ० ६५ ]

यों तो "अनन्तशाखो वेदः" यह 'घोष' विश्वविश्रुत है । किन्तु ऋग्वेद की एक्कीस, यजुर्वेद की एक सौ, सामवेद की एक हजार, और अथर्ववेद की नव वा पन्द्रह शाखायें मुख्य कही गई हैं । इनमे से भी बहुतों का विलोप 'चरणव्यूह' काल मे ही हो चुका था, [ टि० ३९ से ४४ तक देखिये ] अब तो इनकी संख्या बहुत ही कम हो गई है; प्रतिवेद दो तीन शाखायें उपलब्ध हैं, उनमे भी यजुः-कठी, मैत्रायणी, तैत्तिरीया, काण्वी, माध्यन्दिनी; ऋक्-शाकली; साम-कौथुमी; और अथर्व-शौनकीया; ये आठ संहितायें अधिक प्रसिद्ध हैं । इनमें भी तैत्तिरीया-आदि ६ संहितायें ही सम्पूर्ण सभाष्य मिलतीं और अध्ययन-अध्यापन में विशेष प्रचलित हैं ।

---

* कू० पु० पूर्वविभागे अ० ५२ । † वेदार्थदीपिकाभूमिकायां षड्गुरुशिष्योद्धृतम् ।

५२. "इत्येकोत्तरशतशाखाऽध्वर्युप्रभेदभिन्ने श्रीमद्यजुर्वेदे काठके चरकशाखायां मध्यमिकायां पात्नीवतं नाम त्रिंशं स्थानकं परिपूर्णम्"

इति जनविक्रमिणा ¶ श्रोत्रा लीवोण्यदेशोद्भवेन प्राचीनराष्ट्रे वीणाख्यायां राजधान्यां निवासिना संशोधितं, शार्मणानां राष्ट्रे लिप्स्याभिधानायां पुरि, १९०० सम्वत्सरे मुद्रितं, यत् काठकसंहितापुस्तकं,‖ तस्य पुष्पिकायां सर्वत्र यजुर्वेद 'एकोत्तरशत' शाखो दृश्यते निर्दिष्टः । [ अत्र मुक्ति० उ० ११-१४ श्लोका द्रष्टव्याः ]

---

¶ अनेनैव महाशयेन शोधिता, प्रुश्यनाम्नि राष्ट्रे, बेर्लीणाख्यायां राजधान्यां, १८८१ सम्वत्सरे मुद्रिता 'मैत्रायणी' संहिताऽपि समुपलभ्यते । अत्र काण्ड-प्रपाठक-कण्डिकाभिर्विभागः कृतो दृश्यते । तत्र काण्डाश्चत्वारः, प्रपाठकाश्च प्रथमे काण्डे एकादश, द्वितीये त्रयोदश, तृतीये षोडश, चतुर्थे चतुर्दश, इति सङ्कलनया चतुःपञ्चाशत् सन्ति ।

‖ काठकसंहितायां स्थानकैः परिच्छेदः, प्रतिस्थानकं च अनुवचनविभागः कण्डिकाविभागो वा कृतो दृश्यते । अस्यां हि संहितायाम्—'इठिमिका' 'माध्यमिका' 'ओरिमिका' चेति त्रयो भागाः सन्ति । तत्र इठिमिकायाम् अष्टादश ( १–१८ ), माध्यमिकायां द्वादश ( १९–३० ), ओरिमिकायां दश ( ३१–४० ) च स्थानकानीति मिलित्वा चत्वारिंशद् भवन्ति । ततः परं त्रयोदशानुवचनात्मकः 'अश्वमेधो' नाम पञ्चमो ग्रन्थो वर्तते ।

एवं शास्त्रेषु वेदानां शाखाभेदो निरूपितः। तत्र 'शाखा' न तद्भागा, महाभारतपर्ववत्;
न वा प्रस्थानतो भिन्ना, अष्टादशपुराणवत्; न च वा कल्पसूत्राणां श्रौत-गृह्यादिभेदवत्;
किन्तु नानाप्रदेशस्थविद्यापीठप्रवर्तिताः, पाठा एवाल्पशो भिन्ना, स्तत्तच्छाखाः[५३] प्रकीर्तिताः।
अथ वा तत्तदाचार्याऽध्यापितैकैव संहिता, तत्तत्क्रमादिभेदेन तत्तन्नाम्ना व्यभिद्यत।
नानागुरुकुला*ऽध्येतृसम्प्रदायप्रभेदतः, उच्चारणादिभेदाद्वा, तद्भेदः समपद्यत।
पश्चाद्गुरुकुलादीनामव्यवस्थानतः, शनैः, बहुशाखाः व्यलीयन्त; काश्चिदेकत्र संहताः।
किञ्चित्पाठादिभेदस्य, मूलेऽकिञ्चित्करत्वतः, एकैकसंहितैवाद्य प्रतिवेदं तु शिष्यते।
कस्याश्चिदेकशाखायाः स्वाध्यायेनैव सिध्यति, तद्वेदस्य समग्रस्य पूर्णमध्ययनं, विधेः[५४]।
अन्यथा प्रतिशाखं चेद्ग्रन्थभेदोऽस्तु मूलतः, कृत्स्नाऽधीतिविधिस्तर्हि कुशकाशावलम्बनः।
न हि साङ्गस्य वेदस्याऽनन्तशाखस्य कृत्स्नशः शक्यमध्ययनं पुंसा कर्तुमेकेन जन्मना;
तस्मात्किञ्चित्प्रभिन्नाध्व-गत्यध्ययनभेदिता, एव शाखा, न तु ग्रन्था मिथो भिन्नाः स्वरूपतः।
-प्रत्यक्षं दृश्यतामेतद्, वेदस्यैकस्य कस्यचित्, शाखाद्वयं कणेहत्य तोलयित्वाऽर्थशब्दयोः।

प्रकरण के अनुसार 'शाखा' शब्द के कई अर्थ होते हैं। नदियों के सोते उनकी शाखायें हैं, जो स्वतन्त्र रूप से अलग बह निकलतीं और अपने आप में ही पर्याप्त होती हैं। उनके पृथक् हो जाने पर भी मूल नदी की समग्रता पूर्ववत् बनी रहती है। वृक्षों की भी शाखायें ( डालियाँ ) होती हैं, पर न वे स्वयं पृथक्-सम्पूर्ण वस्तु होतीं, और न ही उनके कट जाने पर वृक्षकी समग्रता अक्षुण्ण रह सकती है, प्रत्युत शाखा-समूह में वृक्ष की समग्रता और उससे सम्बद्ध अवयय में 'शाखात्व' पर्याप्त होता है। यदि 'रामायण, महाभारत, और भागवत-आदि ग्रन्थों में वृक्षत्व का

---

५३. "अध्वा, देवता, गतिः, शाखा, इति पर्यायवाचकाः" [ सर्वानु० वृ० भू० ] "चरणे ब्रह्मचारिणि" इति पाणिनीयसूत्र ( ६,३,८६ ) व्याख्याने "चरणे समानत्वेन गम्यमाने; चरणः—शाखा" इति दीक्षितः। "तस्य ( चरणस्य ) समानत्वं, वेदस्य, व्रतस्य वा समानत्वात्; तस्य तत्त्वं च अध्येतृभेदात् वेदभेदं, व्रतभेदं च परिकल्प्य बोध्यन्ते" इति तत्रत्यः शेखरः। "गोत्रं च चरणैः सह" [ पा० सू० ४, १, ६३ उपरि ] इति जातिलक्षण-व्याख्यानान्तरे 'चरण' शब्दो ऽध्ययनवचनः, इह तूपचाराद्ध्येतृषु वर्तते' इति कैयटः। 'शाखाऽध्येतृवाची च शब्दो जाति-कार्यं लभते, कठी, बह्वृची", इति च तत्र दीक्षितः। "कठेन प्रोक्तमधीयाना वा कठी" इति तत्रत्या तत्त्वबोधिनी।

"अनुवादे चरणानाम् ( पा० सू० २, ४, ३ ) इत्यस्य व्याख्याने 'चरणशब्दोऽत्र शाखाऽध्येतृपरः' इति नागेशः। 'चरणानां—शाखाध्येतृवाचिनामित्यर्थः' इति च तत्त्वबोधिनी।

"चरणाद्धर्माम्नाययोः" ( पा० सू० ४, ३, १२९ वा० ) इति वार्तिकभाष्ये 'कठानां धर्म, आम्नायो वा, काठकं, पैप्पलादकम्' इति पतञ्जलिः। 'आम्नायः—सम्प्रदायः' इति च तत्र नागेशः।

"शाखाः—खशयाः, शक्नोतेर्वा" [ नि० १, ४, १९ ]

"एतेषां शाखाः पञ्च,···अध्यायाश्चतुःषष्टिः" इत्यादि सर्वशाखापरिच्छेदादीनामैकविध्यं; "तेषामाश्वलायनीयादिशाखानां समानाऽध्ययनं सूचयति" इति चरणव्यूहसूत्र-तद्भाष्ये [ कं० १ ]

*गुरुकुलं-गुरोः कुलं-गृहं, वंशो वा; स च द्विधा—"विद्यया, जन्मना च"। कुलं वंशः, अध्येतृवर्गः, शाखा, सम्प्रदायश्चेत्यादयः पर्यायाः। लोकेऽपि 'त्वया स्वार्थवशात् किंचिल्लोभेन शाखा-सम्पद्-द्वयमपि बोडितम्' इति शाखाशब्दो वंशाभिप्रायः प्रयुज्यते।

५४. "स्वाध्यायोऽध्येतव्यः" [ शत० ११, ३, ८, ३ ]; "आगमः खल्वपि—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति" [ पा० म० भा० आ० १, पृ० २१ ];

"वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" [ मनु० २, १६५। ३, १–२ ]

आरोप कर लिया जाय तो उनके काण्ड, पर्व, और स्कन्ध, आदि शाखास्थानीय होंगे; स्यात् उनकी कल्पना भी ऐसी ही हुई है, क्योंकि 'काण्ड' आदि भी शाखा के पर्यायवत् हैं। पर रामायण आदि के काण्ड आदि उनके ही भाग वा अंशविशेष हैं, न कि पृथक् पर्याप्त स्वतन्त्र ग्रन्थ। अत एव उनके सङ्घटित रूप में ही रामायण आदि की समग्रता और पर्याप्ति है, अन्यथा नहीं। धर्मशास्त्र का प्रतिपाद्य विषय ( संस्कार-आचारादि ) प्रायः एकसा होता है, फिर भी उसका प्रत्येक ग्रन्थ स्वतः पर्याप्त और पृथक् प्रस्थान रूप है। यही स्थिति पुराण की भी है। ( पुराणं पञ्चलक्षणम् ) विषय एक होने पर भी प्रत्येक पुराण-ग्रन्थ अपने आप में सम्पूर्ण और स्वतन्त्र प्रस्थान है।

किन्तु वेद की शाखायें विचित्र रूप हैं। ये न काण्ड, पर्व, स्कन्ध, आदि की तरह ग्रन्थांश रूप हैं, और न ही पुराण के अठारह प्रस्थानों की तरह आमूल भिन्न भिन्न ग्रन्थ हैं। 'कल्प' के श्रौत, गृह्य, और धर्मसूत्रों के ऐसा भेद भी वेदशाखाओं में नहीं है। किन्तु विभिन्न प्रान्तों के विद्यापीठ, प्रधानाध्यापक, और गुरुकुल, वा अध्येताओं, के सम्बन्ध से, प्रत्येक वेद की एक ही मूल संहिता में आदर्श, पाठ, क्रम, और उच्चारण तथा अनुष्ठान आदि के जो भेद हो गये, जिनका होना स्वभावतः अनिवार्य था, उन्हीं के अनुसार उसकी कई शाखायें हो गईं, पर उन सभी शाखाओं में एक ही मूल संहिता, शब्दतः और अर्थतः, अनुवर्तमान रही। शाखाभेद के चार मुख्य कारण हुए ( १ ) विभिन्न विद्यापीठों के स्वतन्त्र आदर्श, ( २ ) नाना आचार्यों की अध्यापन-पद्धति की विशेषता, ( ३ ) अनेक गुरुकुलों में उनके विशिष्ट पाठक्रमों का प्रचार और अनुवर्त्तन, तथा ( ४ ) विभिन्न देश-कालस्थ अध्येताओं के उच्चारण, अनुष्ठान, आदि की भिन्नता। शाकलों के आदर्श पाठभेद 'शाकल शाखा'; कठ से अध्यापित शाखा 'कठी'; तित्तिरियों से अधीत 'तैत्तिरीया'; इत्यादि नामों से भी शाखाभेद के कारणों का स्पष्ट सङ्केत मिलता है। सारांश यह कि किञ्चित् पाठ-आदि के भेद से शाखाभेद हो जाने पर भी मूल वेदग्रन्थ में स्वरूपतः कोई भेद नही होता; अतः प्रत्येक शाखा में वेदत्व का पर्यवसान होता है, और उसकी समग्रता तथा पर्याप्ति होती है। यही कारण है कि एक वेद की किसी एक संहिता का अध्ययन कर लेने से ही उसकी सभी शाखाओं का अध्ययन हो जाता है, अन्यथा "कम से कम बारह वर्षों में, और अधिक से अधिक छत्तीस वर्षों में ही सभी वेदों का साङ्गोपाङ्ग पूरा अध्ययन कर लेना चाहिये" इस प्रकार के शास्त्रीय विधान व्यर्थ ही हो जायेंगे, क्योंकि यदि शाखायें आमूल भिन्न और परम स्वतंत्र ग्रन्थ हों तो 'अनन्तशाख' वेद का 'कृत्स्न' ( सम्पूर्णतः ) अध्ययन अनेक शतायु-काल में भी नहीं पूरा हो सकेगा। शाखा-भेद से ग्रन्थभेद नहीं होता, इसी लिये एक वेद की अनेक संहिताओं के अवान्तर विभाग 'मण्डल' आदि एक ही प्रकार के परिच्छेदों में किये गये हैं। शाखा-भेद होने पर भी मूल संहिता की एकता के कारण ही, अनावश्यक होने से, बहुतसी शाखायें उपेक्षित और विलुप्त हो गईं, और जो बची हैं, उनमें भी परस्पर बहुत भेद नहीं है। यह बात किसी भी वेद की दो शाखाओं को मिला कर देख लेने से स्वतः स्पष्ट हो जायगी। इस प्रकार का शाखाभेद, 'ऋग्' आदि चार वेदों में ही नहीं, प्रत्युत महाभारत ऐसे 'पञ्चम' वेद में भी पाया जाता है। इसकी कई 'शाखायें' प्रकाशित भी हो चुकी हैं, जिनमें उत्तरी और दक्षिणी शाखायें अधिक प्रसिद्ध हैं। उनमें पाठभेद, अध्यायादि-क्रमभेद, और श्लोकादि का न्यूनाधिक्य रहने पर भी, मूल ग्रन्थ सर्वत्र एक ही माना गया है। वैदिक शाखाओं के विषय में भी यही बात चरितार्थ है, प्रत्युत उनमें महाभारतीय शाखाओं के इतना भी विपर्यास और तारतम्य नहीं है।

शाखाओं का यह विवेचन ऐतिहासिक दृष्टि से हुआ; मीमांसकों के मत से तो सभी वेदशाखायें अनादि-परम्परा से ही चलती आरही हैं।

## ( यजुर्वेदे कृष्ण-शुक्लभेदः )

"ऋग्-यजुः-सामवेदा ये व्याख्यातास्, तेषु तद्यजुः 'कृष्णं' 'शुक्ल' मिति द्वेधा, तत्कृष्णं तैत्तिरीयकं, वैशम्पायनशिष्येण याज्ञवल्क्येन, यद् यजुः, अधीत्य वान्तम्, आचार्यकोपभीतेन योगिना। गुरुः शिष्यमुवाचेत्थं क्रुद्धः केनाऽपि हेतुना, प्रत्यर्पय मदीयां त्वं विद्याम्, इत्यर्थयत्, स च योगसामर्थ्यतो विद्यां मूर्तां कृत्वाऽवमत्तदा। गृह्णीत तद्यजुर्वान्तम्, इत्यन्यान् गुरुरब्रवीत्; अन्ये तित्तिरयो भूत्वा किञ्चित्तान्यप्यभक्षयन्; प्रवर्तितः खण्डशस्तैर्न सम्यग्बुध्यते नृभिः। आध्वर्यवं क्वचिद्, हौत्रं क्वचिद्, इत्यव्यवस्थया, बुद्धिमालिन्यहेतुत्वाद्, यजुः कृष्णमितीर्यते। याज्ञवल्क्यस्ततः सूर्यमाराध्याऽस्मादधीतवान्, व्यवस्थितप्रकरणं यजुः, शुक्लं तदीर्यते। पौराणिकी[५५] कथामेतां वेदव्याख्यान आदरात्, आदिशन्मह्यमाचार्याः, श्रुतावपि[५६] मया श्रुतम्। काण्ववेदगते विद्या वंशब्राह्मण इर्यते, यजूंषि शुक्लान्यादित्यान्मुनिः प्रापेत्यपि स्फुटम्"[५७]

अन्य वेदों की शाखाओं मे पाठ आदि का भेद बहुत कम हुआ, इस लिये उन की मूल संहिता एक एक ही रह गई, उन में प्रबल प्रस्थानभेद नहीं हुआ।

किन्तु यजुर्वेद की कतिपय शाखाओं मे परस्पर का भेद कुछ अधिक बढ़ गया, इसी लिये उन्हें 'कृष्ण' और 'शुक्ल' इन दो प्रतिद्वन्द्वी नामों से पुकारने लगे, और उनकी दो प्रकार की ( तैत्तिरीया और माध्यन्दिनी आदि ) संहितायें मूलतः बहुत भिन्न हो गईं, जो प्रत्यक्ष भी देखी जाती हैं। इसी लिये श्रीसायणाचार्य-प्रभृति भाष्यकारों ने अन्य वेदों की एक एक संहिता पर ही भाष्य किया, और शेष शाखाओं के लिये भी उसे ही पर्याप्त समझा, क्यों कि उन में मौलिक भेद नहीं था। किन्तु यजुर्वेद के कृष्ण और शुक्ल दोनों विभागों की एक एक संहिता पर अलग अलग भाष्य करना आवश्यक समझा; क्योंकि उन का पारस्परिक भेद मौलिक था।

यजुर्वेद के इस कृष्ण-शुक्लभेद का 'कारण' कई पुराणों मे बतलाया गया है, जिनका सार यह है—

"ऋषियों ने महामेरु पर अपना एक समाज बनाना चाहा, और उसके लिये यह शपथ घोषित कर दिया कि 'जो ऋषि हमारे इस समाज मे संमिलित न होगा, उसे सात रातों के भीतर

---

५५. वि० पु० अं० ३ अ० ५। भा० स्क० १२ अ० ६। स्क०-सू० सं० कालीखं० अ० १७। ५६. श० ब्रा० १४,७,५,३३।—५७. काण्वसंहिताभाष्यभूमिकायां सायणः।

"तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं, वेदव्यासो मन्दमतीन्मनुष्यान्विचिन्त्य, तत्कृपया चतुर्धा व्यस्य, ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः क्रमादुपदिदेश; ते च स्वशिष्येभ्यः। एवं परम्परया सहस्रशाखो वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनाऽपि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच—'मदधीतं त्यजेति'। स योगसामर्थ्यान्मूर्त्तां विद्यां विधायोद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायन-शिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात्कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबाल-बौधेय-काण्व-माध्यन्दिनादिभ्यः पञ्च ( सप्त ) दशशिष्येभ्यः पाठितवान्। तथा च श्रुतिः—'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते' ( बृ० उ० ५,५,३३। श० ब्रा० १४,७,५,३३ ) इति" [शु०य०मही०भा०भू०]

ही ब्रह्महत्या लगेगी'। व्यास के शिष्य वैशम्पायन ने उस नियम का उल्लंघन किया। फलतः प्रमादवश उन्होंने एक दिन पैर से कुचल कर अपने बालक भानजे की हत्या कर डाली। उस पाप से मुक्त होने के लिये उन्होंने अपने शिष्यों को ब्रह्महत्यानिवारक महाव्रत करने का आदेश दिया। उसे सुन कर याज्ञवल्क्य ने कहा कि—'गुरु देव, इन अत्यन्त निस्तेज सब ब्राह्मणों को कष्ट देने की क्या आवश्यकता है ? मैं अकेला ही आपके लिये महाव्रत करूँगा'। इस पर कुपित हो वैशम्पायन ने कहा—'तू ने इन समस्त श्रेष्ठ ब्राह्मणों को निस्तेज कह कर इनका घोर अपमान किया है, अतः मुझे तुझ–जैसे उद्धत शिष्य से कोई प्रयोजन नहीं है, मुझसे जो कुछ पढ़ा है, उसे त्याग दे'। यह सुन, याज्ञवल्क्य ने पुनः कहा कि—'द्विजदेव, मैंने तो गुरुभक्ति से प्रेरित हो, वैसा कहा था, फिर भी आप क्रुद्ध हो गये। एवमस्तु, मुझे भी आपसे कोई प्रयोजन नहीं, लीजिये, आपसे पढ़ी हुई विद्या को उगल देता हूँ'। अनन्तर याज्ञवल्क्य से 'वान्त' ( त्यक्त ) विद्या को गुरु के आदेश से वैशम्पायन के अन्य शिष्यों ने तित्तिरि ( तीतर ) होकर ग्रहण कर लिया, अतः वह तैत्तिरीय ( कृष्ण यजुर्वेद ) विद्या कहलाई। उधर याज्ञवल्क्य ने भी सूर्य की आराधना से 'शुक्ल' यजुर्वेद को प्राप्त किया।"

इस पौराणिक रूपक का आशय कुछ विद्वानों ने ऐसा समझा है कि "जिस प्रकार अलग अलग खाकर 'वान्त' ( वमन किया हुआ ) अन्न और व्यञ्जन, मिश्रित तथा मलिन हो जाता है, उसी प्रकार पृथक् पृथक् अधीत, मन्त्रों और ब्राह्मण-वाक्यों के एकत्र संमिश्रण से, तित्तिरिनामक आन्ध्रादिदेशीय विद्वानों ने, जिस सङ्कीर्ण यजुर्वेद को प्रवर्तित किया, वही विषय-साङ्कर्य और क्रमविपर्यास के कारण, दुरूह ( अन्धकारमय ) होने से 'कृष्ण' कहलाया। उसे त्याग कर याज्ञवल्क्य ने यज्ञक्रम के अनुसार जिसमे मन्त्रों का सङ्घटन किया, वह क्रमसौष्ठव और सन्दर्भशुद्धि से युक्त, तथा विशुद्ध मन्त्रमय होने के कारण 'शुक्ल' यजुर्वेद कहलाया"[५८]।

किन्तु यह कल्पना मन मे कुछ ठीक नहीं बैठती है। हमें तो इस रूपक का वास्तविक तात्पर्य ऐसा प्रतीत होता है कि—'आचार्य वैशम्पायन के शिष्य दो प्रकार के थे। एक तो वे जो गुरुमुख से यथाश्रुत पाठ को तीतरों की तरह चुग ( ग्रहण कर ) लेते, वा तोतों की तरह ज्यों का त्यों अबुद्धिपूर्वक रट लेते थे, और गुरुजी अपने वेदपाठ मे तत्कालीन लौकिक या पौराणिक बातों को भी सम्मिलित कर उसे बढ़ाते ( उपबृंहित ) करते जाते थे। यही कारण है कि कृष्ण यजुर्वेद मे बहुत से आधुनिक विषयों का भी समावेश पाया जाता है। इसी संमिश्रण के कारण उसे 'कृष्ण' ( अविशुद्धरूप ) यजुर्वेद का नाम दिया गया होगा।

---

५८. "एतस्मादितिहासात्, मैत्रायणी-माध्यन्दिनी-तैत्तिरीयशाखानां पाठप्रकारदर्शनाच्च, प्रतीयते चैतत्—चरकाध्वर्युयजुःशाखापाठा यज्ञक्रमानुसारिण इति याज्ञवल्क्येन स्वमनीषया दर्श-पूर्णमासयज्ञाद्यनुसारिणी संहिता ग्रथिता, पाठिता च सा सप्तदशशिष्येभ्यः, सैव यज्ञोपयोगिनीति वाजानाम्–अन्नानां सनये लाभाय सम्पन्नेति वाजसनेयीत्याख्याता, क्रमसौष्ठवसम्पन्नेति शुक्ला ( शुद्धा ) इति च।

गुरुमुखतोऽधीताऽपि तत्परित्यक्ता प्राचीनतमा चरकाऽध्वर्युसंहितैव अन्यैः आन्ध्रादिदेशीयैः तित्तिर्यादिसञ्ज्ञकैः गृहीता, तस्या वाजसनेयीतोऽप्यौत्कर्षं चिकीर्षुभिः यत्प्रकरणे ये मन्त्राः पठिताः तत्रैव तदुत्तरं तत्तद्विधायकादिब्राह्मणवचनानि च संगृहीतानि। तथा च, यथा पृथक् पृथक् भुक्तानि च अन्नव्यञ्जनानि छर्दितानि चेद्, वान्तं तद्विमिश्रान्नव्यञ्जनमेव भवति। एवं तित्तिर्यादिभिर्मन्त्रा ब्राह्मणश्रुतयश्च पृथक्पृथग् अधीता अपि यज्ञकार्येषु तद्व्यवहारसौष्ठवं साधयितुं विमिश्रीकृता इति द्वावेव मन्त्रब्राह्मणग्रन्थौ वान्तपूर्णाविव सम्पन्नौ, अत एव कृष्णेति व्यपदेशभागिनौ च"। [ नि० आ० पृ० १७९ ]

वैशम्पायन के दूसरे शिष्य प्रतिभाशाली याज्ञवल्क्य थे, जो गुरुभक्त होने पर भी अन्ध-श्रद्धालु वा मूढग्राही नहीं थे। सुतरां उन्हें लौकिक विषयों के सम्बन्ध से यजुर्वेद को 'काला' करना पसन्द नहीं था, वह उसे 'शुक्ल' विशुद्ध ( साफ़ ) रखना चाहते थे। अतः देश-काल के अनुसार उपबृंहण के पक्षपाती वैशम्पायन उन पर पहले से ही रुष्ट रहते थे। फलतः महाव्रत वाला निमित्त पा कर, उन्हों ने याज्ञवल्क्य को अपने स्थान से, 'अधीत' ( अध्ययन ) छोड़ कर, निकल जाने को कहा, और याज्ञवल्क्य ने वैसा ही किया। उन के 'वान्त' कर देने पर ( छोड़ कर चले जाने पर ) तित्तिरि-वृत्तिवाले वैशम्पायन-शिष्यों ने गुरु के आदेश से उन के द्वारा प्रवर्तित सङ्कीर्ण यजुर्वेद को ही यथावत् ग्रहण किया, तब से वह 'तैत्तिरीय' भी कहलाने लगा। याज्ञवल्क्य के अध्ययन-त्याग को 'वान्त' कहना कोई आश्चर्य की बात नहीं थी। किसी वस्तु के घृणा-पूर्वक त्याग को सूचित करने के लिये ऐसा प्रयोग आज भी होता ही है। 'मैंने तुम्हारी चीज़ पर थूक दिया' ऐसे वाक्य घृणापूर्वक त्याग के ही द्योतक हैं। एवं घृणापूर्वक त्यक्त वस्तु को पुनः न स्वीकार करने की प्रतिज्ञा में 'गिराया थूक फिर नहीं चाटा जाता' ऐसी बात प्रचलित ही है। अस्तु, उधर याज्ञवल्क्य ने 'आदित्य' आत्मा की आराधना से ( स्वबुद्धिप्रकाश से ) मन्त्र-क्रमविशुद्ध यजुर्वेद का संघटन किया, जो 'शुक्ल' नाम से प्रसिद्ध हुआ'।

उस पौराणिक रूपक का यह भाव भी लिया जा सकता है कि जब यजुर्वेद का पुराना साहित्य, देश, काल, परिस्थिति, लोकभावना, और पात्र के परिवर्त्तन से, मन्दप्रचार 'कृष्ण' ( काला वा धुँधला ) हो गया, तब उस समय के लोकपुरोहित याज्ञवल्क्य ने, उसे त्याग कर, परिवर्तित अवस्था के अनुसार, दूसरे लोकाकर्षक 'शुक्ल' तेजस्वी यजुर्वेद का आविष्कार किया।

वैशम्पायन और याज्ञवल्क्य मे, नवीन और प्राचीन विचारों के पक्षपात से, जैसा मतभेद, और तज्जन्य 'कृष्ण'—'शुक्ल' का प्रस्थानभेद, हुआ, वैसा वैदिक साहित्य मे ही नहीं, प्रत्युत अन्य धर्मसाहित्यों मे भी होता आया है। बौद्धों के 'हीनयान' और 'महायान', तथा ईसाइयों के 'ओल्ड' और 'न्यू' टेस्टमेन्ट, आदि इसी के निदर्शन हैं।

अस्तु, चाहे जो हो, पर कृष्ण और शुक्ल यजुःशाखाओं मे मौलिक अन्तर है, अत एव उनका अध्ययन वैकल्पिक[५९] नहीं होता। अन्य वेदों की शाखाओं का अध्ययन ऐच्छिक होता है, क्योंकि उनमे मौलिक भेद नहीं है, अत एव किसी एक शाखा के अध्ययन से ही सबका अध्ययन सम्पन्न हो जाता है।

---

५९. "तत्रेदं काण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातं, किन्तु तैत्तिरीयाख्यं कृष्णं यजुरेव व्याख्यातम्। तस्मादिदानीं काण्व-शाखा व्याख्यायते। यद्यप्येनयोः शाखयोराध्वर्यवं एव प्रयोगः प्रतिपाद्यते, तथापि मन्त्रपाठविशेषैः, प्रयोगविशेषैर्महान् भेदः। स चाऽनुष्ठातृभेदेन व्यवस्थितविषयत्वान्न विकल्प्यते। अत-एव "स्वाध्यायोऽध्येतव्यः" ( तै० आ० २,१५ ) इति स्वकीयशाखाऽध्ययनमनुष्ठानविशेषाय विहितम्" इति काण्वसंहिताभाष्यभूमिकायां श्रीसायणाचार्यः।

कृष्ण-शुक्लयजुषोः परस्परं महतो भेदादेव तत्प्रातिशाख्यादावपि भेदः समजनिष्ट। तथा चोक्त तैत्तिरीयप्रातिशाख्यभूमिकायां ४ पृष्ठे पण्डितरत्नकस्तूरिरङ्गाचार्येण—"तदिदं प्रातिशाख्यम्※ इतरेषु वेदेषु

---

※"शाखाविशेषमधिकृत्य तद्गतशब्दस्वरसन्ध्यादीनामनुशासनाय प्रवृत्तं शास्त्रं 'प्रातिशाख्यम्' इत्यभिधीयते। प्रातिशाख्यपदं चैवं व्युत्पादयन्ति शाब्दिकाः। यथा माधवीयायां धातुवृत्तौ भ्वाद्यन्तर्गते 'शाखृ' धातौ—'शाखायां शाखायां प्रतिशाखं, प्रतिशाखं भवं प्रातिशाख्यम्; "अव्ययीभावाच्च" इति भवार्थे ञ्यः' इति। स्पष्टं चेदं 'अव्ययीभावाच्च' इति सूत्र-तत्त्वबोधिन्यादावपि।

## ( प्रकृतानुसरणम् )

अलं प्रासङ्गिकेना,ऽतः प्रकृतार्थो निरूप्यते ; प्रकृतश्चाऽन्यशास्त्राणामत्रोद्धरणसंविधिः। वेदाङ्गेषु[६०] तु शिक्षाणां, छन्दसां, ज्योतिषामपि, अत्राल्पोद्धरणात्, पूर्णं तत्तन्नामादि सूचितम्।

---

साम्प्रतमेकैकमेवोपलभ्यते । यथा—ऋग्वेदप्रातिशाख्यं शौनकीयं; सामवेदप्रातिशाख्यं पुष्पकृतं; अथर्ववेद प्रातिशाख्यं शौनकीयमिति। यजुर्वेदे तु शुक्लयजुःप्रातिशाख्यं, तैत्तिरीयप्रातिशाख्यमिति द्वे प्रातिशाख्ये उपलभामहे । यजुर्वेदे हि द्वेधा विभागो दृश्यते शुक्ल-कृष्णभेदात्। कृष्णयजुर्वेदः, तैत्तिरीयकमित्येतत्तु अनर्थान्तरम्। तथा च शुक्लयजुःप्रातिशाख्यपरिशिष्टव्याख्यायां प्रतिज्ञासूत्रपरिशिष्टव्याख्यानावसरे 'तस्मिन् शुक्ले याजुषाम्नाये' इति सूत्रे 'यजुर्हि द्विविधं शुक्लं कृष्णं च,

शुक्लं कृष्णमिति द्वेधा यजुस्तु समुदाहृतम् ;
शुक्लं वाजसनं ज्ञेयं, कृष्णं स्यात्तैत्तिरीयकम्' इति" ।

६० "षडङ्गानि अधीत्य षडङ्गविद् भवति।...शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषम्, इति षडङ्गानि।...तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते" [ च० व्यू० कं० २ ]

"षडङ्गविदस्तत्तथाऽधीमहे" [ गो० ब्रा० पू० १, २७ ]

---

यद्यपीदं प्रातिशाख्यं नाम शास्त्रं न ताद्रूप्येण वेदाङ्गविभागे वा, विद्यास्थानविभागे वा समुल्लिख्यते,... तथापि व्याकरण-शिक्षयोर्विषय एवास्यापि विषयो, नेतर, इति विषयविमर्शतोऽवगम्यते, व्याकरण-शिक्षाऽन्यतरात्मतया वेदाङ्गमेवेदमिति। तथा च शुक्लयजुःप्रातिशाख्ये "वृद्धं वृद्धिः" इति प्रथमाध्यायान्तिमसूत्रे—'वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य, शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते अत एव हेतोः शिष्याणामेतच्छास्त्रश्राविणां वृद्धिर्भवति' इत्युव्वटभाष्यम्। वैदिकाभरणे च प्रथमाध्याये त्रयोविंशसूत्रे—

शिक्षा-व्याकरणानां यदयं विवरणात्मकः
ग्रन्थस्, ततोऽत्र नातीव शब्दसङ्कोच इष्यते।
वर्णात्कार इतीदं च व्याख्यातव्यं तु वार्तिकं,
शिक्षास्थाश्च ककरादिशब्दा, इति तदाशयः; इत्यभिहितम्।

परे पुनर्व्याकरण एव चेदमन्तर्भावयन्ति, प्रमाणयन्ति चात्र वैदिकाभरणगतमेवोपान्त्यसूत्रावतारिकास्थं—"शिक्षागणोपदिष्टं तु कार्यं नात्र संगृहीतं, व्याकरणप्रधानत्वात्प्रातिशाख्यस्य" इति वाक्यम्; एकोनविंशाध्यायान्त्यसूत्रस्थं—'अस्य शास्त्रस्य मूलभूतं व्याकरणं पूर्वशास्त्रमित्यभिधीयते, तस्मिन् कल्पो न विधीयते, साक्षाच्छिक्षायां तु विधीयते; व्याकरणप्रधानं ह्येतच्छास्त्रं, तस्माद्वैयाकरणेभ्योऽन्ये शिक्षाकारा इहैक इति व्यपदिश्यन्ते;' इति च वाक्यम्।

त्रिभाष्यरत्नकारस्तु प्रातिशाख्यं नाम शास्त्रमुपाङ्गेषु परिगणितमनुमेने। उक्तं हि त्रिभाष्यरत्नस्योपसंहारे—'वेदाङ्गान्युच्यन्ते—

शिक्षा, कल्पो, व्याकरणं निरुक्तं, ज्योतिषं, तथा,
छन्दसां लक्षणं, चेति षडङ्गानि विदुर्बुधाः।
प्रतिपदं, चानुपदं, छन्दोभाषा—समन्वितं,
मीमांसा-न्याय-तर्काश्च (?) उपाङ्गानि विदुर्बुधाः'।

अत्र हि उपाङ्गपरिगणनपरे प्रमाणे 'छन्दोभाषा' इत्यनेन वेदलक्षणं प्रातिशाख्याऽपरपर्यायमभिहितम्।

अत एव च "गुरुत्वं लघुता...एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता" इत्युपान्त्यसूत्रव्याख्याने 'छन्दोभाषा' पदं वेदलक्षणपरतया व्याचख्यौ त्रिभाष्यरत्नकारः" [ तै० प्राति० भू० पृ० १–३ ]।

आनुषङ्गिक वेदशाखाविषयक विचार अब समाप्त कर दिया जाता है; यहाँ से आगे पुनः प्रस्तुत विषय का निरूपण होता है। अन्य शास्त्रों के जो वाक्य इस मानवार्षभाष्य मे प्रमाण के लिये उद्धृत किये जायँगे, उनके उद्धरण का प्रकार बताना ही इस प्रकरण का प्रकृत विषय है।

वेदाङ्गों मे से शिक्षा, छन्दःशास्त्र, और ज्योतिष के उद्धरण यहाँ बहुत ही कम लिये गये हैं; अतः उनके नाम आदि यथास्थान प्रायः पूर्ण रूप से सूचित कर दिये गये हैं।

---

"अतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि। अत एव तेषाम् अपरविद्यारूपत्वं मुण्डकोपनिषदि आथर्वणिका आमनन्ति,—'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति; परा चैव, अपरा च। तत्राऽपरा, ऋग्वेदो, यजुर्वेदः, सामवेदो, ऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषम्, इति। अथ परा, यया तदक्षरमधिगम्यते'* [ मुण्ड० १, १, ४ ] साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां कर्मकाण्डानाम् अपरविद्यात्वं, परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वाद् उपनिषदां परविद्यात्वम्" [ ऋग्वेदभाष्यभूमिकायां श्रीसायणाचार्यः ]

"ॐ शीक्षां व्याख्यास्यामः; वर्णः, स्वरः, मात्रा, बलं, साम, सन्तानः; इत्युक्तः शीक्षाध्यायः" इति तैत्तिरीयारण्यके सप्तमप्रपाठके द्वितीयोऽनुवाकः।

'शिक्ष' विद्योपादाने, इति धातुः; शिक्ष्यन्ते वेदनीयत्वेनोपदिश्यन्ते स्वर-वर्णादयो यत्र, असौ शिक्षा, सैव 'शीक्षा' इति तत्रत्यं सायणभाष्यम्।

"शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्र ( पा० शि० ५२ ) उदाहृतः—

"मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो, न तमर्थमाह;
स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्"।

"इन्द्रशत्रुर्वर्धस्व" ( तै० सं० २,४,१२,१ ) इत्यस्मिन्मन्त्रे विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" ( पा० ६,१,२२३ ) इति सूत्रेण तत्पुरुषत्वाद् अन्तोदात्तेन भवितव्यं; आद्युदात्तस्तु प्रयुक्तः; तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वाद् 'इन्द्रो घातको यस्य' इत्यर्थः सम्पन्नः। तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः" [ ऋ० भा० भू० पृ० ५० ]

"तत्र सर्ववेदसाधारणी शिक्षा 'अथ शिक्षां प्रवक्ष्यामि' इत्यादि—पञ्चखण्डात्मिका पाणिना प्रकाशिता (?)। प्रतिवेदशाखं च भिन्नरूपा 'प्रातिशाख्य'संज्ञिता अन्यैरेव मुनिभिः प्रदर्शिता" [ प्रस्थानभेदे पृ० ४ ]

"प्रथमं 'व्यासशिक्षा'तु 'लक्ष्मीशिक्षा' द्वितीयकं,
'भारद्वाजी' तृतीया तु, 'शिक्षारण्यं' तुरीयकं,
पञ्चमं 'शंभुशिक्षा' च, षष्ठं चा-ऽऽपिशलं' तथा,
सप्तमं पाणिनेः 'शिक्षा', अष्टमं 'कौहलेस्' तथा,
'वासिष्ठशिक्षा' नवमी, नव शिक्षाः प्रकीर्तिताः"

इति तैत्तिरीयप्रातिशाख्यभूमिकायां [ पृ० २२ ] उद्धृतम्।

निरुक्तालोचने ( पृ० ४–५ ) श्रीसत्यव्रतसामश्रमिणा तु स्वदृष्टाः त्रिंशत्सङ्ख्याकाः शिक्षाग्रन्था नामतो निर्दिष्टाः, ते तत्रैव द्रष्टव्याः।

"तथा छन्दोग्रन्थोऽपि उपयुज्यते, छन्दोविशेषाणां तत्र तत्र विहितत्वात्। "तस्मात्सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते" ( तै० ब्रा० १,५,१२,१ ) इति हि आम्नातम्। गायत्री-उष्णिग्-अनु-

---

* "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति, परा चैव, अपरा च। तत्र परा—ऋग्वेदो, यजुर्वेदः, सामवेदो, ऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषम्, इति। इतिहासपुराणं, न्यायो, मीमांसा, धर्मशास्त्राणीति—अपरा"। इति पाठः प्राचीनतममुण्डकपुस्तकस्थः, तथा चाह—

ष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगती,—इत्येतानि सप्त छन्दांसि। चतुर्विंशत्यक्षरा गायत्री, ततोऽपि चतुर्भिरक्षरैरधिका अष्टाविंशत्यक्षरा उष्णिक्। एवमुत्तरोत्तराऽधिका अनुष्टुबादयोऽवगन्तव्याः। तथा अन्यत्राऽपि श्रूयते—"गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्य" इति (तै० ब्रा० १, १, ९, ६)। तत्र मगण-यगणादिसाध्यो गायत्र्यादिविवेकः छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च, "यो ह वा अविदितार्षेय-छन्दो-दैवत-ब्राह्मणेन मन्त्रेण याजयति वा, अध्यापयति वा, स्थाणुं वर्च्छति, गर्तं वा पात्यते (पद्यते), प्रमीयते वा, पापीयान् भवति; यातयामान्यस्य छन्दांसि भवन्ति; तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति श्रूयते; तस्मात्, तद्वेदनाय छन्दोग्रन्थ उपयुज्यते।" इति ऋग्वेदभाष्यभूमिकायां सायणः; निरुक्तवृत्त्यारंभे दुर्गाचार्यश्चाहतुः।

"अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्सङ्ख्यऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशं; न ह्येतज्ज्ञानमृते श्रौतस्मार्त्तकर्मप्रसिद्धिः। मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद्याजनाध्यापनाभ्यां श्रेयोऽधिगच्छतीति। एताभ्यामेवानेवंविदो यातयामानि छन्दांसि भवन्ति, स्थाणुं वर्च्छति, गर्तं वा पात्यते, प्रमीयते वा, पापीयान् भवतीति विज्ञायते,

अथ ऋषयः, शतार्चिन आद्ये मण्डले, अन्त्ये क्षुद्रसूक्त-महासूक्ता, मध्यमेषु माध्यमाः। क्वचित्कथंचिदविशेषितं ब्रह्मर्षिमस्त्रियमनुक्तगोत्रमाङ्गिरसं विद्यात्। यस्य वाक्यं स ऋषिः, या तेनोच्यते सा देवता, यदक्षरपरिमाणं तच्छन्दः। अर्थेप्सव ऋषयो देवताश्छन्दोभिरुपाधावन्। तिस्र एव देवताः क्षित्यन्तरिक्षद्युस्थाना अग्निर्वायुः सूर्य इति (नि० अ० ७ खं० १-११ द्रष्टव्यम्) एवं व्याहृतयः प्रोक्ता व्यस्ताः, समस्तानां प्रजापतिः। ओंकारः सर्वदेवत्यः पारमेष्ठ्यो वा ब्राह्मो दैव आध्यात्मिकः। तत्तत्स्थाना अन्यदेवतास्तद्विभूतयः, कर्मपृथक्त्वाद्धि पृथगभिधानस्तुतयो भवन्ति। एकैव वा महानात्मा देवता, स सूर्य इत्याचक्षते; स हि सर्वभूतात्मा। तदुक्तमृषिणा 'सूर्य आत्मा जगतस्तस्थुषश्च' इति। तद्विभूतयोऽन्या देवताः; तदप्येतदृचोक्तं-'इन्द्रं मित्रं वरुण-मग्निमाहु' रिति।···

अथ च्छन्दांसि*—गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्य-तिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः, चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि" इति 'सर्वानुक्रमणी' प्रारंभे भगवत्कात्यायनः।

---

"अस्मन्निकटे वर्त्तमानेऽतिप्राचीने पुस्तकेऽयं पाठो वर्तते। युक्तश्चायम्, अन्यासूपनिषत्सु, मन्वादिस्मृतिष्वपि, तथा पातञ्जले व्याकरणमहाभाष्ये च, इतिहासपुराणन्यायमीमांसादीनां परिकीर्त्तनात्, शिक्षाद्यङ्गसहितानामुपनिषद्गर्भाणां चतुर्णां वेदानां परविद्यात्वं सर्वोत्कृष्टत्वं; न्यायाद्युपाङ्गसहितानामितिहासपुराणानां वेदोपबृंहणरूपाणामपरविद्यात्वमिति विभागस्याप्यन्वर्थत्वाच्च। मुद्रितमुण्डकोपनिषदि तथा पाठाभावात्, स चांशो निपतित इति प्रतिभाति। ऋग्वेदीयचरणव्यूहे, तथा यजुर्वेदीयचरणव्यूहेऽपि दृश्यते···प्रतिपदम्, अनुपदं, छन्दोभाषा, धर्मो, मीमांसा, न्यायतर्का इत्युपाङ्गानि (च० व्यू० कं० २)" इति न्यायवार्तिकभूमिकायां (पृ० २०) श्रीविन्ध्येश्वरीप्रसाद द्विवेदी।

अत्रोद्धृतः प्राचीनतमः पाठ एव समीचीनः; 'परा चैव, अपरा च' इति प्रक्रमानुसारात्, चतुर्दश विद्यानुरोधाच्च। अन्यथा प्रक्रमभङ्गप्रसङ्गः, 'द्वे विद्ये' इत्यत्र बहुसच्छास्त्रोक्तचतुर्दशविद्यानामसंग्रहाद्न्यूनतापत्तिश्च स्यात्। किञ्च, संहिता-ब्राह्मणा-ऽऽरण्यकान्तर्गतत्वेन (५६-२६ पृष्ठे पश्यत) वेदांशभूतानामुपनिषदामपि तद्ग्रहणेनैवोपसंग्रहाद् अपरविद्यात्वमेवापद्येत, तासां पृथक् परविद्यात्वोत्प्रेक्षणमसङ्गतं च स्यात्। अत एवोनिषदां वेदान्तत्वमपि संगच्छते, न हि शिरः शरीरादतिरिच्यते, नाऽपि वेदान्तो वेदाद्भिद्यते, वेदत्वमतिवर्तते वा।

*"छन्दांसि छादनात्।···'गायत्री' गायतेः स्तुतिकर्मणः, त्रिगमना वा, विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम्।···'उष्णिग्' उत्स्नाता भवति, स्निह्यतेर्वा स्यात् कान्तिकर्मणः, उष्णीषिणी

अविदित्वा ऋषिं, छन्दो, दैवतं, योगमेव च,
योऽध्यापयेज्, जपेद्वाऽपि, पापीयाञ्जायते तु सः।
ऋषिच्छन्दोदैवतानि, ब्राह्मणार्थं, स्वराद्यपि,
अविदित्वा प्रयुञ्जानो, मन्त्रकण्टक उच्यते।
स्वरो, वर्णोऽक्षरं, मात्रा, विनियोगोऽर्थ एव च,
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे।
मन्त्राणां दैवतं, छन्दो, निरुक्तं, ब्राह्मणान्, ऋषीन्,
कृत्तद्धितादींश्चाज्ञात्वा यजन्तो यागकण्टकाः।
ऋष्यादिकं परिज्ञाय यजेद् यज्ञमतंद्रितः।

चत्वारि कर्माण्यभयप्रदानि, भयं प्रयच्छन्त्ययथाकृतानि;
मानाग्निहोत्रम्, उत मानमौनं, मानेनाधीतम्, उत मानयज्ञः।

अपत्यवदृषेरिष्टं मन्त्रदर्शनम्, इत्यतः
अपत्यादपि-ऋषेरिष्टं खलु मन्त्रस्य दर्शनम्।
अशपद्वैतश ऋषिः पुत्रं मन्त्रविगर्हकं;
प्रह्लादः पुत्रमशपद् वेदवेदार्थदूषकं
महाबलिम्, अतोऽपत्यप्रत्ययो दर्शने मतः।
ऋषिर्मन्त्रदृशं वेदपितरं मन्यते यतः,
तद्वसिष्ठासः ' पितृवद् वाचमक्रत लिङ्गतः।'...

'प्रमीयते वा' कदाचिदपि न वेदोक्तमायुर्भजते; उक्तं हि—

अनभ्यासेन वेदानाम्, आचारस्य च वर्जनात्,
आलस्याद्, अन्नदोषाच्च, मृत्युर्विप्राञ्जिघांसति।...
अतो महर्षयः सर्वे वेदविदो इति स्थिता,
अधीयते, कर्शयन्ति देहं, मृत्युं न भुञ्जते।...

शतर्चिसंज्ञा विज्ञेया ह्याद्यमण्डलदर्शिनः,
ददर्शादौ मधुच्छन्दा ह्यधिकं यदृचां शतम्।
तत्साहचर्यादन्येऽपि विज्ञेयास्तु शतर्चिनः;
अच्छत्राश्छत्रिणैकेन यथा वै छत्रिणोऽभवन्।...

गुणसंकीर्त्तनं स्तुतिः; उक्तं हि—

स्तुतिः स्तुत्यप्रभावोक्तिः स्तोतृभिस्तु सभक्तिका।

एका वा देवता, न तिस्रः;...स सूर्यः। पुराणे च—

दिव्यं ज्योतिः, सलिलपवनैः पूरयित्वा त्रिलोकीम्,
एकीभूतं पुनरपि च तत्सारमादाय गोभिः

---

वेत्यौपमिकं, उष्णीषं स्नायतेः। 'ककुप्' ककुभिनी भवति, ककुप् च कुजतेर्वा, उब्जतेर्वा। 'कुब्जश्च'। 'अनुष्टुब्', अनुष्टोभनात्, गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेन अनुष्टोभतीति च ब्राह्मणम्। 'बृहती' परिबर्हणात्। 'पङ्क्तिः' पञ्चपदा। 'त्रिष्टुप्' स्तोभत्युत्तरपदा; का तु त्रिता स्यात्? तीर्णतमं छन्दः। त्रिवृद्वज्रः, तस्य स्तोभतीति वा; यत् त्रिरस्तोभत्, तत् त्रिष्टुभस् 'त्रिष्टुप्त्वम्' इति विज्ञायते। 'जगती' गततमं छन्दः; जलचरगतिर्वा, जलगल्यमानोऽसृजद् इति च ब्राह्मणम्। 'विराड्' विराजनाद्वा, विराधनाद्वा, विप्रापणाद्वा; विराजनात्सम्पूर्णाक्षरा, विराधनादूनाक्षरा, विप्रापणादधिकाक्षरा। 'पिपीलिकामध्या' इत्यौपमिकं; पिपीलिका पेलतेर्गतिकर्मणः।" [ नि० अ० ७ खं० १२–१३ ]

कल्पे[61]—श्रौतेषु, गृह्येषु, धर्मसूत्रेषु च क्रमात्, तत्तदीया विभागाङ्कास् तन्नामान्ते प्रयोजिताः।

---

अन्तर्लीनो विशसि वसुधां, तद्गतः स्तूयसेऽन्नं,
तच्च प्राणास्त्वमिति जगतां प्राणभृत्सूर्य आत्मा।...
रससिद्धं यथा ताम्रमाप्नोति हि सुवर्णताम्,
एवमर्थोऽपि—ऋचा स्पष्ट इति वेदे च बुध्यते।
सत्यं वै वाग् ऋचा स्पष्टेत्यत्र ज्ञातं महर्षिभिर्,
ऋगुदाहरणं तस्माद् ब्राह्मणे बहुशः कृतम्"
इत्यादि च तद्वृत्तौ षड्गुरुशिष्यः।

"ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थे विहितम्—'यज्ञकालार्थसिद्धये' इति। कालविशेषविषयश्च श्रूयन्ते—'सम्वत्सरमेतद्व्रतं चरेत्' ( तै० ब्रा० १,५,३,४ ) 'सम्वत्सरमुख्यं भृत्वा' इत्येवमादयः सम्वत्सर-विषयः; वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत' (तै० ब्रा० १,१२, ६-७) इत्याद्या ऋतुविषयः; 'मासि मासि सत्रपृष्ठानि उपयन्ति, मासि मासि अतिग्राह्या गृह्यन्ते'(तै० सं० ७,५,१५) इत्याद्या मासविषयः; 'यं कामयेत वसीयान् स्यादिति, तं पूर्वपक्षे याजयेत्' ( तै० सं० २,२,३,१ ) इत्याद्याः पक्षविषयः; एकाष्टकायां दीक्षेरन्', 'फल्गुनीपूर्णमासे दीक्षेरन्' ( ता० ब्र० ५, ९, १७ ) इत्याद्यास्तिथि विषयः; 'प्रातर्जुहोति', 'सायं जुहोति' (तै० ब्रा० २,१,२, ६-७) इत्याद्याः प्रातःकालादिविषयः; 'कृत्तिका-स्वग्निमादधीत' ( तै० ब्रा० १, १, २, १ ) इत्याद्या नक्षत्रविषयः, अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते।"

"अनुषङ्गतश्चातोऽपि प्राणिनां शुभाशुभकर्मफलविपाककालपरिज्ञानम्।" इति ऋग्वेदभाष्य-भूमिकायां, निरुक्तवृत्तौ च श्रीसायण-दुर्गाचार्यौ।

६१. "कल्पस्तु आश्वलायना-ऽऽपस्तम्ब-बौधायनादिसूत्रम्, कल्प्यते—समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः" इति ऋग्वेदभाष्यभूमिकायां सायणीयं कल्पलक्षणं श्रौतसूत्रमात्राऽभिप्रायम्। वस्तुतस्तु 'कल्प' इति श्रौत-गृह्य-धर्मसूत्राणां सामान्यं नाम। एकैकस्मिन् कल्पसूत्रे श्रौतसूत्रं, गृह्यसूत्रं, धर्मसूत्रं चेति त्रीण्य-ङ्गानि भवन्ति। तत्र वेदविहितानां त्रेता-( दक्षिण-गार्हपत्या-ऽऽहवनीयात्मकाग्नित्रय- ) साध्यानां कर्मणामनु-ष्ठानक्रमबोधकं श्रौतसूत्रम्, आवसथ्याग्निना, वैवाहिकाग्निना वा साध्यानां जातकर्मादिश्मशानान्तानां संस्कारा-चाररूपाणां गृह्यकर्मणां प्रतिपादकं गृह्यसूत्रम्, प्रायः सामयाचारिकाणां साधारणवर्णाश्रमकर्मादीनां प्रतिपादक तु धर्मसूत्रमिति विवेकः। किन्तु साम्प्रतमुपलम्भगोचराणि कल्पसूत्राणि न सर्वाण्यपि सर्वाङ्गविशिष्टानि दृश्यन्ते, कानिचिद् एकेनाङ्गेन, कानिचित्तु द्वाभ्यामङ्गाभ्यां विकलान्येव समुपलभ्यन्ते, आपस्तम्बादिद्वित्रवर्जम्।

तत्र ऋग्वेदीयकल्पसूत्रेषु—( १ ) पूर्वोत्तरषट्कद्वये विभक्तं द्वादशाध्यायात्मकम् ऐतरेयब्राह्मणसा-पेक्षम आश्वलायनश्रौतसूत्रं, ( २ ) प्रत्यध्यायं खण्डशो विभक्तमध्यायचतुष्टयात्मकं तदीयं गृह्यसूत्रं; ( ३) अष्टादशाध्यायघटितं शाङ्खायनश्रौतसूत्रं, ( ४ ) षडध्यायात्मकं तदीयगृह्यसूत्रम्, ( ५ ) एतत्सजातीयं कौषीतकिशाखीयं साम्बव्यं नामापि गृह्यसूत्रं; ( ६ )त्रिंशदध्यायात्मकं वसिष्ठधर्मसूत्रं† चेति षड् उपलभ्यन्ते।

कृष्णयजुर्वेदीयाः कल्पग्रन्थास्तु—

"यत्राऽकरोत्सूत्रमतीवगौरवाद् 'बोधायनाचार्य'—वरोऽर्थगुप्तये;
तथा 'भरद्वाज'मुनीश्वरस्; तथा'ऽऽपस्तम्ब'आचार्य; इदं परं स्फुटं

---

† "पुराण-मानवे-तिहासव्यतिरिक्तगौतम-वसिष्ठ-शङ्खलिखित-हारीता-ऽऽपस्तम्ब-बौधायनादिप्रणीत-धर्मशास्त्राणां, गृह्यग्रन्थानां च, प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते। तद्यथा—गौतमीय-गोभिलीये छन्दोगैरेव च परिगृहीते; वासिष्ठं बह्वृचैरेव; शङ्खलिखितोक्तं च वाजसनेयिभिः; आपस्तम्बीय-बौधायनीये तैत्तिरीयैरेव प्रतिपन्ने" [ मी० तं० वा० १,३,७,१५ ]

'कल्प' नामक वेदाङ्ग मे श्रौतसूत्र, गृह्यसूत्र, और धर्मसूत्र, ये तीन अङ्ग होते हैं। इनके उद्धरणों मे ग्रन्थ के नाम के आगे क्रम से उनके विभागाङ्क लिखे हैं।

---

अतीवगूढार्थमनन्यदर्शितं न्यायैश्च युक्तं रचयन्नसौ पुनः
'हिरण्यकेशी'ति यथार्थनामभाग् अभूद्वरात्तुष्टमुनीन्द्रसम्मतात् ;
'वाधूल' आचार्यवरोऽकरोत्परं सूत्रं तु यत्केरलदेशसंस्थितम् ;
'वैखानसा'चार्यकृतं त्वथापरं पूर्तेन युक्तं; त्विति सूत्रपड्विधाः।''

इति सत्याषाढश्रौतसूत्रटीकारम्भे महादेवेन सूचिताः षड्विधाः सन्ति; त इमे सर्वेऽपि तैत्तिरीयशाखीया एव। तत्र बौधायना-ऽऽपस्तम्ब-हिरण्यकेशीय(सत्याषाढ)कल्पग्रन्थाः‡ श्रौत-गृह्य-धर्मसूत्रप्रस्थानत्रयात्मकाः सम्पूर्णा एवासाद्यन्ते; वैखानसं कल्पसूत्रमपि सम्पूर्णाङ्गत्रयमुपलभ्यत इति श्रूयते, परमस्मदुपलम्भगोचरं तदीयं धर्मसूत्रमेव केवलं लघुकलेवरं वानप्रस्थधर्मनिरूपणप्रधानं विद्यते। भारद्वाजीयं श्रौतं, गृह्यं चेति द्वयमुपलभ्यते, न धर्मसूत्रम्। 'वाधूल' कल्पस्य नैकमपि प्रस्थानमद्ययावदस्माभिरधिगतम्। मैत्रायणीशाखापार्षदं मानवीयं कल्पसूत्रमपि जयति। तस्य श्रौतं, गृह्यं चेति प्रस्थानद्वयं समुपलभ्यते, मनुस्मृतिमूलभूतं मानवधर्मसूत्रं तु केवलमनुमीयमानसद्भावं चिरादन्तरधीयतेति परं खेदस्थानमेतत्! यजुर्वेदीयं 'काठकगृह्यसूत्रं' चैकं प्राप्यते। एतत्सधर्मतया शताध्यायात्मकं विष्णुधर्मसूत्रमपि कठशाखीयमेवेति विदुषां मतम्।

शुक्लयजुर्वेदीयं शतपथब्राह्मणसम्बन्धि षड्विंशत्यध्यायात्मकं कात्यायन ( कातीय ) श्रौतसूत्रमेकमेव वर्तते। कात्यायन-वाजसनेयगृह्यसूत्राऽपरनामधेयं पारस्करगृह्यसूत्रमपि शुक्लयजुर्वेदीयमेव; एतदेवानुसृत्य

---

‡ तत्र बौधायनगृह्ये चतुर्दशादिसप्तदशान्ताः प्रश्नाः, ४९ प्रश्नात्मके तदीये कल्पसूत्रे अन्तिमाश्चत्वारः प्रश्ना वा धर्मसूत्रत्वेन परिगणिताः। सर्वापेक्षया प्राचीनतमं बृहत्कलेवरं चैतत्कल्पसूत्रं बर्नेलाचार्येण ( Dr. Burnell ) षोढा विभक्तं, तद्यथा—एकोनविंशति-प्रश्नात्मकं श्रौतसूत्रं; विंशत्या अध्यायैः संघटितं कर्मान्तसूत्रं; चतुःप्रश्नात्मकं द्वैधसूत्रं; प्रश्नचतुष्टयं गृह्यसूत्रं; तावन्मात्रमेव धर्मसूत्रमपि; अध्यायत्रयात्मकं च शुल्बसूत्रमिति। कलन्दाचार्येण ( Dr. W. Caland ) तु तदन्यथैव विभक्तं, तच्चेत्थम्—१–२१ प्र० श्रौ० सू०। २२–२५ प्र० द्वैधसू०। २६–२८ प्र० कर्मान्तसू०। २९–३१ प्र० प्रायश्चित्तसू०। ३२ प्र० शुल्बसू०। ३३–३५ प्र० गृह्यसू०। ३६ प्र० गृह्यप्राय० सू०। ३७ प्र० गृह्यपरिभाषासू०। ३८–४१ प्र० गृह्यपरिशिष्टम्। ४२–४४ प्र० पितृमेधसू०। ४५ प्र० प्रवरसू०। ४६–४९ प्र० धर्मसूत्रमिति।

आपस्तम्बकल्पे—आदितः त्रयोविंशतिः प्रश्नाः 'श्रौतसूत्रं; चतुर्विंशे प्रश्ने परिभाषासूत्राणि, प्रवरखण्डः, हौत्रमन्त्राश्च पठिताः; पञ्चविंश-षड्विंशप्रश्नयोः गृह्योक्तकर्मोपयुक्ता मन्त्रा इतस्ततः समाहृत्यैकत्र संघटिताः; सप्तविंशतितमः प्रश्नः 'गृह्यसूत्रा'त्मकः; अष्टाविंशत्येकोनत्रिंशत्तमप्रश्नात्मकं 'धर्मसूत्रं'; त्रिंशत्तमः प्रश्नः 'शुल्बसूत्रम्'।

श्री बूह्लर ( Dr. Buhler ) महाशयेन तु आपस्तम्बकल्पस्य प्राथमिकाश्चतुर्विंशतिः प्रश्ना वैतानिककर्मसम्बन्धिनः; पञ्चविंशः प्रश्नः परिभाषादिविषयकः; षड्विंशः, सप्तविंशश्चेति प्रश्नद्वयं गार्ह्यकर्मविधायकमित्यादि लिखितम् ( S. B. E. Vol. II. P. XII. पश्यत ); तदिदं प्रत्यक्षविरोधात्,

''पञ्चविंशेऽथषड्विंशे, गृह्यमन्त्राः प्रपञ्चिताः;
प्रश्नेऽथ सप्तविंशे स्याद् गृह्यतन्त्रविधिक्रमः''

इत्यापस्तम्बीयसूत्रटीकाकृदुक्तिविरोधाच्च न सत्यम्। तदत्र मूलग्रन्थं स्वयमनवलोक्य कुत्रचिल्लिखितं दृष्ट्वा, कुतश्चिदाकर्ण्य वा तथा लिखनादेव स विद्वान् बभ्रामेति प्रतीयते।

हिरण्यकेशीय ( सत्याषाढ ) कल्पे आदितोऽष्टादश प्रश्नाः श्रौतसूत्रं; एकोनविंशः, विंशश्च गृह्यसूत्रं; षड्विंशः सप्तविंशश्चेतिप्रश्नद्वयं धर्मसूत्रमिति मुख्यो विभागः।

समाम्नाये[६२] निघण्टौ वा, निरुक्ते च, यथायथं, तदध्यायस्य, खण्डस्य, वाक्यस्याङ्कश्च दर्शितः।

---

याज्ञवल्क्यस्मृतिः प्रवृत्तेति पुरातत्त्वविदां मतम्। शङ्खलिखितधर्मसूत्रमपि§वाजनेयिनामेवेति श्रीकुमारिलभट्टः स्मरति (अत्रैव ६१ टिप्पणे '|' अनुटिप्पणं पश्यत); परमस्माभिस्तन्न दृष्टं। शङ्खलिखितकृतित्वेन प्रसिद्धाः क्षुद्रकलेवरा अल्पविषयाश्च लिखितस्मृतिः, शङ्खस्मृतिः, शङ्खलिखितस्मृतिश्चेति तिस्रः स्मृतयस्तु समुपलभ्यन्ते, तासां तद्धर्मसूत्रत्वं न संभवतीति सकृदनुवाचनेनैव प्रत्यक्षं विज्ञायेत।

सामवेदीयकल्पे—(१) आर्षेयापरनामकं मशककल्पसूत्रं, 'क्षुद्रसूत्र'मस्यैव परिशिष्टं; (२) लाट्यायनश्रौतसूत्रं; (३) गोभिलीय-गृह्यसूत्रं; (४) गोभिलीयं वासिष्ठं वा श्राद्धकल्पपरिशिष्टं; (५) पञ्चविधसूत्रमित्यादि कौथुमशाखीयम्। (६) द्राह्यायणश्रौतसूत्रं, (७) तदीयं गृह्यसूत्रं खादिरं नाम; (८) गौतमपितृमेधसूत्रं; (९) गौतमधर्मसूत्रं ¶ चेत्यादि राणायनशाखीयम्। (१०) जैमिनीयं श्रौतं; (११) गृह्यं चेति जैमिनीयशाखीयम्। एतदतिरिक्ताश्च बहवो ग्रन्थाः प्रथन्ते।

अथर्ववेदीयं तु एकमेव कौशिकसूत्रमुपलभ्यते, तदपि बहुविषयमिति नैव विशुद्धं कल्पत्वमर्हति, अत एवास्य गृह्यसूत्रत्वमपि नासङ्कीर्णं वक्तुं शक्यते। वैतानं नाम श्रौतसूत्रमथर्ववेदीय-मस्तीति श्रूयते, किन्तु नास्माभिरधिगतं यत्नतोऽन्विष्यापि।

एतद्व्यतिरिक्तान्यपि अत्रि-औशनस-काण्व-काश्यप-गार्ग्य-च्यवन-जातुकर्ण्य-देवल-पैठीनसी-बुध-बृहस्पति-भारद्वाज-शातातप-सुमन्तु-हारीतादि धर्मसूत्राणि पूर्वमासन् इति श्रूयते, दृश्यन्ते च तदुद्धरणानि तत्र तत्र निबन्धेषु, परं न तेषामेकमपि साम्प्रतमुपलभ्यत इति महदसन्तोषस्य स्थानमेतत्।

६२. "समाम्नायः समाम्नातः, स व्याख्यातव्यः; तमिमं समाम्नायं निघण्टव इत्याचक्षते; निघण्टवः कस्मात्? निगमा इमे भवन्ति; छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः; ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्ते, इत्यौपमन्यवः; अपि वाऽऽहननादेव स्युः, समाहता भवन्ति; यद्वा समाहृता भवन्ति" इति निरुक्तारंभे निघण्टुपदनिर्वचनम्।

---

§ "स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तम्—'आम्नायः स्मृतिधारकः' इति" [मी०तं०वा० १,३,३,७]

"समीक्ष्य निपुणं धर्मसृषिभ्यो मनुभाषितम्; आम्नायात्सम्यगुद्धृत्य शङ्खश्च लिखितस्तथा"

[ या० स्मृ० ३, २४८ बालक्रीडायां श्री विश्वरूपाचार्येणोद्धृतं प्राचीनतमं वाक्यम् ] या० स्मृ० १,५ मूले, टीकायां च। परा० स्मृ० १,२४। महाभारते शान्तिपर्वणि २३ अध्याये शङ्ख-लिखितयोः कथा दृश्यते।

"न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम्" [ म० भा० शां० १३०, २९ ]
"अपरे नैवमिच्छन्ति, ये शङ्खलिखितप्रियाः" [ म० भा० शां० १३२, १६ ]

¶ गौतमीयं धर्मसूत्रं सामवेदीयमिति श्रीकुमारिलभट्टैः स्मृतम् (दृश्यतामत्रैव पश्चाद्गतम् '|' अनुटिप्पणम्); तच्च युक्तं प्रतिभाति; यतः चरणव्यूहभाष्यादौ सामवेदप्रवर्तकाचार्येष्वन्यतमत्वेन गौतमोऽपि परिगणितः। किञ्च, गौतमीयधर्मसूत्रस्य तृतीयप्रश्नान्तर्गताष्टमोऽध्यायः (क्रमिकाध्यायः षड्विंशः) सामविधानब्राह्मणप्रथमप्रपाठकीय-द्वितीयखण्डेन शब्दतोऽर्थतश्च समानानुपूर्वीक एव दृश्यते, अतोऽपि तस्य सामसम्बन्धो ज्ञायते। ला० श्रौ० सू० १, ३, ३; १, ४, १७। द्रा० श्रौ० सू० १, ४, १७; ९, ३, १५। गो० गृ० सू० ३, १०, ६। कठोपनिषदि—१, १, १०; २, ४, १५; २, ५, ६। छा० उ० ४, ४, ३. [ हारिद्रुमतं गौतमम् ] च गौतमनाम श्रूयते।

गौतमधर्मसूत्रीयपञ्चविंशाऽध्यायस्य भूयानंशः तैत्तिरीयारण्यकद्वितीयप्रपाठकीयाष्टादशानुवाकादुद्धृतो दृश्यते।

महर्षि कश्यप प्रजापति ने ॐ पाँच अध्यायों मे मुख्य वैदिक शब्दों का पर्यायवाची वर्गों के अनुसार संग्रह किया। उस ग्रन्थ का नाम 'समाम्नाय' अथ वा 'निघण्टु' है। यह एक प्रकार का प्राचीनतम वैदिक शब्दकोश है। इसकी गणना वेद ग्रन्थों मे ही होती है।

इसी काश्यप 'समाम्नाय' पर महर्षि यास्क ने † बारह (परिशिष्टसहित चौदह) अध्यायों का जो भाष्य रचा, उसे ही 'निरुक्त' कहते हैं। इनके उद्धरणों मे यथायोग्य अध्याय, खण्ड, और वाक्य के अङ्क लिखे हैं।

---

"तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः; सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाच्यार्थसामर्थ्यादभिधेयानुन्नीयोन्नीय मन्त्रार्थाऽवबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता; सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव, यथा यूथापत्रस्ता गौर्गोधर्मा इति। अयं च तस्या द्वादशाध्यायी भाष्यविस्तरः, तस्य इदमादिमं वाक्यं— 'समाम्नायः समाम्नातः' इति"

"आदितः पाणिनीयं, तु शिक्षा, ज्योतिस्, ततश्छन्दः,
पञ्चाध्यायी निघण्टोश्च निरुक्तमुपरि स्थितम्;...

अत उक्ताध्ययनविधेः, उक्तछन्दःप्रविभागस्य, उक्तविनियोगस्य, उपलक्षितकर्माङ्गभूतकालस्य, उपदर्शितलक्षणस्य, एतैरङ्गैः ( शिक्षादिभिः ); वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते। प्रधानं चेदमितरेभ्योऽङ्गेभ्यः, सर्वशास्त्रेभ्यश्च, अर्थपरिज्ञानाभिनिवेशात्; अर्थो‡हि प्रधानं, तद्गुणः शब्दः, स चेतरेषु

---

ॐ "वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत,
नैघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्।
कपिर्वराहः, श्रेष्ठश्च; धर्मश्च वृष उच्यते;
तस्माद् 'वृषाकपिं' प्राह कश्यपो मां प्रजापतिः"
[ म० भा० शां० अ० ३४२ श्लो० ८८–८९ ]

दृश्यते हि निघण्टौ ( ५, ६, १६ ) दैवतकाण्डे द्युस्थानदेवतानामसु 'वृषाकपि' शब्दोऽपि पठितः, अतो महाभारतवाक्यानुसारतः कश्यपप्रजापतिरेव निघण्टुसमाम्नाता, इति निश्चीयते। यत्तु प्रस्थानभेदकृता श्रीमधुसूदनसरस्वत्या "निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः" इत्युक्तं, तत् तत्रैव प्राक् स्वोद्धृतं 'समाम्नाय' पदमप्यनालोचयतः तस्य वेदान्तैकतानचित्तत्वनिबन्धनमेवेतिध्येयम्।

† "शिपिविष्टेति चाख्यायां, हीनरोमा च यो भवेत्,
तेनाविष्टं तु यत्किञ्चित्, शिपिविष्टेति च स्मृतः।
यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्,
'शिपिविष्ट' इति, ह्यस्माद् गुह्यनामधरो ह्यहम्।
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः,
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान्।"
[ म० भा० शां० ३४२, ७०–७२ ]

दृश्यते च निरुक्ते ( ५, ८, १ ) 'शिपिविष्ट'पदनिर्वचनम्।

‡ "स्थाणुरयं भारहारः किलाभूद्, अधीत्य वेदं न विजानाति योऽर्थम्;
योऽर्थज्ञ, इत्सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा।
यद् गृहीतमविज्ञातं, निगदेनैव शब्द्यते,
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्। [ संहि० ब्रा० ३ ]

व्याकरणादिषु चिन्त्यते" इत्यादि निरुक्तव्याख्योपोद्घाते वदता श्रीदुर्गाचार्येण निघण्टोश्छन्दोधर्मित्वं-वेदत्वमेव, तद्भाष्यस्य तु निरुक्तत्वं प्रधानवेदाङ्गत्वं चाङ्गीकृतम् ।

श्रीसायणाचार्येण तु ऋग्वेदभाष्यभूमिकायां निघण्टु-निरुक्तयोरुभयोरपि निरुक्तत्वमेव, वेदाङ्गत्वं चाभिहितम् । तद्यथा—"अथ निरुक्तप्रयोजनमुच्यते । अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं, तन्निरुक्तम् । गौः, ग्मा, ज्मा, क्ष्मा, क्षा, क्षमेत्यारभ्य, वसवः, वाजिनः, देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातः, तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते; एतावन्ति पृथिवीनामानि, एतावन्ति हिरण्यनामानि, इत्येवं तत्र तत्र विस्पष्टमभिहितत्वात् ।

तदेतन्निरुक्तं त्रिकाण्डं, तच्च अनुक्रमणिकाभाष्ये दर्शितम्—[ सर्वानुक्रमणीवेदार्थदीपिकायाम् पृ० ६० ]

"आद्यं नैघण्टुकं काण्डं, द्वितीयं नैगमं, तथा
तृतीयं दैवतं, चेति समाम्नायस्त्रिधा स्थितः ।
गोराद्यापारपर्यन्तमाद्यं नैघण्टुकं मतं,
जहाद्युल्बमृबीसान्तं नैगमं सम्प्रचक्षते,
अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते,
अग्न्यादिदेवीऊर्जाहुत्यन्तः क्षितिगतो गणः,
वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः,
सूर्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति,
गौरादिदेवपत्न्यन्तं समाम्नायमधीयते ।"

एकार्थवाचिनां पर्यायशब्दानां सङ्घो यत्र प्रायेण उपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेषु अमरसिंह-वैजयन्ती-हलायुधादिषु 'दश निघण्टव' इति व्यवहारात् । एवमत्राऽपि पर्यायसङ्घोपदेशाद् आद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन्काण्डे त्रयोऽध्यायाः; तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि, द्वितीये मनुष्य-तदवयवादिद्रव्यविषयाणि, तृतीये तदुभयद्रव्यगतबहुत्वह्रस्वत्वादिधर्मविषयाणि । निगमशब्दो वेदवाची, यास्केन तत्र तत्र 'अपि निगमो भवति' इत्येवं वेदवाक्यानामवतारितत्वात् । तस्मिन् निगम एव प्रायेण वर्त्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्ड उपदिष्टत्वात् तस्य काण्डस्य नैगमत्वम् । पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवतत्वं विस्पष्टम् । पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपक्षेतया पदार्थस्य उक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम् ।

तद्व्याख्यानं च 'समाम्नायः समाम्नात' इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तै र्द्वादशभिरध्यायैर्यास्को निर्ममे; तदपि निरुक्तमित्युच्यते, एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निःशेषेण उच्यन्ते इति व्युत्पत्तेः ।...केषांचिन्निर्वचनानां व्याकरणवशेन सिद्धावपि न सर्वेषां सिद्धिरस्ति । अत एव ग्रन्थकार आह—'तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च' इति ( नि० १, १५, १ ) तस्माद्वेदार्थाऽवबोधाय उपयुक्तं निरुक्तम्" इति ।

एतदेव सायणीयं मतं प्रस्थानभेदकृता मधुसूदनसरस्वत्याऽपि अनुसृतं, तद्यथा—"एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकांक्षायां तदर्थं भगवता यास्केन 'समाम्नायः समाम्नातः स व्याख्यातव्य' इत्यादि त्रयोदशाऽध्यायकं निरुक्तमारचितम् । तत्र च नामा-ऽऽख्यात-निपातो-पसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदानामर्थः प्रकाशितः । मन्त्राणां चानुष्ठेयार्थप्रका-

---

उत त्वः पश्यन्न ददर्श वाचम्, उत त्वः शृण्वन्न शृणोत्येनाम्,
उतो त्वस्मै तन्वं विसस्रे, जायेव पत्य उशती सुवासाः [ ऋ० सं० १०,७१,४ ]
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु,
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्" [ ऋ० सं० १०,७१,५ ]
निरुक्ते अ० १, खं० १८–२० ।

**पाणिनीयाष्टके[६३]ऽध्याय-पाद-सूत्राङ्कदर्शनम् , भाष्य*-वार्तिकयोश्चापि मूलाङ्कक्रमयोजनम् ।**

पाणिनि मुनिने ही सबसे पहले सर्वाङ्गपूर्ण 'अष्टाध्यायी' व्याकरण बनाया। उससे पहले भी अवश्य ही कई छोटे-मोटे व्याकरण थे, पर वे सभी एक-एक दो-दो प्रकरणों पर खण्डकृतिरूप थे, सर्वाङ्गसम्पन्न नहीं; अत एव पाणिनीय व्याकरण के उदय से उन सब का प्रायः लोप हो गया। पाणिनि के बाद मे भी कुछ व्याकरण बने, पर वे सब भी इसी के उच्छिष्ट और छायारूप हैं, अतः आर्ष पाणिनीय व्याकरण ही 'वेदाङ्ग' माना जाता है। इस पर कात्यायन मुनिने 'वार्तिक' और पतञ्जलि मुनिने 'महाभाष्य' रचा, अतः इसे 'त्रिमुनि' व्याकरण भी कहते हैं। इनके उद्धरणों मे अध्याय, पाद, और सूत्र के ही अङ्क दिखलाये गये हैं।

---

ज्ञानद्वारेणैव करणत्वात्, पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य, मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम्; अन्यथाऽनुष्ठानासंभवात्, 'सृण्येव जर्भरी, तुर्फरी तू' इत्यादि-दुरूहाणां ( नि० १३, ५, १ ) प्रकारान्तरेणार्थज्ञानस्यासंभवनीयत्वाच्च।

एवं निघण्टुरपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मको निरुक्तान्तर्भूत एव'' इति।

तदिदं सायण-मधुसूदनमतं न समीचीनं, निघण्टोः समाम्नायत्वेन वेदरूपत्वात्; तद्भाष्यस्यैव निरुक्तत्वाद् वेदाङ्गत्वाच्चेति दिक्।

६३. ''अपि नाम व्याकरणं तु सर्वतोमुखं पाणिनिनैव प्रथमं प्रणीतमिति वैयाकरणानां सिद्धान्तः। अत्र बहूनि प्रमाणानि देदीप्यन्ते; किञ्चिदिहोपवर्णयामः—

प्रथमं तावत्, नन्दिकेश्वरकारिकायाम्—

'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्,
उद्धर्तुकामः सनकादिसिद्धान्, एतद्विमर्शे शिवसूत्रजालम्।
अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दश
धात्वर्थं समुपादिष्टं, पाणिन्यादीष्टसिद्धये' इति।

'धात्वर्थं, धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम्' इत्यादि च तत्र नागेशभट्टः। तदेवमादीनां समालोचनयोपलभ्यत एव पाणिनेरादिव्याकरणकर्त्तृत्वम्।

द्वितीयन्त्विमानि पाणिनीयशिक्षावचनानि—

शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते
वाङ्मयेभ्यः समाहृत्य दैवीं वाचमिति स्थितिः।
येनाक्षरसमाम्नायमधिगम्य महेश्वरात्
कृत्स्नं व्याकरणं प्रोक्तं; तस्मै पाणिनये नमः।
अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन, तस्मै पाणिनये नमः'' इति।

पाणिनेरादिव्याकरणकर्त्तृत्वे इतोऽपि स्फुटतरं मानं किं भवितुमर्हतीति।

---

* ''सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः;
स्वपदानि च वर्ण्यन्ते, भाष्यं भाष्यविदो विदुः।
उक्ता-ऽनुक्त-दुरुक्तानां चिन्ता यत्र प्रवर्तते
तं ग्रन्थं वार्तिकं प्राहुर् वार्तिकज्ञा मनीषिणः।

[ विष्णुधर्मोत्तरे, पराशरोपपुराणे च ]

तथैव फणिभाषितभाष्याब्धेः पस्पशाह्निकं प्रायः सर्वमेवाऽत्र मतेऽनुकूलम्। तथा हि "अथ शब्दानुशासनम्" इति प्रतिज्ञालक्षणाधिकारवचनपर्यालोचनेनैव प्रतीयते—इतः पूर्वं नासीदेवं लौकिक-वैदिकोभयविधसर्वशब्दानां लघुनोपायेनानुशासनपरं किंचिच्छास्त्रं व्याकरणं नामेति। अन्यच्च—"अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम'। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययन-कालः, न चान्तं जगाम; किं पुनरद्यत्वे? यः सर्वथा चिरञ्जीवति, स वर्षशतं जीवति। चतुर्भिश्च प्रकारै-र्विद्योपयुक्ता भवन्ति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। तत्र चागमकाले-नैव कृत्स्नमायुः पर्युपभुक्तं स्यात्। तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। कथं तर्हि इमे प्रतिपत्तव्याः? किंचित् सामान्य-विशेष-वल्लक्षणं प्रवर्त्यम्; येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्" इत्यादेः भगवत्पञ्जलिविरचितायाः पाणिनीयव्याकरणावतरणिकायाः पाठादेवागम्यते,—नैतत्पूर्वमेवं सर्वतोमुखं सर्वावयवसम्पन्नं किमपि व्याकरणं स्थितमिति तृतीयम्"; इत्यादि निरुक्तालोचने पृ० १०७–११४ द्रष्टव्यम्।

"यश्चैष वोपदेवकृतस्य कविकल्पद्रुमस्य भूमिकायामिन्द्रादीनां शाब्दिकानामुल्लेखो विद्यते—

"इन्द्रश्चन्द्रः काशकृत्स्न्यापिशली शाकटायनः
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" इति

तेनापि व्याकरणेषु पाणिनीयस्यादिमत्ता, सर्वतोमुखता च, न विहन्यते; शाब्दिकत्व-व्याकरण कर्त्तृत्वयोः सामानाधिकरण्यनियमाभावात्। अत्रोक्तेषु शाब्दिकेषु इन्द्रस्य † प्रतिपदपाठाध्येतृत्वेन शाब्दिकत्वं महाभाष्ये वर्णितं, प्रदर्शितं च तत्पुरस्तादिहैव। चन्द्रस्तु व्याकरणकर्त्तेति सत्यं, परं न स पाणिनितः प्राचीनः; यतः पाणिनिभाष्यानुसारत एव तेन व्याकरणान्तरं प्रणीतम्। तथा हि राजतरङ्गिण्यां—

"चन्द्राचार्यादिभिर्लब्ध्वा देशात्तस्मात्तदागमं,
प्रवर्तितं महाभाष्यं, स्वं च व्याकरणं कृतम्" [ १, १७६ ] इत्युक्तम्।

---

† अत्र इन्द्रस्य प्रतिपदपाठाध्येतृत्वमात्रेणैव शाब्दिकत्वप्रतिपादनश्रमः पुरातत्त्वानुसन्धाने कृतभूरिपरिश्रमस्यापि श्रीसत्यव्रतसामश्रमिणोऽनवधानतामेव द्योतयति यतस्तस्य व्याकरण-कर्त्तृत्वमपि भूयसा श्रूयते। "तथा च ऐन्द्रवायवग्रहब्राह्मणे समाम्नायते—'वाग्वै पराच्यव्याकृताऽवदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति; सोऽब्रवीद्, वरं वृण, मह्यं चैवैष वायवे च सह गृह्याता इति; तस्माद् ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्; तस्मादियं व्याकृता वागुद्यते' (तै० सं० ६, ४, ७, ३) इति।

'अग्निमीळे पुरोहितम्' इत्यादिवाक् पूर्वस्मिन्काले पराची समुद्रादिध्वनिवदेकात्मिका सत्यव्याकृता, प्रकृतिः, प्रत्ययः, पदं वाक्यम्, इत्यादिविभागकारिग्रन्थरहिता आसीत्। तदानीं देवैः प्रार्थित इन्द्रः एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टः, तामखण्डां वाचं मध्ये विच्छिद्य प्रकृति-प्रत्ययादिविभागं सर्वत्र अकरोत्; तस्मादियं वाग् इदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यते।" ऋ० भा० भू० पृ० ५१ ]

"ऐन्द्रं व्याकरणं नष्टं समग्रं चाऽभवद्भुवि;...
'ऐन्द्रं' व्याकरणं हित्वा 'पाणिनीयं' व्यधाच्छिवः;
ततः प्रभृति निःशेषशब्दज्ञानप्रकाशकं
दिव्यं व्याकरणं भूमौ पाणिनीयं प्रसिद्ध्यति।"

[ हरचरितचिन्तामणौ सप्तविंशे प्रकाशे श्लो० ७९ तथा १६३–६४ ] इत्यादिशास्त्रसमा-लोचनया इन्द्रस्यापि व्याकरणकर्त्तृत्वं स्फुटतरं विज्ञायते। तदीयं व्याकरणं पाणिनीयमिव 'निःशेषशब्दज्ञान-प्रकाशकं' विश्वतोमुखं मा स्म भूद् इत्यन्यदेतत्, नैतावता तस्य व्याकरणकर्त्तृत्वं हीयते; तस्मादेतद्विषयकं 'सामश्रमिणो' वचनं चिन्तनीयमिति दिक्।

काशकृत्स्निस्तु शाब्दिक इति सत्यं, परं न वैयाकरणः, अपि तु मीमांसकः। तथा हि महाभाष्ये—"काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी" इति ( अ० ४, पा० १, आ० १ )। शाब्दिकानामन्यतमः खल्वापिशलिः, यतः "वा सुप्यापिशलेः" ( ६,१,९२) इति पाणिनिनाऽपि सम्मानितो दृश्यते, अतः पाणिनिसमकालिकः, तत्पूर्वकालिको वेति प्रतीयते च; परं नैतावता तस्य व्याकरणकर्त्तृत्वमपि अङ्गीकर्त्तव्यं; न ह्युपलभ्यते इदानीं, नापि प्रतीयते कदाप्यासीत् तद्व्याकरणस्य सत्तेति। सामतन्त्रस्य प्रणेता आपिशलिरिति प्रवादोऽपि काचित्कः। शाकटायनस्य तु 'ऋक्तन्त्रं' व्याकरणमद्यापि विद्यते, परं न ततः समास-तद्धितादीनां सर्वथा बोधः समुत्पद्यते; नापि ततः 'सुद्युपास्य' इत्यादिपदानां साधनिका ज्ञायन्ते, न च तस्यात्र निरुक्ते व्याकरणत्वेन ग्रहणमिष्टमवगम्यते; यास्केन हि प्रायः सर्वत्रैव वैयाकरणेभ्यः पृथक् कृत्वैव तन्नामग्रहणं कृतमिति। तथा हि—"नामान्याख्यातजानीति शाकटायनो, नैरुक्तसमयश्च; न सर्वाणीति गार्ग्यो, वैयाकरणानां च" ( १,४,१ ) इति। अमरोऽपि न व्याकरणकृत्, नापि पाणिनेः पूर्वभव इति तु सुप्रसिद्धमेव। जैनेन्द्रस्तु सत्यमभवदेकस्य सर्वतोमुखव्याकरणस्य प्रणेतेति; दृश्यत एव हि तद्व्याकरणमद्यापि, परं तस्य पाणिनि परजत्वं तु सर्वसम्मतमेवेति दिक्।

"यश्चैष प्रवादः,—आसीत्पुरा माहेशं नाम व्याकरणं पाणिनीयतोऽपि बृहत्तरं पुरातनं चेति; तथा चायमुद्भटश्लोकः—

यान्युज्जहार माहेशाद् व्यासो व्याकरणार्णवात्, किं तानि पदरत्नानि सन्ति पाणिनि-गोष्पदे ?

तदेतस्य मातृपितृनिर्णयहीनत्वादप्रामाण्यमेवेति विदुषां परामर्शः। मधुसूदनसरस्वतीनामा भिक्षुः प्रस्थानभेदे पाणिनीयमेव माहेश्वरमित्याह। तथा हि—'तच्च वृद्धिरादैजित्याद्यष्टाध्यायात्मकं महेश्वर प्रसादेन भगवता पाणिनिनैव प्रकाशितं; तत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्तिकं विरचितं; तद्वार्तिकस्योपरि च भगवता मुनिना पतञ्जलिना महाभाष्यमारचितम्। तदेतत् त्रिमुनिव्याकरणं वेदाङ्गं माहेश्वरमित्या (ख्याय) चक्षते' इति। 'अ इ उण्' इत्यादिषु चतुर्दशसु सूत्रेषु पुराऽऽसीद् बृहद्व्याख्यानं नन्दिकेश्वरकृतं, तदेव माहेशमिति व्यपदिष्टमिति च वृद्धाः। असन्मते तु केनचिदतिक्षुद्रव्याकरणाध्यायिना पाणिनीयद्वेषिणैवैष श्लोकः प्रणीतः। आसीन् 'माहेशं' नाम अतिबृहद् व्याकरणमिति प्रवादोऽप्येतदनुगत एव; माहेशन्तु वस्तुतः खपुष्पमिव त्रैकालिकाभावसम्पन्नमेवेति"।

"यत्तूक्तं केनचित्—पाटलाविजय-जम्बूवतीविजय-काव्ययोः प्रणेताऽप्ययमेव पाणिनिरिति, तदप्यश्रद्धेयमेव सर्वेषां; न हि व्याकरणाचार्यस्य पाणिनेः रचनायां व्याकरणाशुद्धिः संभवेन्नाम, नापि हि महाभाष्यकृत्पतञ्जलिकालपर्यन्ताविर्भूतेन केनचिद् वैयाकरणेन प्रयुक्तं किमपि पदमशुद्धमिति गणयितुं शक्यते तत्परजातैः कालिदासादिभिश्च प्रयोगपटुभिः। अस्ति च व्याकरणाशुद्धिदोषः पाटलाविजये; उदाहृतश्च स रुद्रटकृतकाव्यालङ्कारटीकाकृता नेमिसाधुना च्युतसंस्कृतिदोषोदाहरणप्रसङ्गे—'सन्ध्यावधूं 'गृह्य' करेण' इति। तत्र गृहीत्वेति वक्तव्ये गृह्येति प्रयोग एवाशुद्धः। अत्रेदं विचार्यम्—अशेषशेमुषीसम्पन्नस्य, महेश्वरवरप्रसादाल्लब्धव्याकरणविद्यस्य, सिद्धवाग्विभवस्य, व्याकरणस्रष्टुस्तस्य पाणिनेर्व्याकरणाशुद्धिः कदापि संभवेत् किमु ? इति। यदि नाम गृह्येति पदं तेनैव पाणिनिना प्रयुक्तं स्यात्, तर्हि तत्प्रयोगबलादेव साध्विति कथं न मन्येतेति च; प्रयोगा अपि हि पाणिनि-कात्यायन-पतञ्जलीनां साधुत्वनियामका भवन्त्येवेति उररीक्रियत एव सर्वैः। तदेवं, यत इदं 'गृह्य' इति पदं न कोऽपि साधु मन्यते, अतोऽपि ज्ञायते—नेदं व्याकरणाचार्येण तेन पाणिनिना प्रयुक्तं, न च पतञ्जलिपूर्वकालीनेनाऽपि केनचिदिति। केचिदाहुः—व्याकरणकृदेष पाणिनिः महा ( आदि ) कवेर्वाल्मीकेश्च बहुपूर्वभवः; वाल्मीकीयाद्रामायणात् ‡ पूर्वमेव सूत्रकालो गत इति। तेषां नये तदोपजात्यादिवृत्तानां कथा तु स्याद् दूरपराहता, आनुष्टुभेनापि छन्दसा कश्चिल्लौकिको ग्रन्थो रचितो न वेति महान् संशय एवेति।" [ निरुक्तालोचने पृ० ११४-१८ ]

‡ अत्रेदं वाल्मीकीयाख्यानमनुसन्धेयं; तद्यथा—

वेदोपाङ्गानि चत्वारि, षड्, अष्टौ वेति; तत्र तु, सच्छास्त्रपरिमाणत्वाच्, [64] "चत्वार्यंवेति निर्णयः। विद्याः परिमिता एव प्रागन्योक्ताश्चतुर्दश, अष्टादशैव वा, याज्ञवल्क्यस्मृत्यादिषु*स्मृताः। तत्र वेदास्तु चत्वारस्, तदङ्गानि च षट्, तथा, उपाङ्गान्यपि चत्वारि, इत्येवं विद्याश्चतुर्दश। उपवेदैश्चतुर्भिस्ता युक्ता अष्टादश स्मृताः, एवं नियतसङ्ख्याका विद्याः शास्त्रेषु निश्चिताः।

वेद के उपाङ्गों के विषय मे किंचित् मतभेद पाया जाता है । शास्त्रों मे कहीं चार, कहीं छः, और कहीं आठ तक इनकी संख्या लिखी है । किन्तु चौदह वा अठारह विद्याओं में शास्त्रों का 'परिमाण' ( माप वा इयत्ता ) बंधा है, अतः चार 'उपाङ्ग' वाला पक्ष ही ठीक है । क्योंकि चार वेद, चार उपवेद, छः वेदाङ्ग, और चार उपाङ्ग, मिलकर अठारह विद्यायें होती हैं। यदि उपाङ्ग की संख्या छः वा आठ हो जाय, तो 'विद्या' की संख्या भी वीस वा बाइस हो जायगी, जो 'याज्ञवल्क्य' आदि महर्षियों के मत के विरुद्ध है । फिर भी यदि छः वा आठ उपाङ्ग, आर्ष ग्रन्थों से प्रमाणित हों, तो उनका समर्थन, लोकबुद्धिवैशद्य ( अधिक स्पष्टता ) के लिये किये गये विस्तार के तात्पर्य से करना चाहिये, ताकि चार उपाङ्गप्रतिपादक वचनों से विरोध न पड़े । यदि लेखक-शोधकों के प्रमाद से उपाङ्ग संख्या मे वृद्धि हुई हो, तो उसकी उपेक्षा करनी चाहिये । पर चार 'उपाङ्ग' तो निश्चित ही हैं ।

---

तस्मात् पाणिनीयमेव आदिमं सर्वतोमुखमार्षं व्याकरणं, तदेव च वेदाङ्गभूतं, नान्यद्व्याकरणमिति सिद्धम् । अत एव प्रस्थानभेदे पाणिनीयस्य वेदाङ्गत्वमभिधाय "कौमारादिव्याकरणानि तु न वेदाङ्गानि, किन्तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम्" इति उक्तम् ।

तस्यैतस्य व्याकरणस्य प्रयोजनं वररुचिना वार्तिके दर्शितं—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति । तच्च महाभाष्यस्य पस्पशाह्निके महता प्रबन्धेन भगवता पतञ्जलिना स्पष्टीकृतमिति तत्रैव मनोहत्य द्रष्टव्यम् ।

"पूर्वापरप्रथम"—इति ( २,१,५७ ) सूत्रे—

"सर्ववेदपारिषदं हीदं शास्त्रम्" इति भाष्यम् ।

"पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणं सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन"

इति पराशरोपपुराणवाक्यं महाभाष्यभूमिकाधृतम् ।

६४. "···शास्त्रपरिमाणत्वात्" [ मी० द० १,३,३,६ ]

"परिमितान्येव हि चतुर्दश, अष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहतानि—वेद-उपवेद-अङ्ग-उपाङ्ग-अष्टादश,-धर्मसंहिता-पुराणशास्त्र-शिक्षा-दण्डनीति-सञ्ज्ञकानि" [ मी० तं० वा० १, ३, ३, ६ ]

---

"असौ पुनर्व्याकरणं ग्रहीष्यन्त्सूर्योन्मुखः प्रष्टुमनाः ( पृष्ठगमः ) कपीन्द्रः
उद्यद्गिरेरस्तगिरिं जगाम; ग्रन्थं महद्धारयन् अप्रमेयः ;
ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं ( सि ) साध्यति वै कपीन्द्रः ;...
सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात्"
[ वा० रा० कां ७, स० ३६, श्लो० ४८–५० ]

"सूत्रम्' अष्टाध्यायीलक्षणं, 'वृत्ति'स्तात्कालिकसूत्रवृत्तिः, 'अर्थपदम्' अर्थबोधकपदवद्वार्तिकं, 'महार्थं' महाभाष्यं पतञ्जलिकृतं, 'ससंग्रहं' व्याडिकृतसंग्रहाख्यग्रन्थसहितं, 'सिध्यति' सिद्धो भवति" इति व्याकुर्वन्नागोजिभट्टः हनुमतः पाणिनि-पतञ्जल्यादीनां प्राचीनतां स्वप्राचीनाचीर्णकर्मवशाज्जानातीति न वयमधुनातनतनुतनवो व्याकर्त्तुं प्रभवामः; नवमंव्याकरणकरणसमर्थस्य ( हनूमतः ) एतद् ( पाणिनीय ) अनुसरणस्यायुक्तत्वाच्च" इति तत्रत्या स० टीका ।

"ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेद, इति वेदाश्चत्वारः; शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषम्, इति वेदाङ्गानि षट्; पुराण-न्याय-मीमांसा-धर्मशास्त्राणि, चेति चत्वार्युपाङ्गानि । अत्र उपपुराणानामपि पुराणेऽन्तर्भावः; वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य मीमांसायां, महाभारत-रामायणयोः साङ्ख्य-पातञ्जल-पाशुपत-वैष्णवादीनां धर्मशास्त्रे, मिलित्वा चतुर्दश विद्याः । तथा चोक्तं याज्ञवल्क्येन—(१,३)

'पुराण-न्याय-मीमांसा-धर्मशास्त्रा-ऽङ्ग-मिश्रिताः
वेदाः, स्थानानि विद्यानां, धर्मस्य च, चतुर्दश'§ इति ।

एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति । आयुर्वेदो, धनुर्वेदो, गान्धर्ववेदो, ऽर्थशास्त्रं चेति चत्वार उपवेदाः । सर्वेषां चास्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि, अन्येषामपि एकदेशिनामेतेष्वेवान्तर्भावात् ।" [ प्रस्थानभेदे पृ० १ ]

"यद्यपि 'शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषमिति षडङ्गानि;...तथा प्रतिपदम्, अनुपदं, छन्दो, भाषा, धर्मो, मीमांसा, न्यायः, तर्क, इत्युपाङ्गानि'; इति शौनकीयचरणव्यूहद्वितीयकण्डिकावाक्यव्याख्यावसरे—'छन्दः शास्त्रं पिङ्गलोक्तमष्टाध्यायात्मकं; भाषाशब्देन भाष्यतेऽर्थः पर्यायशब्दैरिति निघण्टुरध्यायपञ्चकः, त्रयोदशाध्यायात्मकं निरुक्तं; धर्मशास्त्रं मन्वाद्यनेकमहर्षिप्रणीतं; मीमांसा जैमिनिमहर्षिकृतमध्याय-द्वादशकं; न्यायशब्देन कणादसूत्रं; तर्कशब्देन गौतमसूत्रमिति षड् उपाङ्गानि' इति महिदासकृते व्याख्याने 'छन्दो' 'भाषा' इति विभज्य छन्दःशास्त्रपरं 'छन्दः' पदं, 'भाषा'पदं च निघण्टुपरमुपवर्णितम्, इति वेदलक्षणरूपस्य प्रातिशाख्यस्य नोपाङ्गेष्वन्तर्भावस्ततोऽवगम्यते; तथापि महिदासकृतं व्याख्यानमिदं, तत्कर्त्तुरेव प्रमादेन वा, लेखकप्रमादेन वा, कलुषमिति न तत् किञ्चिदर्थस्य साधनाय, बाधनाय वा, प्रभवति । चरणव्यूहद्वितीयकण्डिकाव्याख्यानोपक्रम एव हि 'शिक्षादीनि षडङ्गानि भवन्ति; षडुपाङ्गान्यपि प्रतिपदादि-तर्कान्तानि भवन्ति' इति महिदासव्याख्यानमुपलभ्यते, 'प्रतिपदम्' 'अनुपदम्' इत्येतयोरपि उपाङ्गेष्वन्तर्भावं विधाय उपाङ्गानां षट्त्वं प्रतिपादयमानम् । द्वितीयकण्डिकाव्याख्यानान्तिमवाक्येऽपि प्रागुपदर्शिते अङ्गानां षट्त्वं निगमितं दृश्यते । प्रतिपदानुपदयोरुपाङ्गान्तर्भावे, 'छन्दो भाषा' इत्यस्य विभज्य व्याख्याने च, उपाङ्गानि अष्ट एव भविष्यन्ति; न तु षट् । एवं 'छन्दश्शास्त्र-निघण्टु-निरुक्तानाम्' अङ्गेष्वन्तर्भूतानाम्, उपाङ्गेषु पुनः परिगणनमपि न साम्प्रतम् । तस्मादुपक्रमोपसंहारयोर्महिदासेनैव व्याख्याने उपाङ्गानां सङ्कीर्तितं षट्त्वं यथोपपद्येत, यथा वा अङ्गोपाङ्गयोर्न साङ्कर्यं, तथैवोपदर्शितं चरणव्यूहवाक्यं व्याख्येयम् । तथा च—'छन्दोभाषा' इत्येकं पदं वेदलक्षण ( प्रातिशाख्य ) परं; 'धर्ममीमांसा' इति चैकं पदं, 'धर्मो' 'मीमांसा' इति तु लेखकप्रमादः, अप्रमादत्वे वा मीमांस्य-मीमांसयोरभेद विवक्षया 'धर्मो मीमांसा' इत्येतदेव जैमिनीयमीमांसापरम्; इत्येवं व्याख्यानं सर्वानवद्यम् । भवति चैवंव्याख्याने—

'प्रतिपदं, चानुपदं, 'छन्दोभाषा' समन्वितं,
मीमांसा-न्याय-तर्काश्च, उपाङ्गानि विदुर्बुधाः'

इत्येतेन त्रिभाष्यरत्नधृतप्रमाणेनापि संवाद इत्यास्तामेतत् ।" [ तै० प्राति० भू० पृ० ४ ]

---

§ "निर्बन्धसंजातरुषाऽर्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः,
वित्तस्य विद्यापरिसङ्ख्यया मे कोटीश्चतस्रो दश चाहरेति"

इति रघुवंश ( ५, २१ ) पद्यटीकायां श्रीमल्लिनाथेन,

"अधीति-बोधा-ऽऽचरण-प्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः,
चतुर्दशत्वं कृतवान्कुतः स्वयं, न वेद्मि विद्यासु चतुर्दशस्वयम्"

इति नैषधीयचरित ( १,४ ) पद्यटीकायां श्रीनारायणेन च—

"अङ्गानि, वेदाश्चत्वारो, मीमांसा, न्यायविस्तरः,
धर्मशास्त्रं, पुराणं च, विद्यास्त्वेताश्चतुर्दश"

इत्ययं श्लोको मनुनाम्ना समुद्धृतो दृश्यते, परं, सम्प्रति प्रचरितमनुस्मृतौ नोपलभ्यते ।

अत्रोपाङ्गानि चत्वारि यानि प्रोक्तानि, तानि तु 'पुराण-न्याय-मीमांसा-धर्मशास्त्राणि'[६५] सन्ति; अतः तेषामत्र क्रमप्राप्तं साङ्गवेदादनन्तरं दिक्प्रदर्शनमात्रार्थं वच्मि प्रायोगिकं विधिम्।

---

वस्तुतस्तु "प्रतिपदम्, अनुपदं, छन्दोभाषा, धर्मो, मीमांसा, न्यायतर्क, इत्युपाङ्गानि इत्येव चरणव्यूहपाठः समीचीनः प्रतिभाति। एतत्संवादेन त्रिभाष्यरत्नघृतप्रमाणेऽपि मीमांसा-धर्म-तर्काश्च" इत्येवं पाठ एव साधीयान्।

अत्र 'प्रतिपदं' पदपाठः, पदसंहिता वा; इदमेव—"अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः" इति भगवता पतञ्जलिना पस्पशाह्निके स्मृतम्। 'अनुपदं' क्रमपाठः; 'छन्दोभाषा' प्रातिशाख्यं; 'धर्मो' धर्मशास्त्रम्, अत्रैव इतिहास-पुराण-साङ्ख्य-योगादीनामपि ग्रहण चरणव्यूहकर्त्तुरिष्टं; दृश्यते हि—"स्मरन्ति च" (२, ३, ४७; ४, १, १०) "स्मर्यते च" (४, २, १४) "स्मृतेश्च" (१, २, ६; ४, ३, ११) इत्यादिब्रह्मसूत्रेषु महाभारतादिवाक्यानामेव स्मृतित्वेन भाष्यकारैरुद्धरणम्, अन्येष्वपि भाष्य-टीका-निबन्धेषु तत्र तत्र "तथा च स्मृतिः" "इति स्मृतिः" इत्येवमादिरूपेण उत्थापनिकोपसंहृतिनिर्देशेन पुराणादिवाक्योद्धरणं चेति। स्मृतिश्च "धर्मशास्त्रं तु वै स्मृतिः" (२, १०) इति मनूक्तेः 'धर्मशास्त्र' मेव; "स्मृत्यनवकाशदोषप्रसङ्ग" इत्यादिब्रह्मसूत्रेषु (२,१,१) 'स्मृति' पदेन साङ्ख्यादिशास्त्राणामेव ग्रहणं सर्वभाष्यकाराभिप्रेतमिति तेषामपि 'धर्मशास्त्रत्वं' सूपपन्नमेव। 'मीमांसा' पूर्वमीमांसा, उत्तरमीमांसा च; 'न्यायतर्कः' न्यायापरपर्यायः तर्कः—तर्कशास्त्रं काणादं, गौतमीयं च, इति सर्वं समञ्जसम्।

तत्त्वतस्तु प्रतिपदानुपदयोर्वेदे (पद-क्रमसंहितारूपे), छन्दोभाषायाः (प्रातिशाख्यस्य) च शिक्षायां, व्याकरणे वा,ऽन्तर्भावात्, पुराणस्य धर्मशास्त्रात् पृथङ्निर्देशाच्च; "पुराण-न्याय-मीमांसा-धर्म-शास्त्राणीति" चत्वार्येव वेदोपाङ्गानि सम्पद्यन्ते; तान्येव च महर्षियाज्ञवल्क्यादिप्रोक्तदिशा प्रस्थानभेदादिषु निर्दिष्टानि; अनुपदमेव प्रागत्रापि प्रदर्शितानीति सर्वमवदातम्।

श्रीमद्दयानन्दसरस्वतीस्वामिनस्तु न्याय-मीमांसादीनां षण्णां दर्शनानामेव षडुपाङ्गत्वमाहुः; तद्यथा—

"तथा षडुपाङ्गानि; तत्राद्यं कर्मकाण्डविधायकं धर्मधर्मिव्याख्यामयं व्यासमुन्यादि-कृतभाष्यसहितं जैमिनिमुनिकृतसूत्रं पूर्वमीमांसाशास्त्राख्यं ग्राह्यम्; द्वितीयं विशेषतया धर्म-धर्मिविधायकं प्रशस्तपादकृतभाष्यसहितं कणादमुनिकृतं वैशेषिकशास्त्रं; तृतीयं पदार्थविद्या-विधायकं वात्स्यायनभाष्यसहितं गोतममुनिकृतं न्यायशास्त्रं; चतुर्थं यत् त्रिभिर्मीमांसा-वैशे-षिक-न्यायशास्त्रैः श्रवण-मननेनानुमानिकं ज्ञानतया निश्चयो भवति, तेषां साक्षाज्ज्ञानसाधनमुपा-सनादिविधायकं व्यासमुनिकृतभाष्यसहितं पतञ्जलिमुनिकृतं योगशास्त्रं; तथा पञ्चमं तत्त्वपरि-गणनविवेकार्थं भागुरिमुनिकृतभाष्यसहितं कपिलमुनिकृतं साङ्ख्यशास्त्रं; षष्ठं बौधायनवृत्त्यादि-व्याख्यानसहितं व्यासमुनिकृतं वेदान्तशास्त्रं, तथैव ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्ति-रीय-ऐतरेय-छान्दोग्य-बृहदारण्यका दशोपनिषदश्चोपाङ्गानि ग्राह्याणि" इति। [ऋग्वेदादिभाष्य-भूमिकायां पृ० २९३]

६५. "एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः; चतुर्णामुपाङ्गानामधुनोच्यते। तत्र सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि, तानि च ब्राह्मं, पाद्मं, वैष्णवं, शैवं, भागवतं, नारदीयं, मार्कण्डेयम्, आग्नेयं, भविष्यं, ब्रह्मवैवर्तं, लैङ्गं, वाराहं, स्कान्दं, वामनं, कौर्मं, मात्स्यं, गारुडं, ब्रह्माण्डं च, इत्यष्टादश।...एवमुपपुराणानि अनेकप्रकाराणि द्रष्टव्यानि।

'न्याय' आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता।...एवं दशाध्यायं वैशेषिकं शास्त्रं कणादेन प्रणीतम्, एतदपि 'न्याय' पदेनोक्तम्।

चतुर्दश वा अष्टादश विद्याविभाग में जो चार उपाङ्ग गिनाये गये हैं, वे पुराण, न्याय, मीमांसा, और धर्मशास्त्र हैं। यहां पुराण में ही इतिहास और उपपुराण का भी अन्तर्भाव समझना चाहिये। कतिपय विद्वान्, पुराण में केवल उपपुराण का ही अन्तर्भाव मानते हैं; उन के मत से रामायण-महाभारत आदि इतिहास, साङ्ख्य-योग आदि दर्शन, और शैव-वैष्णव आदि आगम, 'धर्मशास्त्र' के अन्तर्गत हैं। जहां ( चरणव्यूह आदि ग्रन्थों में ) उपाङ्ग विभाग में 'पुराण' का पृथक् उल्लेख ही नहीं है, वहां तो इस का अन्तर्भाव भी धर्मशास्त्र में ही अभिप्रेत है। ऐसे ही न्याय में वैशेषिक का, और मीमांसा में वेदान्त का भी समावेश माना गया है। कई सद्ग्रन्थकार तो न्याय में ही साङ्ख्य और योग का समावेश भी करते हैं *। कुछ शास्त्रकारों के मत से इतिहास में ही पुराण आदि सब का अन्तर्भाव है और स्वयं इतिहास वेदरूप† है। महाभारतकारने ( शान्ति० अ० १२२ कुं० सं ) तो सभी विद्याओं को 'वेद' स्वरूप ही माना है। अस्तु, यहां तो अब क्रम के अनुसार उपर्युक्त चार उपाङ्गों के ही प्रयोग का प्रकार संक्षेप से बतलाया जाता है, क्योंकि इस के पहले वेद और वेदाङ्ग के प्रयोग का सङ्केत समझाया जा चुका है।

**तत्रोपाङ्गाग्रगण्यत्वाद्, विद्यास्वभ्यर्हितत्वतः, सेतिहास-पुराणस्य[६६] युक्तं प्रागिह कीर्त्तनम्।**

---

एवं मीमांसाऽपि द्विविधा, कर्ममीमांसा, शारीरकमीमांसा च। तत्र द्वादशाध्यायी कर्ममीमांसा; ...तथा सङ्कर्षणकाण्डमपि अध्यायचतुष्टयात्मकं जैमिनिप्रणीतं; तच्च देवताकाण्डसंज्ञया प्रसिद्धमपि उपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव ( अत एव 'षोडशलक्षणी मीमांसा' इति प्रसिद्धिः )। तथा चतुरध्यायी शारीरकमीमांसा।...

एवं धर्मशास्त्राणि मनु-याज्ञवल्क्य-विष्णु-यम-अङ्गिरो-वसिष्ठ-दक्ष-संवर्त-शातातप-पराशर-गौतम-शङ्ख-लिखित-हारीत-आपस्तम्ब-उशनो-व्यास-कात्यायन-बृहस्पति-देवल-नारद-पैठीनसिप्रभृतिभिः कृतानि, वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि। एवं व्यासकृतं महाभारतं, वाल्मीकिकृतं रामायणं च धर्मशास्त्र एवान्तर्भूतं, स्वयमितिहासत्वेन प्रसिद्धम्। साङ्ख्यादीनां धर्मशास्त्रान्तर्भावेऽपि इह स्वशब्देनैव निर्देशात् पृथगेव सङ्गतिर्वाच्या।" [ प्र० भे० पृ० ७-८। ऋ० भा० भू० पृ० ५७-५८ ]

* "साङ्ख्यं, योगो, लोकायतं चेत्यान्वीक्षिकी" [ कौ० अ० शा० १, २, १। नी० वा० विद्यास० ५९ ]

'साङ्ख्यं' प्रकृति-पुरुषविवेचकं शास्त्रं कपिलप्रोक्तं, 'योगः' प्रत्याहार-ध्यान-धारणादिप्रतिपादक महेश्वरप्रोक्तं, 'लोकायतं' न्यायशास्त्रं ब्रह्म-गार्ग्योक्तम्, एतत्रितयात्मिका 'आन्वीक्षिकी' इति तट्टीका।

† **"सामर्ग्यजुर्वेदास्त्रयस्त्रयी; अथर्ववेद-इतिहासवेदौ च वेदाः।...पुराणम्, इतिवृत्तम्, आख्यायिका, उदाहरणं, धर्मशास्त्रम्, अर्थशास्त्रं चेति "इतिहासः"** [कौ० अर्थ० १,३,१। १,५,२]

"सामवेदः, ऋग्वेदः, यजुर्वेद, इति त्रयः 'त्रयी' पदवाच्याः; अथर्ववेदः, इतिहासवेदो महाभारतादिश्च, 'वेद'पदार्थाः।...

इतिहासपदार्थविवरणं—पुराणमित्यादि। पुराणं ब्राह्मादि, इतिवृत्तं श्रीरामायण-महाभारतादि, आख्यायिका दिव्यमानुषादिचरितम्, उदाहरणं न्यायोपन्यायशास्त्रं मीमांसादि, धर्मशास्त्रं मानवादि, अर्थशास्त्रम् औशनस-बार्हस्पत्यादि" इति तट्टीका।

६६. इतिहास-पुराणं च पञ्चमो वेद उच्यते"; [ भा० १, ४, २० ]
वेदानामपि वेदश्च, तद्रहस्यार्थवेदनात्।
वेदोपबृंहणत्वेन, वेदोपकरणेष्वपि
सर्वेष्वभ्यर्हितं चैतद्वेदरूपं सनातनम्।

तत्रापि लाघवार्थाय किञ्चिदेव निदर्श्यते; शेषं सङ्केततो ज्ञेयं यथास्थानं मनीषिभिः।

उपाङ्गों की गणना में सब से पहले 'पुराण' का उल्लेख हुआ है, और चौदह वा अठारह विद्याओं में भी इसका स्थान बहुत ऊँचा माना गया है; क्योंकि इतिहास-पुराण के विना 'वेद' का उपबृंहण, वा उस के रहस्य का यथार्थ प्रकाश नहीं हो सकता, इस लिये वेद के अन्य सभी उपकरणों की अपेक्षा 'इतिहास-पुराण' की उपयोगिता और उपादेयता बहुत अधिक है। महाभारत( १,१,२६७ ) और स्कन्द-पुराण-सूतसंहिता आदि आर्ष ग्रन्थों में तो यह स्पष्ट आदेश है कि "इतिहास-पुराणों से ही वेद का उपबृंहण ( वेदार्थ का संवर्धन वा पुष्टीकरण ) करना चाहिये, अन्यथा जो इतिहास-पुराणों का बहुश्रुत विद्वान नहीं होता, उससे 'वेद' डरता है कि यह मुझे ठग लेगा, मेरा अनर्थ कर डालेगा" । वेदग्रन्थों में भी 'इतिहास-पुराण' का बड़ा माहात्म्य लिखा है, और उसे वेदों का भी 'वेद' ( वेदयिता बोध करानेवाला ) कहा है, इससे 'पुराण' की गुरुता और पुराणता वा प्राचीनता का अनुमान सहज ही किया जा सकता है। मत्स्यपुराण ( ५३,३ ) में तो सभी शास्त्रों से और वेदों से भी पहले 'पुराण' की ही उत्पत्ति बतलाई गई है। इसमें कोई आश्चर्य की बात नहीं है, क्योंकि वेद-पुराणों की प्रवाहनित्यता मानी ही गई है, तदनुसार पूर्वयुग के पुराण की रचना उत्तरोत्तर युग के वेदों से पहले होती ही है। यह तो शास्त्रों में ही लिखा है कि प्रतिकल्प, प्रतिमन्वन्तर और प्रत्येक

---

यथा व्याकरणत्वं च वेदाङ्गत्वं च पाणिनेः
मूलसूत्रवदेवेष्टं भाष्य-वार्तिकयोरपि।
तथा वेदवदेवेष्टं वेदानामुपबृंहणे
इतिहास-पुराणेऽपि वेदत्वमिति धारणा।
अतो वेदवदस्याऽपि व्याप्तिः, शिष्टपरिग्रहः,
प्रामाण्यं च, गुरुत्वं च; लोके वेदे च, दृश्यते।

"स बृहतीं दिशमनुव्यचलत्; तमितिहासश्च, पुराणं च, गाथाश्च, नाराशंसीश्चानुव्यचलन्; इतिहासस्य च वै, स पुराणस्य च, गाथानां च, नाराशंसीनां च, प्रियं धाम भवति, य एवं वेद" [ अथ० सं० १५, ६, १०-१२ ]

"इतिहास-पुराणं पुष्पम्"..."ते वा एते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन्" ( छा० उ० ३, ४, १-२ ); "स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदम् आथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदं, पित्र्यं राशिं, दैवं निधिं, वाकोवाक्यम् एकायनं, देवविद्यां, ब्रह्मविद्यां, भूतविद्यां, क्षत्रविद्यां, नक्षत्रविद्यां, सर्पदेवजनविद्याम्; एतद्भगवोऽध्येमि" [ छा० उ० ७, १, २ तथा ४; ७, २, १; ७, ७, १ ]

"अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो, यजुर्वेदः, सामवेदो, ऽथर्वाङ्गिरस, इतिहासः, पुराणं, विद्या, उपनिषदः, श्लोकाः, सूत्राणि, अनुव्याख्यानानि, व्याख्यानानि, अस्यैव एतानि सर्वाणि निःश्वसितानि" [ बृ० आ० २, ४, १०; ४, १, २; ४, ५, ११ ]

"इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति" [ अथर्वशिर उ० ७ ]

"यदृचोऽध्यगीषत, ताः पयआहुतयो देवानामभवन्; यद् यजूंषि, घृताहुतयो; यत् सामानि, सोमाहुतयो; यद् अथर्वाङ्गिरसो मध्वाहुतयो; यद् ब्राह्मणानि, इतिहासान्, पुराणानि, कल्पान्, गाथा, नाराशंसीर्, मेदाहुतयो देवानामभवन्, ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवाः स्वर्गं लोकमायन्, ब्रह्मणः सायुज्यमृषयोऽगच्छन्"........

युग में भी आवश्यकता के अनुसार वेद, धर्मशास्त्र, और पुराण आदि की नई रचना होती है; उसमें उनका मूल ज्ञानस्वरूप पूर्ववत् अनुवृत्त रहता है, पर बाह्य वाङ्मयरूप मे और सामयाचारिक नियमों में अपेक्षित परिवर्तन हो जाया करता है। अतः कालचक्र के अनुसार अनादिपरम्परा से युग युग में नवीकृत, प्रतिसंस्कृत, और परिवर्तित होते आनेवाले वेद-पुराणों में पौर्वापर्य वा अधरोत्तर क्रम का विपर्यास हो जाना असंभव वा अस्वाभाविक नहीं है। यही कारण है कि सब से प्राचीन और आदिम वाङ्मय समझे जानेवाले ऋग्वेद (८,३०,३) में भी एक 'मानव धर्म-शास्त्र' का उल्लेख पाया जाता है। फिर यदि वेदों में इतिहास-पुराण का उल्लेख है, और वेद से भी पहले पुराण के निर्माण की बात कही गई है, तो इसमें कोई भी आपत्ति वा अनुपपत्ति नहीं हो सकती है। इस विषय का अधिक स्पष्टीकरण अनुपद आगे होगा।

---

"यद् ऋचोऽधीते, पयसः कूल्या अस्य पितॄन्स्वधा अभिवहन्ति; यद् यजूंषि, घृतस्य कूल्याः यत्सामानि, सोम एभ्यः पवते; यद् अथर्वाङ्गिरसो, मधोः कूल्या; यद् ब्राह्मणानि, इतिहासान्, पुराणानि, कल्पान्, गाथा, नाराशंसीर्, मेदसः कूल्या अस्य पितन् स्वधा अभिवहन्ति"......

"यद् ऋचोऽधीते, पयआहुतिभिरेव तद्देवांस्तर्पयति; यद्यजूंषि, घृताहुतिभिः; यत्सामानि, सोमाहुतिभिः; यदथर्वाङ्गिरसो, मध्वाहुतिभिः; यद् ब्राह्मणानि, इतिहासान्, पुराणानि, कल्पान्, गाथा, नाराशंसी र्, मेदाहुतिभिरेव तद्देवांस्तर्पयति; त एनं तृप्ता आयुषा, तेजसा, वर्चसा, श्रिया, यशसा, ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति"......

"यत् त्रिराचामति, तेन ऋचः प्रीणाति; यद् द्विः परिमृजति, तेन यजूंषि; यत्सकृदुपस्पृशति, तेन सामानि; यत्सव्यं पाणिं पादौ प्रोक्षति, यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते; तेनाथर्वाङ्गिरसो, ब्राह्मणानि, इतिहासान्, पुराणानि, कल्पान्, गाथा, नाराशंसीः प्रीणाति" [ तै० आ० प्रपा० २ अनु० ९, १०, ११ ]

"अथाष्टमेऽहन् एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति ह वै होतरित्येवाध्वर्युर्मत्स्यः सामवेदो राजेत्याह, तस्योदकेचरा विशस्त इम आसत इति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति; तानुपदिशति, 'इतिहासो वेदः' सोऽयमिति कश्चिदितिहासमाचक्षीत, एवमेवाध्वर्युः सम्प्रेष्यति, न प्रक्रमां जुहोति" [ शत० कां० १३ प्र०-३ ब्रा० १ कं० १२ ]

"अथ नवमेऽहन् एवमेवैतास्विष्टिषु संस्थितासु एषैवावृदध्वर्यविति ह वै होतरित्येवाध्वर्युस्तार्क्ष्यो वैपश्यतो राजेत्याह, तस्य वयांसि विशस्तानीमान्यासत इति वयांसि च वायोविद्यिकाश्चोपसमेता भवन्ति, तानुपदिशति, 'पुराणं वेदः' सोऽयमिति किञ्चित्पुराणमाचक्षीत, एवमेवाध्वर्युः सम्प्रेष्यति, न प्रक्रमां जुहोति" [ शत० ब्रा० कां० १३ प्रपा० ३ ब्रा० १ कं० १३ ]

"चातुराश्रम्यविधानाच्च इतिहास-पुराण-धर्मशास्त्रेषु, ऐकाश्रम्यानुपपत्तिः; तदप्रमाणमिति चेत् ? न, प्रमाणेन खलु ब्राह्मणेन इतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते;—

'ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणस्य प्रामाण्यमभ्यवदन्, 'इतिहासपुराणं पञ्चमं वेदानां वेद'; इति।

तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्मशास्त्रस्य, प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः। द्रष्टृ-प्रवक्तृसामान्याच्च, अप्रामाण्यानुपपत्तिः; य एव मन्त्र-ब्राह्मणस्य द्रष्टारः, प्रवक्तारश्च ते खलु इतिहासपुराणस्य धर्मशास्त्रस्य चेति। विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्, अन्यो मन्त्र-ब्राह्मणस्य विषयः,

संस्कृत टिप्पणों में उद्धृत वेदवचनों से, और अन्यान्य शास्त्रीय प्रमाणों से, इतिहास-पुराण का अत्यन्त महत्त्व प्रकट होता है, अतः इस मानवार्षभाष्य में अधिकतर इतिहास-पुराणों के वाक्यों से ही वेदार्थगर्भित मनुवचनों का उपबृंहण किया जायगा; इसलिये यहां ऐतिहासिक और पौराणिक उद्धरणों के सङ्केत आदि का विवरण दे देना नितान्त आवश्यक है। पर संक्षेप के लिये कतिपय मुख्य ग्रन्थों के विषय में ही कुछ सूचना दी जाती है, शेष इतिहास-पुराणों के मूल स्थल की सूचना उद्धरण के स्थानों पर ही स्पष्टतः दे दी जायगी । जिज्ञासुओं को वहीं से जान लेना चाहिये ।

---

अन्यश्च इतिहास-पुराण-धर्मशास्त्राणामिति । यज्ञो मन्त्र-ब्राह्मणस्य, लोकवृत्तमितिहास-पुराणस्य, लोकव्यवहार व्यवस्थापनं धर्मशास्त्रस्य विषयः; तत्रैकेन न सर्वं व्यवस्थाप्यत इति यथाविषयमेतानि प्रमाणानि, इन्द्रियादि-वदिति" [ न्यायभाष्ये ४, १, ६२ ]

"महान् शब्दस्य प्रयोगविषयः; सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गा सरहस्या बहुधा भिन्नाः...वाकोवाक्यम्, इतिहासः, पुराणं, वैद्यकमिति" [ महाभाष्ये १, १, १ ]

"एवं भारतादिवाक्यानि व्याख्येयानि; तेषामपि हि—'श्रावयेच्चतुरो वर्णान्' इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणाद् अक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाऽधर्माऽनर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिः उपादान-परित्यागाङ्गभूता फलम् । तत्राऽपि तु दान-राज-मोक्षधर्मादिषु केचित्साक्षाद्विधयः, केचित्पुनः परकृति-पुराकल्परूपेण अर्थवादाः । सर्वोपाख्यानेषु च तात्पर्ये सति 'श्रावयेद्' इति विधेरानर्थक्यात् कथञ्चिद्गम्यमान-स्तुतिनिन्दापरिग्रहः । तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाऽभिनिवेशः कार्यः । वेदप्रस्थानाभ्यासेन हि वाल्मीकि-द्वैपायनप्रभृतिभिस्तथैव स्ववाक्यानि प्रणीतानि; प्रतिपाद्यानां च विचित्रबुद्धित्वाद् युक्तमेवैतत्, इह केचि-द्विधिमात्रेण प्रतिपाद्यन्ते, अपरे सार्थवादेन, अपरेऽल्पेनार्थवादेन, अपरे महता; सर्वेषां च चित्तं ग्रहीतव्य-मित्येवमारम्भः । तत्र तु केचिद् विधिप्रतिषेधाः श्रुतिमूलाः, केचिदर्थसुखादिषु लोकमूलाः, तथाऽर्थवादाः केचिद्वैदिका एव, केचिल्लौकिका एव, केचित्तु स्वयमेव काव्यन्यायेन रचिताः; सर्वे च स्तुत्यर्थेन प्रमाणम् । ये तु वाक्यशेषत्वं न प्रतिपद्यन्ते तेऽपि केचित् स्वयमेव श्रूयमाणगन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति; ये तु युद्धवर्णकास्ते सर्वेषां शूराणां भीरूणां चोत्साहकराः पार्थिवानामुपयुज्यन्ते । यत्र तु न किञ्चिद् दृष्टमुप-लभ्यते तत्र विशिष्टदेवतादिस्तुतिद्वारमदृष्टं कल्पनीयमित्येषा दिक्" [ मी० तं० वा० १, २, १, ७ ]

"तत्र यावद्धर्ममोक्षसम्बन्धि, तद्वेदप्रभवं; यत्त्वर्थसुखविषयं, तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्। एषैव इतिहासपुराणयोरपि उपदेशवाक्यानां गतिः; उपाख्यानानि तु अर्थवादेषु व्याख्यातानि । यत्तु पृथिवी-विभागकथनं तद्धर्माधर्मसाधनफलोपभोगप्रदेशविवेकाय किञ्चिद्दर्शनपूर्वकं किञ्चिद्वेदमूलम् । वंशानुक्रमणमपि ब्राह्मण-क्षत्रियजातिगोत्रज्ञानार्थं दर्शनस्मरणमूलम् । देशकालपरिमाणमपि लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं दर्शनगणितसम्प्रदायानुमानपूर्वकम् । भाविकथनमपि तु अनादिकालप्रवृत्तयुगस्वभावधर्माधर्मानुष्ठानफल-विपाकवैचित्र्यज्ञानद्वारेण वेदमूलम्" [ मी० तं० वा० १, ३, १, २ ]

"पुराणं, मानवो धर्मः, साङ्गो वेदः, चिकित्सितम्,
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः" [ महाभारते ]

"स्वाध्यायं श्रावयेत्पित्र्ये, धर्मशास्त्राणि चैव हि,
आख्यानानीतिहासांश्च, पुराणानि, खिलानि च" [ मनु० ३, २३२ ]

न वैतच्छ्रुतिसामान्यमात्रं, नित्येऽपि संभवात्,
यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा,
प्रतिमन्वन्तरं चैवं स्मृति (श्रुति) रन्या विधीयते;
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश,

## ( इतिहासपुराणयोरपेक्षितं किञ्चिद्वक्तव्यम् )

"तपश्चचार प्रथममपरणां पितामहः, आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः;
"पुराणं[६७] सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतं, नित्यं शब्दमयं पुण्यं शतकोटिमविस्तरम् :

---

तेन तद्वाक्यचेष्टानां सर्वदैवास्ति संभवः,
तदुक्तिज्ञापनाद्वेदो नाऽनित्योऽतो भविष्यति;
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः,
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात्। उक्तं च—
'यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये
दृश्यन्ते तानि तान्येव, तथा भाति ( भावा ) युगादिषु' इति;
इतिहासः, पुराणं च कृत्रिमत्त्वेन निश्चिते,
तथाऽप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम्" [ मी० तं० वा० १, ३, ३, ७ ]

"इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता
या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता;
'इतिहासान् पुराणानि कल्पान्' इति हि सा श्रुतिः, ( तै० आ० २, १० )
तस्मात्कृत्रिममप्यत्र विद्यास्थानं ग्रहीष्यते"। [ तं० वा० १, ३, ६, १२ ]

"स एष बहुश्रुतो भवति; लोकवेदवेदाङ्गवित्, वाकोवाक्येतिहासपुराणकुशलः"
[ गौ० ध० ८, ४–६ ]

"तस्य च व्यवहारो वेदो, धर्मशास्त्राणि, अङ्गानि, उपवेदाः, पुराणम्"
[ गौ० ध० ११, २१ ]

"अथ पुराणे श्लोकावुदाहरन्ति—( १, १९, १३; २, २३, ३ )

"यो हिंसार्थमभिक्रान्तं हन्ति, मन्युरेव मन्युं स्पृशति, न तस्मिन्दोष इति पुराणे
( १, २९, ७ )

'पुनः सर्गे बीजार्था भवन्ति' इति भविष्यत्पुराणे"
( २, २४, ६ ) इति आपस्तम्बधर्मसूत्रादिषु च पुराणेतिहासयोः सबहुमानमुल्लेखो दृश्यते।

६७. पुराकल्पाद् यदानीतं भवत्यत्र नवं नवम्
उत्तरोत्तरकल्पेषु, तत् पुराणमिति स्मृतम्। [ टि० १८ द्रष्टव्यम् ]

पुराकल्पे प्रणीतस्य यन्नवीकरणं पुनः प्रतिकल्पं, तदेवास्ति पुराणस्य 'पुराणता'।
वेदादपि 'पुरा' यस्माद् 'आनीतं' ब्रह्मणा स्मृतौ, तस्मादपि पुराणं स्यात् सर्वशास्त्रपुरातनम्।
सर्गादिपञ्चमेयानां नित्यत्वेन पुराणता, तन्निरूपणसम्बन्धाद् वा 'पुराणं' निरुच्यते।

"पुरापरम्परां वष्टि पुराणं तेन वै स्मृतम्" [ पाद्मे सृ० खं० २,५३ ]
"यस्मात्पुरा ह्यनन्तीदं, 'पुराणं' तेन तत्स्मृतं;
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते" [वा० पु० १,२०३; १०३,५५ ]

"पुराणरत्नमिति, न केवलं पूर्वसिद्धप्रबन्धप्रवर्तनमात्रमिति भावः, 'पुरा' एव विद्यमानत्वेऽपि सम्प्रति 'नव'त्वात् 'पुराणत्वं' चिरानुभूतत्वेऽपि अपूर्ववन्नित्यानुभाव्यमित्यर्थः। अनादिवैदिकार्थविषयतया विद्यान्तरेभ्यः पुरातनत्वाद्वा 'पुराणत्वं'; यथोक्तं वायव्ये ( शि० पु० वा० सं० पू० अ० १ श्लो० २७ ) प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणोदितम्, अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः" इति [ स्तोत्ररत्नभाष्ये श्रीवेङ्कटनाथाचार्यः ]

अनन्तरं च वक्त्रेभ्यो[६] "वेदास्तस्य विनिःसृताः ; मीमांसा, न्यायविद्याश्च, प्रमाणाष्टकसंयुताः"
[ मत्स्य० पु० ३, २–४; ५३, ३ । पाद्मे सृ० खं० १,४५ । शि० पु० वा० सं० पू० भा० १, २७ ]

इस प्रकरण में इतिहास-पुराण के सम्बन्ध मे अवश्यज्ञातव्य कुछ विषयों की चर्चा करना नितान्त उपयुक्त है ।

मत्स्यपुराण के तीसरे और ५३ वें अध्याय के आरम्भ मे ही उपर्युक्त श्लोक हैं, ऐसे ही श्लोक कुछ पाठभेद के साथ पद्मपुराण और शिवपुराण मे भी पाये जाते हैं, इनके अनुसार "ब्रह्माने सब शास्त्रों से पहले 'पुराण' को ही याद किया, वा सोचा; बाद मे उसके

---

"शाश्वतोऽयं पुराणः" ( २, २० ) इति गीतावचनभाष्ये श्रीशङ्कराचार्यैः—"पुराऽपि नव एवेति पुराणः" इति पुराणपदनिर्वचनं प्रदर्शितम् ।

"स्यात्प्रबन्धे, चिरातीते, निकटागामिके पुरा" इत्यमरः ।

"प्रबन्धे अविच्छेदेन क्रिया-करणे । पुरति, 'पुर' अग्रगमने ( तु० प० से० ) बाहुलकात् 'का' । 'पुरा' पुराणे, निकटे, प्रबन्धातीतभाविषु' ( इति मेदिनी )" इति तत्रत्या व्याख्यासुधा ।

"पुराणं पञ्चलक्षणम्" इत्यमरवाक्यव्याख्याने—

( १ ) पुराणमिति, पुरा भवम्; "सायंचिरम्"—( पा० ४, ३, २३ ) इति ट्यु-ट्युलौ, 'पूर्वकालैक—' ( पा० २, १, ४९ ) इति सूत्रे निपातनात् तुडभावः । यद्वा पुराऽपि नवं 'पुराणम्'; 'पुराण-प्रोक्तेषु—' ( पा० ४, ३, १०५ ) इति सूत्रे निपातितम् । यद्वा 'पुरा' अतीतानागतावर्थौ 'अणति;' 'अण शब्दे' ( भ्वा० प० से० ) पचाद्यच् । 'पुराणं, पञ्चलक्षणे, पणे पुंसि, त्रिषु प्रत्ने ।

( २ ) पञ्च लक्षणान्यस्य—

'सर्गश्च, प्रतिसर्गश्च, वंशो, मन्वन्तराणि च ,
भूम्यादेश्चैव संस्थानं, पुराणं पञ्चलक्षणम् ।

क्वचिदिह 'वंशानुचरितं चैव' इति तृतीयपादे पाठान्तरम् । द्वे (नामनी—पुराणं, पञ्चलक्षणं चेति ) व्यासादिप्रणीतमत्स्यपुराणादेः ।" इति व्याख्यासुधा ।

"पुराणैः प्राचीनैः ब्रह्माद्यृषिभिः प्रोक्ता ब्राह्मण-कल्पग्रन्थाः वेदव्याख्यानाः सन्ति, अत एवैतेषां 'पुराणेतिहास'संज्ञा कृताऽस्ति" इति ऋग्वेदादिभाष्यभूमिकायां ( पृ० ८७ ) श्रीमद्दयानन्द-सरस्वतीस्वामिभिः प्रोक्तम् ।

यद्यपीह ब्राह्मणग्रन्थानामेव पुराणेतिहासत्वप्रतिपादने स्वामिनां प्रयासः, तथापि व्युत्पत्तिप्रदर्शन-मात्रार्थं तद्वाक्यमस्माभिरत्र निदर्शितम् ।

६८. "मन्वन्तर-युगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यं; लौकिकेषु ( पुराणादि ) शब्देषु चैतत्समानम्" इति न्यायभाष्यम् ( २, १, ६७ ) ।

"अथ योऽयमभिलापो 'नित्या वेदा' इति, स कथम् ? सम्प्रदायस्याविच्छेदात्; तान्येव वेद-वाक्यानि मन्वन्तर-चतुर्युगान्तरेषु सम्प्रदायाऽभ्यासाऽविच्छेदेन प्रवर्तन्ते, तदपेक्षया लौकिकाः शब्दान् प्रयु-ञ्जन्ते—'नित्या वेदा' इति; यथा नित्याः पर्वताः, नित्याः सरित इति । तन्मन्वादि-वाक्येषु समानं; कुत एवं ? सम्प्रदायाऽविच्छेदात् । नित्यत्वं न पुनर्नित्यत्वादेव, अनित्यत्वोक्तप्रमाणाऽविघातात् ; यानि मया अनि-त्यत्वे प्रमाणान्युपन्यस्तानि तानि न विहन्यन्ते, तेषामविघाताद् अनित्यत्वे सति सम्प्रदायाऽविच्छेदात् नित्य-त्वोपचारः" इति तत्रत्यं न्यायवार्तिकम् ।

"तदर्थ( वेदार्थ )पालनायां च महर्षिपरम्पराभिः अङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणी-तानि;...महाप्रलये तु ईश्वरेण वेदान् प्रणीय सृष्ट्यादौ सम्प्रदायः प्रवर्त्यत एवेति भावः" इति च तत्र न्याय-वार्तिकतात्पर्यटीका ।

मुख से 'वेद' निकले"। यहाँ यदि 'स्मृतं' का अर्थ 'बनाया' ऐसा समझा जाय, तो यही कहना पड़ेगा कि सभी वेद-शास्त्रों से पहले 'पुराण' की ही रचना हुई। पर शास्त्र और लोक, दोनों ही मे यही प्रसिद्धि है कि सर्वप्रथम 'वेद' की ही उत्पत्ति हुई। मीमांसक आदि तो वेद को अनादि और अपौरुषेय भी मानते हैं।

इस विरोध का परिहार दो प्रकारों से किया जा सकता है।

(१) 'पुराण' शब्द के दो अर्थ हैं, और तत्र [ विवक्षित अर्थ के ज्ञापन की योग्यता ] से इस का तात्पर्य दोनों ही में रहता है। उन में पहला अर्थ 'शाश्वतिक इतिहास' है। इस पक्ष में 'पुरा' प्राचीन काल से, 'न' वा 'आन,' अर्थात् नवीन वा आनीत होने वाला ( पूर्वकल्प से अनन्तर के कल्पों में अनुवृत्त होने वाला, वा नये नये रूप में बदलता रहनेवाला ), ऐसी व्युत्पत्ति ही अभीष्ट है [ पृ० ३ टि० १८ देखिये ] इस का तात्पर्य यह है कि जो सनातन इतिहास का संस्कृतवाङ्मयप्रस्थानविशेष अत्यन्त प्राचीन होने पर भी युग युग में, वा प्रत्येक द्वापर में नवीन होता रहता है, अथवा पूर्व युगों से वाद के युगों में चलता रहता है, उसे 'पुराण' कहते हैं। 'पुरा' शब्द का प्रयोग, भूत और भविष्य, दोनों कालों के लिये प्रसंग के अनुसार होता है, परन्तु 'पुराण' पद मे उस के दोनों ही अर्थ विवक्षित हैं। अतः 'पुराण' शब्द का 'पुरा' अतीत काल से, 'पुरा' भविष्यत्कालपर्यन्त, 'नव' ऐकरूप रहनेवाला, वा 'आनीत' सतत अनुवृत्त होनेवाला, पञ्चलक्षण इतिहासप्रस्थान, यह अर्थ सम्पन्न होता है। इस के अनुसार उस कथन में कोई भी विरोध नहीं रह जाता, जिस में वेद से भी पहले पुराण की उत्पत्ति वतलाई गई है, क्यों कि वेदों की तरह ही पुराणों की भी अनादि परम्परा और प्रवाहनित्यता सिद्ध होती है, अत एव इसे 'पुराण' कहते हैं, और इसी लिये वेद में भी इतिहास-पुराण की बहुत चर्चा सुनी जाती है। सुतरां कल्प, मन्वन्तर, वा युग के भेद से, वेद और पुराण की उत्पत्ति का समय भी, कभी आगे और कभी पीछे हो सकता है। यह वात पहले ही लिखी गई है।

(२) 'पुराण' शब्द का दूसरा अर्थ 'पञ्चलक्षण' प्रमेय ( प्रतिपाद्य विषय ) है। 'पञ्चलक्षण' शब्द की व्युत्पत्ति भी दो प्रकार से की जाती है, पहली—सर्ग, प्रतिसर्ग, मन्वन्तर, वंश, और वंशानुचरित वा लोकसंस्थान, ये पांच जिस के लक्षण ( स्वरूप ) हों वह 'पञ्चलक्षण' है। इस व्युत्पत्ति के अनुसार 'पञ्चलक्षण' 'पुराण' प्रमेयस्वरूप सिद्ध होता है। दूसरी व्युत्पत्ति—सर्ग आदि पांच प्रमेय जिस से लक्षित वा प्रतिपादित हों, वह 'पञ्चलक्षण' ( ग्रन्थरूप पुराण ), ऐसी है। इन में दूसरी व्युत्पत्ति के अनुसार 'पुराण' का उल्लेख प्रथम पक्ष में हो चुका है। यहाँ ( दूसरे पक्ष में ) पहली व्युत्पत्ति के अनुसार 'पुराण' शब्द का अर्थ ( पञ्चलक्षण प्रमेय ) लिया गया है। इस के अनुरोध से यहाँ उद्धृत पौराणिक वचनों का ऐसा अर्थ लगाया जा सकता है कि "ब्रह्मा ने वेदादि सर्व शास्त्र-निर्माण के पहले 'पुराण' (पञ्चलक्षण प्रमेय) को याद किया, ( ध्यानपूर्वक सोचा-विचारा ), अनन्तर उस ( प्रमेय ) के प्रतिपादक 'वेद' उस के मुख से प्रकट हुए"। यह तो अनुभव की वात है कि प्रतिपाद्यविषय को पहले स्मृति में ला कर, वा मन में सोच कर, ही कोई ग्रन्थकार वा प्रवक्ता ग्रन्थनिर्माण, वा प्रवचन करता है*। आदिशास्त्रकार लोकपितामह

---

* "बुद्धिपूर्वा वाक्यकृतिर्वेदे" [ वै० द० ६, १, १ ]

"आत्मा बुध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया,
मनः कायाग्निमाहन्ति, स प्रेरयति मारुतं,
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्" [ पा० शि० श्लो० ६–७ ]

ब्रह्मा ने भी ऐसा ही किया। यहां रहस्यार्थ यह है कि किसी विशेष देश, राष्ट्र, समाज, वा लोक की प्रसिद्ध घटनाओं, और विशिष्ट महापुरुषों, के पञ्चलक्षण का प्रतिपादक ग्रन्थ 'इतिहास', किसी एक सौरजगत् के पञ्चलक्षण का प्रतिपादक ग्रन्थ 'पुराण,' और अतीत, वर्त्तमान, तथा अनागत, समस्त विश्व के सामान्य पञ्चलक्षण का प्रतिपादक ग्रन्थ 'वेद' कहलाता है। त्रैकालिक विश्व का 'पञ्चलक्षण' अनन्त ( अपरिमेय ) है, अत एव उस का प्रतिपादक 'वेद' भी अनन्त माना गया है। इस अर्थ में उपर्युक्त विरोध का उत्थान भी नहीं होता है।

यद्यपि इतिहास, पुराण, और वेद का विषय ( पञ्चलक्षणवर्णनरूप ) एक ही है, तथापि प्रतिपाद्य क्षेत्र के तारतम्य वा अल्पत्व-बहुत्व के कारण उनका भिन्न भिन्न नाम है। दोनों के विषय की एकता के कारण ही इतिहास-पुराण को वेद का 'उपबृंहण' और पञ्चम 'वेद' भी कहते हैं। विषय की भिन्नता मे उपबृंहणता वा एकनामता नहीं होती, क्यों कि 'सामान्य' ही 'उपबृंहण' संवर्धन वा विस्तारण का, तथा 'एकता' का, हेतु होता है; 'विशेष' वा भिन्नता तो 'ह्रास' अपचय और अनेकता का ही कारण है†। अतः महाभारत, भागवत, और ऋक्-संहिता आदि ग्रन्थों के विषयों की अल्पता और भूमा के अनुसार, इतिहास, पुराण, और श्रुति आदि विशेष नाम भी पड़े हैं, तथा विषय की एकता के कारण 'वेद' इस सामान्य नाम से भी उन का निर्देश होता है।

इतिहास, पुराण, और वेद में जो प्रतिपाद्य विषय का भेद बतलाया गया है, उस में भी 'वैशेष्य' न्याय से विवेक करना चाहिये, अर्थात् महाभारत आदि इतिहास मे वंशविशेष ( कौरव-पाण्डव आदि ) के चरित और इस लोक के पञ्चलक्षण की, मात्स्य-भागवत आदि पुराण में हमारे सौरजगत् के पञ्चलक्षण की, और ऋग्-आदि वेद में समस्त विश्व की शाश्वतिक घटनाओं के वर्णन की प्रधानता है। वस्तुतः तो सब में सभी विषयों का दिग्दर्शन है, क्यों कि महाभारत और भागवत आदि इतिहास-पुराणों में भी अखिल विश्व का शाश्वत इतिहास ( Permanent History ) और पञ्चलक्षण बतलाया गया है, एवं वेद में भी वंशविशेषों के उपाख्यान और भूलोकादि के भी पञ्चलक्षण पाये जाते हैं। तत्त्वतः तो वेद ही अगणित-सौरजगद्गर्भित अखिललोकमय समस्त विश्व का शाश्वत इतिहास वा पञ्चलक्षण है और इतिहास-पुराण उसी के उपबृंहण वा भाष्य हैं।

---

† "सर्वदा सर्वभावानां सामान्यं वृद्धिकारणं,
ह्रासहेतुर्विशेषश्च, प्रवृत्तिरुभयस्य तु।
सामान्यमेकत्वकरं, विशेषस्तु पृथक्त्वकृत्,
तुल्यार्थता हि सामान्यं, विशेषस्तु विपर्ययः" [चरकसंहितायां १, १, ४३-४४]

"उपबृंहणं च श्रुतिप्रतिपन्नार्थविशदीकरणं, तच्च विरुद्धार्थया स्मृत्या न शक्यते कर्त्तुम्"
[ इति ब्रह्मसूत्रश्रीभाष्ये ( २, १, १ ) श्रीरामानुजाचार्याः ]

"नानाविधोपाख्यानप्रतिपादनपर्यवसिते पुराणे कः प्रसङ्गो वेदार्थस्य? तत्राह 'सर्गश्चेत्येकेन'; ब्रह्मणस्तटस्थलक्षणत्वेन सृष्टि-स्थिति-प्रलया एव वेदे प्रधानं प्रमेयम्, 'आत्मैवेदमग्र आसीत्', 'स ऐक्षत' इति महासर्गः, 'नेह नानाऽस्ति' इति महाप्रलयः, अन्यत्सर्वं स्थित्यवस्थाविलासः; इत्थमेव पुराणेऽपि वंश-मन्वन्तर-वंशानुचरितानि स्थित्यवस्थात एवेति" [ सूतसंहितायाः ( १,१,३३ ) व्याख्याने श्रीसायणाचार्यः ]

एवमादिभिः शास्त्रवचनैः 'तुल्यार्थतया' 'अविरुद्धार्थतया' एव वा इतिहास-पुराणादेर्वेदोपबृंहणत्वं वाच्यं, तच्च तुल्यार्थत्वं यथायोग्यं पञ्चलक्षणार्थप्रतिपादकत्वमेवेति दिक्।

यहाँ यह भी जान लेना आवश्यक है कि आधुनिक इतिहास ग्रन्थों की तरह ही, प्राचीन आर्ष इतिहास-पुराण, वा वेद ग्रन्थ, सामयिक घटनाओं के वर्णकमात्र ( केवल बीती हुई प्रसिद्ध घटनाओं और उन से सम्बन्ध रखने वाले स्त्री-पुरुषों के चरित्रों का ही कालक्रम से वर्णन करने वाले ) नहीं हैं, और न चरित-चित्रणमात्र ही उन का मुख्य प्रयोजन है; किन्तु उन में शाश्वतिक और सतत पुनरावर्तशील प्राकृतिक घटनाओं के क्रम और नियमों का तथा त्रैकालिक विश्व के मौलिक और पारस्परिक पञ्चलक्षणों का अपेक्षित विवरण, और धर्म, अर्थ, काम, तथा मोक्ष, इन चार पुरुषार्थों का कर्म, उपासना, और ज्ञान-प्रभृति साधनों के साथ परम सदुपदेश है। अतः वेदादि ग्रन्थों मे जो नाम, चरित्र, या घटनायें लिखित हैं, वे अपने 'सामान्य' के वाचक हैं, 'विशेष' के नहीं। उदाहरण के लिये ऐसा समझना चाहिये कि यदि वेद मे मनु का नाम या चरित्र आया है, तो वह अतीत और अनागत, सभी मनुओं का है, न कि मनुव्यक्तिविशेष का, अर्थात् प्रतिमन्वन्तर में 'मनु' हुआ करते हैं, और परम्परा से नियमित अपना कर्त्तव्य किया करते हैं, ऐसा बोध कराना ही उस के तात्पर्य का विषय होता है। अन्य विषयों मे भी वेद पुराणादि का ऐसा ही तात्पर्य स्वयं समझ लेना चाहिये। अवश्य ही सामान्य मे अनन्त विशेष भी निहित रहते हैं, तदनुसार वेद, पुराण, और इतिहास के उपाख्यानों में निर्दिष्ट 'मनु' आदि नाम जहाँ सामान्यतः अतीत-अनागत, सभी मन्वन्तराधिकारी के सूचक हैं, वहां तत्तन्मन्वन्तर के अधिकारी विशेष स्वायंभुव मनुप्रभृति के बोधक भी हैं, क्यों कि सामान्य-परम्परा के बीच मे निपतित (पड़नेवाले) विशेषों का निर्देश असंभव वा असङ्गत नहीं है। ऐसे ही विशिष्ट व्यक्ति, वंश, वा घटना को लेकर प्रवृत्त इतिहासग्रन्थ मे भी तात्कालिक विशेष के आख्यान मे त्रैकालिक तत्सम सामान्य का भी सङ्केत रहता है। जैसे रामायण और महाभारत मे वर्णित त्रेता और द्वापर की विशेष घटनाओं मे, वा विशिष्ट वंशानुचरितों मे, त्रैकालिक त्रेता-द्वापर, राम-युधिष्ठिर, और रघु-कुरुवंशों का सामान्य चरित वा पञ्चलक्षण भी निहित है। यही न्याय वेद-पुराणों मे वर्णित व्यक्ति, वंश, वंशानुचरित, मन्वन्तर, मन्वन्तराधिकारी, लोकसंस्थान, सृष्टि और प्रलय आदि सभी पात्रों, घटनाओं और उन के इतिवृत्तों के विषय मे समझना चाहिये।

"पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ, त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्। निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया, अङ्गानि, चतुरो वेदान्, पुराणं, न्यायविस्तरं, मीमांसां, धर्मशास्त्रं च, परिगृह्यात्मसात्कृतम्। मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे, अशेषमेतत्कथितमुदकान्तर्गतेन च; श्रुत्वा जगाद च मुनीन्प्रति देवांश्चतुर्मुखः; प्रवृत्तिः सर्वशास्त्राणां, पुराणस्याऽभवत्ततः। कालेनाऽग्रहणं दृष्ट्वा पुराणस्य ततो नृपे, व्यासरूपमहं कृत्वा संहरामि युगे युगे, चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा[६९]।

६९. "मन्वन्तरेषु सर्वेषु द्वापरे द्वापरे युगे
प्रादुष्करोति धर्मार्थी पुराणानि यथाविधि।
द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा
वेदमेकं स बहुधा कुरुते हितकाम्यया।
अल्पायुषोऽल्पबुद्धींश्च विप्राञ्ज्ञात्वा कलावथ
पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे।
स्त्री-शूद्र-द्विजबन्धूनां न वेदश्रवणं मतं,
तेषामेव हितार्थाय पुराणानि कृतानि च। [अस्मिन्विषये टिप्पणमग्रे द्रष्टव्यम्]

तथाऽष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाश्यते, अद्यापि देवलोकेऽस्मिन्-शतकोटिप्रविस्तरम्[७०]।
तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितः, पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते"।

---

मन्वन्तरे सप्तमेऽत्र शुभे वैवस्वताऽभिधे
अष्टाविंशतिमे प्राप्ते द्वापरे मुनिसत्तमाः,
व्यासः सत्यवतीसूनुर्गुरुर्मे धर्मवित्तमः;
एकोनत्रिंशत्संप्राप्ते द्रौणिर्व्यासो भविष्यति,
अतीतास्तु तथा व्यासाः सप्तविंशतिरेव च,
पुराणसंहितास्तैस्तु कथितास्तु युगे युगे" [ दे० भा० १, ३, १८–२४]

इतः परं श्लो० २५–३३ पर्यन्तं देवीभागवते, विष्णुपुराणे च तृतीयांशस्य तृतीयाध्याये तत्तद्युगीयानां व्यासानामुल्लेखो विद्यते।

७०. "अद्यापि देवलोके 'शतकोटिप्रविस्तरं पुराणमस्ति'' इत्यस्याः पुराणवार्तायास्तात्पर्यं तु बहुधा वक्तुं शक्यते।

तत्रैकं यथाश्रुतसरलाक्षरार्थानुगतं, तद्यथा—एकैकस्मिन्नपि सौरजगति भूयसां ब्रह्माण्डानां सत्ता श्रूयते, सूक्ष्मेक्षिकयाऽनुभूयते च, सौरजगतां चापि बहुत्वमस्तीति तद्विद्यसिद्धान्तः। तत्र प्रत्येकमनन्ते लोकसन्ताने देवलोकस्यापि स्थितिः, तस्मिंश्च 'शतकोटिप्रविस्तरं पुराणम्' अद्यापि वर्तत इत्यत्र नाश्चर्यमिति।

द्वितीयं तु, 'देवानां' विद्यया विद्योतमानानां विदुषां, तत्तद्युगीयपुराणकृतां व्यासदेवानां वा, 'लोके' ( लोक्यते, लोकयति वाऽस्मिन्निति ) अन्तर्हृदये 'शतकोटिप्रविस्तरं' तावदर्थज्ञानरूपं, 'पुराणम्' अतीतानागतसर्गादिपञ्चलक्षणप्रमेयविषयकं, विद्यते—

"सर्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः,...
आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितम्'' [ मनु० १२, ११८–१९ ]

इति मनूक्तन्यायात्; ततः चतुर्लक्षमेवाद्ययावन्मनुष्यलोके, जनसमाजे यथाप्रयोजनं प्रकाशितं, शेषं च भावियुगेषु क्रमात्प्रकाशिष्यत इति।

तृतीयं तु स्वसत्तया विद्योतमानानामाब्रह्मस्तम्बपर्यन्तानां सर्वेषामेव भावात्मकपदार्थानां देवत्वाङ्गीकारात्,* तल्लोकोऽपि तत्स्थानभूतं सम्पूर्णं 'जगद्' एव। तत्र तु स्वल्पमेवैतदुक्तं 'शतकोटिप्रविस्तरम्'

---

* "आब्रह्मस्तम्बपर्यन्तानां सर्वेषामेव पदार्थानामिह ( निरुक्ते ) देवत्वं चोररीकृतं; तथा हि—

'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन्स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति' इति ( निरु० ७, १, ४ ), 'यो देवः सा देवता' इति च ( नि० ७, १५, १ )। 'देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा' इति देवताशब्दनिर्वचनं च तत्रैव। द्युशब्दश्चात्र नभोमण्डलमात्रस्योपलक्षकः; एवं हि अन्तरिक्षस्थानां, सौरजगद्बहिर्भूतानां ध्रुवादीनां च ग्रहणमिह सिध्यति। तदेवमिन्द्र-वाय्वादीनामचेतनानां वृष्ट्यादिदानहेतुकं, यायावर–राजादीनां चेतनानां चार्थादिदानहेतुकं देवत्वम्; अश्वादिजीवानाम्, अजीवानां च ग्रावादीनां दीप्तिहेतुकं देवत्वम्; अग्नि-चन्द्र-पर्जन्यादीनां, ब्रह्मवर्चस्विनां विदुषां च द्योतनहेतुकं देवत्वं; सूर्य-सूर्यकरादीनां, तदुपरिस्थानां तारकादीनां च द्युस्थत्वनिबन्धनं देवत्वं; यत्र तु ईश्वरे सर्वं एवैते गुणा उपपद्यन्ते, तस्य देवत्वस्य तु कैव कथा। तदेवमाब्रह्मस्तम्बपर्यन्तानां सर्वेषामेव पदार्थानां देवत्वमुपगम्यते।

'द्युस्थत्वे सति दानादिगुणवत्त्वम्' इदमेकमेव देवलक्षणं स्वीकार्यमिति मते तु सूर्येन्द्राग्न्यनिलेन्दुप्रभृतीनां मूलतो भमण्डलस्थानामेव पदार्थानां मुख्यं देवत्वं, तत्तत्स्थानभक्तिसाहचर्यतस्तु भूरादिलोकानां, तत्रत्यानामश्वसोमौषध्यादीनामपीत्येव विशेषः। तथा चोक्तं यास्केन—

मत्स्य पुराण के ५३ वें अध्याय में ही आगे चल कर सभी पुराणों के प्रवक्ता 'सूत' जी ने अपने श्रोता मुनियों को 'पुराण' के विषय में यह मनु-मत्स्यसंवाद सुनाया है—

---

इति, प्रत्युत तदुपलक्षितमनन्तकोटिप्रविस्तरं च पञ्चलक्षणविषयस्वरूपं 'पुराणम्' एतस्मिन् वर्तते, विश्वरूपस्य प्रकृतिसाम्राज्यस्य पुराणोपादानभूतानन्तवस्तुमयत्वात् । तत्र सर्वेषामेकैकशः सर्गादिपञ्चलक्षणवर्णनासंभवात्, पुरुषार्थोपकरणमात्रार्थं चतुर्लक्षपरिमितमेव पुराणमिह लोके प्रकाश्यत इति ।

---

'तिस्र एव देवता इति नैरुक्ताः; अग्निः पृथिवीस्थानो, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थानः' इति [ निरु० ७, ५, १–२ ] ।

तदेवं प्रधानतो देवतात्रित्वेऽपि स्थानभक्त्यादितस्तद्बहुत्वं च न विरुद्धं; तत एवेदमुक्तं तेनैव—

'तासां ( तिसृणां देवतानां ) माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति' ( निरु० ७, ५, ३ ) इति ।

भागो, विभागो, भक्तिश्चैकार्थाः, महाभागस्य भावो माहाभाग्यं; तच्च माहाभाग्यम्—एकस्थानभाक्त्वेन, एकस्मिन्मन्त्रे साहचर्यतयाऽऽम्नातत्वेन, एककर्मभाक्त्वेन, एकवाच्यभाक्त्वेन च भवति; तस्मान्माहाभाग्यादेव देवबहुत्वं स्वीकार्यमिति तदर्थः ।

तस्माद् वैदिकमन्त्रेषु स्तुता एव पदार्थाः तन्मन्त्रतः स्तुतिकाले एव च देवत्वेन स्तुत्या भवन्ति; नान्ये, नाऽप्यन्यत्र, इत्येव वैदिकसिद्धान्तः । अत एव ते 'मन्त्रमयी देवता' इत्येव स्वीकुर्वन्ति; इति च प्रवदन्ति याज्ञिकाः ।

तदेवं देवतानामसङ्ख्येयत्वेऽपि दाशतय्यां ( ऋक्संहितायां ) प्रधानतया अग्निवाय्विन्द्रसूर्याणां स्तुत्यादिदर्शनात् त एव चत्वारो देवा मुख्या गण्यन्ते; तत्राऽपीन्द्रस्य वाय्वादिविशेषत्वेनैवाऽभ्युपगमात् देवतात्रित्वमेव सम्पद्यते । तदेवमत्र पृथिव्यामग्निरेव मुख्यो देवः, जलादयस्तदेकस्थानास्त्वप्रधानाः, अश्वादयश्चेतना इध्मादयोऽचेतनाश्च पारिभाषिकाः । अन्तरिक्षे वायुर्वा इन्द्रो वा मुख्यो देवः, पर्जन्यादयस्तदेकस्थानास्त्वप्रधानाः, श्येनादयोऽन्तरिक्षचराश्चेतना, वागादयोऽचेतनाश्च पारिभाषिकाः । द्युलोकेऽप्येवं सूर्यो मुख्यः, अश्विप्रभृतयस्तदेकस्थानास्त्वप्रधानाः, पारिभाषिकदेवास्तु तत्र नैव सन्ति इति गम्यते, ब्राह्मणग्रन्थेषु तत्रत्यानां तथाविधानामनुल्लेखादिति'' [ निरु० आलो० पृ० २३९–४२ ]

''यज्ञे 'देवता' शब्देन किं गृह्यते ? याश्च वेदोक्ताः । अत्र प्रमाणानि—

''अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता, वसवो देवता, रुद्रा देवता, आदित्या देवता, मरुतो देवता, विश्वेदेवा देवता, बृहस्पतिर्देवता, इन्द्रो देवता, वरुणो देवता'' ( यजुः अ० १४, मं० २० )

अत्र कर्मकाण्डे देवताशब्देन वेदमन्त्राणां ग्रहणं; गायत्र्यादीनि छन्दांसि ह्यग्न्यादिदेवताख्यान्येव गृह्यन्ते, तेषां कर्मकाण्डादिविधेर्द्योतकत्वात् । यस्मिन्मन्त्रे चाग्निशब्दार्थप्रतिपादनं वर्तते, स एव मन्त्रोऽग्निदेवतो गृह्यते । एवमेव वातः, सूर्यः, चन्द्रमा, वसवो, रुद्रा आदित्या, मरुतो, विश्वेदेवा बृहस्पतिः, इन्द्रो, वरुणश्च, इत्येतच्छब्दयुक्ता मन्त्रा देवताशब्देन गृह्यन्ते, तेषामपि तत्तदर्थस्य द्योतकत्वात्, परमात्मेश्वरेण कृतसङ्केतत्वाच्च ।''.......

अत्र परिगणनं—गायत्र्यादिच्छन्दोऽन्विता मन्त्रा, ईश्वराज्ञा, यज्ञः, यज्ञाङ्गं, प्रजापतिः, परमेश्वरः, नराः, कामः, विद्वान्, अतिथिः, माता, पिता, आचार्यश्चेति कर्मकाण्डादीन् प्रत्येता देवताः सन्तिः; परन्तु मन्त्रेश्वरावेव याज्ञदैवते भवत इति निश्चयः'' इत्यादि च ऋग्वेदादिभाष्यभूमिकायां ( पृ० ५९-७१ ) श्रीमद्दयानन्दाचार्याः ।

''का पुनरियं देवता नाम ? एकं तावन्मतम्—या एता इतिहास-पुराणेषु अग्न्याद्याः संकीर्त्यन्ते नाकसदः, ता देवता इति । उच्यते, तासु देवतासु अहरादीनां, शार्दूलादीनां वा न संग्रहः; स्मर्यते च कालवाचिनां देवतात्वं, 'कालेभ्यो भवति; मासो देवता, सम्वत्सरो देवता' ; इति ।

''मत्स्य भगवान् ने मनुजी से कहा कि हे निष्पाप, पूर्व कल्प में धर्म, अर्थ, और काम के साधन का उपदेश करनेवाला, एक सौ करोड़ श्लोकों का एक ही पवित्र 'पुराण' था। जब

---

अपरं मतं—येषु देवताशब्दो मन्त्र-ब्राह्मणे श्रूयते, 'अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता', इत्येवमादिषु, तेऽत्र देवताशब्देनोच्यन्त इति। तत्राऽप्यहरादीनामनुपसंग्रह एव। किं च सामान्यवचनस्य शब्दस्य लौकिके व्यवहारेऽभावादर्थस्याप्रसिद्धिः स्यात्। तस्मात्सूक्तभाजो, हविर्भाजश्च, देवताः। काः सूक्तभाजः ?—

'इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया,

भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव' (ऋ० सं० १, ९४, १) इति।

हविर्भाजः—'आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशकपालम्', इति।

आह—यदि हविर्भाजो देवताः, कपालानामपि देवतात्वं प्राप्नोति, तान्यपि हविर्भाञ्जि। एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविषः, सूक्तस्याऽप्येवमेव; अत्र हि देवताशब्दः स्मर्यते, 'अग्नि-देवत्यं सूक्तम्, अग्निदेवत्यं हविरिति'; तथा अतिथिदेवत्यं पितृदेवत्यमिति। एवं मूर्त्तानाम्, अमूर्त्तानां, चेतनानाम्, अचेतनानां, श्रुत्या कंचिदर्थं प्रति तादर्थ्येन सङ्कल्पनीयानां देवतात्वं भविष्यति; सामान्यवचनं चोपपत्स्यते। किमतो यद्येवम् ? यस्या वाचकं शब्दमुद्दिश्य, स्मृत्वा वा 'हविस्त्यक्ष्यामि' इति सङ्कल्पः क्रियते, सा देवता भवति तत्र।...... यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते, सा देवता।...... नन्वेवं शब्द एव देवता प्राप्नोति; अत्रोच्यते, नैतदस्माभिः परिहर्त्तव्यं, न हीदमुच्यमानमस्मत्पक्षं बाधते'' इति मीमांसाशाबरभाष्ये ( १०, ४, १२, २३ )।

ऋगादिवेदेषु—द्यौः, वरुणः, मित्रः, सूर्यः, सविता, पूषा, विष्णुः, उषाः, अश्विनौ, इन्द्रः, त्रिता, अपांनपात् मातरिश्वा, रुद्रः, मरुतः, वायुः, पर्जन्यः, आपः, नद्यः, पृथिवी, अग्निः, सोमः, गुणदेवताः ( श्रद्धादयः ), स्त्रीदेवताः ( रात्रिप्रभृतयः ), गणदेवताः ( मरुद्गणप्रमुखाः ), अप्रधानदेवताः (ऋभुप्रभृतयः) अप्सरसः, गन्धर्वाः, ऋषयः, मृगदेवताः ( अश्वादयः पशवः ), ओषधि-वृक्षाऽरण्यदेवताः, यूपादिरूपदेवताश्चेत्यादयो देवाः श्रूयन्ते, त इमे विशिष्य प्रदर्शिता वैदिकसाहित्यचरित्रस्य चतुर्थाध्याये ( पृ० ७५–१३४ )।

विशेषतो देवतातत्त्वविज्ञानार्थम्—वेदानां संहिताग्रन्था, ब्राह्मणग्रन्थाश्च समाहितचेतसाऽन्तः प्रविश्य सम्यगालोचनीयाः; तत्राऽपि ऋक्संहितायां देवतावादो भूम्नाऽधिकृतो दृश्यते। एतद्व्यतिरिक्तान्यपि—पूर्वोत्तरमीमांसयोरुभयोरपि 'देवताऽधिकरणम्' ( पू० मी० अ० ९ पा० १ अधि० ४। उ० मी० अ० १ पा० ३ अधि० ८ ), निघण्टोः पञ्चमोऽध्यायः, निरुक्तस्य सम्पूर्णं दैवतकाण्डम् (उत्तरषट्कं अ० ७–१२ ), एवमादीनि शास्त्रस्थलानि मनोयोगेनाऽनुसन्धेयानि तज्जिज्ञासुभिः परीक्षकैः।

एतेषामार्षशास्त्राणां सम्यगनुसन्धानेन निःशङ्कमेतदभिधातुं शक्यते, यदुत ब्रह्मादि-स्तम्बपर्यन्तानां सर्वेषामेवपदार्थानां देवत्वमस्ति सच्छास्त्रसम्मतमिति।

श्रीमद्भगवद्गीतायां विभूतियोगे ( अ० १० ), विश्वरूपदर्शने ( अ० ११ ) च आब्रह्मस्तम्ब-पर्यन्तानामेव देवत्वं सूचितं; तदिदं सकृदनुवाचनेनाऽपि विज्ञातुं शक्यते। किं बहुना, गीतायां 'देव' शब्दो दानादिगुणवत्सर्वपदार्थविषयः, 'यज्ञ'शब्दश्च जड-चेतनवस्तुसहजधर्मरूपाभ्युदयिक-नैःश्रेयसिकनिखिल-कर्मवचन एव प्रायेण प्रयुक्तो दृश्यते; तथा हि—

''सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः,
अनेन प्रसविष्यध्वम्, एष वोऽस्त्विष्टकामधुक्।
देवान्भावयताऽनेन, ते देवा भावयन्तु वः,
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।

विभिन्न कालों मे सात्त्विकी, राजसी, और तामसी बुद्धियों से युक्त हो सकता है और तत्तत्कालों मे तत्तद्बुद्धियोग से बनाये गये तत्तत्पुराण भी, एककर्तृक होने पर भी, सात्त्विक, राजस, और तामस हो सकते हैं। ये सारी बातें मत्स्यपुराणं[१] मे स्पष्ट कर दी गई हैं। वहाँ (म० पु०

---

७५. "सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकास्तथा कल्पाश्चतुर्विधाः प्रोक्ता, ब्रह्मणो दिवसात्यये।
यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा, तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते।
अग्नेः, शिवस्य महात्म्यं तामसेषु प्रकीर्त्यते, राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः,
सङ्कीर्णेषु सरस्वत्याः, पितॄणां च निगद्यते, सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः,
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्" [ मात्स्ये अ० ५३ तथा अ० २९० ]

तदिह सङ्कीर्ण-तामसादिकल्पोक्तेषु पुराणेषु सात्त्विकबुद्धिमता ब्रह्मणा सात्त्विककल्पोक्तानां सात्त्विक-पुराणानामेव प्रामाण्यं, नेतरेषाम्, अयथावद्ग्राहि-विपरीतसर्वार्थग्राहिबुद्धिमता प्रोक्तत्वात्; उक्तं च स्वयमेव भगवता गीतायामष्टादशाऽध्याये सात्त्विकादिबुद्धिकार्यम्—

"प्रवृत्तिं च, निवृत्तिं च, कार्याकार्ये, भयाभये, बन्धं, मोक्षं च, या वेत्ति, बुद्धिः सा पार्थ, सात्त्विकी;
यया धर्ममधर्मं च कार्यं चाकार्यमेव च, अयथावत्प्रजानाति, बुद्धिः सा पार्थ, राजसी;
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ, तामसी" इति।

एवं पुराणानां तामसादिविभागप्रकरणे पाद्मोत्तरखण्डेऽपि ( अ० २६३ ) शिव-लिङ्गादिपुराणानां तामसत्वकथनात्, तामसेषु च अग्नि-शिवादितामसदेवतामाहात्म्यकथनस्य नियतत्वात्, तामसत्त्वेन, तामसबुद्धिमता ब्रह्मणा प्रोक्तत्वेन च तत्राधर्मस्यैव धर्मत्वेन निरूपणात्, विपरीतसर्वार्थकत्वाच्च, अप्रामाण्यम्। तथा च तत्रोक्ता ये धर्माः, ते अधर्मा इति मन्तव्यं; ये चार्थाः, ते सर्वे विपरीता एव ज्ञेयाः "अधर्मं धर्ममिति या," सर्वार्थान्विपरीतांश्च" इति तामसबुद्धिकार्यस्याऽभिहितत्वात्। सात्त्विकपुराणाविरुद्धांश एव राजस-तामसपुराणेषु प्रमाणत्वेन स्वीकरणीयः, सर्वथा विरुद्धांशस्तु सात्त्विकैर्हेय एव; क्वचित् सात्त्विकेष्वपि पुराणेषु सङ्कीर्णांशो हेयः, क्वचिच्च राजस-तामसपुराणेष्वपि सात्त्विकांशः परमप्रमाणत्वेन उपादेयः; सात्त्विप्रमेय-प्रतिपादकत्वात्। तामसप्रमेयप्रतिपादकत्वमेव हि तामसत्वं, यथोक्तं नारदपञ्चरात्रे पारमेश्वरसंहितायां दशमपटले सनकं प्रति शाण्डिल्येन—

"ब्रह्मरुद्रमुखानां तु विबुधानां तथैव च, मातॄणामपि, दुर्गायाः स्वातन्त्र्येण तु यत्र वै
मन्त्रध्यानं, प्रमाणं च, लक्षणं, स्थापनं तथा, निर्दिष्टं तामसं नाम मुनिवाक्यं तु विद्धि तत्" इति।

महाभारते मोक्षधर्मे च—

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः, सात्त्विकः स तु विज्ञेयः, स वै मोक्षार्थचिन्तकः",
इत्यादिभगवत्कटाक्षेण सत्त्वगुणमूलमोक्षचिन्तनमुक्त्वा—

"पश्यत्येनं जायमानं ब्रह्मा, रुद्रोऽथवा पुनः, रजसा, तमसा चाऽस्य मानसं समभिप्लुतम्"

इति ब्रह्म-रुद्र कटाक्षेण मनसो रजस्तमोमूलकालुष्यप्रापणोक्तेश्च ब्रह्म-रुद्रोत्कर्षप्रतिपादकपुराणानां राजसत्वं, तामसत्वं च उपपद्यते।

ननु सत्त्वस्यैवोत्कृष्टत्वं, न रजस्तमसोः, इत्यत्र किं विनिगमकम्? इति चेत्, न,—

"सत्त्वं रजस्तमश्चेति देवा-ऽसुरगुणान्विदुः, सत्त्वं देवगुणं विद्याद्, इतरावासुरौ गुणौ"

इति ( शां० अ० २१६ श्लो० १८ ) महाभारतोक्तप्रकारेण सत्त्वस्य दैवगुणत्वेनोत्कृष्टत्वाद्, इतरयोरासुरगुणत्वेन तदसंभवात्।

ननु दैवस्यैवोत्कृष्टत्वं, नाऽसुरस्य, इत्यत्रैव किं विनिगमकं, पुराणादिषु देवेभ्योऽसुराणामेव प्राबल्य-दर्शनाद्, इति चेत्, सत्यं, जनिकालीनभगवत्कटाक्षेण सत्त्वगुणवत्त्वाद्देवगुणसम्पत्त्या पुरुषो दैवीं सम्पदमभिजातो भवति, जनिकालीनब्रह्म-रुद्रकटाक्षेण रजस्तमोगुणवत्त्वादासुरगुणसम्पत्त्या पुरुष आसुरीं सम्पदमभिजातो भवति, तथा चोभयसम्पदोः कार्यं भगवतैव स्फुटतरं गीतम्—

अ० ५३ और अ० २९० में ) यह लिखा है कि सात्त्विक, राजस, तामस, और सङ्कीर्ण, ये चार प्रकार के 'कल्प' ( ब्रह्मा के दिन ) होते हैं, अतः ब्रह्मा जी अपने जिस कल्प ( दिन ) मे जो पुराण बनाते हैं, वह उसी के अनुसार 'सात्त्विक' आदि हो जाता है, क्योंकि ब्रह्मदेव भी तत्तत्कल्प मे, तत्तद्गुणमयी बुद्धि से युक्त हो कर, तत्तद्गुणप्रधान देव आदि के प्रतिपादक तत्तद्गुण विशिष्ट ( सात्त्विक आदि ) पुराण की ही रचना करते हैं।

'श्री-वैष्णव' सम्प्रदाय के ग्रन्थकारों ने मात्स्य-प्रभृतिपुराणवचनों के आधार पर सात्त्विक आदि पुराणों के प्रामाण्य और अप्रामाण्य की व्यवस्था एक प्रकार से अच्छी ही की है; परन्तु उनका सात्त्विकत्व आदि भी नियत नहीं है, जो पुराण किसी एक पुराण मे 'सात्त्विक' कहा गया है, वही दूसरे पुराण मे राजस वा तामस कह दिया गया है; इस बात का दिग्दर्शन, पूर्व उद्धृत ( ७२ और ७३ टिप्पणों मे ) पाद्म और भविष्य पुराण के वचनों को मिला कर देखने से हो जायगा। अतः वस्तुतः कौन पुराण सात्त्विक है, और कौन राजस, वा तामस, इस का निर्णय करना भी कठिन हो गया है। ज्ञात होता है, कि शैव-वैष्णवप्रभृति साम्प्रदायिकों ने एक दूसरे के पुराण की निन्दा करने के लिये ही अपने अपने पुराणों मे वैसे श्लोकों का प्रक्षेप किया है;[७६] क्योंकि कोई भी पुराण सम्पूर्णतः सात्त्विक, राजस वा तामस नहीं हो सकता, सभी पुराण त्रिगुण वा सङ्कीर्ण हो सकते हैं; हां, अवश्य ही वैशेष्य-न्याय से उन मे 'सात्त्विक' आदि व्यवहार हो सकता है। फिर भी त्रिगुण के अनुसार पुराणों के त्रिविध होने की बात सर्वथा निर्मूल वा सर्वशः प्रक्षिप्त ही नहीं है, क्योंकि सभी शास्त्रों के सात्त्विक आदि भेदों का सहेतुक उल्लेख, और तदनुसार उन की हेयता तथा उपादेयता का समुपदेश, आर्ष सच्छास्त्रों मे बहुतायत से पाया जाता है; उन सब को प्रक्षिप्त वा निर्मूल कह देना प्रामाणिक वा युक्तिसंगत नहीं होगा। प्रत्यक्ष दर्शन से भी मनुस्मृति, रामायण, महाभारत और भागवत ऐसे सद्ग्रन्थों मे प्रायः सात्त्विकता का और कौटलीय अर्थशास्त्र तथा वात्स्यायनीय काम शास्त्र जैसे ग्रन्थों मे अधिकतर राजसत्व और तामसत्व का भान सब को हो सकता है। यह तो प्राचीन ग्रन्थों की बात हुई, आधुनिक ग्रन्थों के तो नाम से ही उनके सत्त्वादि गुणों का पता सहज ही चल जाता है ( "यथा नाम, तथा गुणः" ); "खण्डनखखण्डखाद्य" और "दुर्जनमुखभङ्गचपेटिका" आदि

---

"दैवी सम्पद्विमोक्षाय, निबन्धायासुरी मता" इति पूर्वार्धेन; तथा—"मा शुचः सम्पदं दैवीमभिजातोऽसि भारत," इत्युत्तरार्धेन दैवीं सम्पदमभिजातस्य शोककरणमेव निषिद्धम्। तथा तत्रैव—

"प्रवृत्तिं च, निवृत्तिं, जना न विदुरासुराः ; न शौचं, नाऽपि चाचारो, न सत्यं तेषु विद्यते"

इत्यादिना तेषां लक्षणमुक्त्वा—

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ;
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि मामप्राप्यैव कौन्तेय, ततो यान्त्यधमां गतिम्"

इत्यासुरभावपर्यवसानस्य भगवतैव निन्दितत्वात्, नोत्कृष्टत्वमिति। अस्मिन्विषये श्रीभाष्य-श्रुतप्रकाशिका १, १, १, पृ० १४७; स्तोत्ररत्नभाष्यं श्लो० १५, पृ० ४५; यतीन्द्रमतदीपिका पृ० २९-३०; सुदर्शनसुरद्रुमः पृ० ५३; इत्यादयः श्री-वैष्णव-सम्प्रदायग्रन्था द्रष्टव्याः।

७६. "पुराणभेदेन मतभेदस्तु बहुशः प्रसिद्धः—वैष्णवपुराणेषु सात्त्विकत्वं, शैवपुराणेषु तामसत्वं, वैष्णवपुराणमतेन; शैवपुराणेषु सात्त्विकत्वं, वैष्णवपुराणेषु तामसत्वं—

'दश शैवपुराणानि-सात्त्विकानि विदुर्बुधाः ; तामसानि च चत्वारि वैष्णवानि प्रचक्षते'

इति स्कान्दे शैवपुराणमतेनेत्येवं प्रकारेणेति" [दे० भा० टी० उ०]

नाम ही स्वतः उन ग्रन्थों के तमोगुण को व्यक्त कर रहे हैं। विशेषतः ऐसे ग्रन्थों की भाषा[७७] से और उनके कर्त्ताओं की गर्वोक्तियों[७८] से यह बात अधिक स्पष्ट हो जाती है। आज काल संसार की विविध भाषाओं में प्रतिदिन जो दर्जनों ग्रन्थ प्रकाशित होते हैं, उनमे 'सद्ग्रन्थ' तो बहुत ही थोड़े और 'रजोग्रन्थ' तथा 'तमोग्रन्थ' ही अधिक होते हैं। वैयक्तिक वा वर्गगत (एकवर्गीय) स्वार्थ के प्रतिपादक राजशास्त्र और अर्थशास्त्र, दूसरे राष्ट्र को नीचा दिखाने की बुरी नीयत से प्रणीत 'इतिहास,' पशुवृत्ति के उत्तेजक कामशास्त्र वा कोकशास्त्र, और लोकरुचि को विगाड़ने वाले भ्रष्ट उपन्यास आदि अपनी घोर तामसिकता के स्वतः प्रमाण हैं। मनुष्यों को परस्पर लड़ा कर समाज मे अशान्ति फैलानेवाले 'धर्मशास्त्राभास भी इसी श्रेणी के माने जा सकते हैं। अतः शास्त्रीय प्रमाणों से, तथा प्रत्यक्ष दर्शन से भी यह मानना पड़ेगा कि प्राचीन और अर्वाचीन, सभी शास्त्र-पुराणादि वाङ्मय मे सात्त्विक आदि का भेद विद्यमान है। यह अनिवार्य भी है, क्योंकि यदि वाद, जल्प, और वितण्डा, के अनुसार ग्रन्थ की रचना हो, तो[७९] वाद प्रधान' ग्रन्थ

---

७७. "यां वै दृप्तो वदति, यामुन्मत्तः, सा वै राक्षसी वाक्" [ऐ० ब्रा० अ० ६ खं० ७]
"ऋपयो राक्षसीमाहुर्वाचमुन्मत्त-दृप्तयोः, सा योनिः सर्ववैराणां, सा हि लोकस्य निर्ऋतिः"
[ उ० रा० च० ५, ३० ]

"अवच्छेदका-ऽवच्छिन्न-व्यवच्छिन्ना-ऽसम्बद्धसम्बन्धसम्बद्धा'ऽन्याय'भाषाऽपीदानीन्तन'न्याय'भाषेति विदेह-वङ्गप्रसिद्धा; ननु का भाषा, वानरी वा, राक्षसी वा, यावनिकी वा ? इत्यप्यत्र स्याच्चिन्तनीयम्; अपौरुषेयवैदिकग्रन्थेषु, अतिप्राचीनसूत्र-स्मृति-न्याय-मीमांसा-वेदान्तादिषु, अनतिप्राचीनेतिहास-पुराण-तन्त्र-वैद्यक-ज्योतिष-सङ्गीत-काव्यादिषु वा क्वचिदपि तथाविधवाग्जालाच्छन्नोच्छन्नहेतुनिवेश-प्रवेशाऽप्रतीतेः"
[ ऐ० आलो० पृ० ८३ ]

७८. "शब्दार्थनिर्वचनखण्डनया नयन्तः, सर्वत्र निर्वचनभावमखर्वगर्वान्;
धीरा यथोक्तमपि कीरवदेतदुक्त्वा, लोकेषु दिग्विजयकौतुकमातनुध्वम्।

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया, प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन्खलः खेलतु;
श्रद्धाराऽऽद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादयत्वेतत्तर्करसोर्मिमज्जनसुखेष्वासञ्जनं सज्जनः।
ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्, यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवं,
यत्काव्यं मधुवर्षि, धर्षितपरास्तर्केषु यस्योक्तयः" तत्काव्याद्यतिवर्तते तदुदिता 'ताम्बूल'वाक्क्षुद्रता!
"न वयं कवयस्तु केवलं, न वयं केवलतन्त्रपारगाः, अपि तु प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः"
आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठाद्, आ रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः,
आ च प्राच्य-प्रतीच्यक्षितिधरयुगलाच्चन्द्र-सूर्याऽवतंसाद्, मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः"
"देवीं वाचमुपासते हि बहवः, सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः;
अब्धिर्लङ्घित एव वानरभटैः, किन्त्वस्य गम्भीरता मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः"
"अक्षोभ्यं क्षोभयामास विद्यारण्यो महामतिः; असिना 'तत्त्वमसि'ना पर-जीवप्रभेदिना
विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत्" इत्येवमनुसन्धेयाः कवीनामहमोक्तयः।

७९. "प्रमाण-तर्कसाधनोपालम्भः सिद्धान्ताऽविरुद्धः पञ्चाऽवयवोपपन्नः पक्षप्रतिपक्ष-परिग्रहो वादः" [ न्या० द० १, २, १ ]
"तत्र प्रमाण-तर्काभ्यां साधनाऽऽक्षेपसंयुता
वीतरागकथा 'वादः', तत्फलं तत्त्वनिर्णयः" [ ता० र० श्लो० ७७ ]
तत्त्वनिर्णयफलः तत्त्वबुभुत्सोः कथा वादः; "वादे वादे जायते तत्त्वबोधः"
"वादः प्रवदतामहम्" [ भ० गी० १०, ३२ ]

सात्त्विक, 'जल्पप्रधान' राजस, और 'वितण्डाप्रधान' तामस कहा जा सकता है। यदि पुरुषार्थों के अनुसार ग्रन्थविवेचन हो, तो मोक्षशास्त्र 'सात्त्विक', अर्थशास्त्र 'राजस', कामशास्त्र 'तामस', और धर्मशास्त्र सङ्कीर्ण, वा वह भी सात्त्विक ही कहा जा सकता है। यह वात भी वैशेष्य-वाद, वा गुणाऽधिक्य-न्याय से ही कही गई है; वस्तुतः सभी शास्त्र, जगत् के अन्य पदार्थों की तरह सामान्यतः त्रिगुणमय हैं। 'पुराण' ग्रन्थ, स्वभावतः सर्वगुणमय सर्वविषय के प्रतिपादक हैं, अतः उनमे सभी गुणों का सङ्क्रमण होना अनिवार्य है। इस लिये यह कहना असंभव है कि अमुक पुराण सम्पूर्णतः सात्त्विक, अमुक राजस, और अमुक तामस है। पुराणों तथा अन्यान्य शास्त्रों के भी सात्त्विकत्व आदि की व्यवस्था उन के मुख्य प्रतिपाद्य विषय—ज्ञान, कर्म, और भक्ति के अनुसार भी की जा सकती है, अर्थात् ज्ञानप्रधान वेदान्त आदि सात्त्विक, कर्मप्रधान मीमांसा आदि राजस, और 'भक्तिप्रधान' शास्त्र तामस कहे जा सकते हैं। वेदों मे ज्ञानकाण्ड, कर्मकाण्ड, और उपासनाकाण्ड ये तीनों भाग हैं, अतः वेद भी त्रिगुणमय हैं। ज्ञान 'सत्त्व'; कर्म वा क्रिया 'रजः'; सदिच्छात्मिका भक्ति वा उपासना 'तमः' गुणस्वरूप है। तदनुसार पुराण और उपपुराण आदि भी ज्ञानांश मे सात्त्विक, कर्मांश मे राजस, और उपासनांश मे तामस हैं। यहां यह जान लेना आवश्यक है कि कोई भी शास्त्र वा अन्य पदार्थ सात्त्विक (सत्त्वप्रधान) हो जाने से ही श्रेयस्कर और उपादेय, तथा तमःप्रधान होने से ही अश्रेयस्कर और हेय नहीं होता है; ज्ञान-विज्ञान सत्त्वस्वरूप है, पर उस के दुरुपयोग से संसार मे घोर अनर्थ और विनाशमय अनिष्ट प्रत्यक्ष ही देखा जाता है; श्रद्धा और भक्ति आदि, इच्छामयी होने के कारण तमःप्रधानात्मिका होती है, फिर भी उस से आत्मोद्धार हो जाता है। ब्रह्मा, विष्णु, और रुद्र, इन तीन देवों मे महादेव 'रुद्र' तमोगुणमय माने जाते हैं, पर उन्हीं का दूसरा नाम 'शिव' कल्याणस्वरूप, और 'शङ्कर' लोक का कल्याण करनेवाला, है। अतः हम तीनों गुणों को सम-योगक्षेमकारक, और उन के प्रयोग के अनुसार समान हेय वा उपादेय, मानते हैं। सुतरां तामस होने के कारण ही किसी पुराण को सर्वथा हेय नहीं मान सकते। पर, सब पुराणों के सभी वाक्यों को प्रमाणभूत मान लेना भी बड़ी जटिल समस्या का हेतु बन जाता है, क्योंकि असंभव और अस्वाभाविक प्रतीत होनेवाले पौराणिक रहस्यवाद, अत्यन्त मनोयोग से अनुसन्धान करने पर भी कुछ समझ मे नहीं आते; और पुराणों की परस्पर व्याहतियाँ विद्वानों को भी भ्रम मे डाल देती हैं। उन रहस्यवादों को निरे पौराणिक 'गप्प' कह देने का साहस करना भी अनुचित है, क्योंकि जो पुराण-कर्त्ता ऋषि वा महात्मा, महाभारत, रामायण, और भागवत ऐसे बृहत्कलेवर महाग्रन्थ बना कर उन पर अपना कर्तृत्वसूचक चिह्न भी नहीं छोड़ गये हैं, उनके विषय मे यह तो मानना ही पड़ेगा कि उनमे अपनी महामहिम अमर कृतियों के कर्त्ता के रूप मे प्रसिद्ध होनेमात्र की महत्त्वाकांक्षा भी नहीं थी, अन्य क्षुद्र स्वार्थों की वात तो दूर रहे। सुतरां उनके ग्रन्थ-प्रणयन का हेतु, प्राणियों

---

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः [ न्या० द० १, २, २ ]

"स च च्छलादिसम्पन्नो जल्पो, ऽस्य विजयः फलम्" [ ता० र० श्लो० ७८ ]

"उभयपक्षसाधन( स्थापना )वती विजिगीषुकथा" 'जल्पः' [न्या० सू० वृ० १, २, २]

"स प्रतिपक्षस्थापनाहीनो वितण्डा" [ न्या० द० १, २, ३ ]

"प्रतिपक्षस्थापनाहीना विजिगीषुकथा" 'वितण्डाः' [ तत्रत्या वृत्तिः ]

"स्वपक्षस्थापनाहीना कथा परपक्षदूषणमात्राऽवसाना" 'वितण्डा' [ न्या० वा० भा० १, १, १ ]

"जल्प एव वितण्डा स्यात् प्रतिपक्षत्वसाधनैः" [ ता० र० श्लो० ७९ ]

के प्रति विशुद्ध[८०] कारुण्यभाव ही था। जो महापुरुष लोकसेवा के कष्टमय कर्माग्नि मे अपने को हवन करके जला गये, और भस्मीभूत शरीर की राख को भी ऐसा बखेर गये कि उस का एक भी कण उन की स्मृति के लिये शेष नहीं रह गया; वे निरे गप्प लिखने बैठे थे, ऐसी कल्पना नितान्त असङ्गत है; अतः पौराणिक रहस्यवादों का भी अवश्य ही कुछ विशिष्ट अर्थ है, जिसे समझने का यत्न करना चाहिये। यहाँ यह शङ्का उठाई जा सकती है कि केवल लोककल्याण के लिये प्रवृत्त महात्माओं ने विकट रहस्यवाद की सृष्टि ही क्यों की? क्यों नहीं सरल रीति से सुबोध भाषा मे विवक्षित विषय को व्यक्त किया? इस का सहज समाधान यह है कि उस समय से अब तक शब्दों के अर्थ बहुत कुछ बदल गये हैं, विचारपद्धति और भाषा की परम्परा भी बदल गई है, इस लिये जो वाक्य उस समय सरल और सुबोध रहे होंगे, वे अब जटिल और दुर्बोध हो गये हैं। 'पुराण' काल की बातें जाने दीजिये, कौटलीय 'अर्थशास्त्र' ऐसे ग्रन्थों के भी बहुत से वाक्य और शब्द अब रहस्यवत् दुरूह हो गये हैं। इस के अतिरिक्त पुराणों मे 'सौर-जगत्' भर की बातें हैं, अतः उन का अपरोक्ष अनुभव हुए विना, हमारे लिये वे रहस्यमयी हैं। आधुनिक विज्ञान से बहुतेरे पौराणिक रहस्यवादों की यथार्थता पर प्रकाश पड़ रहा है। किन्तु बहुत दिनों से पुराणों के रहस्यवाद का यथाश्रुत अक्षरार्थ ही यहां प्रचलित हो गया है। इस से जिस अनर्थ का प्रचार हुआ है, वह हिन्दूसमाज के लिये पतनकारी सिद्ध हुआ है। इस लिये स्वामी दयानन्द सरस्वती ऐसे भारतीय आर्यसंस्कृति और आर्षशास्त्र के पुनरुद्धारक महात्माने भी पुराणों को 'अनार्ष' कह कर अप्रमाण माना, और उन का खण्डन तथा बहिष्कार किया[८१]। यह अनुमान

---

८० "तत्त्वेन यश्चिदचिदीश्वर-तत्स्वभाव-
भोगापवर्ग-तदुपायगतीरुदारः
सन्दर्शयन्निरमिमीत पुराणरत्नं,
तस्मै नमो मुनिवराय पराशराय" [ स्तोत्ररत्ने ४ ]

"प्रायेण देवमुनयः स्वविमुक्तिकामाः
( मौनं ) स्वार्थं चरन्ति विजने, न परार्थनिष्ठाः,
नैतान्विहाय कृपणान्विमुमुक्ष एको
नाऽन्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये" [ भा० ७, ९, ४४ ]

"प्रायशो मुनयो लोके स्वार्थैकान्तोद्यमा हि ते, द्वैपायनस्तु भगवान्सर्वभूतहिते रतः" [ भागवते ]

"यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धं
संसारिणां करुणयाऽऽह पुराणगुह्यं,
तं व्याससूनुमुपयामि गुरुं मुनीनाम्" [ भा० १, २, ३ ]

८१ "ब्राह्मणग्रन्थानामेव पुराणेतिहासादि नामाऽस्ति, न ब्रह्मवैवर्त्त-श्रीमद्भागवतादीनाम्" [ ऋ० भा० भू० पृ० ८२ श्रीदयानन्दस्वामिनः ]

नैतन्मतं स्वामिनो नवीनं, श्री शङ्कराचार्यादिभिः बहुपूर्वमेवास्य निरूपणात्, तथा हि—

'इतिहास' इति उर्वशी-पुरूरवसोः संवादादिः, 'उर्वशी हाप्सरा' इत्यादि ब्राह्मणमेव; 'पुराणम्'—'असद्वा इदमग्र आसीद्' इत्यादि" [ बृ० आ० उ० शां० भा० २, ४, १० ]

"ब्राह्मणाद्यवान्तरभेदानामेव इतिहासादीनां पृथगभिधानात्; 'देवाऽसुराः संयत्ता आसन्' इत्याद्य इतिहासाः; 'इदं वा अग्रे नैव किञ्चन आसीत्' इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गादिप्रतिपादकं वाक्यजातं पुराणम्"; इति ऋग्वेदभाष्यभूमिकायां ( पृ० ३७ ), ऐतरेयब्राह्मणभाष्योपक्रमे ( पृ० ४ ) च श्रीसायणाचार्यः।

करना अनुचित होगा कि 'स्वामी जी पुराणों की उपयोगिता और उपादेयता से अनभिज्ञ थे, अत एव उन्होंने वैसा किया;' क्योंकि उनके वेदभाष्यों और अन्याऽन्य निबन्ध ग्रन्थों के सकृद् अनुवाचन से ही उन की संस्कृतवाङ्मयविषया सर्वदर्शिनी प्रतिभा का स्पष्ट परिचय मिलता है। स्वामी जी ने इतिहास-पुराणों का भी पूरा अध्ययन और अनुसन्धान किया था, वह अच्छी तरह जानते थे कि, हमारे 'सौरजगत्' का 'पञ्चलक्षण' शाश्वतिक इतिहास, पुराणों से ही ज्ञात हो सकता है; विशेषतः भारतीय पुरातत्त्व का विज्ञापक मसाला पुराणों मे ही भरपूर है, वैदिक आर्य-संस्कृति के आरोह-अवरोह, विकास-संकोच का ज्ञान, पुराणों मे ही निहित है; आधुनिक विज्ञान से जिन विषयों का अन्वेषण और आविष्कार अब हो रहा है, उनकी सूचना पौराणिक रहस्यवादों मे पहले से ही की गई है, जिस से भारतीय आर्षदृष्टि की दूरदर्शिता का पता चलता है; और सब से बढ कर पुराणों की उपयोगिता तथा अपरिहार्य आवश्यकता इस लिये है कि, अगणित-शाखामय तथा जटिल रहस्यवादों से ओत-प्रोत विशाल वैदिक वाङ्मय का उपबृंहण और अर्थ-प्रकाश, इतिहास-पुराणों की सहायता से ही हो सकता है। इस के अतिरिक्त सभी दर्शन, आयुर्वेद, युद्धशास्त्र, राजशास्त्र, धर्मशास्त्र, अर्थशास्त्र, कामशास्त्र, मोक्षशास्त्र, और नीतिशास्त्र आदि के विषयों से इतिहास-पुराण इतने समृद्ध हैं, कि यदि तत्तद्विषय के पौराणिक वाक्यों का, प्रकरणविभागपूर्वक, पृथक् पृथक् संग्रह कर लिया जाय, तो उन उन विषयों के सद्ग्रन्थ उन के उपलभ्यमान मूल ग्रन्थों की अपेक्षा भी प्रायः अधिक अच्छे और सर्वाङ्गपूर्ण निकल आवेंगे।

इन बातों को भलीभाँति जानते हुए भी स्वामी दयानन्द ने पुराणों का खण्डन और बहिष्कार करना ही उस समय आवश्यक समझा। स्वामीजी की वैसी चेष्टा कोई नई बात नहीं थी, सदा से ही लोकहितैषी महापुरुष वैसे काम करने पर बाध्य होते आये हैं। "अति सर्वत्र वर्जयेत्"; जब अच्छे समझे जानेवाले भी, काम के अतिरेक से समाज का अनिष्ट होने लगता है, तब तत्कालीन किसी महात्मा को उसका अवरोध वा विरोध करना पड़ता है। सभी देशों के सभ्य मनुष्यसमाज मे, आचार-व्यवहारविषयक शास्त्रों द्वारा, 'मर्यादन' नियम-बन्धन देखा जाता है; स्यात् जिस समाज का कोई आदर्श शास्त्र न हो, वह 'सभ्य' माना ही नहीं जाता है। कुछ शास्त्रग्रन्थों को तो ऐसा महत्त्व प्राप्त है कि, संसार मे, सदियों से, करोड़ों आदमी उनके अनुयायी हैं; वेद, अविस्ता, त्रिपिटक, बाइबल, क़ुरान, आदि सौभाग्यवान् ग्रन्थ इसी श्रेणी के हैं। जब कालक्रम से ऐसे शास्त्रों की पूजा तथा मान्यता का अतिरेक होजाता है, तत्कालीन रूढिवादी वा प्रगतिविरोधी समाजपुरोहित उनका 'अनर्थ' करने लगते हैं, और उससे लोकाऽभ्युदय मे बाधा पड़ने लगती है, अपि तु क्षति उपस्थित हो जाती है, तब उसका प्रतीकार करना आवश्यक हो जाता है। ऐसे समयों मे तत्कालीन सूक्ष्मदर्शी महापुरुष, देश, काल, परिस्थिति, तथा प्रजा की प्रवृत्ति और आवश्यकता, को देखकर, प्राचीन शास्त्रों मे, और उसके द्वारा समाज के आचार, व्यवहार, और नीति-रीतियों मे भी, अपेक्षित परिवर्तन करके, उसे नव-जीवन प्रदान करते हैं। किन्तु ऐसा परि-वर्त्तन करना, प्राचीन शास्त्र का सर्वथा खण्डन करके संभव और सफल नहीं होता, अतः उसका

---

"ते ( अप्रमाणभूता ग्रन्थाः ) च...रुद्रयामलादयः तन्त्रग्रन्थाः, ब्रह्मवैवर्त्तादीनि पुराणानि च;... तेषु बह्वनृतभाषणेषु किञ्चित्सत्यमपि अग्राह्यं भवितुमर्हति, विषयुक्तान्नवत्" [ ऋग्वेदादिभाष्यभूमिकायां पृ० २९४–९५ ] एवं सत्यार्थप्रकाशेऽपि ( पृ० ४३ ) पुराणखण्डनं द्रष्टव्यम्।

समयोचित नये शब्दों और नये विचारों के द्वारा उपबृंहण, प्रतिसंस्करण[२], करके, अथवा उस पर नया 'भाष्य' करके, वा उसी के आधार पर नवीन निबन्ध बना करके, अथवा उस ( प्राचीन शास्त्र ) को प्रमाण मानते हुए किञ्चित् परिवर्त्तन के साथ स्वतन्त्र ग्रन्थ निर्माण करके, वह काम सम्पन्न और उद्देश्य पूरा किया जाता है। कृष्ण यजुर्वेद, सब उपवेद, ( विशेषतः आयुर्वेद ), धर्मशास्त्र, महाभारत, और पुराणों को वर्त्तमान रूप तथा बृहत्कलेवर, समय समय के प्रक्षेपण, उपबृंहण, वा प्रतिसंस्करण से ही प्राप्त हुआ है। यह बात उनके आपातिक पाठ से भी ज्ञात हो सकती है। आवश्यकता-प्रसूत सामयिक भाष्यों, निबन्धों, और स्वतन्त्र ग्रन्थों के विषय में उनका बहुसंख्यक अस्तित्व ही प्रमाण है।

'तालपत्र' के युग मे, जब मुद्रण का प्रचार नहीं था, प्रक्षेपण वा प्रतिसंस्करण का काम नैसर्गिक और अनिवार्य था। तालपत्र के किसी भी ग्रन्थ मे प्रक्षिप्त वाक्यों के कुछ नये पत्ते मिला देना, और प्रतिलिपियों द्वारा देश-देशान्तर मे उसका धीरे धीरे मूल ग्रन्थ के रूप मे ही प्रचार हो जाना, कठिन नहीं था। इस प्रकार के प्रक्षेप-संयोजन से महाभारत, महापुराणों, और धर्मशास्त्रों के कलेवर समधिकरूप से बढ़े हैं; यह बात उनके परस्पर विरुद्धार्थक प्रकरणों, विभिन्नकालीन रचनाशैलियों, और कतिपय अनार्ष भावों से, स्पष्ट प्रतीत होती है। एक एक पुराण मे परस्पर विरुद्ध सम्प्रदायवाद के नाना प्रकरण ऐसे ही प्रक्षेप के फल हैं। साम्प्रदायिक उपनिषदों, उपस्मृतियों और उपपुराणों का आविर्भाव तो प्रायः प्रक्षेप से ही हुआ प्रतीत होता है। अमुद्रण के युग मे, अपने सम्प्रदाय के अनुकूल भाव के 'उपपुराण' वा 'उपस्मृति' ग्रन्थ, तालपत्र पर लिख कर, किसी ऋषि वा व्यास के नामसे रख दिये गये; फिर प्रतिलिपि-परम्परा से उनका प्रचार देश मे हुआ; 'ऋषि' वा 'व्यास' के नाम से होने के कारण उनका विरोध करने का साहस साधारण जनको नहीं होता था। विरोध का प्रकार यही होता था कि, दूसरे सम्प्रदायवाला संस्कृतज्ञ, अपने पक्ष के समर्थक, वैसे ही कृत्रिम ग्रन्थों का, वैसे ही मिथ्या 'ऋषि' और 'व्यास' के नाम से, प्रचार करने लगता था।

अस्तु, यहाँ वक्तव्य यह है कि कृष्णयजुर्वेद से लेकर पुराणों तक मे, समय समय पर, नये वाक्यों और प्रकरणों के प्रक्षेप हुए, तथा स्वतन्त्र रूप से भी उनके कई ग्रन्थ लिखे गये, जिसके कारण प्रायः सभी पुराण, विरुद्धोक्तियों, अनपेक्षित पुनरुक्तियों, दुरुक्तियों, अतिशयोक्तियों, और अंशतः अनृतोक्तियों से, सङ्कीर्ण तथा इन्द्रजाल की तरह जटिल हो गये; फिर भी प्राचीन ऋषियों के नाम से उत्सृष्ट होने के कारण लोकप्रिय और श्रद्धेय बने रहे; और समग्र देश मे दुर्विदग्धता, पाषण्ड, अन्ध-श्रद्धा, वञ्चन, आदि के साधन हो गये। पुराणों का प्रत्येक अनुष्टुप् श्लोक परम प्रमाण माना जाने लगा; प्रधान पुराणों पर विभिन्न साम्प्रदायिकों ने अपनी अपनी टीकायें चलाईं, और उनके आधार पर 'आगमिक' धर्म का प्राबल्य तथा प्रचुर प्रचार हुआ। 'पुराण'भक्ति की 'अति' हो गई; उनके यथाश्रुत अक्षरार्थ मे ही लोगों का मूढ़ग्राह हो गया, और उसके दुष्परिणाम से 'वेद' और 'बुद्धि' दोनों को तिलाञ्जलि मिल गई। ऐसे समय मे स्वामी दयानन्द ने वही किया जो तात्कालिक कर्त्तव्य था; हिन्दू समाज की निम्नगा पौराणिक प्रवृत्ति को उधर से मोड़ कर, उपेक्षित और विस्मृतप्राय वेदों की ओर झुका देने के सदुद्देश्य

---

८२. विस्तारयति लेशोक्तं, संक्षिपत्यतिविस्तरं, संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्"
[ च० सं० सि० १२,७४ ]

से, उन्होंने पुराणों का बहिष्कार करना ही उस समय के लिये आवश्यक समझा। वैसा करते हुए स्वामी जी को यह दृढ़ विश्वास रहा होगा, कि उनके बहिष्कार से जो क्षति होगी, उसकी पूर्त्ति, पौराणिक रत्नों का पुनरुद्धार करके, भावी परुस् के विद्वान् अवश्य ही करेंगे। स्वामी जी की वह चेष्टा उस प्रकार की प्राचीन घटनाओं की अनुक्रियामात्र थी। अति प्राचीन काल मे वेदों की अक्षरपूजा प्रचलित हो गई थी, पर तत्कालीन प्रजा की आवश्यकताएँ कुछ नये परिवर्त्तन चाहती थीं। किन्तु स्वतन्त्ररूप से किया गया परिवर्त्तन, वेद-श्रद्धाजड़ जनता को मान्य नहीं होता; अतः यजुर्वेद की ही अनेक नई शाखायें बढ़ाई गईं, और उनके द्वारा नये विचारों का प्रचार करके, प्रजा का तात्कालिक श्रेयःसाधन किया गया। यजुर्वेद की चरकाध्वर्यु, तैत्तिरीया, और वाजसनेयी, इन तीन प्रधान शाखाओं मे पहली दो शाखायें, चरक (कठ और मैत्रायण आदि), तथा वैशम्पायन, प्रभृति ऋषियों द्वारा, नये रूप मे प्रवर्तित हुईं; अत एव उनमे उत्तरकालीन नवीन विचारों का समावेश बहुतायत से देखा जाता है। प्रायः इसी हेतु से, आचार्य वैशम्पायन और उनके शिष्य याज्ञवल्क्य मे वैमनस्य हुआ; और याज्ञवल्क्य ने इस नवीन अंश का 'वमन', बहिष्कार, किया, और पुनरपि प्राचीन शुद्ध (शुक्ल) यजुर्वेद की ओर, तात्कालिक लोगों की प्रवृत्ति कराई[८३]। अक्षरपूजक 'परबुद्धि' लोगों की स्वतन्त्र विचार-शक्ति

---

८३. आचार्य वैशम्पायन के द्वारा अध्यापित, तात्कालिक नवीन भावों का 'वमन' वा बहिष्कार करके, याज्ञवल्क्य ने जिस 'यजुः' का प्रणयन किया, उसे पुराणों मे 'अयातयाम' कहा है, जिसका अर्थ बिल्कुल 'ताज़ा' वा 'नूतन' होता है; अतः यह प्रश्न हो सकता है कि, जब याज्ञवल्क्य ने भी नवीन ग्रन्थ ही बनाया, तब उनके द्वारा प्राचीनतम शुद्ध (शुक्ल) यजुर्वेद की ओर तात्कालिक लोगों की प्रवृत्ति कराने की बात कैसे सङ्गत हुई ? इसका सरल उत्तर यह है कि प्राचीन भावों की ओर लोगों की मनोवृत्ति को झुकाने के लिये भी युगानुरूप नये शब्दों मे, नई पद्धति से, नूतन ग्रन्थ-प्रणयन की ही आवश्यकता होती है; पर वैसे नवीन ग्रन्थों में प्रचारणीय प्राचीनतम शास्त्रार्थ का ही निरूपण, व्याख्यानन, प्रमाणन, और विशदीकरण होता है, अत एव शतपथ ब्राह्मण मे और पुराणों मे भी यही लिखा है कि "याज्ञवल्क्य ने प्राचीनतम 'आदित्य' (सूर्य सम्बन्धी) यजुर्वेद को 'शुक्ल' शुद्ध, और 'अयातयाम' पुनः ताज़ा कर देने के लिये, उनका 'आख्यान' नये शब्दों मे प्रकथन किया, न कि अर्थतः नूतन 'वेद' बनाया।

"आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येन आख्यायन्ते" [बृ० आ० ५, ५, ३३]

"एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः 'अयातयाम'संज्ञानि, यानि वेत्ति न तद्गुरुः" [ वि० पु० ३, ५, २८ ]

"एवं स्तुतः स भगवान्वाजिरूपधरो हरिः यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः" [ भा० १२, ६, ७३ ]

आधुनिक उदाहरणों से यह विषय अधिक स्पष्टतः समझा जा सकता है, यथा स्वामी दयानन्द ने अर्वाकालिक अवैदिक भावों की ओर से लोकप्रवृत्ति को हटा कर, प्राचीनतम वैदिक भावों की ओर ले जाने के लिये कई नये ग्रन्थ बनाये; जो वस्तुतः नये शब्दों मे, प्राचीन भाव के ही विज्ञापक हैं। इधर वर्षों से श्रद्धेय श्री भगवान् दास जी भी ऐसा ही प्रयत्न कर रहे हैं। भारतीय हिन्दू-समाज मे 'अनार्ष' भावों के अतिरेक को और तज्जन्य सर्वतोमुख ह्रास को देख कर, पुनरपि श्रेयस्कर प्राचीनतम 'आर्ष' भावों की ओर भारतीय-लोक-प्रवृत्ति को खींच ले जाने के लिये, उन्हें कई नये ग्रन्थ लिखने पड़े हैं, जो अर्थतः तथा प्रायः शब्दतः भी, प्राचीन 'आर्ष' भाव के होने पर भी, अपनी विशिष्ट प्रक्रिया और रचनापद्धति के कारण 'अयातयाम' नूतन कहे जा सकते हैं।

को जगाने के लिये, भगवान् बुद्ध ने 'वेदों' का खण्डन करना भी आवश्यक समझा। 'ओल्ड टेस्टामेन्ट' के रूढ़िभक्तों को समयानुकूल श्रेयस्कर सन्मार्ग पर ले आने के लिये, महात्मा ईसा ने नया सुसमाचार ( 'न्यू टेस्टामेन्ट' ) सुनाया। इस प्रकार प्राचीनता की 'अति' हो जाने पर नवीनता की ओर, और नवीनता की 'अति' हो जाने पर प्राचीनता की ओर, साधारण जन-समाज की प्रवृत्ति और निवृत्ति कराने के लिये तत्कालीन आचार्यों को एक का खण्डन और दूसरे का मण्डन करना ही पड़ता है, जैसा कि स्वामी दयानन्द ने पुराणों के विषय में किया। इस समय श्रद्धेय श्री भगवान् दास जी भी ऐसा ही काम वर्षों से कर रहे हैं। 'शास्त्र' के नाम पर जो 'अनार्ष' भावों की जड़ लोगों की बुद्धि मे जम गई है उसे उखाड़ कर पुनः प्राचीनतम आर्ष भावों की ओर लोक-प्रवृत्ति करा देने के लिये ही उनका प्रयत्न है, फिर भी उनमे यह विशेषता है कि

---

'अयातयाम' शब्द का सतत ताज़ा रहनेवाला, कभी न बासी होने वाला, अर्थात् 'त्रैकालिक' नित्य 'वेद' सज्ज्ञान, यह अर्थ भी होता है।

यहाँ प्रसङ्गवशात् एक बात और भी स्पष्ट कर देनी है। श्री कृष्णद्वैपायन 'व्यास' के अन्यतम शिष्य आचार्य वैशम्पायन के अन्तेवासियों ने ही 'कृष्ण' और 'शुक्ल' दोनों प्रकार के यजुर्वेद की शाखाओं का विस्तार-प्रस्तार किया। विष्णुपुराण ( अं० ३ अ० ५ ) और भागवत ( स्कं० १२ अ० ६ ) के आधार पर यह कथा इस प्रकरण ( उपक्रम ) के पृ० २४-२५ पर लिख आये हैं कि आचार्य वैशम्पायन को भानजे की हत्या के पाप से 'चरक' श्वेतकुष्ठ ( श्वित्र ) नाम का सञ्चारी रोग हो गया था; उसकी निवृत्ति के लिये जिन वैशम्पायन-शिष्यों ने गुरु के आदेश से 'अध्वर' यज्ञ वा व्रत-अनुष्ठान किया, वे 'चरकाऽध्वर्यु' [ 'चरक' रोग की निवृत्ति के लिये, 'अध्वर' उस रोग के नाशक यज्ञ के, 'यु' प्रयोग करने वाले] कहलाये।

"अध्वर्युः—अध्वरयुः, अध्वरं युनक्ति, अध्वरस्य नेता, अध्वरं कामयते इति वा; अपि वा अधीयाने 'यु'रुपबन्धः; 'अध्वर' इति यज्ञनाम, ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः" [ निरु० १, ८, १ ]

आचार्य वैशम्पायन के उन 'चरकाऽध्वर्यु' द्वादश शिष्यों द्वारा प्रचारित कृष्णयजुःशाखाओं ( कठी, मैत्रायणी आदि ) का सामान्य नाम भी 'चरकाऽध्वर्यु' यही पड़ा। याज्ञवल्क्य के द्वारा 'वान्त' वा बहिष्कृत यजुर्मन्त्रों ( मन्तव्यों ) के रक्षक और प्रवर्त्तक वैशम्पायन-शिष्यों को 'तित्तिरि' और उनसे प्रवर्तित औखेया आदि कृष्ण यजुःशाखाओं को तैत्तिरीया कहते हैं। वैशम्पायन के ही स्वतन्त्र विचारवाले शिष्य याज्ञवल्क्य ने प्राचीनतम 'आदित्य' यजुर्वेद के आधार पर जिन सप्तदश शाखाओं का प्रचार अपने काण्व-माध्यन्दिन प्रभृति शिष्यों द्वारा कराया, वे सब 'शुक्ल यजुर्वेद' कहलाती हैं। उपर्युक्त बातों का समर्थन निम्न लिखित पुराण-वाक्यों से होता है।

"यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज, जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः।
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः 'चरकाध्वर्यव'स्ते तु चरणान्मुनिसत्तम।...
शाखाभेदास्तु तेषां वै दश, पञ्च ( सप्त ) च वाजिनाम्
काण्वाद्याः, सुमहाभाग, 'याज्ञवल्क्याः' प्रकीर्तिताः" [ वि० पु० अं० ३, अ० ५, ]

"वैशम्पायनशिष्या वै 'चरकाध्वर्यवो'ऽभवन्, ये चेरुर्ब्रह्महत्यांऽहःक्षपणं स्वगुरोर्व्रतम्।...
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः 'तैत्तिरीया' इति यजुःशाखा आसन्सुपेशलाः।...
यजुर्भिरकरोच्छाखा दश, पञ्च, स तैर्विभुः ( याज्ञवल्क्यः )
जगृहुर्वाजसन्यस्ताः काण्व-माध्यन्दिनादयः" [ भा० स्कं० १२ अ० ६ ]

उनकी विचारपद्धति खण्डनात्मक नहीं, अपि तु समन्वयात्मक है, अतः वह प्राचीन और नवीन 'अतियों' को मध्यम बौद्ध-स्थान पर मिला देने की चेष्टा मे हैं। पर स्वामी जी के उस उद्देश्य की पूर्ति हो चुकी है, अब समय आगया है कि पौराणिक गुण-रत्नों का भी पुनरुद्धार किया जाय। क्योंकि बहुत प्रक्षिप्त अनार्ष वाक्यों और अध्यायों का सम्मिश्रण होने पर भी, मूल 'आर्ष' पुराणरत्न भी उन्हीं 'आकरों' में निहित हैं, जिनकी उपयोगिता और श्रेयःसाधनता का उल्लेख पहले किया जा चुका है। बड़े हर्ष और आशा का विषय है कि श्रद्धेय श्री भगवान् दास जी ने विशेषतः पौराणिक रहस्यवाद के व्याख्यामार्ग को प्रशस्त करने का सफल प्रयत्न किया है। यद्यपि उन्होंने भी सभी पौराणिक रहस्यवादों का एकत्र संग्रह कर के उन पर कोई क्रमबद्ध भाष्य वा निबन्ध नहीं लिखा है, तथापि अपने हिन्दी 'समन्वय' और 'दर्शन का प्रयोजन', संस्कृत 'मानवधर्मसार', और अंग्रेजी के कई ग्रन्थों मे, यथाप्रसङ्ग, कतिपय पौराणिक रूपकों का बुद्धिग्राह्य रहस्य बतला कर, इस विषय की एक विचार-पद्धति प्रस्तुत कर दी है, और उस पर विद्वानों का ध्यान आकृष्ट कर दिया है। अब इस शैली की ओर आर्यसमाज के विद्वान् भी ध्यान देने लगे हैं, कि जैसे वेद के वाक्यों का विशेषरीतियों से अर्थ लगाना आवश्यक है, वैसे पुराणेतिहास की कथाओं का भी। वैदिक, पौराणिक, और ऐतिहासिक ( महाभारत, रामायण के ) सभी रूपकों का एकत्र सङ्कलन कर के उन के परस्पर के सम्वाद-विसम्वाद से, और आधुनिक विज्ञान की सहायता से, रहस्यार्थ का निश्चय कर के, उन पर एक क्रमबद्ध भाष्य लिखने की आवश्यकता है। इस से भी बड़ी आवश्यकता है, पुराण-उपपुराणों के एक बृहद्-ग्रन्थरूप मे प्रतिसंस्करण की। अति प्राचीन काल मे एक ही पुराण था ( पुराणमेकमेवासीत् ); यह बात टि० ६६ मे उद्धृत वाक्यों पर विचार करने से स्पष्ट प्रतीत होगी। यदि सभी पुराण-उपपुराणों मे से समानार्थक और समानाऽऽनुपूर्वीक वचनों को छाँट कर पृथक् एक ग्रन्थ कर दिया जाय, तो प्राचीनतम 'एक-पुराण' का उद्धार हो जायगा, और साथ ही निरर्थक पुनरुक्त, दुरुक्त, और परस्पर व्याहत श्लोकों के छंट जाने से, तथा पुराणों के परस्पर संवाद-विसंवाद से अशुद्धपाठों का संशोधन हो जाने से, अधिकांश मे उन का अर्थ भी सरल और सुबोध हो जायगा। एवं अष्टादश पुराण और अष्टादश से भी अधिक उपपुराणों के बोझैल संग्रह से भी जिज्ञासु की जान बचेगी। हाँ, पुस्तकालयों मे उन सब का संग्रह भी रहना ही चाहिये।

ऐसा करने से पुराणों के प्रामाण्य और अप्रामाण्य की समस्या भी बहुत अंश मे स्वतः हल हो जायगी, क्योंकि अप्रामाण्य के प्रयोजक हेतु, अशुद्धि, व्याहति, और विसम्वाद आदि, दूर हो गये रहेंगे। पुराण आदि के कौन वाक्य प्रमाण हैं, और कौन अप्रमाण, इस बात का निर्णय, उनके स्थल, प्रसङ्ग, और वक्ता आदि के अनुसार भी करना चाहिये। यदि वक्ता युधिष्ठिर हैं, और "अश्वत्थामा हतः" ऐसा वाक्य नहीं बोलते हैं, तब वह प्रमाण है; विदुर आदि का कथन प्रमाणतर, और भीष्माचार्य का कथन प्रायः सर्वत्र प्रमाणतम है; और दुर्योधन, तथा भीम, आदि का वाक्य प्रायः अप्रमाण। पुराणों मे कोई कोई वाक्य, पूर्व पक्ष के रूप मे, या असत्पक्ष के उद्धरण-रूप मे भी, प्रदर्शित रहता है, और आगे उसका उत्तर दिया गया रहता है; केवल पूर्व पक्षवाले वाक्य को लेकर पुराणों को असदर्थ-प्रतिपादक कहना ठीक नहीं। इन सभी बातों पर विचार करके ही पुराणों के प्रामाण्य-अप्रामाण्य की व्यवस्था करनी चाहिये, और उनके रहस्यवादों के परमार्थ का अनुसन्धान होना ही चाहिये। यह सब परम उपयोगी, मानव धर्म और मानव समाज

का कल्याणकारी, कार्य, तभी सम्पन्न होगा, जब, वेद की आज्ञा—सं-गच्छध्वं, सं-वदध्वं, सं वो-मनांसि जानतां—का अनुसरण करनेवाले, स-हृदय, सुहृदय, विशेषज्ञ भी, सामान्यज्ञ भी, सौ दो सौ विद्वान्, एक सुश्रद्धित वृद्ध के निरीक्षण मे, एकाग्र होकर कार्य करें; जैसे पाश्चात्य देशों मे 'एन्साइक्लोपीडिया' ग्रन्थों के निर्माण के लिये करते हैं।

पुराणों के विषय में यहाँ कुछ विस्तृत चर्चा इस लिये कर दी गई है कि उनके सम्बन्ध मे बड़ा भ्रम फैल गया है, और कई प्रकार के मतभेद हो गये हैं।

## ( पुराणलक्षणम् )

"सर्गश्च, प्रतिसर्गश्च, वंशो, मन्वन्तराणि च, वंशाऽनुचरितं चैव, पुराणं पञ्चलक्षणम्*"
"एतद् उपपुराणानां लक्षणं च विदुर्बुधाः, महतां तु पुराणानां लक्षणं कथयामि ते।
सृष्टिश्चाऽपि,विसृष्टिश्च,स्थितिस्, तेषां च पालनं, कर्मणां वासना, वार्ता, मनूनां च क्रमेण च
वर्णनं, प्रलयानां च, मोक्षस्य च निरूपणम्, उत्कीर्त्तनं हरेर्, एवं देवानां च पृथक्पृथक्,
महापुराणं विज्ञेयमेकादशकलक्षणम्†"
"पुराणलक्षणं ब्रह्मन्, ब्रह्मर्षिभिर्निरूपितं शृणुष्व बुद्धिमाश्रित्य वेदशास्त्राऽनुसारतः।
सर्गोऽस्या,ऽथविसर्गश्च,वृत्ति-रक्षा-ऽन्तराणि च,वंशो, वंशाऽनुचरितं, संस्था, हेतुर्, अपाश्रयः,
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः; केचित्पञ्चविधं ब्रह्मन्, महद्-अल्पव्यवस्थया।
अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः भूत-मात्रेन्द्रियाऽर्थानां संभवः 'सर्ग' उच्यते।
पुरुषाऽनुगृहीतानामेतेषां वासनामयः 'विसर्गो'ऽयं समाहारो बीजाद्बीजं चराचरम्।
'वृत्ति'र्भूतानि भूतानां, चराणामचराणि च, कृता स्वेन; नृणां तत्र कामा,च्चोदनयाऽपि वा।
'रक्षा'ऽच्युताऽवतारेहा विश्वस्याऽनु युगे युगे तिर्यङ्मर्त्यर्षिदेवेषु, हन्यन्ते यैस्त्रयीद्विषः।
'मन्वन्तरं' मनु,र्देवा, मनु-पुत्राः, सुरेश्वरः, ऋषयो,ऽशाऽवताराश्च हरेः, षड्विधमुच्यते।
राज्ञां ब्रह्मप्रसूतानां 'वंशस्' त्रैकालिकोऽन्वयः; 'वंशाऽनुचरितं' तेषां वृत्तं, वंशधराश्च ये।
नैमित्तिकः,प्राकृतिको, नित्य,आत्यन्तिको लयः, 'संस्थे'तिकविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः।
'हेतु'र्जीवोऽस्य सर्गादेरविद्याकर्मकारकः, यं चाऽनुशयिनं प्राहुर्, अव्याकृतमुताऽपरे।
व्यतिरेका-ऽन्वयौ यस्य जाग्रत्-स्वप्न-सुषुप्तिषु मायामयेषु, तद्ब्रह्म जीववृत्तिषु-'अपाश्रयः';
पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु बीजादि-पञ्चतान्तासु ह्यवस्थासु युताऽयुतम्।
विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयं, योगेन वा, तदाऽऽत्मानं वेद,-ईहाया निवर्तते।
एवं लक्षणलक्ष्याणि पुराणानि पुराविदः मुनयोऽष्टादश प्राहुः; क्षुल्लकानि, महान्ति च,
ब्राह्मं, पाद्मं, वैष्णवं च, शैवं, लैङ्गं, सगारुडं, नारदीयं, भागवतम्, आग्नेयं, स्कान्दसंज्ञितं,
भविष्यं, ब्रह्मवैवर्त्तं, मार्कण्डेयं, सवामनं, वाराहं,मात्स्यं,कौर्मं च,ब्रह्माण्डाख्यमितित्रिषट्‡"
"अत्र सर्गो, विसर्गश्च, स्थानं, पोषण,-मूतयः; मन्वन्तर,-ईशाऽनुकथा, निरोधो, मुक्ति,-राश्रयः;
दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणं वर्णयन्ति महात्मानः श्रुतेना,-ऽर्थेन चा,ऽञ्जसा।
भूत-मात्रा-इन्द्रिय-धियां जन्म 'सर्ग' उदाहृतः ब्रह्मणो गुणवैषम्याद्; 'विसर्गः' पौरुषः स्मृतः;
'स्थिति' र्वैकुण्ठविजयः; 'पोषणं' तदनुग्रहः; 'मन्वन्तराणि' सद्धर्मः; 'ऊतयः' कर्मवासनाः;
अवताराऽनुचरितं हरे,श्चाऽस्याऽनुवर्तिनां पुंसाम्, 'ईशकथाः' प्रोक्ता नानाऽऽख्यानोपबृंहिताः;
'निरोधो'ऽस्याऽनुशयनमात्मनः सह शक्तिभिः; 'मुक्ति'र्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः;
आभासश्च, निरोधश्च, यतश्चाऽध्यवसीयते स 'आश्रयः' परं ब्रह्म परमात्मेति शब्द्यते।

---

* मात्स्ये ५३, ६५; एष श्लोको बहुषु पुराणोपपुराणेषु दृश्यते। † ब्र० वै० श्रीकृष्णजन्मखं-० अ० १३२; इमे श्लोकाः शब्दकल्पद्रुमादिषूद्धृताः सन्ति। ‡ भा० १२, ७, ८-२४।

योऽऽध्यात्मिकोऽयं पुरुषः, सोऽसावेवाऽधिदैविकः, यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः, एकमेकतराऽभावे यदा नोपलभामहे, त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः§"

सर्ग, प्रतिसर्ग, वंश, मन्वन्तर, और वंशाऽनुचरित, ये पांच, पुराणों के लक्षण हैं। यहां 'लक्षण' शब्द का अर्थ, इतर-व्यावर्त्तक धर्म वा गुणमात्र नहीं, किन्तु 'लक्षणीय' अर्थात् प्रतिपाद्य विषय है। सभी पुराणों मे सामान्यतः विश्व की सृष्टि, और प्रलय, इसके ऋषि पितर और राजवंश आदि का वर्णन, मनु, मनुपुत्र, और इन्द्र-प्रभृति लोकाऽऽधिकारिक पुरुषों, और उनके कार्यकालों का निरूपण, तथा उपर्युक्त वंशों की परम्परा और उनके प्रधान पुरुषों का चरित, लिखा रहता है। इन्हीं के प्रसङ्ग से अन्याऽन्य विषयों का विवरण भी रहता है।

कई पुराणों के मत से, उपर्युक्त पांच लक्षण वा प्रतिपाद्य विषय, उपपुराणों के हैं; पुराणों वा महापुराणों के 'लक्षण' दश वा ग्यारह हैं। श्रीमद्भागवत मे—सर्ग, विसर्ग, वृत्ति, रक्षा, अन्तर, वंश, वंशानुचरित, संस्था, हेतु, और अपाश्रय, ये दश लक्षण महापुराण के लिखे हैं। पुराणान्तर मे—सृष्टि, विसृष्टि, स्थिति, पालन, कर्मवासना, 'वार्ता', मन्वन्तर, प्रलय, मोक्ष, विष्णुचरित, और देवचरित, ये ग्यारह लक्षण बतलाये हैं। इन सब का विशेष विवरण संस्कृत भाष्य मे उद्धृत 'भागवत' के श्लोकों मे स्पष्ट है, विस्तार के भय से हिन्दी मे प्रत्येक का अनुवाद नहीं किया है।

### ( पुराणेतिहासनिर्माणप्रयोजनम् )

"स्त्री-शूद्र-द्विजबन्धूनां न वेदश्रवणं मतं, तेषामेव हितार्थाय पुराणानि कृतानि च❊"
"अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनं; वदन्ति केचिद्विद्वांसः स्त्रीणां शूद्रसमानताम्†"
"स्त्री-शूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा कर्मश्रेयसि मूढानां, श्रेय एवं भवेदिह, इति भारतमाख्यानं कृपया मुनिना कृतं; भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः, दृश्यते यत्र धर्मादि स्त्री-शूद्रादिभिरप्युत‡" इत्थमुक्तं पुराणादेर्निर्माणस्य प्रयोजनम्। यत्तु स्त्री-शूद्रयोरत्र 'न वेदश्रवणं मतं', तत्तु बुद्ध्याद्यसामर्थ्याद्, न त्वेवाऽनधिकारतः। वेदस्याऽनन्तशाखत्वा, त्स्वाध्यायनियमात्तथा, विप्रकीर्णार्थकत्वाच्च, नाऽल्पधीशक्तिसाध्यता। तस्मादाबाल-वृद्ध-स्त्री-शूद्रादीनामनुग्रहात् भारतं च, पुराणं च, सुबोधं मुनिना कृतम्। "तानेव वैदिकान्मन्त्रान्भारतादिनिवेशितान्, स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते¶" "बिभेति गहनाच्छास्त्राल्लोको व्याधिरिवौषधात्, भारतं शास्त्रसारोऽयमतः काव्यात्मना⁸⁴ कृतः;

---

§ भा० २, १०, १-९; विशेषतो भागवत-दशलक्षणी-विवरणमेतत् सर्वपुराणविषयं सामान्य-लक्षणं तु पूर्वमभिहितं वेदितव्यम्।

❊ दे० भा० १, ३, २१। † सू० सं० शि० मा० खं ७, २१। ‡ भा० स्कं० १ अ० ४।
¶ स्वप्नेश्वरीये शाण्डिल्यभक्तिसूत्रभाष्ये धृतम्।

८४. "काव्यं यशसे,ऽर्थकृते, व्यवहारविदे, शिवेतरक्षतये,
सद्यः परनिर्वृतये, कान्तासंमिततयोपदेशयुजे।..."

प्रभुसंमितशब्दप्रधानवेदादिशास्त्रेभ्यः, सुहृत्संमितार्थतात्पर्यवत्पुराणाद्, इतिहासेभ्यश्च, शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं—लोकोत्तरवर्णनानिपुणकविकर्म, तत् कान्तेव सरसतापादनेनाऽभिमुखीकृत्य 'रामादिवद्वर्तितव्यं, न रावणादिवद्' इत्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम्" [ काव्यप्रकाशे १,२ ]

यथा स्वादु च, पथ्यं च, दद्यात्स्वं भिषगौषधं , तथा रस्यं च, शास्त्रं च, भारतं कृतवान्मुनिः卐"
स्वकर्त्तव्यातिभारेण पर्याप्ताऽवसरः श्रुतेः गूढार्थश्रवणे न स्त्री-शूद्रयोरिति चेष्यते ।
लोकानां जननं, गर्भे धारणं, पोषणं, सुखं , स्त्रीषु सर्वं समायत्तं, तासां भारो महानतः ।
"सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः , पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ,
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै , यः सदारः, स विश्वास्य, स्तस्माद्दाराः परा गतिः*"
कर्त्तव्येषु यदा नारी "दासीवच्च, सखीव च , भार्यावद्, भगिनीवच्च, मातृवच्चोपतिष्ठति †"
तदा दीर्घाऽवकाशो न स्यात्तस्याः श्रुतिवेदने , तस्मादृजुपुराणादेस्तद्धियात्वमिहोच्यते ।
यस्याः पूर्णाऽवकाशः स्याद्, उच्चशिक्षामनोरथः, तस्या वेदाऽधिकारो न स्त्रियाः शास्त्रेण बाध्यते ।
"द्विजस्त्रीणामपि श्रौतज्ञानाऽभ्यासेऽधिकारिता‡" एवं वेदाऽधिकारोऽस्ति शूद्र-स्त्रीपुंसयोरपि ।
बुद्धिमान्द्याद्यसामर्थ्यात्तद्वेदाऽश्रवणं मतम् ; अन्यथा द्विजबन्धूनां[८५] तन्निषेधो न युज्यते ।
रक्षार्थं च समाजस्य कार्यभारो महत्तमः शूद्रे, तस्मान्न वेदानामभ्यासाय स कल्पते ।
'तथैव शूद्रा विहिताः सर्वधर्मप्रसाधकाः ; शूद्राश्च यदि ते न स्युः, कर्मकर्त्ता न विद्यते ,
त्रयः पूर्वे शूद्रमूलाः सर्वे कर्मकराः स्मृताः ; ब्राह्मणादिषु शुश्रूषा 'दासधर्म' इति स्मृतः ;
'वार्ता' च कारुकर्माणि, शिल्पं, नाट्यं तथैव च, एवमादि, तथाऽन्यच्च, 'शूद्रधर्म' इति स्मृतः§"
इत्थं सामाजिके कार्ये, जीविकार्थे च मुख्यतः व्यापृतत्वान्न शूद्रस्य वेदोच्चाऽध्ययने गतिः ।
शूद्रस्याऽपि तु यस्य स्याद्वेदपाठमनोरथः , प्रतिभा चाऽवकाशश्च, वेदं सोऽध्येतुमर्हति ।
अध्येतृत्वं तु किं तुच्छं, वेदकर्त्तृत्वमप्यथ श्रूयते कवषादीनां बहूनां शूद्रजन्मनाम् ।
"ऋषयो वै सरस्वत्यां सत्रमासत; ते कवषमैलूषं सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति । तं बहिर्धन्वोदवहन्, अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति । स बहिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीयं ( सूक्तम् ) अपश्यत्"¶
[ ऐ० ब्रा० अ० ८ खं० १ ]

---

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च, करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्"
"काव्यालापाश्च ये केचिद्, गीतकान्यखिलानि च, शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः" [ अ० पु० ]
"त्रिवर्गसाधनं नाट्यम्" [ वि० पु० ]
"काव्यालापांश्च वर्जयेत्" एवमादिप्रतिषेधवचनमसत्काव्यादिविषयम् । 卐. भ० पु० १, १, १८–१९ ।

८५. द्विजबन्धूनां वेदाऽश्रवणवचनं बुद्धिमान्द्यादिकारणादध्ययनाद्यशक्तिनिबन्धनं प्रायोवचनमेव, न त्वनधिकारनिमित्तं नित्यं विधानं; "कर्मश्रेयसि मूढानाम्" इति विशेषणेनाऽपि स्त्री-शूद्र-द्विजबन्धूनां वेद-श्रवणेऽसामर्थ्यस्यैव सूचनात् । अत एव स्त्रीशूद्राणामिव 'द्विजबन्धूनाम्' अधमद्विजानामपि त्रय्या अश्रुति-गोचरत्वाऽभिधानमुपपद्यते । "द्विजबन्धुः—द्विजो बन्धुर्यस्य, तद्गोत्रोत्पन्नत्वात्; स्वकार्य-रहितेषु जन्ममात्रोपजीविषु अधमेषु ब्राह्मण-क्षत्रिय-वैश्येषु" इति कोशादितो द्विजबन्धुष्वपि द्विजातित्वाङ्गी-कारात् तन्मूलस्य तेषां वेदाऽधिकारस्याऽक्षुण्णत्वेऽपि त्रय्यास्तदश्रुतिगोचरत्वकथनं बुद्धिमालिन्याद्यशक्तिकारणा-ऽभिप्रायमेव, न त्वधिकाराऽभावप्रयुक्तम् । एवमेव स्त्रीशूद्रविषयेऽपि बोद्धव्यम् ।

"प्रकृते तु यथाऽद्य प्रतीच्योदीच्यापाच्यभारतीयानां भारतसम्राट्सैनिकेषु लब्धप्रवेशत्वेऽपि प्राच्येषु वङ्गदेशीयानां योग्यबलाद्यभावत एव नास्ति प्रवेशाधिकारः, अस्ति तु व्यांश्फिरिंगीति वङ्गप्रसिद्धानां युरेशीयानाम् ; तथैव अमिश्रितार्यशोणितानामनार्याणां बुद्धिमान्द्यादितोऽनुपयुक्ततयैव अस्मच्छास्त्रेषु वेदग्रहणायो-पनयनविधेरभावोऽनुग्रह एव; विमिश्रार्यशोणितानां तु वेदव्याससदृशानां वेदग्रहणायोपनयनं केन वारितमिति स्फुटम्" [ ऐ० आलो० ]

---

* म० भा० आ० ७४, ४३-४४ । † वा० रा० २, १२, ६९ । ‡ सू० सं० शि० मा० खं० ७, २० § म० भा० अनु० २०८, ३३-३६ कुं० सं० ।

¶ तदपोनप्त्रीयं सूक्तं तु ऋक्संहितायां दशमे मण्डले त्रिंशं द्रष्टव्यम् ।

ऋग्वेदब्राह्मणस्यासीत्कर्त्ता　　यस्त्वैतरेयकः , दासीपुत्रः स विख्यातो ब्राह्मण्यं कर्मणा गतः ।

"एतद्ध स्म वै तद्विद्वानाह 'महिदास' ऐतरेयः"|| [ ऐ० आ० ८, १, २; छा० ब्रा० ५, १६, ७; छा० उ० ३, १६, ७ ]

वेदाऽधिकारे शूद्राणां वेदमन्त्रश्च दर्शितः स्वामिभिः श्रीदयानन्दैर्वेदेषु श्रमकृत्तमैः—

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः—

ब्रह्म-राजन्याभ्यां, शूद्राय चाऽर्याय च, स्वाय चाऽरणाय च" [ यजुः २६, २ ]

'शूद्र'–जानश्रुते रैक्वाद्वेदान्ताऽध्ययनं श्रुतं ; अज्ञातगोत्रजस्यैवं जाबालस्य च गौतमात् ।
वेदाद्धि संपदं शौद्रीमभिजातो निवार्यते मानवोऽनुपयुक्तत्वात् ; तस्यार्हन्ती न बाध्यते ।
शक्त्या-ऽऽर्हन्त्योः पृथक्त्वेन, शक्त्यभावान्निवारणं , नार्हन्तीं बाधते; तस्माद्वेदे सर्वाऽधिकारिता ।
मीमांसा-दर्शने, किञ्च ब्रह्मसूत्रे निरूपितं शूद्राऽधिकरणं, वेदान्न शूद्रस्य निवर्तकं ;
यज्ञे, वेदे च, शूद्रस्याऽप्यधिकारप्रदर्शने पूर्वापराऽनुसन्धानात्तत्तात्पर्यं प्रतीयते ।

पश्चादनार्षकालीनैर्भाष्यकारैः प्रकल्पितं शूद्रविद्यानिषेधार्थमपशूद्रेति[८६] संज्ञकम् ।
वस्तुतस्तूपशूद्रं तद् यज्ञे शूद्रप्रवर्त्तकं, वेदे शूद्राऽधिकारार्थं चाऽस्ति मीमांसयोः क्रमात् ।
अत्रोद्धृत्य न सम्पूर्णं तच्चाऽधिकरणद्वयं व्याख्यातुं शक्यते,ग्रन्थे विस्तराऽधिक्यकारणात्।
अग्रे सति प्रसङ्गे तु यथास्थानं यतिष्यते व्याकर्त्तुं सर्वशो धृत्वा स्फुटं; ग्रन्थान्तरेऽथवा ।
"शूद्रो यज्ञेऽनवक्लृप्तः" तत्सामर्थ्याद्यभावतः , न त्वेवाऽनधिकारित्वाद्, इत्यर्थोऽस्याः श्रुतेर्मतः।
समर्थोऽधिकृतो यज्ञे विद्वानर्थी च मानवः , तदभावेऽनवक्लृप्तोऽगत्या, नाऽनधिकारतः ;
असमर्थो-ऽ'नवक्लृप्तः' समानार्थमिदं द्वयं , "कृपू सामर्थ्ये" इत्यर्थाद्धातोः 'क्लृप्त' पदस्मृतेः ।
निषादपञ्चमा वर्णा वेदे 'पञ्चजनाः' श्रुताः , तेषां यज्ञप्रयोक्तृत्वं संभूय श्रुतिदर्शितम्—
[ पश्चात्काले निषादानां शूद्रेष्वेवोपसंग्रहात् चातुर्वर्ण्यं स्थिरं प्राह मनुर्—"नास्ति तु पञ्चमः" ]
"मित्राय पञ्च येमिरे जना अभिष्टिशवसे , स देवान्विश्वान्बिभर्ति *"

"अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची ,
आयुं न यं नमसा रातहव्या अञ्जन्ति सुप्रयसं पञ्चजनाः †"

"गिरा यदी सबन्धवः पञ्च व्राता अपस्यवः परिष्कृण्वन्ति धर्णसिम् ‡"

"विश्वस्य केतुर्भुवनस्य गर्भ आरोदसी अपृणाज्जायमानः
वीळुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च §"

---

|| "महिदासो नामतः, इतराया अपत्यम् ऐतरेय" इति तत्रत्यं शाङ्करभाष्यम् ।

८६ "श्रवणा-ऽध्ययना-ऽर्थप्रतिषेधात्, स्मृतेश्च" [ ब्र० सू० १, ३, ३८ ]

"श्रवणप्रतिषेधस्तावत्—अथाऽस्य वेदमुपशृण्वतः त्रपु-जतुभ्यां श्रोत्रप्रतिपूरणम्" (गौ० ध० सू० १२, ४ ), 'पद्यु ह वा एतत्–श्मशानं यत् शूद्रः, तस्मात् शूद्रसमीपे नाऽध्येतव्यम्' इति च; अत एवाऽध्ययनप्रतिषेधः,...भवति च 'वेदोच्चारणे जिह्वाच्छेदो, धारणे शरीरभेदः' ( गौ० १२, ४ ) इति; अत एव चार्थादर्थज्ञाना-ऽनुष्ठानयोः प्रतिषेधो भवति——'न शूद्राय मतिं दद्यात्' इति, 'द्विजातीनामध्ययनमिज्यादानम्' इति च । 'श्रावयेच्चतुरो वर्णान्' इति च इतिहासपुराणाऽधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्, वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्" [ शां० भा० ]

---

* ऋ० सं० ३, ५९, ८; "पञ्चजना निषादपञ्चमाश्चत्वारो वर्णाः...मित्राय 'येमिरे' हवींष्युयच्छन्ति" इति सायणः ।

† ऋ० सं० ६, ११, ४; "यं 'पञ्चजना' मनुष्या ऋत्विग्यजमानलक्षणा, 'रातहव्या' दत्तहविष्काः सन्तः, 'सुप्रयसम्'...अग्निं नमसा, 'अन्नेन' हविर्लक्षणेन, 'अञ्जन्ति' सिञ्चन्ति तर्पयन्ति" इति सायणः ।

‡ ऋ० सं० ९, १४, २; "सबन्धवः समानबन्धनाः पञ्च व्राताः पञ्चजना मनुष्या यजमाना, 'अपस्यवः' कर्मेच्छवो, 'धर्णसिं' धारकं सोमं, 'गिरा' स्तुत्या, 'परिष्कृण्वन्ति' अलङ्कुर्वन्ति" इति सायणः ।

§ ऋ० सं० १०, ४५, ६; "पञ्चजना मनुष्या, 'अग्निमयजन्त' यजन्ते" इति सायणः ।

"तदद्य वाचः प्रथमं मसीय येनासुराँ अभिदेवा असाम,
ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ।
पञ्चजना मम होत्रं जुषन्तां गोजाता उत ये यज्ञियासः¶"
"यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भैवनाः पञ्च मानवाः;
वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ||"

शूद्रादपि निहीनश्चेन्निषादः श्रुति-यज्ञभाक्, तर्हि शूद्राऽधिकारस्य प्रश्नो नैवावशिष्यते ।
रथकारस्य* याज्यत्वं, निषादस्थपतेः,† श्रुतं; न तज्जातीयमात्रे, तत्, सामर्थ्ये सति बाध्यते ।
क्वचिद्ग्रन्थेषु याऽनूक्ता शूद्रश्रोत्रे तु निर्दया तप्तत्रपु-जतुक्षेप्त्री स्मृतिः, सा नार्षवाङ्मयी ।
बभूवुर्ऋषयः पूर्वं सर्वभूतहितेरताः महाकारुणिकाः, तेषां शूद्रे न स्यान्नृशंसता ।
न वेदोच्चारणे जिह्वाच्छेदं शूद्रस्य, धारणे देहभेदं, विदध्याद्वा वागार्षी करुणामयी ।
साक्षाद्वेदविरुद्धत्वात् स्मृतिष्वेतादृशं वचः प्रक्षिप्तं स्यान्नृशंसैस्तु स्वार्थान्धैर्नर-शत्रुभिः ।
यत्समाजशरीरस्य पादः 'शूद्रः' पृथक्कृतः तन्मूर्ध्नि न कथं कुर्युः पादाघातं विधर्मिणः ।
स्वाङ्ग-'शूद्र'तिरस्कारादेव नूनं द्विजातिभिः प्रापितं भारतं वर्षं शोचनीयदशामिमाम् ।
"स्त्री-शूद्रौ न त्वधीयाताम्"एषा कैश्चित्प्रकल्पिता श्रुतिः, क्वापि हि वेदेषु तत्सत्त्वाऽनुपलम्भतः ।
प्रत्युत श्रुतिकर्तृत्वं शूद्रस्य प्रागुदाहृतं, स्त्रीदृष्टा वेदमन्त्राश्च जयन्त्यद्यापि सूक्तशः[८६] ।

---

¶ ऋ० सं० १०, ५३, ४-५; "यज्ञियासो यज्ञार्हाः, हे पञ्चजना...यूयं मम होत्रं, 'जुषध्वं' सेवध्वम्" इति सायणः । ||अर्थ० सं० ३, २१, ५; "पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः" इति सायणः ।

* "आधाने श्रूयते—'वर्षासु रथकार आदधीत' इति" [ मी० शा० भा० ६, १, १२, ४४ ]
"वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी, तस्यां करण्यां माहिष्यादुत्पन्नो 'रथकारः' तथा च याज्ञवल्क्यः—'माहिष्येण करण्यां तु रथकारः प्रजायते' इति" [ जै० न्या० मा० ६, १, १२ ]

† "वास्तु-( मयं )-मध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमयेद्, इत्येतामिष्टिं प्रकृत्योच्यते- 'एतया निषादस्थपतिं याजयेत्' इति" [ मी० शा० भा० ६, १, १३, ५१ ]

८७ ऋ० सं० म० ५ सू० २८ आत्रेयी (अत्रिवंशीया काचित्स्त्री) 'विश्ववारा' अस्य सूक्तस्य 'ऋषिः' । ऋ० सं० म० ८ सू० ९१ आत्रेयी ( अत्रिदुहिता ) 'अपाला' नाम काचिदेतस्य सूक्तस्य द्रष्ट्री निर्दिष्टा । ऋ० सं० म० १० सू० ४० एतस्य सूक्तस्य प्रणेत्री 'घोषा' इति प्रसिद्धा काक्षीवती ( कक्षीवतो दुहिता ) बभूव; अस्या विषये ऋ० सं० १, ११७, ७, इति ऋङ्मन्त्रो द्रष्टव्यः ।

स्त्रीणां वेदाधिकारं तु पूर्वमीमांसाशास्त्रमपि सम्यग् व्यवस्थापयति; तथा हि वैदिकक्रतुषु स्त्रिया अप्यधिकाराऽधिकरणे सिद्धान्तसूत्रम् ( ६, १, ३, ८ )—

"जातिं तु बादरायणो, ऽविशेषात्, तस्मात्स्त्र्यपि प्रतीयेत, जात्यर्थस्याविशिष्टत्वात्" इति ।

"तुशब्दः पक्षं व्यावर्तयति, नैतदस्ति पुंस एवाधिकार इति । जातिं तु भगवान् बादरायणोऽधिकृतां मन्यते स्म ।··· तस्मात् शब्देन ( क्रतुविधायकवेदवचनेन ) उभावपि स्त्रीपुंसौ अधिकृताविति गम्यते" इत्यादि तत्रत्यं शाबरभाष्यम् ।

एवं वैदिककर्मसु दम्पत्योः सहाधिकाराऽधिकरणेऽपि सिद्धान्तसूत्रम् ( ६, १, ४, १७ )—

"स्ववतोस्तु वचनादैककर्म्यं स्यात्" इति ।

"स्ववन्तावुभावपि दम्पती,...स्ववतोस्तु वचनादैककर्म्यं स्यात्, वचनात्तयोः सहक्रिया । एवं हि स्मरन्ति—
'धर्मे चार्थे च कामे च नातिचरितव्येति' । तथा—
'सह धर्मश्चरितव्यः, सहापत्यमुत्पादयितव्यम्' इति ।...

यत्तु 'शूद्राऽधिकारोऽस्ति पुराणश्रवणे, न तु तत्पाठेऽपीति', केषाञ्चिन्मतं; तच्चाज्ञकल्पितम्।
पुराणाऽध्यापनं तुच्छं, तत्कथावाचनं च किम्, ब्रह्मविद्याप्रवक्तृत्वं चाऽपि शूद्रस्य सुश्रुतम्।
"नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे*" इत्युक्त्वा कौशिकं व्याधस्तं वेदान्तमवेदयत्।
पुराणादिप्रवक्तृत्वं शूद्रस्यैवादितः श्रुतम्, ऋषीनध्यापयत्सूतः पुराणानि विलोमजः†।
"प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोमहर्षणः पुराणसंहितां तस्मै ददौ व्यासो महामतिः।
सुमति,श्चाग्निवर्चाश्च, मित्रायुः, शांसपायनः, अकृतव्रण सावर्णी,षट् शिष्यास्तस्य चाऽभवन्‡"
"एते आथर्वणाचार्याः; शृणु पौराणिकान्मुने, त्रय्यारुणिः, कश्यपश्च, सावर्णिर्, अकृतव्रणः,
शांसपायन-हारीतौ, षड्वै पौराणिका इमे अधीयन्त व्यासशिष्यात्संहितां मत्पितुर्मुखात्§"

---

"सं पत्नी पत्या सुकृतेन गच्छतां, यज्ञस्य धुर्या युक्तावभूताम्;
सं जानानौ विजहीतामरातीर्, दिवि ज्योतिरजरमारभेताम्"

इति दम्पत्योः फलं दर्शयति, तस्मादपि उभावधिकृताविति सिद्धम्" इत्येवमादि तत्रत्यं शाबरभाष्यं च द्रष्टव्यम्।

"अस्यैवाधिकरणस्यानुसारेण 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यत्रापि स्त्रिया अप्यधिकारः। अत एव—'प्रावृतां यज्ञोपवीतिनीमभ्युदानयञ्जपेत्' (२, १, १९), 'पश्चादग्नेः संवेष्टितं कटम्, एवंजातीयं वाऽन्यत्, पदा प्रवर्तयन्तीं वाचयेत्—प्र मे पतियानः पन्थाः कल्पताम्' (२, १, २०) इति गोभिलसूत्रम्; 'मनसा भर्तुरतिचारे त्रिरात्रं यावकं, क्षीरोदनं वा भुञ्जानाऽधः शयीत, ऊर्ध्वं त्रिरात्राद् अप्सु निमग्नायाः सावित्र्याऽष्टशतेन शिरोभिर्जुहुयात्, पूता भवति' (अ० २० ख० ५) इति वासिष्ठस्मृतिः; 'अथ य इच्छेत्—दुहिता मे पण्डिता जायेत, सर्वमायुरियात्, इति; तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै' इति बृहदारण्यकोपान्त्यश्रुतिश्च (६, ४, १७);

'कठी' (कठेन प्रोक्तमधीयाना) 'बह्वृची (बह्व्य ऋचोऽध्येतव्या यया, सेति) इत्यादिप्रयोगसाधकं 'शाखाऽध्येतृवाची च शब्दो जातिकार्यं लभते' इत्यर्थकं 'गोत्रं च चरणैः सह' इति वार्तिकं पा० ४, १, ६३ सूत्रोपर्युक्तं) च संगच्छते। किञ्च यजमानपत्न्या अध्ययनमन्तरेण ऋत्विगादिप्रोक्तार्थस्यज्ञानाभावात् तदुक्तकर्मणि प्रवृत्तिरेव न स्यात्। संस्कृताऽतिरिक्तभाषणं तु 'नाऽयज्ञियां वाचं वदेत्' इत्यादिना निषिद्धमेव। उपलभ्यते च प्राचीनेतिहासादिषु सीता-महाश्वेतादीनां सन्ध्योपासनमपि" इति जैमिनीयन्यायमालाविस्तरस्य ३०५ पृष्ठे टिप्पणम्।

"सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला"।
इति वाल्मीकीयरामायणे (२, २०, १५) कौसल्याया वेदमन्त्रवदग्निहोत्रं स्पष्टमेवाऽभिहितं दृश्यते।

"पत्युर्नो यज्ञसंयोगे" (४, १, ३३) इति पाणिनीयसूत्रेणाऽपि स्त्रीणां वैदिककर्मसम्बन्धः, तन्नान्तरीयकविद्याऽधिकारश्च सूचितः।

"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते, अध्यापनं च वेदानां, सावित्रीवचनं तथा"

इति यमवचने 'पुराकल्प'शब्दो न कालवचनः, 'इष्यते' इति सदावर्त्तमानबोधनात्; तस्मात् 'पुराकल्पेषु' प्राचीनकल्पग्रन्थेषु, नारीणां मौञ्जीबन्धनादिकम् 'इष्यते' पुरातनकल्पकारमहर्षीणामिष्टमस्तीति व्याख्येयम्।

* म० भा० वन० २१०, १५।

† "अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्याऽपि विलोमजाताः,
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः" [ भा० १, १८, १८ ]
इति सूतेन स्वविलोमजत्वं स्वयमेवाऽभिहितं द्रष्टव्यम्।

‡ वि० पु० ३, ६, १६-१७। § भा० १२, ७, ४-६।

श्रुतौ दृष्टं यथा कार्यं, स्मृतौ तत्तादृशं यदि , उक्ताऽनुवादिनी सा तु,पारिव्राज्यं यथा गृहात् ।†"

पुराण और उपपुराण की तरह धर्मशास्त्र के भी 'स्मृति' और 'उपस्मृति' ये दो भेद हैं; इन के अतिरिक्त धर्मसूत्र-प्रस्थान हैं । धर्मसूत्रों का निरूपण पहले ( पृ० ३१-३३ पर ) हो चुका है; यहां 'स्मृति' और उपस्मृति का दिग्दर्शन कराया गया है । इन के अन्यप्रकार के भी कई भेद हैं, जिनका संक्षिप्त परिचय संस्कृत भाष्य मे दिया गया है; स्पष्टार्थक होने के कारण हिन्दी में विस्तार करना अनावश्यक है ।

## ( उपवेदाः )

आयुर्वेदो, धनुर्वेदो, गान्धर्वं,श्चार्थशासनं शिल्पं वे,ति तु चत्वारः 'उपवेदाः' प्रकीर्तिताः* ।
वेदैरुपमिता ह्येते नृणां श्रेयोऽनुशासने, तस्मादेवोपवेदाः स्युस्तत्सादृश्येन भूयसा ।
वस्तुतो लोकयात्रायां वेदेभ्योऽपि विशेषतः योगक्षेमकरत्वेन पुरुषार्थोपयोगिनः ।

---

† भ० पु० ब्रा० प० १८१, २३-३२ ।

* वि० पु० ३, ६, २९; म० भा० शां० १२२, ३२ कुं० सं०; भागवते ( ३, १२, ३८ ) तु 'अर्थशास्त्र' मित्यस्य स्थाने 'स्थापत्यं' चतुर्थ उपवेद उक्तः, अन्यत्रत्यं समानम् ।

"तत्र वेदानामुपवेदाश्चत्वारो भवन्ति—ऋग्वेदस्य 'आयुर्वेद' उपवेदो, यजुर्वेदस्य 'धनुर्वेद' उपवेदः, सामवेदस्य 'गान्धर्ववेदः', अथर्ववेदस्य 'अर्थशास्त्रं' च, इत्याह भगवान् व्यासः, स्कन्दो वा" [ च० व्यू० कं० ४ ]

"तत्र वेदानां चत्वार उपवेदा भवन्ति, यथा ऋग्वेदस्य उपवेद 'आयुर्वेदः' चिकित्साशास्त्रं; यजुर्वेदस्य उपवेदो 'धनुर्वेदः' युद्धशास्त्रं; सामवेदस्य उपवेदो 'गान्धर्ववेदः' सङ्गीतशास्त्रम्; अथर्ववेदस्य उपवेदः 'अर्थशास्त्रं, नीतिशास्त्रं, शस्त्रशास्त्रं, विश्वकर्मादिप्रणीतशिल्पशास्त्रम्; इति भगवान्वेदव्यासः, स्कन्दः कुमारो वा आह" [ च० व्यू० भा० कं० ४ पृ० ५१ ]

"अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः; तत्र आयुर्वेदस्याष्टौ स्थानानि भवन्ति—सूत्रं, शारीरम्, ऐन्द्रियं, चिकित्सा, निदानं, विमानं, (वि)कल्पः, सिद्धिश्चेति । ब्रह्म-प्रजापति-अश्वि-धन्वन्तरि-इन्द्र-भरद्वाजा-ऽऽत्रेया-ऽग्निवेश्यादिभिरुपदिष्ट,श्चरकेण संक्षिप्तः । तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम् ; एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः । कामशास्त्रमपि आयुर्वेदान्तर्गतमेव, तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राऽभिधानात् । तत्र वात्स्यायनेन पञ्चाऽध्यायात्मकं कामशास्त्रं प्रणीतं; तस्य च विषयवैराग्यमेव प्रयोजनं, शास्त्रोद्दीपितमार्गेणाऽपि विषयभोगे दुःखमात्रपर्यवसानात् । चिकित्साशास्त्रस्य रोग-तत्साधन-रोगनिवृत्ति-तत्साधनज्ञानं प्रयोजनम् ।

एवं 'धनुर्वेदः' पादचतुष्टयात्मको विश्वामित्रप्रणीतः; तत्र प्रथमो दीक्षापादः, द्वितीयः संग्रहपादः, तृतीयः सिद्धिपादः, चतुर्थः प्रयोगपादः । तत्र प्रथमे पादे धनुर्लक्षणम् , अधिकारिनिरूपणं च कृतम् । अत्र 'धनुः' शब्दश्चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते । तच्चतुर्विधं—मुक्तम्, अमुक्तं, मुक्ताऽमुक्तं, यन्त्रमुक्तम्; 'मुक्तं' चक्रादि, 'अमुक्तं' खड्गादि, 'मुक्ताऽमुक्तं' शल्यावान्तरभेदादि, 'यन्त्रमुक्तं' शरादि । तत्र 'मुक्तम्' अस्त्रमुच्यते, 'अमुक्तं' शस्त्रम् इत्युच्यते । तदपि ब्राह्म-वैष्णव-पाशुपत-प्राजापत्या-ऽऽग्नेयादिभेदादनेकविधम् । एवं साऽधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां, तदनुयायिनां च, ते सर्वे चतुर्विधा—पदाति-रथ-गज-तुरगारूढाः । दीक्षाऽभिषेक-शकुन-मङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम् । सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे । गुरुसम्प्रदायसिद्धानां शस्त्रविशेषाणां पुनः पुनरभ्यासो, मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे । एवं देवतार्चना-ऽभ्यासादिभिः सिद्धानां मंत्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः । क्षत्रियाणां स्वधर्माचरणं युद्धं, दुष्टस्य दण्डः,

## ( आयुर्वेदः )

प्रत्यक्षमायुषो योगक्षेमः सर्वत्र दृश्यते आयुर्वेदेन; शास्त्रेऽपि प्रोक्ता तस्योपकारिता।
"धर्मा-ऽर्थ-काम-मोक्षाणामारोग्यं मूलमुत्तमं, रोगास्तस्याऽपहर्त्तारः, श्रेयसो, जीवितस्य च।
हिता-ऽहितं सुखं दुःखम् आयुस्, तस्य हिता-ऽहितं, मानं च, तच्च, यत्रोक्तम् 'आयुर्वेदः' स उच्यते।
शरीरेन्द्रियसत्त्वात्मसंयोगो, धारि, जीवितं, नित्यगश्चा-ऽनुबन्धश्च, पर्यायैरायुरुच्यते।
तस्यायुषः पुण्यतमो वेदो वेदविदां मतः वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितम्।
सत्त्वमात्मा शरीरं च त्रयमेतत्त्रिदण्डवत् 'लोकः', तिष्ठति संयोगात्; तत्र सर्वं प्रतिष्ठितम्;
स पुमांश्चेतनं तच्च, तच्चाऽधिकरणं स्मृतं वेदस्यास्य, तदर्थं हि वेदोऽयं संप्रकाशितः†"

"तत्र चेत्प्रष्टारः स्युः—चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्ति आयुर्वेद-विदः, किमायुः, कस्मादायुर्वेदः?...

...तत्र भिषजा पृष्टेनैवं चतुर्णामृक्सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या; वेदो हि आथर्वणः स्वस्त्ययन-बलि-मङ्गलहोम-नियम-प्रायश्चित्त-उपवास-मन्त्रादिपरिग्रहाच्चिकित्सां प्राह, चिकित्सा चायुषो हितायोपदिश्यते। वेदं चोपदिश्य आयुर्वाच्यं; तत्राऽऽयुः, चेतनाऽनुवृत्तिः, जीवितम्, अनुबन्धो, धारि च, इत्येकोऽर्थः। तत्र आयुर्वेदयतीति 'आयुर्वेदः'; कथमिति चेत्, उच्यते—स्वलक्षणतः, सुखाऽसुखतः, हिताऽहिततः, प्रमाणाऽप्रमाणतश्च; यतश्चायुष्याऽनायुष्याणि च द्रव्य-गुण-कर्माणि वेदयति, अतोऽप्यायुर्वेदः।... प्रयोजनं चाऽस्य-स्वस्थस्य स्वास्थ्यरक्षणम्, आतुरस्य विकारप्रशमनं च" [च० सं० सू० अ० ३०]

"इह खलु आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य;‡... आयुर्वेदप्रयोजनं—व्याध्युपसृष्टानां व्याधिपरिमोक्षः, स्वस्थस्य रक्षणं च। आयुरस्मिन्विद्यते, अनेन वा आयुर्विन्दतीति आयुर्वेदः" 卐

प्राणदानं मनुष्येभ्यः सर्वदानाद्विशिष्यते, आयुर्वेदफलं तस्मादिहा-ऽमुत्र च मङ्गलम्।
"आरोग्यदानात्परमं न दानं विद्यते क्वचित्, अतो देयो रुजार्त्तानामारोग्यं भाग्यवृद्धये"
"धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः, अतस्त्वारोग्यदानेन नरो भवति सर्वदः"§
"ब्रह्म-क्षत्रिय-विट्-शूद्रान्रोगार्त्तान्परिपाल्य च यत्पुण्यं महदाप्नोति, न तत्सर्वैर्महामखैः;
तस्माद्भोगाऽपवर्गार्थं रोगार्त्तं समुपाचरेत्। योऽनुगृहीतमात्मानं मन्यमानो दिने दिने
उपसर्पेत रोगार्त्तां, स्तीर्णस्तेन भवार्णवः" [ स्कन्दपुराणे ]

---

चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम्। एवं च ब्रह्म-प्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम्।

एवं गान्धर्ववेद'-शास्त्रं भगवता भरतेन प्रणीतं; गीतवाद्य-नृत्यभेदेन बहुविधोऽर्थः। देवताऽऽराधन-निर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम्।

एवमर्थशास्त्रं च बहुविधं—नीतिशास्त्रम्, अश्वशास्त्रं, शिल्पशास्त्रं, सूपकारशास्त्रं, चतुःषष्टिकलाशास्त्रं, चेति; नानामुनिभिः प्रणीतं तत्सर्वम्। अस्य च सर्वस्य लौकिकवत् प्रयोजनभेदो द्रष्टव्यः," [प्रस्थान-भेदे पृ० ८-९]

" 'आयुर्वेदो' वैद्यकशास्त्रं, 'धनुर्वेदः' शस्त्रास्त्रराजविद्या, 'गान्धर्ववेदो' गानविद्या, 'अर्थवेदश्च' शिल्पशास्त्रं, चत्वार उपवेदाः। तत्र चरक-सुश्रुत-निघण्ट्वादय आयुर्वेदे ग्राह्याः। धनुर्वेदस्य ग्रन्थाः प्रायेण लुप्ताः सन्ति, परन्तु तस्य सर्वविद्याक्रियाऽवयवैः सिद्धत्वादिदानीमपि साधयितुमर्हाः सन्ति; अङ्गिरःप्रभृतिभिर्निर्मिता धनुर्वेदग्रन्था बहवः आसन्निति। गान्धर्ववेदश्च सामगानविद्यादिसिद्धः। अर्थवेदश्च विश्वकर्म-त्वष्टृ-मयकृतश्च-तत्संहिताख्यो ग्राह्यः।" [ ऋग्वेदादिभाष्यभूमिकायां पृ० २९१ ]

† च० सं० शा० १, अ० १। ‡ सर्वत्रैव प्रायेणायुर्वेदग्रन्थेषु अथर्ववेदस्यैवोपवेद आयुर्वेद उक्तः, चरणव्यूहे तु ऋग्वेदस्येति। 卐 सु० सं० सू० अ० १। § नन्दि-पुराणे।

"कचिद्धर्मः, कचिन्मैत्री, कचिदर्थः, कचिद्यशः, कर्माऽभ्यासः कचिच्चेति चिकित्सा नास्ति निष्फला"

"सनातनत्वाद्वेदानाम्, अक्षरत्वात्तथैव च, तथा दृष्टफलत्वाच्च, हितत्वादपि देहिनाम्, वाक्समूहार्थविस्तारात्, पूजितत्वाच्च देहिभिः, चिकित्सितात्पुण्यतमं न किञ्चिदपि शुश्रुम"¶

## ( धनुर्वेदः )

'धनुर्'युद्धाऽस्त्र-शस्त्राणां सर्वेषामुपलक्षणं, तद्वेदयति यः सम्यग्, धनुर्वेदः स उच्यते।
सर्वं युद्धकलाशास्त्रं, दण्डनीत्यादिकं तथा, अत्रैवान्तर्भवेद्वेदे लोकरक्षाप्रयोजने।
बाह्याक्रमणसंरोधाद्, अन्तर्दुष्टविनिग्रहात्, योगक्षेमः समाजस्य धनुर्वेदेन सिध्यति।
तस्मात् स्व-पराराष्ट्राणां दुष्टनिग्रहकर्मसु दण्डप्रयोगविज्ञानं धनुर्वेदादधीयते।
"परित्राणाय साधूनां, विनाशाय च दुष्कृताम्§" "दण्डो दमयतां+"(श्रीकृष्णः)प्राह धनुर्वेदप्रयोजनम्
धनुर्वेदाऽपरं नाम‖ "युद्धशास्त्र"मिति स्मृतं, धर्मयुद्धेन वीराणां योगिनामिव सद्गतिः—
"द्वावेव पुरुषौ ज्ञातौ सूर्यमण्डलभेदिनौ, योगी योगसमारूढः शूरश्च समरे हतः।
अतिस्विष्टमधीतानां, लोकानतितपस्विनाम्, अनाशकाऽग्न्योर्विशतां, शूरा यान्ति परां गतिम्;
एवमेवात्मनस्त्यागान्नाऽन्यं धर्मं विदुर्जनाः; तेभ्यो नमश्च, भद्रं च, ये शरीराणि जुह्वते
ब्रह्मद्विषो नियच्छंतस्, तेषां नोऽस्तु सलोकता। ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत्;
यथाऽश्वमेधाऽवभृथे स्नाताः पूता भवन्त्युत, दुष्कृतस्य प्रणाशेन तथा शस्त्रहता रणे✻"

"विद्याद्राजा सर्वभूताऽनुकम्पी देहत्यागं चाहवे धर्ममग्र्यं
त्यागं श्रेष्ठं मुनयो वै वदन्ति, सर्वश्रेष्ठं यच्छरीरं त्यजन्तः,
नित्यं युक्ता राजधर्मेषु सर्वे प्रत्यक्षं ते भूमिपाला यथैते†",

अधर्मः क्षत्रियस्यैष यत् शय्यामरणं गृहे, विसृजन्कफपित्तानि, कृपणं परिदेवयन्;
अरण्ये वा विमुच्येत, संग्रामे वा तनुं त्यजेत्" [ म० भा० ]
"क्षत्रियैर्धार्य्यते चापं नाऽऽर्त्तनादो भवेदिति" [ वा० रा० ]

यदृच्छया चोपपन्नं, स्वर्गद्वारमपावृतं, सुखिनः क्षत्रियाः पार्थ, लभन्ते युद्धमीदृशम् [भ०गी० २,३२]
"हतोऽपि लभते स्वर्गं, हत्वा च लभते यशः, उभयं नो बहुगुणं, नास्ति निष्फलता रणे।
न यज्ञैर्दक्षिणावद्भिर्, न तपोभिर्, न विद्यया, स्वर्गं यान्ति तथा मर्त्या, यथा शूरा रणे हताः‡"

## ( गान्धर्ववेदः )

उपवेदस्तु गान्धर्वः सर्वा गानविधाः कलाः वेदयन्नृषु कामाख्यं पुमर्थं सूयते परम्।
पारम्पर्येण सर्वेषां शास्त्राणां काम-मोक्षयोः विनियोगेऽपि, गान्धर्वः साक्षात्कामप्रसाधकः।
कामो नाम सुखास्वादः प्रीतिरूपः, स जन्यते गान्धर्वकर्मभिः सद्यः सङ्गीतश्रवणादिभिः।
चतुःषष्टिकलाशास्त्रं, 卐 कामशास्त्रं ⸸ च, तद्विधं साहित्यादिकमन्यच्च, गान्धर्वान्तर्गतं मतम्।

---

¶ ( सुश्रुते ) § भ० गी० ४,८। + भ० गी० १०, ३८। ‖ "युद्धशास्त्रविदेव त्वम्" [ म० भा० शां० १९, ८ ] ✻ म० भा० शां० ७८, २८–३१। † म० भा० शां० ६५, २–३। ‡ म० भा० स्त्री० अ० २।

卐 गीतं, वाद्यं, नृत्यं, नाट्यम्, आलेख्यं, विशेषकच्छेद्यं, तण्डुलकुसुमवलिविकाराः, पुष्पास्तरणं, दशनवसनाङ्गरागः, मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यम्, उदकाघातः, चित्राश्च योगाः, माल्यग्रथनविकल्पाः, शेखरकापीडयोजनं, नेपथ्यप्रयोगाः, कर्णपत्रभङ्गाः, गन्धयुक्तिः, भूषणयोजनम्, ऐन्द्रजालाः, कौचुमाराश्च योगाः, हस्तलाघवं, विचित्रशाकयूषभक्ष्यविकारक्रिया, पानकरसरागासवयोजनं, सूचीवानकर्माणि, सूत्रक्रीडा, वीणाडमरुकवाद्यानि, प्रहेलिका, प्रतिमाला, दुर्वाचकयोगाः, पुस्तकवाचनं, नाटकाख्यायिकादर्शनं, [☞]

---

⸸ "पूर्वशास्त्राणि संहृत्य, प्रयोगानुपसृत्य च, कामसूत्रमिदं यत्नात्संक्षेपेण निवेशितम्।
धर्ममर्थं च कामं च प्रत्ययं लोकमेव च, पश्यत्येतस्य तत्त्वज्ञो, न च रागात्प्रवर्तते [☞]।

आयुर्वेदाङ्गमेवाहुः कामशास्त्रं च केचन, तत्तु कामोपभोगस्य व्यवस्थाऽपेक्षया मतम्।
आयुर्वेदेन कामानामुपभोगो नियम्यते ; गान्धर्वेण पुमर्थात्मा साक्षात्कामोऽनुभाव्यते।
सत्प्रीतिजननाल्लोके सदानन्दप्रवर्त्तनात् निर्वर्तयति गान्धर्वः काममन्त्यसुखात्मकम्।
कामोपभोगसामग्र्या,स्तत्प्रयोगकलाविधेः, वेदनात्सुखनिष्पत्तिर्गान्धर्वस्य प्रयोजनम्।
इष्टदेवैकतानेन सङ्गीतादिप्रयोगतः सिध्येद्भक्तिः, समाधिर्वा, ततो मोक्षश्च तत्फलम्।
"यथाविधानेन पठन्सामगायमविच्युतं, सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति।
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा औवेणकं सरोविन्दुमुत्तरं गीतकानि च,
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका, ज्ञेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्।
वीणावादनतत्त्वज्ञः, श्रुतिजातिविशारदः, तालज्ञश्चाऽप्रयासेन मोक्षमार्गं नियच्छति।
गीतज्ञो यदि योगेन नाप्नोति परमं पदं, रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते"*

## ( अर्थवेदः )

अर्थवेदस्य सम्बन्धे नानावादः प्रदृश्यते ; नीति-शस्त्रास्त्र-शिल्पादिविषयत्वेन शास्त्रिणाम्।
दण्डनीत्यर्थशास्त्रादि नामधेयं पुरातनं राजशास्त्रस्य; शिल्पादेरर्थशास्त्रमिति स्मृतम्।
"यैर्यैरुपायैर्लोकस्तु न चलेदार्यवर्त्मनः तत्सर्वं राजशार्दूल, नीतिशास्त्रेभिवर्णितम्"†
उपलब्धार्थशास्त्रेषु राजधर्मस्य वर्णनात्, पर्यायत्वं सुविज्ञेयं राजशास्त्रा-ऽर्थशास्त्रयोः।
कौटलीयार्थशास्त्रादौ या व्युत्पत्तिः प्रदर्शिता 'अर्थशास्त्रा'दिशब्दानां, तयाऽप्येतत्समर्थ्यते।

"पृथिव्या लाभे, पालने च, यावन्ति अर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि, प्रायस्तानि संहृत्य एकमिदमर्थशास्त्रं कृतम्" [ कौ० अर्थ० १, १, १ ]

---

⌛ काव्यसमस्यापूरणं, पट्टिकावेत्रवानविकल्पाः, तक्ष-( तर्कु )-कर्माणि, तक्षणं, वास्तुविद्या, सुवर्णरूप्यरत्नपरीक्षा, धातुवादः, मणिरागाकरज्ञानं, वृक्षायुर्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनं, उत्सादने, संवाहने, केशमर्दने च कौशलम्, अक्षरमुष्टिकाकथनं, म्लेच्छितविकल्पाः, देशभाषाविज्ञानं, पुष्पशकटिका, निमित्तज्ञानं, यन्त्रमातृका, धारणमातृका, संपाठ्यं, मानसी, काव्यक्रिया, अभिधानकोपच्छन्दोज्ञानं, क्रियाकल्पः, छलितकयोगाः, वस्त्रगोपनानि, द्यूतविशेषाः, आकर्षक्रीडा, बालक्रीडनकानि, वैनयिकीनां वैजयिकीनां व्यायामिकीनां च विद्यानां ज्ञानम्; इति चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः।...पाञ्चालिकी चतुःषष्टिरपरा, तस्याः प्रयोगानन्ववेत्य सांप्रयोगिके वक्ष्यामः, कामस्य तदात्मकत्वात्।"

[ का० सू० अधि० १ अ० ३ ]

"संप्रयोगाङ्गं चतुःषष्टिरित्याचक्षते, चतुःषष्टिप्रकरणत्वात्। शास्त्रमेवेदं चतुःषष्टिरित्याचार्यवादः। कलानां चतुःषष्टित्वात्, तासां च संप्रयोगाङ्गभूतत्वात्, कलासमूहो वा 'चतुःषष्टि'रिति; ऋचां दशतयीनां च संज्ञितत्वाद् इहाऽपि तदर्थसंबन्धात्, पञ्चालसम्बन्धाच्च बह्वृचैरेषा पूजार्थं संज्ञा प्रवर्तिता इत्येके।" [ कामसूत्रे अधि० २ अ० २ ]

---

☞ अधिकारवशादुक्ता ये चित्रा रागवर्धनाः, तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः।
न शास्त्रमस्तीत्येतेन प्रयोगो हि समीक्ष्यते, शास्त्रार्थान्व्यापिनो विद्यात्, प्रयोगांस्त्वेकदेशिकान्।
बाभ्रवीयांश्च सूत्रार्थानागमं सुविमृश्य च, वात्स्यायनश्चकारेदं कामसूत्रं यथाविधि।
तदेतद्ब्रह्मचर्येण, परेण च समाधिना, विहितं लोकयात्रायै, न रागार्थेऽस्य संविधिः।
रक्षन्धर्मार्थकामानां स्थितिं स्वां लोकवर्तिनीम् अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः।
तदेतत्कुशलो विद्वान् धर्मार्थाववलोकयन्, नातिरागात्मकः कामी, प्रयुञ्जानः प्रसिध्यति"

[ कामसूत्रान्ते ] * या० स्मृ० प्राय० ११२-१६। † म० भा० शां० ५९, ७४।

आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्चेति विद्याः...आन्वीक्षिकी-त्रयी-वार्तानां योगक्षेमसाधनो दण्डः, तस्य नीति'र्दण्डनीतिः'—अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च; तस्यामायत्ता लोकयात्रा।......

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः
स्वधर्मकर्माऽभिरतो वर्तते स्वेषु वेश्मसु" [ कौ० अ० विद्यासमुद्देशे ]

"मनुष्याणां 'वृत्तिर्' अर्थः, मनुष्यवती ‡ भूमिरित्यर्थः; तस्याः पृथिव्या लाभ-पालनोपायः शास्त्रम् 'अर्थशास्त्र' मिति" [ कौ० अ० १५, १, १ ]

विद्या-भूमि-हिरण्य-पशु-धान्य-भाण्डोपस्कर-मित्रादीनामर्जनम्, अर्जितस्य रक्षणं, रक्षितस्य विवर्धनम् 'अर्थः,; इति कामसूत्रे १, २।

"यतः सर्वप्रयोजनसिद्धिः सोऽर्थः।... अलब्धलाभो, लब्धपरिरक्षणं, रक्षितविवर्द्धनं चार्थाऽनुबन्धः" [ नी० वा० २, १-३ ]

"चिकित्साऽऽगम इव दोषविशुद्धिहेतुर्दण्डः; यथादोषं दण्डप्रणयनं 'दण्डनीतिः'" [नी० वा० ९, १-२]

वस्तुतस्त्वर्थवेदस्य § वार्ताशास्त्रत्वमिष्यते, वैश्येन मुख्यसम्बन्धश्चाऽस्य न्याय्योऽनुमन्यते।
एकैकस्य तु वर्णस्य ह्येकैकेन विशेषतः उपवेदेन सम्बन्धो यथायोग्यं प्रतीयते।
स्वस्थवृत्तोपदेशेन, रोगिणां च चिकित्सया, आयुर्वेदेन सम्बन्धो ब्राह्मणस्य विशेषतः।
धनुर्वेदेन सम्बन्धः क्षत्रियस्य स्वभावतः; अर्थवेदेन वैश्यस्य 'वार्ता'कर्मविधायिना।
गान्धर्वेणोपवेदेन विनोदाऽऽवेदकेन तु मुख्यः शूद्रस्य सम्बन्धः क्रीड़ाकामस्य युज्यते;
जीविकार्थे च गान्धर्वं शूद्रा एव प्रयुञ्जते; अन्ये वर्णा विनोदार्थं, भक्त्याद्यर्थं च साधवः।

## ( सर्ववर्णानां सामान्यतः सर्वोपवेदैः सम्बन्धः )

वैशेष्यादेकशो योगः प्रोक्तो वर्णोपवेदयोः, सर्वोपवेदसम्बन्धः सामान्यात्सर्ववर्णतः।
आत्मनः स्वास्थ्यरक्षार्थं, लोकसेवार्थमेव च, आयुर्वेदप्रयोक्तारः सर्वे स्युरविशेषतः।
आत्मरक्षार्थमापत्सु, हिंस्रसत्त्वेषु, शत्रुषु, स्वीयराष्ट्रे विपन्ने च परराष्ट्राऽभियोगतः,
सर्ववर्णैः प्रयोक्तव्यो धनुर्वेदोऽपि मानवैः, इत्यादेशो मनोःसाक्षाद्,व्यासस्याऽपि महात्मनः।
भक्त्यादिसाधनोद्देशात्संप्रयुक्तस्तु सात्त्विकः गान्धर्वो ब्रह्मपुत्राद्यैर्नारदादिभिरप्युत।
यथाकामं विनोदार्थं सर्ववर्णजनाः सदा वादयन्ति च, नृत्यन्ति, गायन्ति, कवयन्ति च।
अर्थशास्त्रं तु वृत्त्यर्थं सुतरां सर्वपार्थदम्; इत्थं सर्वोपवेदानां सर्ववर्णाऽनुबन्धिता।
इमे लोकोपकारार्थं सन्ति भूरिप्रयोजनाः, अतो यत्नादुपादेया योगक्षेमाय मानवैः।
हन्त! किन्तु चिराल्लुप्ता आयुर्वेदादृते त्रयः धनुर्वेदादयः प्राचामार्षोपवेदवाङ्मयाः।
अर्थशास्त्रं तु यन्नाम राजधर्मप्रशासनं शिष्यते, धर्मशास्त्राङ्गं तत्, क्षत्रविषयत्वतः।
एवं सत्यपि, लोकेषु धनुर्वेदादिविस्तरः नव्यविज्ञानपद्धत्या नित्यमेवाऽभिवर्धते।
ततस्ततोऽधिगन्तव्यं ज्ञानं कार्येष्वपेक्षितं, नैकस्मिन्संभवेत्-शास्त्रे सर्वशास्त्रार्थसंग्रहः †।
अथाऽप्यत्र यथास्थानमुपलब्धोपवेदतः ग्राह्यं प्रासङ्गिकं वाक्यं; तन्मूलस्थलसूचने।
आयुर्वेदेषु तत्स्थाना-ऽध्याय-वाक्याङ्कलेखनं; कामा-ऽर्थशास्त्रयोरङ्कैरग्रेऽधिकरणं ततः

---

‡ "वर्णाश्रमवती, धान्य-हिरण्य-पशु-कुप्य-वृष्टिप्रदानफला च, पृथ्वी" [ नी० वा० ५, ५ ]

§ "अर्थविद्या वार्ताशास्त्रम्" [ का० सू० १, ३, १ टीका ]

† "अन्यशास्त्रोपपन्नानां चाऽर्थानामिहोपनीतानामर्थवशात्तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यं; कस्मात्? न हि एकस्मिञ्शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्त्तुम्।
एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयं, तस्माद्बहुश्रुतः शास्त्रं विजानीयाद्" इति स्मृतम्।
[ सुश्रुत० १, ४, ५-६ ]

अध्यायः सूचितः, पश्चात्तत्तत्प्रकरणं धृतम् ; अन्योपवेदवाक्यान्ते पूर्णं नामादि दर्शितम् । कृताऽल्पोद्धरणस्याऽन्यग्रन्थस्याऽपि यथास्थलं नामा-ऽध्यायादि-निर्देशः प्रायः पूर्णतया कृतः ।

इत्यष्टादशसङ्ख्याताद्विद्यास्थानात्समुद्धृतैः आर्षवाक्यैरिदं भाष्यं मनोः शास्त्रे विरच्यते ।

आयुर्वेद ( वैद्यक-शास्त्र ), धनुर्वेद ( शस्त्रास्त्रविद्या वा युद्धशास्त्र ), गान्धर्ववेद ( कामशास्त्रान्तर्गत सर्वकलाशास्त्र, गानविद्या, नाट्य-सङ्गीतशास्त्र ), और अर्थवेद ( 'वार्ता' जीविकाशास्त्र, और शिल्पशास्त्र वा स्थापत्य ), ये चार 'उपवेद' हैं; ये वेदों से उपमित ( सज्ज्ञान-प्रदान में वेदों के तुल्य ) हैं, अतः 'उपवेद' कहलाते हैं । वस्तुतः तो लौकिक योगक्षेम के विषय मे, वेदों से भी अधिक उपयोगिता, उपवेदों की ही है, साथ ही इन मे पारलौकिक श्रेयस्करत्व भी कम नहीं है । आयुर्वेद से प्रत्यक्ष ही प्राणियों के जीवनका योगक्षेम होता है, और सेवाभाव से असमर्थोंकी चिकित्सा करने पर प्राणदाता वैद्यों के पारलौकिक कल्याण का उल्लेख भी शास्त्रों मे वहुत है । धनुर्वेद से दण्डप्रयणन की योग्यता और युद्धकला प्राप्त होती है, जिसके द्वारा बाहरी और भीतरी दुष्टों का दमन तथा निग्रह करने से राष्ट्र वा समाज का त्रैवर्गिक योगक्षेम होता है । धनुर्वेद के अनुसार धर्मयुद्ध मे आत्मोत्सर्ग करनेवाले वीरों की पारलौकिक सुगति भी योगियों के बराबर की होती है । गान्धर्ववेद से इस लोक के परम पुरुषार्थ 'काम' की साक्षात् सिद्धि होती है; जिसके ही लिये, मोक्षशास्त्र वा आत्मज्ञान को छोड़ कर अन्य सभी शास्त्र, कर्म, और ज्ञान-विज्ञान प्रवृत्त हुए हैं । परा-अनुरक्ति के साथ 'इष्टदेवप्रीत्यर्थ' अथवा चित्त की एकाग्रता वा शान्ति के लिये गान्धर्व वेद का सुप्रयोग करने से भक्ति तथा समाधि के द्वारा मोक्ष भी होता है । शिव, नारद, सूरदास और मीरा आदि भक्त-महात्माओं का ऐसा सात्त्विक गान्धर्व-प्रयोग ( नृत्य-वादन-गान ) सुप्रसिद्ध है । अर्थवेद तो सभी पुरुषार्थों का साक्षात् वा पारम्परिक सम्बन्ध से अनन्य साधन है; सब का योगक्षेम 'वार्ता' के अधीन वा वृत्तिमूलक है । इस प्रकार सामान्यतः चारों पुरुषार्थों के और विशेषतः लौकिक त्रिवर्ग ( धर्म, अर्थ, काम ) के साक्षात् साधक पूर्वोक्त चार 'उपवेद' ही हैं, अतः लोकयात्रा के लिए इनकी बहुत आवश्यकता और परम उपादेयता है । किन्तु खेद का विषय है कि आयुर्वेद के सिवा अन्य तीन उपवेदों के प्राचीन आर्ष ग्रन्थ प्रायः लुप्त हो गये हैं । फिर भी यह कम सन्तोष का कारण नहीं है कि नये वैज्ञानिक ढङ्ग से संसार मे इनकी बड़ी उन्नति हो गई है । उसकी सहायता से प्राचीन आर्ष उपवेदों का जीर्णोद्धार किया जा सकता है, पर इस आर्षभाष्य मे तो आधुनिक विज्ञानाऽनुप्राणित उपवेदों के विशाल वाङ्मय का दिग्दर्शन कराना भी असंभव है, किसी एक ग्रन्थ में सभी शास्त्रों का अवरोध हो नहीं सकता; अतः अन्य समुन्नत भाषा ( अंग्रेजी आदि ) के तत्तद्विषक ग्रन्थों की सहायता से अपने उपवेदों को प्रतिसंस्कृत और समृद्ध करके युगानुरूप लोकोपयोगी बनाना चाहिए । उपवेदों की श्रेणी मे निर्दिष्ट 'अर्थशास्त्र' पद से राजशास्त्ररूप अर्थशास्त्र का ग्रहण नहीं होता, बल्कि जीविका-शास्त्र, धन-धान्यात्मक वित्त के उपार्जन, रक्षण, वर्धन, और यथायोग्य वितरण के शास्त्र का ग्रहण होना चाहिए । राजशास्त्र तो क्षत्रियधर्मनिरूपक होने के कारण, चातुर्वर्ण्यविषयक धर्मशास्त्र का ही अङ्ग है, जिसका सविस्तर निरूपण मनु के ७-९ अध्यायों में हुआ ही है । फिर भी यथोपलब्ध उपवेदों से यथाप्रसङ्ग अपेक्षित उद्धरण इस भाष्य मे लिये जायंगे और उनका 'आकर' निर्देश यथास्थान कर दिया जायगा ।

इस प्रकार से इस 'उपक्रम' प्रकरण मे दिग्दर्शित अष्टादश विद्यास्थानों से समुद्धृत आर्ष वाक्यों द्वारा मानवधर्मशास्त्र पर यह 'आर्षभाष्य' सम्पादित किया जा रहा है ।

## ( भारताऽभ्युदयद्वारं जगन्मङ्गलम् )

पुराऽऽसीद्भारतं वर्षं वैभवाद्धृदयं भुवः, यत्र प्रकृतिसाम्राज्यं जातं सर्वाङ्गपूरितं ;
सौभाग्यशालिनी यस्य योगाद्देवी वसुन्धरा धत्ते नामात्मनो नूनं 'रत्नगर्भे'ति सार्थकं ;
पोतै रत्नानि यस्येतो देशाद्देशान्तरं वहन् रत्नाकरत्वमात्मीयम् अन्वर्थयति सागरः ;
ऋतवो यत्र राजन्ते सर्वे संभूय सर्वदा, यत्सस्यसम्पदा पूर्वं त्रपते स्माऽमरावती ;
उत्तरेण हिमाद्या यत्पातुं पर्वतमालिका शत्रुमार्गं निरुध्याऽऽस्ते महासेनेव सज्जिता ;
अन्यासु दिक्षु दुर्धर्षो बाह्यदस्युभयप्रदः गर्जन् घोरतरं रक्षी जागर्तीव महार्णवः ;
मध्येदेशं च विन्ध्याद्या भूधरा भूरिसम्पदः गोपायन्ति मुनीञ्जन्तूनाश्रितांश्च फलेग्रहीन् ;
यत्र नूनमरण्यानी सदा सर्वफलप्रदा तिरश्चक्रे स्वसम्पत्त्या दिव्यं तन्नन्दनं वनं ;
यस्य स्वादूदका नद्यो भागीरथ्यादयोऽमलाः हसन्ति स्म सुधाधारां सर्वतः सुरदीर्घिकां ;
पुराणेषु त्रयस्त्रिंशत्कोटयो देवताः श्रुताः आरोहन्ति तुलां तासां यन्मनुष्याः स्वसङ्ख्यया ;
स्वर्गोपभोगसम्पत्त्या यथाकामोपनीतया न्यकृता नगरैर्यस्य पुरा भोगवती पुरी ;
यत्रत्यवणिजां नित्यं वर्धमाना विभूतयः नूनं पस्पर्धिरे पूर्वं राजराजस्य सम्पदा ;
यत्प्रसूताप्तविद्वद्भ्यो लाघवाच्च बृहस्पतिः स्वर्गे पलायितः, सोऽपि देवानामभवद्गुरुः ;
लब्धविद्या यतो लोका आर्यावर्ताज्जगद्गुरोः बभूवुः संस्कृताः सभ्याः कलावन्तश्च सर्वशः ;
"प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः" अन्यदेशेऽश्रुतप्रायैर्ऋग्वेदः प्रथितो यतः ;
यत्रैलूषैतरेयाद्या दासीपुत्रा अनार्यकाः बभूवुर्ऋषयो मन्त्रद्रष्टारो गुण-कर्मभिः ;
यत्र वर्णाश्रमव्यूहः सर्वलोकविलक्षणः कर्मणा वयसा चाऽभून्नृणां श्रेयोविधायकः ;
तदेवैतन्महाराष्ट्रं सर्वथाऽद्य विषीदति कर्म-वर्णव्यवस्थाया विच्छिन्नत्वादधोगतम् ।
ज्ञात्वाऽऽवश्यकतां यत्र धर्मचक्रप्रवर्त्तनं योगक्षेमाय लोकानां पूर्वाचार्या अकुर्वत ;
तत्रत्याः पण्डितम्मन्या हन्त लोकपुरोहिताः धर्ममेतर्हि मन्यन्ते सर्वथाऽपरिवर्त्तिनम् !
यत्राऽभूद्भगवान्बुद्धो बुद्धिवादप्रवर्त्तकः तत्रत्य-विदुषां बुद्धौ रूढिभक्त्याऽस्ति कुण्ठता ।
यत्रत्याः पितरो वंशे क्रमेणाऽभ्युदयार्थिनः सर्वतो जयमन्वैच्छन्, पुत्रादैच्छन्पराजयम् ;
तद्वंश्यानां क्रमाद् ह्रासो दृश्यते विश्वतोमुखः मूढग्राहश्च 'नाद्यत्वे योग्याः स्युः पूर्ववे'त्विति ।
ऐच्छंश्चेदृषयः पुत्रात्क्रमेणात्मपराजयं तदा स्वापेक्षया योग्ये वंश्ये स्युः सफलाशिषः ।
ऋषीणामिच्छतां नूनं पुत्रादात्मपराजयं तात्पर्यं स्यात्स्ववंश्यानामुत्तरोत्तरमुन्नतौ ।
यथोत्तरं मुनीनां स्यात्प्रामाण्यमिति सन्नयः वंशानुक्रमशो ज्ञाने वृद्धावेव तु सार्थकः
नव्यतत्त्वोपज्ञातृत्वे स्वाऽपेक्षयाऽधिकर्षिषु स्ववंशजेषु सत्स्वेव सिध्येदृषिमनोरथः ।
भारतीयास्तु 'नाद्यत्वे संभवेयुरिहर्षयः' इत्यन्धाश्वासिनो मूढग्राहेणाधः-प्रपातिताः ।
अन्यदेशेषु दृश्यन्ते सफलाः पूर्वजाशिषः, सर्वदैव हि जायन्ते तद्वंश्येष्वृषयो नवाः,
नव्याविष्कारकर्त्तारः "श्रुतिप्रत्यक्षहेतवः" "प्रभवार्थाय" लोकानां धर्मचक्रप्रवर्त्तकाः ।
तस्मात्तेषां जगन्मूर्ध्नि वामपादो विराजते ; भारतीयशिरश्चापि स्पृशत्यद्य रसातलम् ।
यत्र रामायणाद्यस्ति निरस्ताऽस्पृश्यदूषणं, तत्रत्या मामवाः सर्वे मिथोऽस्पृश्याः पतन्त्यधः !
वटव इह विटा, हा ! सन्ति भक्ता भ्रुकुंशाः ; दधति कितवशिष्यास्तस्करा मस्करित्वं ;
भ्रमजनितपरेतान् आस्तिका आश्रयन्ते, 'गुरुव' इति भजन्ते वञ्चिता वामयानान् ;
विविधकरमिषेण स्वप्रजारक्तपानं व्रतमिव बत ! भूपाः कुर्वते कामचाराः ;
सुकृत-सुजनरक्षादीक्षिताः शासितारः खदितुमपि यतन्ते शास्त्रिणः, शास्त्रिणश्च ;
मदप-मृतकभक्ष-प्रेतभक्तानघायूनपि रहसि यजन्ते जामयः पुत्रकामाः ;
जहति जनमपत्याऽऽचार-दाम्पत्यधर्माः ; श्रमरहितपराऽन्नं भुञ्जते 'साधु'संज्ञाः !
इति बहुलमिहान्तःकश्मलाद्दम्भमूलाद्, बहिरपि च समन्ताद्दस्युभिर्लुण्ठनाच्च,

चिरमतिपरवत्त्वाद्, दुःस्थिते भारतेऽधोगतिमति, विफला नः सर्वथा पूर्वजाशा।
"संगच्छध्वं, संवदध्वं, सं वो मनांसि जानताम्, देवा भागं यथा पूर्वे संजानाना उपासते;
समानो मन्त्रः, समितिः समानी, समानं मनः सहचित्तमेषाम्,
समानं मन्त्रमभिमन्त्रये वः, समानेन वो हविषा जुहोमि;
समानी व आकूतिः, समाना हृदयानि वः, समानमस्तु वो मनो, यथा वः सुसहासति" 卐
"सहृदयं, सांमनस्यम्, अविद्वेषं कृणोमि वः; अन्यो अन्यमभि हर्यत, वत्सं जातमिवाघ्न्या;
अनुव्रतः पितुः पुत्रो, मात्रा भवतु संमनाः; जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्;
मा भ्राता भ्रातरं द्विक्षन्, मा स्वसारमुत स्वसा, सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया,
येन देवा न वियन्ति, नो च विद्विषते मिथः, तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः;
जायस्वन्तश्चित्तिनो, मा वि यौष्ट, संराधयन्तः, सधुराश्चरन्तः,
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान्वः संमनसस्कृणोमि;
समानी प्रपा, सह वोऽन्नभागः, समाने योक्त्रे सह वो युनज्मि,
सम्यञ्चोऽग्निं सपर्यता,ऽरा नाभिमिवाऽभितः;
सध्रीचीनान्वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान्,
देवा इवाऽमृतं रक्षमाणाः सायं-प्रातः सौमनसो वो अस्तु† "
"रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि, रुचं विश्येषु, शूद्रेषु, मयि धेहि रुचा रुचम् ×"
"प्रियं मा कृणु देवेषु, प्रियं राजसु माकृणु, प्रियं सर्वस्य पश्यत, उत शूद्र, उतार्ये‡"
इत्याशिषः शुभाशाश्च पूर्वर्षीणां महात्मनां निष्फला भारतीयानां मिथोऽस्पृष्टप्रयत्नतः।
अन्योन्यस्पृष्टसम्बन्धः समाजत्वप्रयोजकः, अस्पृश्यता,ऽसमाजत्वं चेति नाऽर्थान्तरं द्वयम्।
मिथः स्पृष्टे समाजत्वं स्याद्, अस्पृष्टेऽसमाजता, अतोऽस्पृश्यजनावासे न समाजोऽस्ति भारते।
"संघे शक्तिः", स च स्पृष्टप्रयत्नानां भवेन्नृणां, तत्प्रयत्नस्य सिद्धिस्तु कर्म-वर्णव्यवस्थया।
तस्या एव परित्यागो भारतीयैश्चिरात्कृतः, तस्मादेषामधःपातो वैदेश्यचरणान्तिकः।
दुर्दैवाद्, आत्मदोषाद्वा, पारवश्याद्विदेशिनां, पतनं भारतस्याऽभूदारसातलमन्तिमम्।
उत्थानं, विनिपातश्च, संसारे परिवर्तिनि, सर्वेषां भवतोऽवश्यं पर्यायान्नियतेः क्रमात्।
"सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः, संयोगा विप्रयोगान्ता, मरणान्तं च जीवितम्§"
"कालक्रमेण जगतः परिवर्त्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः¶"
"कस्याऽत्यन्तं सुखमुपनतं, दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण‖"
"कुमुदवनमपश्रि, श्रीमदम्भोजषण्डं, त्यजति मुदमुलूकः, प्रीतिमांश्चक्रवाकः,
उदयमहिमरश्मिर्याति, शीतांशुरस्तं, हतविधिलसितानां ह्री विचित्रो विपाकः ❊"
प्रागेतद्भारतं दृष्ट्वा स्वदोषैः पतनोन्मुखं वैदेश्यैरधरीकृत्य त्वापादतलमापितम्।
अधःपातपराकाष्ठां प्राप्तस्याऽस्य समुन्नतेः कालोऽयमागतो; जीयान्महाराष्ट्रमिदं पुनः।
वृत्ते, वृत्तौ च, नीतौ च, स्वयं सम्यग्व्यवस्थितं सद्, वर्णाश्रमचारित्रं जगत्सर्वं च शिक्षयेत्।
"उत्तिष्ठत, जाग्रत, प्राप्य वरान्निबोधत" इत्येषा भारतीयेषु कठाशीरधुनोचिता।
"मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते,
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ÷
या वो भेषजा मरुतः शुचीनि, या शंतमा, वृषणो, या मयोभु,

---

卐 ऋ० सं० १०, १९१, २-४। † अथ० सं० कां० ३ सू० ३०। × यजुः १८, ४८।
‡ अथ० सं० १९, ६२, १। § म० भा० स्त्री० २, ३। ¶ स्वप्न० वा० १, ४।
‖ मे० दू० उ० ४६। ❊ शि० पा० व० ११, ६४। ÷ ऋ० सं० १, ११४, २।

यानि मनुरवृणीता पिता नः, ता शं च योश्च रुद्रस्य वश्मि †
येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्तहोतृभिः,
त आदित्या अभयं शर्म यच्छत, सुगा नः कर्त सुपथा स्वस्तये ‡
यामथर्वा मनुष्पिता दध्यङ धियमत्नत,
तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् §
ते नस्त्राध्वं, तेऽवत, त उ नो अधि वोचत;
मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः" ¶

प्राचीन काल मे भारतवर्ष स्वर्गतुल्य था और पृथिवी का 'हृदय' समझा जाता था। यहां प्रकृति का साम्राज्य सर्वाङ्गपूर्ण था, और सभी ऋतु सर्वदा प्रदेशभेद से विराजते थे; अपनी समृद्धि के कारण भारतभूमि वस्तुतः 'वसुन्धरा' और 'रत्नगर्भा' थी; यहां के समुद्र का नाम 'रत्नाकर' यथार्थ था; अपने भौगोलिक और प्राकृतिक सुसंस्थान के कारण यह 'महाराष्ट्र' बाहरी शत्रुओं के लिये दुर्गम और भयावह था। यहांकी समाजव्यवस्था ('कर्मणा वर्णः' का व्यूह) संसार मे अनुपम (बेजोड़) थी। नीतिमत्ता और सभ्यता मे यहां के द्विज (त्रैवर्णिक) मानवता के परम आदर्श थे। यहां का आर्ष 'मानव' हिन्दू-धर्म इतना व्यापक और उदार था, कि इस मे अन्यान्य विदेशों से आनेवाले विजातीय और विधर्मी लोग भी हस्तिपद मे अन्यपदवत् निमग्न हो गये; हूण, शक, और यवन आदि, यथायोग्य, भारतीय आर्ष चातुर्वर्ण्य मे मिला लिये गए। यहां की 'मानवी' संस्कृति बहुत पुरानी मानी जाती है। कई विषयों मे अत्रत्य विद्वान् जगद्गुरु हो गये हैं।

परन्तु उत्थान-पतन के प्राकृतिक नियम के अनुसार भारत का भी घोर अधःपात हुआ। अत्रत्य चातुर्वर्ण्य, धीरे धीरे सद्वृत्त से च्युत हो गया; वर्णसंस्था, वा 'वृत्ति'व्यवस्था, अस्त-व्यस्त होगई। जन्मना वर्णव्यवस्था और जातीय अस्पृश्यता की सृष्टि हुई। फलतः एक ओर जन्मनैव कृतार्थम्मन्य 'उच्च'कथित जातियों मे अयोग्यता, मिथ्या अहन्ता, दम्भ, पाखण्ड और अन्यों के प्रति अनुचित तिरस्कार तथा जातिगत घृणा के भाव उत्पन्न हो गये, और धीरे धीरे बढने लगे; दूसरी ओर 'नीच' वा 'अस्पृश्य' कथित जातियों की स्वभावजगुण-कर्मानुसारिणी उच्चवर्णोन्मुखी स्वरूपयोग्यता का, वा 'जात्युत्कर्ष'के सुसंस्कारमय बीज का, दमन कर दिया गया, क्योंकि 'वर्ण' और 'जाति' एक बना दिये गये, वा 'वर्ण' को 'जाति' के रूप मे परिणत करके उनका भेद मिटा दिया गया; साथ ही 'वर्ण' को अपरिवृत्तिसह और वंशानुक्रमी बना दिया गया; सुतरां 'नीच' कथित जातियों की 'कर्मणा वर्णत्व'प्राप्ति की स्वरूप-योग्यता निर्विषय निरवकाश और बेकार हो गई, तथा उनकी 'जात्युत्कर्ष' की स्वरूपयोग्यता का समूल उन्मूलन हो गया। इसका भीषण दुष्परिणाम यह हुआ कि 'द्विजाति' लोग—विशेषतः ब्राह्मण और क्षत्रिय—अपने वर्णोचित गुण-कर्म से रहित और अयोग्य होने लगे, क्योंकि ब्राह्मण कहलानेवालों को जन्म से ही गुरुत्व, पौरोहित्य, उपाध्यायत्व, और आचार्यत्व आदि का अधिकार मिल गया, तथा अयोग्य होने पर भी समाज से पूजा-प्रतिष्ठा और दान-दक्षिणा मिलने लगी; एवं 'क्षत्रिय' कहलानेवाले लोग जन्म से ही राज्य के अधिकारी और 'सर्वत्र अस्खलित-आदेश' माने जाने लगे; फलतः उन्हें वास्तविक वर्णोचित योग्यता की अपने लिये अपेक्षा ही नहीं रह गई। हां, अवश्य ही समाज के लिये उसकी आवश्यकता थी, पर तात्त्विक अर्थ में जन्म से ही सब का 'ब्राह्मण' वा 'क्षत्रिय' होना असंभव था, और 'कर्मणा वर्णः' का सिद्धान्त त्याग ही दिया गया था, अतः 'क्षत्रिय'-कथित

† ऋ० सं० २, ३३, १३। ‡ ऋ० सं० १०, ६३, ७। § ऋ० सं० १, ८०, १६। ¶ ऋ० सं० ८, ३०, ३।

जाति मे सभी लोग 'शौर्य' आदि स्वभावज गुण-कर्मों से युक्त, वास्तविक 'क्षत्रिय', 'क्षत' से प्रजा का त्राण करने मे समर्थ, नहीं होते थे, फिर भी राष्ट्र की रक्षा का भार और उत्तरदायित्व उन्हीं पर समाज की ओर से छोड़ दिया गया था; जिसकी विषम परिणति भारत की चिरपराधीनता हुई। क्योंकि तथाकथित क्षत्रियों में प्रायः गुण-कर्मज क्षात्रत्व का अभाव होने के कारण राष्ट्र के योगक्षेम की क्षमता ही नहीं थी, और 'जन्मना' की बाधा के कारण सभी जातियों से 'कर्मणा वर्णः' के अनुसार सच्चा 'क्षत्रिय' लोक-संग्रह किया नहीं जा सकता था, अतएव अन्य जाति के लोग 'युद्ध' वा दुष्टनिग्रह को अपना कर्त्तव्य ही नहीं समझते थे, "कोउ नृप होय, हमहि का हानी" के भाव से युद्ध मे जाति-क्षत्रियों का साथ नहीं देते थे। जो लोग 'नीच' वा 'अछूत' बना दिये गये उनके कोटिसंख्यक सन्तानों मे आज भी क्षत्रियोचित बल, साहस महाप्राणता, शरीर-सम्पत्ति और शौर्यादि योग्यता प्रत्यक्ष ही दिखाई देती है; यदि 'जन्मना' की बाधा न होती और 'कर्मणा वर्णः' की व्यवस्था रहती, तो वे अजेय 'क्षात्र' सैनिक हुए होते, और स्यात् यह 'महाराष्ट्र' ( भारत ) पराधीन नहीं होता। 'कर्मणा वर्णः' के सजीव और जङ्गम समाज-व्यूह मे बाहर के मुसलमान और ईसाई आदि विधर्मी भी 'हूण' आदिकों की तरह ही विलीन हो गये होते। किन्तु 'जन्मना वर्णः' की कुप्रवृत्ति और तज्जन्य जातीय अस्पृश्यता ने एक ओर हिन्दू-लोकविग्रह को उत्पन्न किया, अन्य जातियों से लोकसंग्रह का 'कर्म'मय द्वार बन्द कर दिया, और दूसरी ओर हिन्दू-सन्तानों को बात बात में पतित बनाकर मुसलमान और ईसाई आदि विधर्मियों की संख्या बढ़ाई, जिसका कटु फल विकट साम्प्रदायिक समस्या के रूप में सब के सामने है।

सारांश यह कि भारतवर्ष के सर्वतोमुख और सर्वपथीन अधःपात का अनन्य कारण 'जन्मना वर्णव्यस्था' और जातिमूलक 'अस्पृश्यता' है, अतः यहां जब से 'जन्मना वर्णव्यवस्था' और 'जात्या अस्पृश्यता है, तब से वस्तुतः भारतीय आर्यों वा हिन्दुओं का कोई 'समाज' वा 'सङ्घ' बन नहीं सका, क्योंकि जिस जातिसमूह मे 'अस्पृश्यता' हो, उसका 'समाज' बन नहीं सकता; परस्पर 'स्पर्श' के विना संघटन वा व्यूहन संभव नहीं होता, और उसके अभाव में 'समाज' वा 'संघ' बन नहीं सकता। अर्थतः 'अस्पृश्यता' और 'असामाजिकता' एक वस्तु है। पुनः 'कर्मणा वर्णः' की सद्व्यवस्थासे सङ्घ-विरोधिनी अस्पृश्यता का नाश हो सकता है, और भारतीय हिन्दुओं का भी लोकोत्तर शक्तिशाली 'समाज' बन सकता है। इसी से इस महान् राष्ट्र का अधःपात रुक कर पुनः समुत्थान और उसके द्वारा विश्व का भी कल्याण हो सकता है।

भारत के अधःपतन का एक मनोवैकारिक कारण भी है। कुछ मानवीय गुणों के, वा मानवोचित कर्म के, विषय मे भी चिरकाल से हिन्दुओं की असंभावना बुद्धि हो गई है। इन मे यह कुसंस्कार जम गया है, वा मूढग्राह हो गया है, कि वर्त्तमान काल मे वा भविष्य में 'ऋषि' आदि नहीं हो सकते 'ऋषित्व' आदि, पुराकल्प के कुछ महापुरुषों के ही दिव्य ऐश्वर्य थे। ऐसी अन्धधारणा का तात्पर्य यही होता है कि ईश्वर भी मर गया है। यदि वही ईश्वर जीवित हो, जिसने मन्त्रद्रष्टा ऋषियों को उत्पन्न किया, वा 'वेद' जिसके 'निःश्वसित' हुए, तो आज भी नये नये 'वेदों' उपज्ञानों के 'द्रष्टा' उपज्ञाता वा आविष्कारक 'ऋषि' हो सकते हैं, और संसार के दूसरे भागों मे हो ही रहे हैं। यही कारण है कि उनका चरण संसार के शिर पर है, और भारतीयों का शिर भी रसातल को चूम रहा है। ऐसी मूढ़धारणा से हम अपने पूर्वज ऋषियों की उस महती आशा और अमोघ आशीः का भी तिर-

स्कार कर रहे हैं जो उनकी "सर्वतो जयमन्विच्छेत् पुत्रादिच्छेत्पराजयम्" इस बलवती भावना मे निहित है। ऐसी अनिष्टकारी धारणायें और आत्मोन्नति की मानसिक बाधायें भी 'कर्मणा वर्णः' के पुनः प्रचार से दूर हो सकती हैं, क्यों कि कर्म से ब्राह्मण और 'ऋषि' हो सकने का मनोभाव और सुसंस्कार उसी से जाग्रत् हो सकता है। अतः परब्रह्म परमात्मा से हमारी यही प्रार्थना है कि इस महान् राष्ट्र मे, और इसके द्वारा सारे जगत् मे, पुनः कर्मणा चातुर्वर्ण्य का प्रचार हो, और उससे मानव-समाज को चिरस्थायी सुख-शान्ति मिले।

## ( आर्थिकसाहाय्यकृतो मङ्गलाशासनम् )

चिरादत्र पराधीने सर्वथा लुण्ठिते परैः निर्धने भारते, सन्ति श्रीमन्तो विरला जनाः ; तत्राऽपि विरला एव, परार्थ्य-परमार्थयोः मुक्तहस्तेन दातारः सन्ति, दानपरायणाः ; तेषु चाऽक्षीणकोशाः स्युर्विरला भाग्यशालिनः, युक्ताः पुरुषकारेण, दाक्ष्यान्नित्यधनागमाः ; एतत्सर्वगुणाढ्यत्वादेव नूनं यशोधनाः 'विरला'बन्धवो लोके विख्याता 'विरला' इति। श्रीबलदेवदासस्य 'राजा' इति पदधारिणः सत्पुत्रेष्वपि यो ज्येष्ठः, श्रेष्ठश्च, विरलोपमः, श्रीमान् युगलकिशोरो विरलात्मा यत्समो भवति लोके इष्टा-ऽऽपूर्त्तविधाता, दाता पात्रेषु सत्कार्ये, ततो लब्धार्थसाह्येन काश्यां सम्पाद्यते मनोः 'आर्षभाष्य'मिदं, तस्मात्पुण्यं तस्याऽभिवर्धताम्।

चिरकाल से पराधीन, और विदेशियों द्वारा हर तरह से लूटे गये, इस निर्धन भारत मे विरले ही सज्जन कुछ धनी-मानी रह गये हैं। उन मे भी परोपकार के साधन मे मुक्तहस्त से दान देनेवाले विरले ही सत्पुरुष हैं। उनमे भी ऐसे भाग्यवान् सज्जन विरले ही हैं, जो अपने पुरुषार्थ से, और 'वार्ता' व्यापार की बुद्धि के कौशल से, और हिन्दूधर्म तथा हिन्दूसमाज की सहायता और रक्षा के यत्नरूपी पुण्य के द्वारा प्राप्त सौभाग्य से, नित्य ही अर्थलाभ करते हुए, परार्थ और परमार्थ सत्कार्यों के लिये पानी की तरह धन बहाते रहते हैं, तौ भी जिनका कोश (ख़ज़ाना) क्षीण नहीं होता। विश्वविश्रुत बिड़लाबन्धुओं मे उपर्युक्त सभी गुण एक साथ विद्यमान हैं, अतः उन का 'विरला' ( बिड़ला ) यह उपनाम सार्थक हो गया है। 'राजा' श्रीबलदेवदासजी बिड़ला के सुपुत्रों मे सबसे बड़े और गुणों मे भी श्रेष्ठ श्रीयुगल किशोरजी बिड़ला हैं, जिन के सदृश दान-परायण सत्पुरुष भारतमे अब विरले ही होते हैं। 'इष्ट', सामान्यतः मानवसमाज के और विशेषतः हिन्दूसमाज के धर्म, संस्कृति, और स्वतन्त्रता के योग-क्षेम के लिये; और 'आपूर्त्त', विविधधर्मशाला, प्रवासभवन वा अतिथिशाला, पाठशाला, छात्रावास, देवमन्दिर, जलाशय, तीर्थघाट, प्रपा ( पौसरा प्याऊ ), अन्नसत्र वा सदाव्रत, पुस्तकालय, पत्र-पत्रिकाप्रकाशन, सद्-ग्रन्थोद्धार के लिये, आर्थिक सहायता, और उद्यान आदि के कामों मे, उन की दानशूरता सुप्रसिद्ध है। उन्हीं श्रीयुगल किशोर जी बिड़ला की आर्थिक सहायता से, मानव समाज के आदिम और सर्वश्रेष्ठ धर्मशास्त्र ( मनुस्मृति ) पर, यह 'आर्षभाष्य' प्राचीनतम विद्यापीठ और हिन्दूधर्म के केन्द्र काशी पुरी मे सम्पादित किया जा रहा है; अतः उन को इस आर्षधर्म के जीर्णोद्धार के पुण्य का बड़ा अंश मिले, यह हमारी उन के लिये कामना है।

**इत्यार्षे मनुभाष्येऽगाद् हिन्दीसारसमन्विते, इन्दिरारमणप्रोक्ते सटिप्पण 'उपक्रमः'**

ॐ तत्सद् ॐ

## आर्षभाष्यसमन्वितं

# मानवधर्मशास्त्रम्

## प्रथमोऽध्यायः

### भाष्यावतरणिका

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः[1]"
मनोरर्थप्रकाशाय प्रापणीया गुरोः कृपा भक्त्यैव, किन्तु का भक्तिर्महाकारुणिके गुरौ ?
व्रतमस्ति हिते सहेतुकेऽप्यथ सर्वस्वनिवेदनं सतां,
गुरवस्तु हिता अहेतुकाः, किमु तेभ्यो नु नमःसमर्पणम् ?
जयमात्मन एव सर्वतः परमिच्छन्ति जनाः स्वभावतः,
पितरस्तु पराजयं; नतिः, कियती तद्बलिदान-निष्कृतिः ?
तस्मादकारणस्नेहाद् गुरूणामाशिषः स्वतः संवर्धयन्तु मद्बुद्धिं मनोरर्थप्रकाशने।
आर्यानुपेक्ष्य सुपथो विपथे प्रवृत्तं शोचामि यावदभिपश्चिममार्यवंशं,
तावज्जगद्गुरुवरस्य मनोर्महार्थं सद्धर्मशास्त्रमनुधावति हन्त चित्तम्;
तस्यार्षवाक्यनिचयैरुपबृंहणेऽहं लोकोपकारशुभकामनया प्रवृत्तः,
शब्दस्तथार्थ इह सर्व ऋषिप्रयुक्तः प्राचीन एव, ननु केवललेखकोऽस्मि।
प्राच्यमामनुसप्तर्षेः कृष्णद्वैपायनावधि [2]आचार्यभगवद्दासैरार्षं यद्दर्शितं मतं,

---

भारतीय आर्य-महावंश के वहुत से लोग, अपने प्राचीनतम आर्ष सन्मार्ग की उपेक्षा कर के, प्रायः सभी विषयों मे पाश्चात्यों का अधिकतर अनुसरण करने लगे हैं; अतः भय हो रहा है कि, अन्धानुयायियों (अन्धेनैव नीयमाना यथान्धाः) की तरह, कहीं इनका इससे भी अधिक अधःपतन न हो जाय; क्योंकि, विज्ञान के प्रचण्ड प्रकाश मे भी, पश्चिम मे घोर अन्धेरा ही छाया हुआ है, कहीं भी सुख और शान्ति की आशा नहीं दिखाई देती; फलतः, पाश्चात्य व्यवस्थापद्धति की त्रुटियों का अनुमान सहज ही किया जा सकता है (फलानुमेयाः प्रारम्भाः); अतः पश्चिम के अन्ध अनुकरण से भारतीय आर्यसन्तानों की भी दुर्दशा होने की ही अधिक आशंका है, यह सोचने पर, हमारा मन पुनः जगद्गुरु मनु के उस महत्तम सद्धर्मशास्त्र की ओर ही दौड़ जाता है, जिसमे विश्वमानवसमाज के (कर्मणा वर्णाश्रमव्यवस्था द्वारा) आर्यीकरण (कृणुध्वं विश्वमार्यं)

---

१. श्वे० उ० ६, २३।—२. अस्मिन् मानवार्षभाष्ये यथाप्रसङ्गम् 'आचार्यभगवद्दासः' 'श्रीभगवद्दासाचार्यः' 'आचार्यः श्री भगवान् दासः' इत्येवमादिनिर्देशेन विद्वार्हन्तीचणो वाराणसेयः डाक्टर श्री भगवान् दास एव बोध्यः; तस्मिन् हि नानाभाषाऽनुशीलनाऽसङ्कीर्णशब्दार्थप्रत्ययेऽनन्यसाधारणशेमुषीसम्पन्नेऽध्यात्मविदि महापण्डिते, वस्तुतः स्वयोग्यतयैव, पूर्वत एवाचार्यपदवीमापादिते, सद्गुणग्रहण-तद्वद्विद्वज्जनसमादरणयोग्यविद्यास्थानाभ्यां काशी-प्रयाग-विश्वविद्यालयाभ्यां 'डाक्टर' इति उपाधिरन्वर्थीकृतः, स एवात्र संस्कृतवाङ्मये भाष्ये औचित्याद् 'आचार्य' इति शब्देन तन्नामप्रसङ्गे सर्वत्राऽनूद्यते; एवमन्यत्राऽपि, यथा श्रीबर्नलाचार्य इत्यादौ (उपक्रमे पृ० ३२) द्रष्टव्यम्।

**तदेव व्यस्यते प्रायेणार्षभाष्ये मनुस्मृतेः ; तस्मादत्र न मे किञ्चित्स्वीयं वृद्धानुसारिणः ।**
**अथापि स्खलनं सर्वं शब्दे चार्थे च मामकं ; यत्किंचित्-शोभनं, तत्तु प्राचामेव महात्मनाम् ।**

तत्सन्तः सदसद्विवेकमतयो लोकोपकारार्थिनः
शृण्वन्तु प्रवदन्तु चापि जनतां, यद्यत्र कश्चिद्गुणः ;
नो चेद्, अन्यमतावधारणविधावप्यंशतः साह्यकृत्
स्यादेतद्विदुषां, ततोऽपि सुतरामस्मिन्कृतार्था वयम् ।

**अथातो मनुशास्त्रार्थः स्वप्रकाशोऽपि, भूयसा व्याख्यातोऽपि च विद्वद्भिर्, आर्षवाक्यैः प्रकाश्यते ।**
**तस्यायमादिमः श्लोकः शास्त्रारंभप्रयोजकः , मनुं प्रति महर्षीणां प्रश्नोपक्षेपणार्थकः—**

---

की, और भारतीय आर्य ऋषियों के सद्-ज्ञानप्रचारकत्व की लोककल्याणाकांक्षामयी उच्चतम घोषणा की गई है (मनु० २, २०). । जिस समय मनुजीने यह कहा था कि 'इस देश ( कुरुक्षेत्र आदि ब्रह्मर्षिदेश ) मे उत्पन्न हुए विद्वानों से पृथिवी के सभी मनुष्य अपना अपना चरित्र (आचार-व्यवहार) सीखें', उस समय अपने भारतीय सन्तानों से उन्हें क्या आशा हुई होगी, और इन की योग्यता पर उनका कैसा विश्वास रहा होगा, इस की कल्पना सहज ही की जा सकती है । यदि 'पृथिवी' का अर्थ सम्पूर्ण 'भूलोक' वा 'भूगोलमात्र' होता है, और यदि 'मानव' पद से 'मनुष्यमात्र' का बोध होता है, तो "पृथिव्यां सर्वमानवाः" इस मनु-वचन के अनुसार मनुजी की व्यवस्था (मनुस्मृति ), पृथिवीभर के सभी मनुष्यों के लिये है, न कि केवल भारतीय 'सनातनी'-नामधारी हिन्दुओं के लिये ही । और यही उचित भी है, क्योंकि मनुष्यमात्र के आदिम पिता मनुजी, अपने सभी (सार्वभौम) सन्तानों के लिये ही, अभ्युदय और निःश्रेयस का साधन प्रस्तुत करेंगे, और समानरूप से सब के योगक्षेम की चिन्ता तथा सुव्यवस्था करेंगे, न कि किसी एकदेशीयमात्र के लिये । फिर भी अपने भारतीय सन्तानों के लिये मनुजी की एक विशेष आशीः है, और इन से उन को यह बड़ी आशा भी है, कि ये उनकी व्यवस्था का प्रचार सारे संसार में करें, पृथवी के सभी मनुसन्तानों को इसके द्वारा योगक्षेमकारक चरित्र (कर्त्तव्य) की शिक्षा दें । पिता के लिये ऐसी आत्माशीः और आशा स्वाभाविक है, कि उसके 'अग्रजन्मा' ( ज्येष्ठ ) पुत्र, अपने अनुजों के योगक्षेम की चिन्ता करें, और उन्हें तदनुकूल चरित्र की शिक्षा दें । पर जब कि भारतीय मनुसन्तान स्वयं चरित्रभ्रष्ट और सभी विषयों में अत्यन्त पराधीन तथा परमुखापेक्षी हो गये हैं, तब पृथिवी के अन्य 'मानव' इन से क्या सीख सकते हैं ? जो स्वयं गिरा है, वह दूसरों को कैसे उठा सकता है ? फलतः मनुजी की महती आशीः और बृहती आशा सर्वथा निष्फल हो गई है । यह सब अनर्थ, मानवी समाजव्यवस्था ( कर्मणा वर्णः ) के बिगड़ जानेसे, हो रहा है; पर ऐसी अव्यवस्था और दुर्व्यवस्था वाञ्छनीय नहीं, तथा चिरकाल तक चलनेवाली नहीं है; अतः मानव समाज की सुख-शान्ति के लिये पुनरपि नैसर्गिक और वैज्ञानिक चतुरङ्गव्यवस्था ( कर्मणा चातुर्वर्ण्यव्यूहरचना ) होनी चाहिये ।

मानव 'समाज' के ऐसे सम-अजन वा व्यूहन की पूरी इतिकर्त्तव्यता का साङ्गोपाङ्ग सदुपदेश 'मानवधर्मशास्त्र' मे ही है; अतः व्यावहारिकरूप से इसका प्रचार करना नितान्त आवश्यक है । लोकोपकार की ऐसी सदिच्छा से ही आर्ष वाक्यों द्वारा मानवधर्मशास्त्र के उपबृंहण ( विशदीकरण ) में हमारी प्रवृत्ति हुई है । इस ( आर्षभाष्य ) में सभी शब्द और अर्थ वस्तुतः प्राचीन ऋषियों के ही हैं, हम तो केवल उनके लेखकमात्र हैं । क्योंकि मानव समाज के योगक्षेमविधायक,

†मनुमेकाग्रमासीनमभिगम्य महर्षयः, प्रतिपूज्य यथान्यायम् इदं वचनमब्रुवन् ।१।
भगवन्‡, सर्ववर्णानां, यथावद्, अनुपूर्वशः, अन्तरप्रभवाणां च, धर्मान्नो वक्तुमर्हसि ।२।

---

वा पुरुषार्थविषयक, जो आर्ष सिद्धान्त, मनु और सप्तऋषियों से प्रवर्तित होकर श्री कृष्णद्वैपायन व्यास-पर्यन्त परम्परा से चले आये हैं, उन सबका निरूपण, आचार्य श्री भगवान् दासजी ने, संस्कृत, हिन्दी, और अंग्रेजी के अपने कई ग्रन्थों में, विविध विचारपद्धतियों से, यथाप्रयोजन कहीं संक्षेप से, और कहीं अपेक्षित विस्तार के साथ, अच्छी तरह किया है। हम प्रायः उन्हीं का विशदीकरण तथा प्रमाणन कर रहे हैं, अतः इस भाष्य मे हमारा स्वकल्पित अर्थ कुछ भी नहीं है, क्योंकि हमने सर्वथा अपने पूर्व-वृद्धों का ही अनुसरण किया है। फिर भी इस भाष्य के शब्दों मे, वा अर्थों मे जो कुछ भी अशुद्धि वा त्रुटि होगी, वह हमारी, और जो भी विशुद्ध, हितोपदेश, और रमणीय होगा, वह सब उन पूर्वज महापुरुषों का ही होगा। इस लिये हमारी अभ्यर्थना है कि मानव समाज के हिताहित का विचार करनेवाले सज्जन इसे परोपकार-बुद्धि से सुनें, और यदि इस मे कोई लोकहितसाधक गुण प्रतीत हो, तो इसे जनता को भी सुनावें, तथा कार्यान्वित करें और करावें; अन्यथा, हम तो इतने से भी, इस पर किये गए, अपने परिश्रम को सफल समझेंगे कि, मानव समाज के इष्ट की प्राप्ति और अनिष्ट के परिहार के लिये, इससे अच्छा उपाय सोचने मे, विद्वान् सज्जनों को यह (भाष्य) थोड़ी भी सहायता दे।

यद्यपि मनुस्मृति के वाक्य अत्यन्त प्रसन्न और प्राञ्जल हैं, अत एव उनके अर्थ भी स्वतः स्पष्टतर हैं; साथही श्री मेधातिथि-प्रभृति महापण्डितों ने इस पर नाना प्रकार के कई अच्छे व्याख्यान भी लिखे हैं; तथापि हम भी एक भाष्य लिखने जा रहे हैं; क्योंकि सम्प्रति इसका विशिष्ट प्रयोजन है, और एक विशेषता भी। प्रयोजन का उल्लेख, उपक्रम के ९ वें प्रकरण (पृ० ८-९) मे हो चुका है, और आर्ष वचनों द्वारा मनु के प्रत्येक वाक्यार्थ

---

† "ॐ स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे, मनुप्रणीतान्विविधान्धर्मान्वक्ष्यामि शाश्वतान्"

इत्यधिकः श्लोकः शास्त्रारम्भे केषुचित्पुस्तकेषु दृश्यते, स चैष मेधातिथ्यादिभिर्न व्याख्यात इति प्रक्षिप्तः कैश्चिद्गण्यते; गोविन्दराजादिभिस्तु व्याख्यात इति मूलशास्त्रघटित एवेति केचन वदन्ति; इयं चात्र गोविन्दराजस्य टीका—

"इह भृगुशिष्यः कश्चिद् अविच्छिन्नपारम्पर्यतः स्मृत्यर्थप्रबन्धमिदमाह—'स्वयंभुवे' इत्यादि। स्वेच्छागृहीतशरीराय प्रजापतये अपरिमिततेजसे प्रणम्य मन्वभिहितान् नानाप्रकारान् धर्मान् अदृष्टार्थकर्त्तव्यतारूपान् इष्टाऽनिष्ट-प्राप्ति-परिहारप्रयोजनस्य वेदमूलत्वस्य एषामिष्यमाणत्वान् नित्यान् कथयिष्यामि।... 'स्वयंभुव' इति क्रियाग्रहणमपि कर्त्तव्यमिति सम्प्रदानत्वे चतुर्थी; वेदार्थोपनिबन्धकत्वेन छन्दस्तुल्यत्वात् स्मृतीनां, न दुष्टा क्वचिदत्र छान्दसी रूपसिद्धिः" इति।

‡ "संभर्त्तेति, तथा भर्त्ता, 'भका'रोऽर्थद्वयान्वितः; नेता, गमयिता, स्रष्टा, 'ग'कारार्थस्तथा मुने;
ऐश्वर्यस्य समग्रस्य, धर्मस्य, यशसः, श्रियः, ज्ञान-वैराग्ययोश्चैव, षण्णां 'भग' इतीरणा।
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि, स च भूतेष्वशेषेषु, 'व'कारार्थस्ततोऽव्ययः।
उत्पत्तिं, प्रलयं चैव, भूतानामगतिं, गतिं, वेत्ति; विद्याम्, अविद्यां च, स वाच्यो 'भगवान्'इति।
ज्ञान-शक्ति-बलैश्वर्य-वीर्य-तेजांस्यशेषतः भगवच्छब्दवाच्यानि, विना हेयैर्गुणादिभिः"

[ वि० पु० ६,७३-७९ ]

अत्रादौ मनुशब्दस्य प्रयोगाद् ब्रह्मवाचिनः[3], मङ्गलं[4] सूचितं शास्त्रे शिष्टाचारप्रवर्तितम्।
मनुरात्मा, मनुष्यश्च, मन्त्रो, मन्वन्तराऽधिपः, मन्ता, मनो, मुनि, र्विद्वान्, आप्तश्च, मनुरुच्यते[5]।
आत्मा सर्वमतत्वाच्च, सर्वमन्तृत्वतो मनुः; मननान्मनुजन्यत्वान्मनुष्योऽपि मनुर्मतः;

का समर्थन और स्पष्टीकरण* ही इस की विशेषता है। अतः यहाँ से आगे अब मूल शास्त्र पर अष्टादश-विद्या-स्थानीय आर्ष वचनों के अनुसार सत्तर्कयुक्त भाष्य का आरंभ किया जाता है।

प्राचीन समय मे कुछ महर्षि लोग, शान्त भाव से विराजमान मनुजी के पास, गये; और विधिवत् उनका अभिवादन-सत्कार करके बोले कि, हे भगवन्, आप हमें सभी वर्णों, उपवर्णों, और आश्रमों के धर्मों का यथार्थ तथा क्रमिक उपदेश दीजिये।

---

३. "अहं मनुरभवं, सूर्यश्चाऽहं, कक्षीवाँ ऋषिरस्मि विप्रः,
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यतामा". [ऋ० सं० ४,२६,१]
"एनमेके वदन्त्यग्निं, मनुमन्ये प्रजापतिम्,
इन्द्रमेके, परे प्राणम्, अपरे ब्रह्म शाश्वतम्" [ मनु० १२,१२३ ]

४. "मङ्गलाचरणं शिष्टाचारात्, फलदर्शनात्, श्रुतितश्चेति" [ सां० द० ५, १ ]
"माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते; मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि च, अध्येतारश्च सिद्धार्था यथा स्युरिति" इति महाभाष्ये ( १,१,१; पृ० ५७; एवमेव १,१,२; पृ० १४७ "वृद्धिरादैच्" इति सूत्रेऽपि ) मङ्गलप्रयोजनमभिहितं द्रष्टव्यं; मानवेऽपीह अ० ४ श्लो० १४५–४६ इति।

५. "मनुः, मननात्,...मनुश्च पिता मानवानाम्" इति निरुक्ते अ० १२, खं० ३३–३४।
"मनुः, अयं मननात्, न हि तदस्ति, यदयं न मनुते" इति च तत्रत्या दौर्गी वृत्तिः।
"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत" [ ऋ० सं० १,८०,१६ ]
चातुर्वर्ण्यस्य ( मनुष्यजातेः ) जननी च 'मनुः' कश्यपपत्नी—

मनुर्मनुष्याञ्जनयद्, राम, पुत्रान्यशस्विनः, ब्राह्मणान्, क्षत्रियान्, वैश्यान्, शूद्रांश्च मनुजर्षभ"
[ वा० रा० आर० १४,२९ ]

"येन ऋषयस्तपसा सत्रमायन्निन्धाना अग्निं स्वराभरन्तः,
तस्मिन्नहं निदधे नाके अग्निं यमाहुर्मनवस्तीर्णबर्हिषम्" [ शु० यजुः वा० सं० १५,४९ ]
"मनवः, मननप्रधाना विद्वांसः, 'ये विद्वांसः, ते मनवः' ( ८,६,३,१८ ) इति श्रुतेः" इति तत्रत्यं महीधरभाष्यं।

"देहोऽसवोऽक्षा मनवो भूतमात्राः" [भा० ६,४,२५]। "मनवः, अन्तःकरणानि" इति तट्टीकायां श्रीधरः।
'मनुः', मनुष्य इति शब्दरत्नावली; यथा ऋक्संहितायां ( ८,४७,४ )। 'मनुः', मन्त्रोऽपीति जटाधरः।
"मनुर्नाम कश्चित्पुरुषविशेषोऽनेकवेदशाखाऽध्ययन-विज्ञाना-ऽनुष्ठानसम्पन्नः स्मृतिपरम्पराप्रसिद्धः" [मनौ मे० १,१]

"मनुर्नाम महर्षिरशेषवेदार्थादिज्ञानेन प्राप्तमनुसंज्ञः आगमपरम्परया सकलविद्वज्जनकर्णगोचरीभूतसर्ग-स्थिति-प्रलय-करणाऽधिकृतः" [मनौ० गो० रा० १,१]

* "रससिद्धं यथा ताम्रमाप्नोति हि सुवर्णतां, एवमर्थोऽप्यृचा स्पष्ट, इति वेदे च बुध्यते;
सत्यं वै वागृचा स्पष्टेत्यत्र ज्ञातं महर्षिभिः, ऋगुदाहरणं तस्माद् ब्राह्मणे बहुशः कृतम्"
[ वेदार्थदीपिकायां ६२ पृष्ठे उद्धृतं द्रष्टव्यम् ]

एवं मनुस्मृतेरर्थश्चार्षवाक्यैरुदाहृतैः विस्पष्टः क्रियते, सैषा भाष्यस्यास्य विशेषता।

मननात् त्रायते मन्त्रस्, तस्मात्स मनुरुच्यते ; [६]मन्वन्तराऽधिकारित्वान्मनुः प्रोक्तः प्रजापतिः ;
एवं मननधर्मत्वान्मनुत्वं मनसः स्मृतं ; तत्त्वमन्ता मुनिश्चाऽपि प्रोच्यते मननान्मनुः ;
तस्मादेव च विद्वांसः, किञ्चाप्ता मनवो मताः ; इत्येवं मनुशब्दस्य नानार्थाः प्रतिपादिताः ;
अत्रैतच्छास्त्रकर्त्तैव स्मृतः स्वायंभुवो मनुः[७]।
तं कदाचिदुपातस्थुः स्वस्थचित्तं महर्षयः ; एकाग्रचेतसो[८] ह्येव शक्तिस्तत्त्वोपदेशने ।

'मनु' शब्द ब्रह्मवाचक भी है, अतः शास्त्र के आरंभ मे उसका उल्लेख मङ्गलसूचक है ।

यद्यपि 'मनु' शब्द के आत्मा, मनुष्य, मन्त्र, मन्वन्तराधीश, मननकर्त्ता, मन, मुनि, विद्वान्, और आप्त आदि, अनेक अर्थ, शास्त्रों मे लिखे हैं जिनका दिग्दर्शन नीचे संस्कृत टिप्पणों मे कराया गया है; तथापि यहाँ इस मानवधर्मशास्त्र के कर्त्ता आदिम मनु का ही निर्देश है ।

---

६. "मनुः, सप्तर्षयो, देवाः, भूपालाश्च मनोः सुताः,
मन्वन्तरे भवन्त्येते, शक्रश्चैवा,ऽधिकारिणः" [वि० पु० ३,२,४९]
"कृते कृते स्मृतेर्विप्र, प्रणेता जायते मनुः,
सात्त्विकोंऽशः, स्थितिकरो जगतो, द्विजसत्तम," [वि०पु० ३,२,५]
"मन्वन्तराऽधिकारेषु तिष्ठन्ति मुनयस्तु वै;
ऋषयो, मनवश्चैव, सर्वे तुल्याः प्रयोजनैः" [वा० पु० अ० ५८]
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः,
मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः" [वा० पु० अ० ५९]

७. एतद्विषये [मनु० १,५८;१,१०२] भाष्यमग्रे द्रष्टव्यम् ।

८. एकाग्रमासीनम्, एकाग्रं स्थितम्—एकाग्रं सन्तं, न त्वत्र वृस्याद्युपवेशनमासनम्, अनुपयोगात्; आसनेन स्वस्थवृत्तिता लक्ष्यते, तथाभूतः प्रतिवचनसमर्थो भवति ।...

एकाग्रशब्दो रूढ्या निश्चलतामाह; प्रत्याहारेण परिहृतरागादिदोषसंसर्गस्य विकल्पनिवृत्तौ तत्त्वाऽवबोधचिन्तायां मनसः स्थैर्यमेकाग्रता, तथाभूत एव च संनिहितरूपशब्दादिविषयाऽवधारणे योग्यो भवति; न सदसद्विकल्पयुक्तः" [ मनौ ( १, १; ) मेधातिथिः ]

"व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा" [ परा० स्मृ० १, १ ]
इति पराशरस्मृतिश्लोकव्याख्याने श्रीसायणमाधवाचार्यस्तु—

'एकाग्रम्' इत्यनेन पञ्चविधासु चित्तभूमिषु अतीन्द्रियवस्तुदर्शनयोग्या चतुर्थी भूमिर्निर्दिश्यते । तथा हि पतञ्जलिप्रोक्तानां योगसूत्राणां व्याख्याने वैय्यासिकभाष्ये भूमिपञ्चकं प्रदर्शितम्—'क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धमिति चित्तभूमयः' ( यो० भा० १, १ ) इति । तत्र प्रतिक्षणं कर्मवायुना नानाविधेषु भोग्यवस्तुषु व्यग्रतया प्रेर्यमाणं चित्तं क्षिप्तम्, निद्रा-तन्द्रायुक्तं मूढं, कदाचित्कसमाधियुक्तं क्षिप्ताद्विशिष्टं विक्षिप्तं, यम-नियमाद्यष्टाङ्गाऽभ्यासपाटवादेकस्मिन् विषये वृत्तिप्रवाहरूपेण प्रतिष्ठितमेकाग्रम्, अवृत्तिकं संस्कारशेषं निरुद्धम् । तत्र क्षिप्त-मूढयोर्योगाऽनुपयोगः प्रसिद्धः; विक्षिप्तेऽपि चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते, विपक्षधर्मान्तर्गतत्वेन दहनान्तर्गतबीजवदकिञ्चित्करत्वात् ; 'यस्त्वेकाग्रे' चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते' [ यो० भा० १, १ ]। तत्र संयमविशेषान्नानाविधयोगैश्वर्यमाविर्भवति । धारणा-ध्यान-समाधित्रयमेकविषयं 'संयम' इत्युच्यते; 'शब्दा-ऽर्थ-प्रत्ययेषु अन्योन्य विभक्तेषु यः संयमः, तेन अशेषशब्दादिसाक्षात्कारे सति पक्ष्यादिभाषा ज्ञायन्ते' इति पतञ्जलिनोक्तं; तेनैव न्यायेन अनेकविधवेदशाखाज्ञानमिति अभिप्रेत्य 'एकाग्रम्' इत्युक्तम् ।

योग्याऽधिकारिणे सद्भिः क्रियते धर्मदेशना, तस्मादत्र महर्षीणां जिज्ञासुत्वं यथोचितम्।
ये साक्षात्कृतधर्माणस्, त एव ऋषयः स्मृताः ; तेषु ये च महान्तः स्युस्, त उच्यन्ते महर्षयः।
तेषां न धर्मजिज्ञासा युज्यते धर्मदर्शिनाम् ; अन्यथा तन्महर्षित्वम् अनन्वर्थं प्रसज्यते।
तथाऽपि यदपृच्छंस्ते मनुं धर्मं महर्षयः, तल्लोकाऽनुग्रहादेव धर्मशास्त्रप्रसिद्धये।
यतः सत्पात्रजिज्ञासां विना नैवोपदिश्यते, धर्मतत्त्वं महाप्राज्ञैस्, तद्वैयर्थ्याऽभिशङ्कया ;
अतः प्रश्नो महर्षीणां, मनोस्तत्र सदुत्तरम् ; एवं सम्पादितं शास्त्रं, नृलोकानुजिघृक्षया।

---

मन के स्थिर रहने पर ही यथार्थ उपदेश दिया जा सकता है; अत एव एकाग्र मन से स्थित मनुजी के समीप महर्षियों का गमन हुआ। महात्मा लोग, योग्य अधिकारी को ही, सदुपदेश देते हैं; सुतरां महर्षियों का जिज्ञासु होना सर्वथा उचित ही था।

यद्यपि योगजसन्निकर्ष से धर्मतत्त्व को प्रत्यक्ष देखनेवाले महात्मा गण ही 'ऋषि', और उन मे भी जो बड़े होते हैं, वे 'महर्षि' कहलाते हैं; अतः उन मे धर्म विषयक अज्ञान हो नहीं सकता; तथापि उन्हों ने मनुष्य-समाज पर परम अनुग्रह करके, 'मानवधर्मशास्त्र' के प्रचार के लिये ही, वृद्धतम मनुजी से, दृढ़तर निश्चय के लिये, जिज्ञासा की।

---

एकाग्र्याङ्गतामासनस्य मत्वा 'आसीनम्' तथा च व्याससूत्रम्—'आसीनः संभवात्' [ ब्र० सू० ४, १, ७ ] इति। शयानस्याकस्मादेव निद्राऽभिभवाद्, उत्थितस्य देहधारणे चित्तव्यापारात्, गच्छतो धावतो वा विक्षेपबाहुल्यात्, पारिशेष्यादासीनस्यैव चित्तैकाग्र्यसंभवाद् 'आसीनो' योगमभ्यसितुमुपासीन इत्यर्थः।

अन्वय-व्यतिरेकाभ्यां प्रश्नस्याऽवगत्युपायतामभिप्रेत्य 'अपृच्छन्' इत्युक्तम्।

'तद्विद्धि प्रणिपातेन, परिप्रश्नेन, सेवया' [ भ० गी० ४, ३४ ] इत्यन्वयः;

'नाऽपृष्टः कस्यचिद्ब्रूयात्' [ मनु० २, ११० ] इति व्यतिरेकः" इत्याह।

९. "साक्षात्कृतधर्माणः [ श्रुतिप्रत्यक्षहेतवः, मन्त्रद्रष्टारो वा ] ऋषयो बभूवुः" ( नि० १, २०, २ ); "ऋषिर्दर्शनात्, स्तोमान् ( मन्त्रान् ) ददर्श, इत्यौपमन्यवः" [ नि० २, ११, १ ]

"अजान्ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभु अभ्यानर्षत्, त ऋषयोऽभवन्; तदृषीणामृषित्वं; तां देवतामुपातिष्ठन्त यज्ञकामाः, त एतं ब्रह्मयज्ञमपश्यन्, तमाहरन्, तेनाऽयजन्त" इति तैत्तिरीयारण्यके ( प्रपा० २, अनु० ९ ]; एतदेव ब्राह्मणवचनं निरुक्तेऽपि ( २, ११, १ ) उद्धृतं दृश्यते।

"ऋषयः सत्यवचसः" इत्यमरः।

"ऋषन्ति, जानन्ति; ऋषी गतौ (तु० प० से० 'इगुपधात्कित्' ( उ० ४, १२० ) इतीन्।

'ऋषिर्वेदे, वसिष्ठादौ, दीधितौ च पुमानयम्' इति मेदिनी"। इति तत्रत्या व्याख्यासुधा।

'रिषिः' व्यञ्जनादिश्च—"विद्याविदग्धमतयो 'रिषयः' प्रबुद्धाः" इति बालपण्डितजातकात्; इति च तत्र टिप्पणम्।

"ऋषिः, शास्त्रकृद्, आचार्यः, ऋषिर्वेदेऽपि" इति त्रिकाण्डशेषः।

"सप्त—ब्रह्मर्षि-देवर्षि-महर्षि-परमर्षयः, काण्डर्षिश्च, श्रुतर्षिश्च, राजर्षिश्च, क्रमाऽवराः" [रत्नकोशे]

"ऋषीत्येष गतौ धातुः, श्रुतौ, सत्ये, तपस्यथ ; एतत्संनियतं यस्मिन्, ब्रह्मणा स 'ऋषिः' स्मृतः।
यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः, तस्मान्महर्षयः प्रोक्ता, बुद्धेः परमदर्शिनः"
[ वा० पु० अ० ५९; मात्स्ये च अ० १४५ ]

"महर्षयः, 'ऋषिः' वेदः, तदध्ययन-विज्ञान-तदर्थाऽनुष्ठानातिशययोगात् पुरुषेऽपि 'ऋषि'-शब्दः; महान्तश्च ते ऋषयश्च—तेषामेव गुणानामत्यन्ताऽतिशयेन महान्तो भवन्ति; यथा 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' इति। अथवा तपोविशेषात्, पूजाख्याति-विशेषाद्वा महान्तः" इति मनौ ( १, १ ) मेधातिथिः।

यत्र वक्ता मनुः साक्षात्, श्रोतारश्च महर्षयः, तत्सच्छास्त्रमवश्यं स्याद्;इत्याश्वासात्प्रवृत्तये, तेषां प्रश्नोत्तराभ्यां वा शास्त्रमेतत्प्रवर्तितं, तत्कर्तृगौरवाच्चाऽपि लोकः" शास्त्रे प्रवर्तते। ज्ञानं "नाऽनुपसन्नाय" ब्रूयाद्, नैवा-"ऽनिदंविदे"; "अविज्ञातुरसूया हि ज्ञाने" भवति सर्वदा। तस्मात् "समुपसन्नाय" "विज्ञातुं प्रभवे" सुधीः ज्ञानं "मेधाविने" ब्रूयात् सज्जनाय "तपस्विने""।

शास्त्रकारों के आप्तत्व की प्रसिद्धि से भी, उन के शास्त्रों मे लोगों का विश्वास, और तन्मूलक प्रवृत्ति, होती है; इस लिये भी परम आप्त, तथा महाकारुणिक मनु-महर्षियों के प्रश्नोत्तर-सम्वाद से यह मानवधर्मशास्त्र प्रवर्तित किया गया।

जो जिज्ञासु स्वयं विनीतभाव से गुरु के समीप उपस्थित न हो, अथवा जिस मे ज्ञातव्य विषय के ग्रहण-धारण के उपयुक्त बुद्धि नहीं हो, उसे गंभीर ज्ञान का उपदेश नहीं देना चाहिये; क्योंकि जो गुरु के पास स्वयं उपस्थित होने में अपनी निहीनता समझता है, और उपदिष्ट विषय को हृदयङ्गम करने मे असमर्थ होता है, वह स्वभावतः विशुद्ध ज्ञान मे भी दोष लगाता है, और अपना 'अज्ञान' गुरु पर धरता है, 'कि वह स्वयं नहीं जानते, हमें क्या वतलावेंगे;' अतः वैसे लोगों को सदुपदेश देने का परिश्रम व्यर्थ जाता है; इस लिये स्वयं गुरु की सेवा मे उपस्थित होनेवाले, ग्रहण-धारण मे पटु, और तपोनिष्ठ जिज्ञासु को ही सद्-ज्ञान देना चाहिये। ऐसी सभ्य-मर्यादा की स्थापना के लिये ही तत्त्वदर्शी महर्षि लोग स्वयं मनुजी के समीप उपस्थित हुए।

प्रणति-भक्तिपूर्वक निष्कपट प्रश्न (छलहीन जिज्ञासा) करने से ही तत्त्वबोध होता है, वा सज्ञान मिलता है; एवं विना पूछे, वा अन्याय से पूछने पर, सदुपदेश करना, वा सदुत्तर देना उचित नहीं होता; अतः महर्षियों ने नियमानुसार मनुजी का अभिवादन-सत्कार करके ही प्रश्न किया।

१०. "द्वये च प्रतिपत्तारः—न्यायप्रतिसरणाः, प्रसिद्धि-प्रतिसरणाश्च; तत्र—
'मनुर्वै यत्किंचाऽवदत् तद्भेषजम्' इति,

'ऋचो, यजूंषि, सामानि, मन्त्रा आथर्वणाश्च ये,
सप्तर्षिभिस्तु यत्प्रोक्तं, तत्सर्वं मनुरब्रवीत्';

इत्याद्यर्थवादेतिहासपुराणादिभ्यः प्रख्यातप्रभावः, लोके तत्प्रसिद्ध्यैव वा निरूपितमूलपातेन प्रजापतिना एतत् प्रणीतमित्येतावतैव श्रोत्रियाः प्रवर्तन्त इति। तान्प्रति कर्तृविशेषसम्बन्धोऽपि प्रवृत्त्यङ्गम्, अत एव च प्रश्न-प्रतिवचन-भङ्ग्या प्रयोजनोपन्यासः। महर्षयः प्रष्टारः, प्रजापतिः वक्ता, धर्मलक्षणश्चार्थो न लोकाऽवगम्यः, शास्त्रैकगोचरोऽयं, यत्र महर्षयोऽपि संशेरत इति" [ म० मे० १, १ ]

११. "नाऽनुपसन्नाय; अनिदंविदे वा; नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया।
उपसन्नाय तु निर्ब्रूयाद्, यो वाऽलं विज्ञातुं स्यात्, मेधाविने, तपस्विने वा"" [निरु० अ० २ खं० ३]

"सम्यगुपसन्नाय, परां शिष्यवृत्तिमास्थितायैव, निर्ब्रूयात्।...इदं ( निर्वचनं ) वेदितुमसमर्थाय 'अनिदंविदे' नैव निर्ब्रूयात्; अथवा 'इदम्' इति आत्मपर्यायवाचि, 'इदंविदे' आत्मविदे, योगिने; स हि आत्मज्ञानविधूतकल्मषोऽल्पेनैव यत्नेन बोद्धुं सूक्ष्मानर्थान् शक्त इति इदंविदे निर्ब्रूयात्।...यो हि न विजानाति, नाऽवबुध्यते; तस्याऽविज्ञातुः नित्यकालमेव विज्ञाने असूया, स हि अनवबुध्यमान आत्मीयं दोषमाचार्ये एवाऽवसृजति,—'स्वयमेव तावदयं ( आचार्यः ) नाऽवबुध्यते, किमस्मान् बोधयिष्यति' इति। एतस्मात् कारणात्...खिन्नमनसे ( अनात्मविदे ) नेदं निर्ब्रूयात्।...य एव तु मेधावी स्याद्—अन्य-जन्मान्तराऽनुभावितया प्रज्ञया युक्तः, यो वा तपस्वी, कामं ताभ्यां...निर्ब्रूयादेव; न हि तयोरसाध्यं किञ्चि-दस्ति, तपसा हिं स्वयमपि वेदार्थः प्रादुर्भवेदेव, यथा मन्त्राः प्रादुरभूवन्पूर्वेषामृषीणाम्; मेधावी अपि च

इत्येवं शिष्टमर्यादास्थापनाय स्वयं मनौ उपसन्ना महात्मानो महाप्राज्ञा महर्षयः।
"तद्विद्धि प्रणिपातेन, परिप्रश्नेन, सेवया" [भ० गी० ४, ३४]
"नाऽपृष्टः कस्यचिद्ब्रूयाद्, न चाऽन्यायेन पृच्छतः" [ मनु० २, ११० ]
अन्वय-व्यतिरेकाभ्यां प्रश्नस्यैवाऽवबोधने हेतुत्वं निश्छलस्येति पूजयित्वा तमब्रुवन्।
ज्ञात्वैवाऽनुष्ठितो[12] धर्मो योगक्षेमकरो भवेत्; अन्यथा फलवैषम्यं दानवन्मत्स्यघातिने।
"लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम्; अहिंसा-ऽसाधुहिंसेति श्रेयान् धर्मपरिग्रहः।
नाऽत्यन्तं गुणवत्किञ्चित्, न चाऽप्यत्यन्तनिर्गुणम्, उभयं सर्वकार्येषु दृश्यते साध्वसाधु वा*।"
"एकं हत्वा यदि कुले शिष्टानां स्यादनामयं, कुलं हत्वा च राष्ट्रे च, न तद्वृत्तोपघातकम्।
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप, धर्मरूपो ह्यधर्मश्च, तच्च ज्ञेयं विपश्चिता †"
"स एव धर्मः, सोऽधर्मो, देश-काले प्रतिष्ठितः; आदानमनृतं हिंसा, धर्मो ह्यावस्थिकः स्मृतः¶"
"अन्यो धर्मः समर्थानाम्, आपत्स्वन्यश्च, भारत; प्राक्कोशात्प्राप्यते धर्मो, वृत्तिर्धर्माद्गरीयसी,
यस्माद्धर्मस्योपचितिरेकान्तेन न विद्यते, तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः‡"
"अन्यो धर्मः समस्थस्य, विषमस्थस्य चाऽपरः, आपदस्तु कथं शक्याः परिपाठेन वेदितुम्।
दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन्, धर्मं चाऽधर्मरूपेण कश्चिदप्राकृतश्चरन्,
न हि सर्वहितः कश्चिदाचारः सम्प्रवर्तते, तेनैवान्यः प्रभवति, सोऽपरं बाधते पुनः" §

अच्छी तरह समझ कर के किया हुआ धर्म ही कल्याण कारक होता है, अन्यथा वह अधर्मरूप हो जाता, और अनिष्ट फल देता है। यह कथा बहुत प्रसिद्ध है कि एक दयालु सज्जन ने किसी मछली मारनेवाले को गरीब और भूखा देख, कुछ ख़रीद कर खा लेने के लिये, थोड़े पैसे दे दिये। मत्स्यघाती ने सोचा कि कुछ अन्न ले कर खा लेने से आज का काम तो चल जायगा, पर कल से फिर यही दुर्दशा बनी रहेगी; अतः उसने, उन पैसों से, मछली मारने का सामान ( मत्स्यवेधनी, बंसी वगैरह ) ख़रीद लिया, और मछलियां मार मार कर प्रतिदिन बेंचने लगा।

स्वयमपि उत्प्रेक्षितुं शक्नुयात्, किमुत उच्यमानमवबोद्धुम्। यो वाऽन्यः कश्चिद् 'अलं' पर्याप्तो विज्ञातुमेतच्छास्त्रं भवेत्, दृढग्राही, स्थिरबुद्धिः, तस्मै निर्ब्रूयादेव;...अनुपसन्नाय नैव निर्ब्रूयात्, यद्यपि तपस्वी, मेधावी, दृढग्राही वा; उक्तं हि—

'यश्चाऽन्यायेन निर्ब्रूयाद्, यश्चाऽन्यायेन पृच्छति,
तयोरन्यतरो मृत्युं, विद्वेषं वा ऽधिगच्छति' इति" [ नि० वृ० २, ३ ]
"तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" [मुण्डके १,२,१२]

१२ "अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा; ज्ञात्वा चाऽनुतिष्ठन्धार्मिकः; प्रशस्यतमो भवति लोके, प्रेत्य च स्वर्गं लोकं समश्नुते" [ वासिष्ठध० १, १–३ ]

* म० भा० शां० १५, ४९–५० ।—† म० भा० शां० ३३, ३१–३२। अत्र "राष्ट्रे अनामयं स्यात्, तर्हि तदेकस्य कुलस्य वा हननं 'वृत्तोपघातकं' धर्मनाशकं न भवति। 'अधर्मरूपः' अधर्मवद् भाति धर्मः, यथा शालावृकाख्यब्राह्मणवधः; धर्मश्च 'अधर्मः', यथा कर्णपर्वोक्तसत्यवादिनः चोरेभ्यः कार्पटिकमार्गं प्रदिशतः" इति श्रीनीलकण्ठः।

¶ म० भा० शां० ३६, ११। अत्र "आदानं, स्तेयम्।
'आवस्थिकः' अवस्थाविशेषे भवः; प्राणात्ययादौ अधर्मस्यापि स्तेयादेर्धर्मत्वं, धर्मस्याऽप्यस्तेयादेरधर्मत्वमित्यर्थः" इति नीलकण्ठः।

‡ म० भा० शां० १३०, १४-१६।—§ म० भा० शां० अ० २६०।

"इमे वै मानवाः सर्वे धर्मं प्रति [13]विशङ्किताः, कोऽयं धर्मः, कुतो धर्मस्, तन्मे ब्रूहि पितामह।
धर्मस्त्वयमिहार्थः किम्, अमुत्रार्थोऽपि वा भवेत्, उभयार्थो हि वा धर्मस्, तन्मे ब्रूहि पितामह"*
"महानयं धर्मपथो, बहुशाखश्च, भारत; किंस्विदेवेह धर्माणामनुष्ठेयतमं मतम्†"
"किं कर्म, किमकर्मेति, कवयोऽप्यत्र मोहिताः; कर्मणो ह्यपि बोधव्यं, बोद्धव्यं च विकर्मणः,
अकर्मणश्च बोद्धव्यं, गहना कर्मणो गतिः‡"
इत्यादिना हि धर्मस्य जिज्ञास्यत्वं विधीयते; तस्मात्तद्विषयः प्रश्नः कृतोऽत्रादौ महर्षिभिः।

जैसे जैसे आमदनी बढ़ती गई, वैसे वैसे मछली फँसाने के बड़े बड़े औजार—क्रमशः टाप, जाल, और महाजाल तक—बनवाता गया, और उन से अगणित निरीह मत्स्यों का संहार किया। उस सब हिंसा का पाप उसे पैसे देनेवाले सज्जन को लगा, और उन्हें उसका कुफल, इह लोक मे, वा परलोक मे भोगना पड़ा। अतः पात्र ही को दान देना धर्म है; अपात्र-कुपात्र को दान देना अधर्म है।

यह कथा कल्पित हो, वा वास्तविक, पर अबुद्धिपूर्वक ( अविमृश्यकारिता से ) किये गये शुभ कर्म के भी अधर्मरूप मे परिणत हो जाने का निदर्शन तो अवश्य है। महाभारत मे यह स्पष्ट उल्लेख है कि, कोई भी कर्म स्वरूपतः धर्म नहीं है, क्योंकि 'लोकयात्रा' के निर्वाह के लिये ही धर्म का विधान किया गया है; अतः श्रेयःसाधनरूप से ही, कोई भी कर्म, 'धर्म' होता है; अर्थात् किसी भी कर्म के जिस प्रयोग से 'लोकयात्रा' की सिद्धि, अथवा समाज का धारण पोषण वा अभ्युदय हो, उसका वही रूप 'धर्म' है। अत एव हिंसाकर्म भी, दुर्जनों ( आततायियों ) पर प्रयुक्त होने से, अहिंसावत् 'धर्मरूप' हो जाता है; प्रत्युत वहाँ अहिंसा ही 'अधर्म' स्वरूप है; क्योंकि यदि कुल मे कोई एक आततायी हो जाय और उसे मार डालने से शेष परिवार को सुख-शान्ति के साथ रहना मिले, और ऐसे ही एक वा अनेक दुष्ट कुल का नाश कर देने से यदि समूचा राष्ट्र निरामय ( निरुपद्रव ) हो जाय, तो वह हिंसाकर्म भी 'वृत्त का उपघातक' (अधर्म) नहीं होता है। कोई भी कर्म अत्यन्त गुणवत् ( स्वरूपतः धर्मरूप ), अथवा अत्यन्त निर्गुण ( स्वभाव और स्वरूप से ही 'अधर्म' ) नहीं है; किन्तु उस की धर्मता और अधर्मता उसके प्रयोगों मे फलों के अनुसार देखी जाती है। जो कर्म सामान्यतः धर्मरूप से प्रसिद्ध है, वह भी कभी कभी अधर्मरूप हो जाता है, और जो 'अधर्म' माना गया है, वह भी धर्मरूप हो जाता है; अतः विद्वानों को अच्छी तरह से समझकर के ही धर्म का अनुष्ठान करना चाहिये।

धर्म के प्रति, मनुष्यों के मन मे स्वभावतः उठने वाले संशय को, धर्मराज युधिष्ठिर ने भीष्माचार्य के सामने उपस्थित किया था। 'हे पितामह, धर्म क्या है ?, यह किन साधनों से

१३. "धर्मं प्रतिविप्रतिपन्ना बहुविदः; केचिदन्यं धर्ममाहुः, केचिदन्यं; सोऽयमविचार्य प्रवर्तमानः कश्चिदेव उपाददानो विहन्येत, अनर्थं च ऋच्छेत्; तस्माद्धर्मो जिज्ञासितव्यः। स हि निःश्रेयसेन पुरुषं संयुनक्तीति" [ मी० शा० भा० १,१,१ ]

जिज्ञास्यः संशयाद्धर्मः, श्रेयस्करतयाऽपि च;
असन्दिग्धो ह्यजिज्ञास्यो, यो वा स्यान्निष्प्रयोजनः" । [ मी० श्लो० वा० १२५ ]

* म० भा० शां० २५९, १-२—† म० भा० शां० १०८, १।—‡ भ० गी० ४, १६-१७।

"धर्मः क्रियात्मा निर्दिष्टः, श्रेयोऽभ्युदयलक्षणः*"; "धर्मादर्थश्च, कामश्च†," धर्मो, मोक्षश्च, सिध्यति।
यस्मादभ्युदयस्यास्ति सिद्धिर्निःश्रेयसस्य च , स धर्म, इति काणादे शास्त्रे वैशेषिके स्मृतम्‡।
'अभ्युदयः' त्रिवर्गोऽस्ति, मोक्षो 'निःश्रेयसा'त्मकः; धर्मादेष चतुर्वर्गः पुमर्थाख्यः प्रसिध्यति।
"प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् , यः स्यात्प्रभवसंयुक्तः, स धर्म इति निश्चयः।
धारणाद्धर्ममित्याहु, धर्मेण विधृताः प्रजाः ; यः स्याद्धारणसंयुक्तः, स धर्म इति निश्चयः§"
धारणं, प्रभवो वाऽपि, नृणामभ्युदयात्मकः , धर्माद् वर्णाश्रमाचाररूपादेव प्रसिध्यति।
तस्मात्तद्विषयः प्रश्नः प्रस्तुतोऽत्र महर्षिभिः ; वर्णाश्रमाऽव्यवस्थायां स्यात्समाजस्य विप्लवः।
"वर्णधर्मैरजीवन्त्यो व्यरुन्धन्त" पुरा प्रजाः "परस्पर-विरोधेन"¶ वृत्तिसाङ्कर्यहेतुना।
एवं वायुपुराणादौ वर्णाऽभावफलं स्मृतम् ; दृश्यते चाधुना लोके तन्मूला विषमा स्थितिः।
तस्माद्वर्णाश्रमाधारो, गुणकर्मव्यवस्थितः , सर्वदाऽपेक्ष्यते धर्मो, योगक्षेमकरो नृणाम्।
इत्याशयेन सर्वेषां वर्णानामनुपूर्वशः—आश्रमक्रमशोऽपृच्छन्मनुं धर्मं महर्षयः।
एवं प्रश्नो महर्षीणामादावेव मनुं प्रति ; एतस्यैवोत्तरं चाग्रे सम्पूर्णायां मनुस्मृतौ।
वर्णानां धर्म एवाङ्गी गुण-कर्मव्यवस्थितः ; अन्यधर्मास्तदङ्गानि तच्छेषत्वेन वर्णिताः।
तस्मान्न न्यूनता प्रश्ने, नाऽतिरिक्तत्वमुत्तरे , देश-कालादिधर्माणां वर्णनेऽपि मनुस्मृतौ।
आश्रमा अपि वर्णानामेव संस्था वयःक्रमात् एषणा-शान्तये सृष्टा, ऋणेभ्यश्च विमुक्तये।
तस्मान्महर्षिभिश्चात्र तत्प्रश्नो न पृथक्कृतः ; 'अनुपूर्वश' इत्युक्त्वा सूचितस्तस्य संग्रहः।
अन्यथाऽऽश्रम-धर्माणामपृष्टानां महर्षिभिः अप्रस्तुताऽभिधानं स्यान्मनोर्युक्ताऽभिभाषिणः।
दृश्यते चाऽत्र शास्त्रार्धे द्वितीयाऽध्यायतो मनोः आषष्ठमाश्रमाणां हि धर्मस्यैव निरूपणम्।

सम्पन्न होता है, वा इसका प्रयोजन क्या है ?; क्या 'धर्म' केवल इस लोक के लिये है, वा परलोक के लिये भी, अथवा दोनों लोकों के लिये ?; इन प्रश्नों का उत्तर मुझे दीजिये।'

भगवद्गीता मे भी 'कर्म' ( विहित कर्त्तव्य ), 'विकर्म' ( निषिद्ध कर्म वा धर्मविरुद्ध कर्त्तव्य ), और 'अकर्म' ( कर्म के अननुष्ठान ) को अच्छी तरह समझ लेने का आदेश है, क्योंकि कर्म की 'गति' ( प्रयोगपद्धति, वा इतिकर्त्तव्यता ) अतीव दुरूह है; 'कर्म' क्या है, और 'अकर्म' क्या है, इस विषय मे ज्ञानी पुरुष भी विभ्रान्त हो जाते हैं।

इन शास्त्रों से यही आदेश मिलता है कि धर्म और अधर्म का पूरा विवेक करके ही, धर्म मे प्रवृत्त होना, और अधर्म से निवृत्त होना, चाहिये; इसी लिये महर्षियों ने इस ( मानवधर्म ) शास्त्र के आरंभ मे ही धर्म की जिज्ञासा की है।

धर्म, अर्थ, काम, और मोक्ष, इन चार पुरुषार्थों के साधन का ही नाम 'धर्म' है; और वह साधन, 'वर्ण' तथा 'आश्रम' का कर्त्तव्य ही है। मानव समाज ने, पूर्व काल में, जव वर्णधर्मों से जीवन का निर्वाह करना छोड़ दिया, अर्थात् अपने अपने गुण-कर्म के अनुसार अनुकूल और सहज पड़ने वाले पेशे को छोड़ कर, विपरीत पेशे को, तथा लोभवश कई पेशों को अपना लिया, तव एक की जीविका-वृत्ति पर दूसरे के आक्रमण से, और वृत्ति के सङ्कर से, परस्पर विरोध, हुआ और सामाजिक तथा वैयक्तिक जीवन मे घोर वाधा, तथा अस्त-व्यस्तता, उपस्थित हो गई थी; फिर ठोकर खा कर, होश ठिकाने आने पर, ब्रह्माजी के आदेश से, मनु जी के नेतृत्व मे

* भविष्य० १,१८१,७। † म० भा०। ‡ वै० सू० १,१,२। § म० भा० शां० अ० १०९।
¶ वा० पु० अ० ८, तथा अ० ५७।

'अन्तरप्रभवा'श्चाऽत्र ना'ऽन्त्यजा'ऋषिभिःस्मृताः ; यथायोग्यं चतुर्ष्वेव तेषां वर्णेषु संग्रहात् ।
कस्यापीह मनुष्यस्य नाऽवर्णस्थितिरिष्यते ; मनुनैव निषिद्धत्वाद् वर्णो "नास्ति तु पञ्चमः" ।
तस्मान्न वर्णबाह्यत्वं, नाऽवर्णत्वं च, युज्यते अन्तरप्रभवाणां; ते- ऽतो वर्णान्तरवृत्तयः ।
अन्तरेषु च वर्णानामुपवर्णा भवन्ति ये, तेऽन्तरप्रभवाः प्रोक्ता, वृत्त्याऽवान्तरभेदतः ।
यथा शिक्षितवर्णस्य ब्राह्मणस्यान्तरे बहुः शिक्षक-प्राड्विवाकादिरुपवर्णोऽपि दृश्यते ।
एवं क्षत्रादिवर्णेषु तत्तदन्तरवृत्तयः 'अन्तरप्रभवा' ज्ञेयाः सैनिका-ऽपणिकादयः ।
इत्थं सर्वमनुष्याणां वर्णेष्वेव परिग्रहात्, वर्णाश्च, मानवाश्चेति, समानार्थं इवेष्यते ।
एवं च 'मानवो धर्मो', 'वर्णधर्म', इति द्वयम्, एकस्य वस्तुनो नाम मन्तव्यं पृथगक्षरम् ।

तस्मान्मानवशास्त्रेऽस्मिन् वर्णधर्मस्तु मानवः
साङ्गोपाङ्गः समाम्नातः सर्वमानवधारकः । १—२ ।

( मनुं ताः पुनरन्वयुः, वा० पु० ५७, ५६ ), कर्मणा वर्णाश्रमव्यवस्था का पुनरुद्धार करके ही, तत्कालीन समाज, योगक्षेमयुक्त और सुखी हुआ था। इस समय भी, कर्मणा वर्णाश्रम-व्यवस्था के अभाव से, लोक मे विषम स्थिति प्रत्यक्ष ही देखी जाती है; अतः मनुष्य-समाज के योगक्षेम के लिये गुण-कर्म के अनुसार व्यवस्थित वर्णाश्रम धर्म की आवश्यकता सर्वदा एक सी है, इसी लिये महर्षियों ने मनुजी से वर्णाश्रम-धर्म के विषय मे ही प्रश्न किया ।

इस प्रकार शास्त्र के आरंभ मे महर्षियों ने मनुजी से प्रधानतः 'वर्णधर्म' के ही विषय मे प्रश्न किया है, और आगे सम्पूर्ण मनुस्मृति मे इसी का उत्तर दिया गया है; अतः प्रश्नकर्त्ता महर्षियों के, तथा उत्तरदाता मनुजी के भी, तात्पर्य मे, गुण-कर्मानुसारी वर्णधर्म ही मुख्य है। अन्य ( देश-कालादि ) धर्मों का समावेश वा अन्तर्भाव इसी मे है, क्यों कि कतिपय धर्म, वर्णधर्म के साक्षात् अङ्ग, और कतिपय उपकरणरूप हैं; अतः इस शास्त्र मे उनका वर्णन होने पर भी प्रश्न मे न्यूनता, अथवा उत्तर मे विषयान्तरता, नहीं मानी जा सकती है। आश्रमधर्म भी वर्णधर्म से वस्तुतः पृथक् नहीं है; क्यों कि 'एषणात्रय' की शान्ति, और 'ऋणत्रय'|| की निवृत्ति, के लिये, आयु-विभाग के अनुसार, वर्णों के ही वैयक्तिक कर्म-साधन की संस्था का नाम 'आश्रम' है। अत एव महर्षियों ने आश्रमधर्म की जिज्ञासा, वर्णधर्म से पृथक् न करके, 'अनपूर्वशः' शब्द से ही उसकी सूचना कर दी है, अर्थात् एक के बाद दूसरे आश्रमों मे वर्णधर्मों का ही नियमित अनुष्ठान होता है, यथा ब्रह्मचर्य आश्रम मे मुख्यतः ब्राह्मणधर्म का, और गृहस्थ आश्रम मे मुख्यतः वैश्यधर्मका; यह बात मानवधर्म शास्त्र के ( अ० २ से ६ तक ) अक्षरपाठ से भी स्पष्ट प्रतीत होगी ।

मूल श्लोक में जो 'अन्तरप्रभव' शब्द है, उसका अर्थ 'उपवर्ण' है। यह देखा जाता है कि, एक ही मुख्य वर्ण के भीतर भी, जीविका-वृत्ति के प्रकार-भेद से, कई उपवर्ण हो जाते हैं। जैसे विद्योपजीवी मनुष्यों का प्रधान ( सामान्य ) वर्ण 'ब्राह्मण' है, किन्तु उसमे विविध शास्त्रों के विविध अध्यापक, न्यायाधीश, 'इष्ट' अर्थात् विविध 'यज्ञ' करने मे, और 'आपूर्त्त' अर्थात् विविध वापी, कूप, तडाग, मंदिर, धर्मशाला, चिकित्साशाला, प्रपा, आदि के बनवाने में, अपने विशेष विशेष शास्त्र-ज्ञान से सहायता देने वाले शास्त्री, ये सब 'अन्तर-प्रभव' अर्थात् अवान्तरवर्ण,

|| 'एषणा' और 'ऋण' के विषय मे सविस्तर विचार यथास्थान ( मनु० ६, ३५ आदि स्थलों पर ) देखिये ।

[१४]त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयंभुवः अचिन्त्यस्या-ऽप्रमेयस्य कार्य-तत्त्वा-ऽर्थवित्प्रभो ।३।

पृष्टो वर्णावर्णानां धर्मः, किन्तु तदुत्तरं नाऽनध्यात्मविदा दातुं शक्यमेकेन केनचित् ।
"बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ; तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये※"
मनोः साक्षात्तु धर्मस्य कार्य-तत्त्वा-ऽर्थदर्शिनः एकस्यापि तदर्हत्वं दर्शयन्ति महर्षयः ।
"एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः, स विज्ञेयः परो धर्मो; नाऽज्ञानामुदितोऽयुतैः।"
चत्वारो वेदधर्मज्ञाः पर्षत्, त्रैविद्यमेव वा, सा ब्रूते यं स धर्मः स्यात्, एको वाऽध्यात्मवित्तमः॥"
'एक' इत्यसहायार्थो, नैकमात्रस्य बोधकः ; अन्यथा मनुभिन्नानामृषीणां तदविद्यता ।
धर्मशास्त्रप्रवक्तारः सन्त्यन्येऽपि महर्षयः, अद्यापि यद्वचो धर्मे प्रमाणं परमं मतम् ।
'अस्येति' प्रस्तुतस्यैव धर्मस्यात्र परिग्रहः ; युक्तः स्याद् 'इदमा'ऽऽकर्षः पूर्वमुक्तस्य वस्तुनः ।
कर्त्तव्यत्वेन लोकानां यतः शास्त्रे विधीयते, तस्माद्धर्मो 'विधानं' च प्रोच्यते परमर्षिभिः ।
अर्थः, कामश्च, मोक्षश्च, त्रयं सिध्यति धर्मतः, धर्मस्तु स्वयमेवा;-ऽतः स 'स्वयंभूः' प्रकीर्तितः ।
यथा स्वस्मिन्प्रकाशः सन्नेवाऽन्यार्थप्रकाशकः ; तथा धर्मः स्वयं सिद्धः सन्नेवान्यार्थसाधकः ।
अतस्तस्य स्वयंभुत्वं, पुमर्थत्वं च युज्यते ; साध्य-साधनभेदेन तद्रूपद्वयवर्णनात् ।

उपवर्ण, हो जाते हैं । कुछ टीकाकार, 'अन्तरप्रभव' शब्द से, वर्ण-बाह्य अन्त्यजों का ग्रहण करते हैं; किन्तु वह मनु के मत के विरुद्ध है; क्योंकि मनुजी ने, वर्णान्त्यजों का यथायोग्य चातुर्वर्ण्य में ही संग्रह करके, पञ्चम वर्णका, "नास्ति तु पञ्चमः" इस वाक्य से, निषेध ही कर दिया है ।

अतः मनुष्यमात्र का चार वर्णों मे ही गुण-कर्मानुसार संग्रह हो जाने से, 'वर्ण' और 'मानव', ये दोनो शब्द समानार्थक ऐसे (पर्यायवत्) हैं, और इसी लिये, 'वर्णधर्म' तथा 'मानवधर्म', ये दोनों शब्द भी, अक्षरशः भिन्न होने पर भी तत्त्वतः एकही पदार्थ वा पुरुषार्थ के नाम हैं । अतः इस मानवधर्मशास्त्र मे, जिस 'वर्णधर्म' का साङ्गोपाङ्ग निरूपण हुआ है, वह सर्वतोमुख, सर्वपथीन, और परमोदार 'मानवधर्म' ( मनुष्यमात्र के अभ्युदय और निःश्रेयस का सामान्य साधन ), अत एव अपने नाम मे पूर्ण चरितार्थ है । १–२ ।

मनुस्मृति का यह तृतीय श्लोक बहुत ही प्रसन्न-गम्भीर और विविध तात्त्विक अर्थों का अभिव्यञ्जक है । यहां नीचे इसके तीन मुख्य अर्थ क्रम से लिखे जाते हैं ।

( १ ) धर्मविषयक प्रश्न उठाया गया है, पर उसका समीचीन उत्तर वही दे सकता है, जो धर्मविधायक 'वेद' के 'कार्य-तत्त्वार्थ' ( वेदविहित कर्मों के वास्तविक रहस्य ) का अपरोक्ष अनुभव रखता हो, मनुजी को वैसा अनुभव पर्याप्त है, अतः वह धर्मोपदेश के लिये सर्वथा योग्य और अत्यन्त समर्थ हैं; इस बातको अभिव्यक्त करने के लिये महर्षियों ने उनसे पुनः कहा कि–

'हे प्रभो, आप अकेले इस समस्त 'स्वयंभू' ( अकृत्रिम वा अपौरुषेय ), तथा 'अचिन्त्य' ( विचार शक्ति से परे विद्यमान ); और अप्रमेय' ( इयत्ता से रहित, असीम ) 'विधान' ( धर्म विधायक वेदराशि ) के 'कार्य' ( अनुष्ठेयकर्मरूप ) 'तत्त्वार्थ' ( वास्तविक तात्पर्य ) को, अथवा

---

१४ इतः पूर्वं श्लोकद्वयमधिकं केषुचित्पुस्तकेषु दृश्यते; तद्यथा—

"जरायुजाण्डजानां च, तथा संस्वेदजोद्भिदां, भूतग्रामस्य सर्वस्य प्रभवं प्रलयं तथा,
आचारांश्चैव सर्वेषां, कार्याकार्यविनिर्णयं, यथाकामं, यथायोगं वक्तुमर्हस्यशेषतः" इति ।

※ बौ० ध० सू० १, १, १३ । "शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः, नानाप्रकरणस्थत्वात्सूक्ष्मा दुरनुगा गतिः" इति तट्टीकायामुद्धृतम् ।—।मनु० १२,११३ ।—॥ या० स्मृ० १,९ ।

तत्र कर्ममयो धर्मः साधनात्मा निगद्यते ; साध्यः पुमर्थरूपस्तु "श्रेयोऽभ्युदयलक्षणः" ।
स चा-'ऽचिन्त्यो,-ऽप्रमेयश्च,' चेतसाऽप्यनुभूयते; साक्षाच्च दृश्यते लोके; शास्त्रे च श्रूयते; यथा-
"न कल्माषो, न कपिलो, न कृष्णो, न च लोहितः , अणीयान् क्षुरधारायाः, को धर्मं वक्तुमर्हति ?"
"सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणं;... न धर्मः परिपाठेन शक्यो भारत वेदितुम् ।...
सदाचारो मतो धर्मः, सन्तस्त्वाचारलक्षणाः , साध्यासाध्यं कथं शक्यं? सदाचारो ह्यलक्षणः।...
विद्वश्चैनं, न वा विद्मः, शक्यं वा वेदितुं न वा , अणीयान् क्षुरधारायाः, गरीयानपि पर्वतात् ;
गन्धर्वनगराकारः प्रथमं सम्प्रदृश्यते ; अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ।
निपानानीव गोऽभ्यासे, क्षेत्रे, कुल्ये च, भारत , स्मृतो हि शाश्वतो धर्मो, विप्रहीणो न दृश्यते *"
तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्विदः , दुष्करः प्रतिसङ्ख्यातुं, तत्केनाऽ(तर्केणा)त्र व्यवस्यति†"
"सूक्ष्मो हि भगवान्धर्मः परोक्षो दुर्विचारणः ‡" एवमाद्यनुसन्धेयम् अन्यत्राऽपि स्वयं बुधैः ।
इत्थं च धर्म एवाऽत्राऽचिन्त्यत्वादिविशेषणः द्वितीयश्लोकतो न्यायात् तृतीयेऽप्यनुवर्तते ।
तस्योपदेशसामर्थ्यं त्वेकस्यापि मनोरिति अत्रार्थे दर्शितो हेतुः 'कार्यतत्त्वार्थवित्' पदात् ।
यो हि यदितिकर्त्तव्यं, यद्रूपं, यत्प्रयोजनं , साक्षाद्वेत्ति, स एवार्हः सम्यक्तदनुशासने ।
धर्मस्यासीन्मनुः साक्षात्कार्यतत्त्वार्थवित्तमः ; तस्मात्तदुपदेशोऽपि तद्योग्यत्वं परं मतम् ।
'कार्यं' धर्मेतिकर्त्तव्यं, 'तत्त्वं' तद्रूप-लक्षणम् , 'अर्थस्' तत्साध्यरूपश्च पुमर्थाख्यः-प्रयोजनम् ।
धर्मस्यैतत् त्रयं-कार्यं, तत्त्वम्, अर्थं च,-वेत्ति यः , स एवाध्यात्मवित् सम्यक्कार्यतत्त्वार्थविन्मतः ।
एकस्याऽप्यधिकारोऽस्ति तादृशस्य महात्मनः सर्वमानवधर्माणां यथायोग्यं प्रशासने।
मनोस्तद्वत्त्वमेवात्र दर्शितं परमर्षिभिः , तस्माद्धेतोश्च धर्मेऽपि तस्योपज्ञा समर्थिता ।
अत्र गूढाशयः किञ्चिद्व्यस्यते, धर्मसंशये तद्व्यवस्थापनार्थाय, तत्त्वज्ञानोपपत्तये ।

वेद से विहित तथा निषिद्ध 'कार्य ( कर्त्तव्य और अकर्त्तव्य ) के तात्त्विक रहस्य को यथार्थ रूप से जानते हैं ।'

इस अर्थ में 'विधान' पद से ( विधीयन्तेऽनेन कर्माणीति ) 'वेद' का ग्रहण किया गया है, और 'स्वयंभू' 'अचिन्त्य' तथा 'अप्रमेय,' ये विशेषण उसीमें अन्वित किये गये हैं । मीमांसक लोग वेद को अकृतक मानते हैं, अतः मीमांसापद्धतिवाले टीकाकार, 'स्वयंभू' पद का अर्थ, स्वयं होनेवाला, किसी से रचित नहीं, अर्थात् अपौरुषेय' ऐसा लगाते हैं, और वेद की शाखायें अनन्त हैं, इस लिये उसे अचिन्त्य तथा अप्रमेय भी कहते हैं । मेधातिथि-प्रभृति कई टीकाकारों ने प्रकृत श्लोक का प्रायः ऐसा ही अर्थ लगाया है । यह भी एक प्रकार से ठीक ही है, क्यों कि कामधेनु की तरह वाञ्छित अर्थ प्रदान करने वाली भगवान् मनु की योगमयी वाणी से विद्वानों को विविध अर्थों का भान होना, इस की 'सर्वज्ञानमयता' के अनुरूप ही है; परन्तु निम्न लिखित द्वितीय अर्थ अधिक सयुक्तिक और सुसङ्गत प्रतीत होता है ।

( २ ) महर्षियों ने द्वितीय श्लोक मे मनुजी से वर्णाश्रम धर्म की जिज्ञासा की है, उसी के उपदेश की योग्यता को प्रमाणित करने के लिये यह तृतीय श्लोक कहा है; अतः दोनों की एकवाक्यता से यह अर्थ निकलता है कि "हे प्रभो, आप हमे वर्णों, उपवर्णों और आश्रमों के धर्मों का सदुपदेश देने के योग्य हैं, क्यों कि आप ही इस ( अस्य ) समस्त ( सर्वस्य ) वर्णाश्रम धर्मरूप 'विधान' ( विधीयते कर्त्तव्यतयेति ) के 'कार्य' ( इति कर्त्तव्यता, कर्त्तव्य के प्रकार, अनुष्ठान विधि ), 'तत्त्व' ( स्वरूप ), और 'अर्थ' ( प्रयोजन ) को सम्यक् रूप से जानते हैं"

* म० भा० शां० अ० २६० ।—† म० भा० शां० १०९, ९ ।—‡ ना० स्मृ० १, ४१ ।

स्थूलं, सूक्ष्मं[१५] च, धर्मस्य स्वरूपद्वयमिष्यते; चोदनालक्षणं स्थूलं, सूक्ष्ममध्यात्मलक्षणम्।
इदं कार्यम्, इदं नेति चोदना यस्य लक्षणं, तद् धर्माऽधर्मयोः स्थूलं स्वरूपं सार्वलौकिकम्।
इदं पुण्यम्, इदं पापम्, इत्येतस्मिन्पदद्वये आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् *"
"अष्टादशपुराणेषु व्यासस्य वचनद्वयं,—'धर्मः' परोपकरणम्, 'अधर्मः' परपीडनम्"
पुत्र, सत्यं वदेत्यादिश्चोदना श्रूयते पितुः लोकेऽपि वेदवत्, तस्मादल्पं शास्त्रप्रयोजनम्।
यत्कर्म विहितं शास्त्रे, यन्निषिद्धं च, तद्द्वयं सामान्याद्विदितं लोके, स्थूलरूपं ततः स्मृतम्।
यत्तु सद्बुद्धियोगेन सद्भिरात्मनि लक्ष्यते रूपं तदेव धर्मस्य सूक्ष्ममध्यात्मलक्षणम्।
"इज्याचारदमाऽहिंसादानस्वाध्यायकर्मणाम् अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् †"
सूक्ष्मं धर्मस्वरूपं तु न सुज्ञेयं बुधैरपि; कथं साधारणो लोकस्तद्विज्ञातुं भवेत्क्षमः ?
"सूक्ष्मो धर्मो महाराज, नाऽस्य विद्मो गतिं वयम् ‡" "न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथञ्चन;
अधर्मो, धर्म, इति वा व्यवसायो न शक्यते कर्त्तुमस्मद्विधैर्ब्रह्मन्, अतो नाऽयं व्यवस्यते ¶"
"दुर्ज्ञेयः शाश्वतो धर्मः; स च सत्ये प्रतिष्ठितः; बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम §"
इत्थं धर्मस्वरूपं यत्प्रोक्तं सूक्ष्ममतीन्द्रियं, तत्तु बुद्ध्यैव विज्ञेयं; न शास्त्रात्, न च लोकतः।
बुद्ध्याऽपि सर्वया किन्तु नैव तज्ज्ञायते नृणां; या बुद्धिस्तु तपोरूपा सतां, विज्ञायते तया।
तपश्चाऽध्यात्मविज्ञानं सत्त्वाख्यमिह गृह्यते; न तु कृच्छ्रादिभिः पुंसां शरीरस्य विशोषणम्।
नेदं 'तपः' पदं धातोः सन्तापार्थाद् विवक्षितं, तस्मादनशनादीनां नाऽनेनाऽत्र परिग्रहः।
'तप' आलोचने धातुर, ऐश्वर्ये वा च यः स्मृतः; तस्मात् 'तपः' पदं सिद्धं, तेन ज्ञानार्थकं त्विदम्।
"ब्राह्मणस्य तपो ज्ञानं" वक्ष्यत्येकादशे मनुः; शास्त्रमूलं तदेवेति सूक्ष्मधर्मस्य लक्षणम्।
"प्रजापतिरिदं शास्त्रं तपसैवाऽसृजत्प्रभुः; तथैव वेदानृषयस्तपसा प्रतिपदिरे
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ||" एवं हि तपसः शास्त्रे हेतुत्वं प्रतिपादितम्
"कोऽहं? मोक्षः कथं ? केन संसारं प्रतिपन्नवान् ? इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः 卐"
इत्थं तपोमयं सत्त्वं ज्ञानमध्यात्मसंज्ञितम् एतदेव च धर्मस्य सूक्ष्मरूपस्य लक्षकम्।
इदं कर्म कथं कार्य ? कदा ? केन च ? कुत्र च ? कया रीत्या च ? कस्माच्चेत्यादि तेनैव लक्ष्यते।
"सत्यं वदेति" धर्मस्य स्थूलरूपं विधीयते ; चोदनालक्षणं तद्धि शास्त्राल्लोकाच्च लक्ष्यते।

इस अर्थ मे मूल श्लोक के 'अस्य' पद से साक्षात् प्रस्तुत धर्म का ही निर्देश माना जाता है, 'वेद' की तरह ऊपर से अध्याहार नहीं करना पड़ता। साथ ही 'स्वयंभू' 'अचिन्त्य' और 'अप्रमेय' ये विशेषण भी धर्म में अधिकतर उपयुक्त लगते और वस्तुतः चरितार्थ होते हैं; क्योंकि 'धर्म' स्वयं होकर, धर्मरूप से आत्मलाभ करके ही अन्य पुरुषार्थों का साधन बनता है; अतः

१५ "ब्रूहि धर्मस्वरूपं च सूक्ष्मं, स्थूलं च, विस्तरात्" "धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलं च विस्तरात्" [ परा० स्मृ० १, १८ ] एवमादिभिः शास्त्रवाक्यैः धर्मस्य रूपद्वयं प्रतिपादितम्।

* वाक्यप० ब्र० ४०।—† या० स्मृ० १, ८।—‡ म० भा० आ० १९५, २९।—¶ म० भा० आ० १९६, ११-१२।—§ म० भा० व० २०६, ४२।

"कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो,
नप्तारः किल पञ्च, गोलकसुताः कुण्डाः स्वयं पाण्डवाः;
ते पञ्चापि समानजानय, इदं दुःस्वप्नविध्वंसनं
तेषां कीर्त्तनमामनन्ति मुनयो; धर्मस्य सूक्ष्मा गतिः"
[ सुभाषितावलिधृतं व्यासमुनिवचनम् २०४४ ]

|| मनु० ११, २३५–४३।—卐 परा० मा० १, २३ धृतं स्कान्दवाक्यम्।

सत्यमेव कथं वाच्यं ? किं रूपं ? किं प्रयोजनं ? श्रेयसे चेत् ? कथं तस्य श्रेयःसाधनता मता ?
कदा, केन प्रकारेण, प्रोक्तं; श्रेयस्करं च तत् ? इत्येवं सूक्ष्मधर्मं तु चोदना नैव लक्षयेत्,
नाऽपि साधरणो लोकस्; तस्मात्सोऽध्यात्मलक्षणः; सतामात्मनि संभूतं ज्ञानं तस्य हि लक्षणम्
"न ह्यनध्यात्मवित्कश्चित्"कार्यकारणभावतः कर्मणां फलसम्बन्धं वेत्ति सूक्ष्ममतीन्द्रियम्।
एतेन कर्मणाहीदं फलं साध्यमितीदृशं, क्रियाफलं विजानाति सम्यगध्यात्मवित्तमः।
तस्माद्धर्मस्वरूपं स्यात्सूक्ष्ममध्यात्मलक्षणम्; एतच्च फलसम्बन्धात् 'श्रेयोलक्षण'मुच्यते।
'लक्ष्यते' ज्ञायते येन, तल्लक्षणमुदाहृतं; श्रेयश्च लक्षणं यस्य, तत्-'श्रेयोलक्षणं' मतम्।
यो हि श्रेयस्करः[१६] पुंसां, स धर्म, इति लक्षणात्; श्रेयसा लक्ष्यते धर्मः, 'श्रेयोलक्षण' इत्यतः।
अतः श्रेयस्करत्वं न यावज्ज्ञायेत कर्मणः तावत्तस्य न धर्मत्वं, श्रेयोलक्षणताऽथवा।
कस्याऽपि कर्मणः श्रेयःसाधनत्वं तु तत्त्वतः अध्यात्मविन्महात्मैव ज्ञानयोगेन पश्यति।
शास्त्राद् यज्ज्ञायते श्रेयःसाधनत्वं तु कर्मणः, तच्च शास्त्रकृतो ज्ञानपूर्वमेवेति निश्चयः।
'एतस्मात्कर्मणस्त्वेवं श्रेयः सिध्यति, नाऽन्यथा'; इत्थं साक्षाद्विना ज्ञानं को हि सच्छास्त्रकृद्भवेत्?
कर्मणां फलसम्बन्धमविज्ञाय कृतं तु यत् तमोनिष्ठमसच्छास्त्रं, निष्फलं तदुदाहृतं।
"या वेदबाह्याः स्मृतयो, याश्च काश्च कुदृष्टयः, सर्वास्ता निष्फलाः प्रेत्य,तमोनिष्ठा हि ताः स्मृताः।
उत्पद्यन्ते, च्यवन्ते च,यान्यतोऽन्यानि कानिचित् तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च" ‡;
तस्माद्धर्मस्य यद्रूपं सूक्ष्मं श्रेयोऽभिलक्षणं तज्ज्ञात्वैव प्रकुर्वन्ति शास्त्रमध्यात्मवित्तमाः।
शास्त्रेण सिद्धवत्-श्रेयःसाधनत्वं विधीयते कर्मणां, तेन धर्मस्य स्थूलरूपं प्रसिध्यति।
एतद्विधि-निषेधाभ्यां स्पष्टं स्थूलं च लक्ष्यते, चोदनालक्षणं तेन स्थूलरूपं च कथ्यते।
चोदनालक्षणस्यास्य धर्मस्यैवं व्यवस्थितौ श्रेयोलक्षणधर्मस्य ज्ञानमेव प्रयोजकम्।
न स्वयं मानवाः सर्वे शक्नुवन्ति हि कर्मणां श्रेयःसाधनतां ज्ञातुं; तस्मादध्यात्मवित्तमाः,

---

इसे 'स्वयंभू' कह सकते हैं। किञ्चित् गंभीरता से विचार करने पर यह बात अधिक स्पष्ट हो जायगी।

यहां 'धर्म' पद का प्रयोग अत्यन्त व्यापक अर्थ मे किया गया है, इस मे चातुर्वर्ण्य मनुष्य के साधारण कर्त्तव्य और जीविका-कर्म से ले कर समस्त जगत् के 'कार्य' 'तत्त्व' तथा 'अर्थ' का समावेश हो गया है। अर्थात् मनुष्यों के वैयक्तिक और सामाजिक कर्त्तव्य, तथा जीवन-योनि कर्म, और परलोक साधन; 'धारण' क्रिया वा भाव; 'धृति'-साधन; 'धाता', धारक, वा आधारभूत पदार्थ; 'धृत' वस्तु; और यावदाश्रयभावी गुण [ जो गुण अपने आश्रय ( आधार भूत ) वस्तु मे उस के सत्ताकाल तक विद्यमान रहे, जैसे अग्नि में उष्णता ]; ये सब 'धर्म' पद के अर्थ हैं। अत एव सत्ता, अस्तित्व, जीवन, प्राणधारण, धृति, स्थिति, धाता, धारक, आधार, धात्री, धारणा, और धृत; आदि शब्द 'धर्म' के ही साध्य, कार्य, स्वरूप, भाव, और लक्षण के द्योतक हैं। इस प्रकार का 'धर्म' सुतरां 'स्वयंभू' है, क्यों कि जगत् का 'धारण' और उस के प्रयोजक वा नियामक कर्म, तथा वस्तु के स्वरूपाधायक गुण ( उष्णता-आदि ), ये सब स्वतः संभूत हैं। अब यह कहना शेष नहीं रह गया कि ऐसा 'धर्म' अचिंत्य और अप्रमेय भी है।

---

१६. "एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया ?; उच्यते, य एव श्रेयस्करः, स एव धर्मशब्देनोच्यते;...तेन यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते" [मी० शा० भा० १,१,२]

एतेन सामान्यतो धर्मतया शास्त्रविहितमपि कर्म यदा, केनचिन्निमित्तेन पुंसां श्रेयस्करं न भवति, तदा तदधर्म एव सम्पद्यते; यथा चोरेभ्यो मार्गं प्रदिशतः सत्यवचनमिति सिध्यति। ‡; मनु० १२,९५-९६।

"एकाग्रमनसो, दान्ता, मुनयः संयमे रताः भूत-भव्य-भविष्यज्ञाः, सत्यधर्मपरायणाः,
'इदं श्रेय, इदं ब्रह्म, इदं हितमनुत्तमं, लोकान्सञ्चिन्त्य मनसा,' ततः शास्त्रं§" प्रकुर्वते।
एष साधारणो लोकः सर्वस्तदनुवर्तते। यावन्न क्रियते सद्भिः पुनस्तत्परिवर्त्तनम्।
तस्मात्-शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ¶;" न कार्या-ऽकार्ययोर्धर्मा-ऽधर्मत्वादिविनिर्णये।
यथा राजविधानानि व्यवस्थापकपर्षदि केचिदेव प्रकुर्वन्ति तद्विद्वांसोऽधिकारिणः;
तैरेवार्थे च, कामे च शेषो लोको नियम्यते; दण्ड्यते चाऽन्यथा कुर्वन् यावत्तत्परिवर्त्तनम्।
तथैवाऽध्यात्मविद्वांसः केचित् शास्त्रं प्रकुर्वते; अन्ये तदनुवर्त्तन्ते यावत्तत्परिवर्त्तनम्।
"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः"‖ स स्वेच्छाचारतो भिन्ते सामयाचारिकं विधिम्।
समाजे बहवश्चैवं कुर्युश्चेत्कामकारतः, सद्व्यवस्थाऽपि लुप्येत कार्याकार्यनियामिका।
तस्मात् शास्त्रं प्रमाणं स्याद् आभूयः परिवर्त्तनं चोदनालक्षणे धर्मे; न श्रेयोलक्षणेऽपि तु।
यदा च श्रेयसे नाऽलं पूर्वशास्त्रव्यवस्थितिः देश-कालादिभेदेन, तदा सा परिवर्त्यते
पुनः श्रेयोऽनुरूपैव तत्कालीनैर्महात्मभिः धर्मस्य कार्य-तत्त्वार्थाभिज्ञैस्त्वाध्यात्मविद्यया।
चोदनालक्षणो धर्मः श्रेयोलक्षणवित्तमैः सद्भिः प्रवर्त्यते लोके यथायोग्यं व्यवस्थया।
यो न श्रेयस्करो, यो वाऽप्यननुष्ठानबाधितः, लोकद्विष्टश्च वा धर्मः पुराणोऽपि निवर्त्यते।
यश्च श्रेयस्करो, यश्च भूयःसज्जनसेवितः, प्रवर्त्यते स नव्योऽपि व्यवस्थापूर्वकं बुधैः।
कलिवर्ज्यादि विज्ञेयं भूयश्चात्र निदर्शनम्; इतिहासश्च धर्माणां द्रष्टव्यः प्रत्यक्षमूलकः।
धर्मस्य कार्य-तत्त्वा-ऽर्थज्ञानं यस्मिंस्तु विद्यते, स श्रेयोलक्षणं धर्मं जानात्यध्यात्मवित्तमः;
चोदनालक्षणो धर्मस्तद्वाचमनुवर्तते[१७]; तस्यैव जायते वाचः सच्छास्त्रं च महार्थकम्।

---

किन्तु जगत् के कारण, कार्य, तत्त्व और अर्थ-रूपी विराट् धर्म का निरूपण प्रधानतया वेदान्त वा अध्यात्म शास्त्र मे होता है। धर्मशास्त्र से विशेष रूप से मनुष्यों के वैयक्तिक और सामाजिक कर्त्तव्य, जीविका कर्म, और परलोक साधन का उपदेश रहता है। वर्णाश्रम-धर्म मे इन सब का समावेश है, इस लिये महर्षियों ने तद्विषयक ही प्रश्न किया है।

इस प्रकार के चातुर्वर्ण्य और चातुराश्रम्य के कर्त्तव्यादिरूप मानवधर्म के भी 'स्थूल' और 'सूक्ष्म' ये दो स्वरूप हैं। इन मे स्थूल रूप वह है, जो शास्त्रों के विधि और निषेध से मोटे तौर पर ज्ञात होता है, तथा जो लोक में भी प्रायः प्रसिद्ध है। 'सत्य बोलो', और 'मद्य-पान मत करो' ऐसे विधि-निषेधों से उपदिष्ट धर्म का स्वरूप सहज ही समझ मे आ जाता है, अत एव वह 'स्थूल' है। 'अमुक कर्म कर्त्तव्य है, और अमुक अकर्त्तव्य' यह धर्म का सामान्य वा स्थूल रूप लोक मे भी प्रायः प्रसिद्ध ही है। किन्तु सत्य ही क्यों बोलें ? वह धर्म ही क्यों है, अधर्म क्यों नहीं ? वह स्वरूप से ही धर्म है, वा किसी सुफल का साधन होने के कारण से ?

---

§ म० भा० शां० ३३५, ३१-३२।—¶ भ० गी० १६, २४।—‖ भ० गी० १६, २३।

१७ "सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत;
अत्रा सखायः सख्यानि जानते, भद्रैषां लक्ष्मीर्निहिताऽधि वाचि" [ऋ०सं०१०,७१,२]

"लौकिकानां हि साधूनामर्थं वागनुवर्तते; ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति।...
अविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत्;
भद्रा ह्येषां वाचि लक्ष्मी नैतेवीर्निषिक्ता,ऽचं विप्लुतां व्याहरन्ति"
[उत्तररामचरिते १, १०; तथा ४, १८]

"आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् अतीताऽनागतज्ञानं प्रत्यक्षान्न विशिष्यते।
अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा ये भावान्, वचनं तेषां नाऽनुमानेन बाध्यते" [वा०प० १,३७-३८]

एतादृशो महानात्मा मनु-व्यासाद्युपाधिकः जायतेऽनुयुगं प्रायः प्राणिकारुण्यसंप्लुतः ;
स श्रेयोलक्षणं धर्मं निश्चित्याध्यात्मचेतसा चोदनालक्षणं शास्त्रं निर्मिमीते नृणां हिते।
"उत्सर्गेणा,-ऽपवादेन, ऋषिभिः कपिलादिभिः अध्यात्मचिन्तामाश्रित्य, शास्त्राण्युक्तानि भारत*"
वात्सल्ये परमादर्शो नृणां यस्त्वादिमः पिता सर्वज्ञानमय,स्तस्य सम्बन्धे किमु कथ्यताम्!
चातुर्वर्ण्यं, समाजश्च, तद्राज्यं च सुयन्त्रितं, सर्वं हि यदुपज्ञातं धर्मः, शास्त्रं च मानवम्।
एवं मनसि सञ्चिन्त्य मनुं प्राहुर्महर्षयः— 'त्वमेको ह्यस्य धर्मस्य कार्यतत्त्वार्थवित्' त्विति।
एतद्वेदपरत्वेन योजयन्ति स्म केचन[१८]; 'विधानं' तन्मते 'वेदो', धर्मस्तेन विधीयते।
तस्य चाऽपौरुषेयत्वात् 'स्वयंभुत्वं' वदन्ति ते, तथा चाऽनन्तशाखत्वाद् 'अचिन्त्यत्वा-ऽप्रमेयते'।
तच्चाऽप्येकप्रकारेण युक्तं व्याख्याविकल्पनं ; "सर्वं न्याय्यं युक्तिमत्त्वाद्, विदुषां किमशोभनम्!"
वाञ्छितार्थदुघा दैवी वाङ्मनोः कामधेनुवत्, युज्यते विदुषामस्या नानार्थप्रतिभासनम्।
परं, पूर्वोक्त एवार्थः स्यादत्राऽधिकसङ्गतः, पारम्पर्याऽन्वयात् साक्षात्-श्रूयमाणान्वयो वरम्।
पूर्वं नाऽत्र श्रुतो वेदः, प्रश्नस्य विषयो न सः, अतो धर्मविधायित्वादध्याहार्यस्तदन्वयः।
'पृष्टो धर्मः, परं तं नाऽवेदविद्वक्तुमर्हति, तस्मादेवाऽत्र वेदस्य कार्यतत्त्वार्थवेत्तृता
मनौ प्रदर्श्यते'; ह्येवं पारम्पर्यक्रमान्वयः, 'अस्ये'ति पदयोगोऽपि वेदेऽप्रासङ्गिको भवेत्।
धर्मस्त्वव्यवधानेन पूर्वं पृष्टो महर्षिभिः, तस्यैवा-'ऽस्ये'ति निर्देशः श्रूयमाणस्य युज्यते।
पूर्वत्र प्रस्तुतस्यैव न्याय्यश्चाग्रे समन्वयः, तस्मादत्राऽपि धर्मस्य युक्तं स्यादनुवर्त्तनम्।
तत्त्वतस्तु[१९] तृतीयोऽयं श्लोको व्याख्यायतेऽधुना पूर्वापराऽनुसन्धान-ग्रन्थस्वारस्य-युक्तिभिः।

---

वह जिस फल का साधन वतलाया जाय, उसकी सिद्धि उससे अवश्य होगी, यह निश्चय भी कैसे होगा ? उसका प्रयोग सर्वदा एक रूप से होना चाहिये, वा फलसाधनता के अनुसार ? इत्यादि

---

* म० भा० शां० ३५०, ६।

१८. "त्वमेक इति; त्वमेवैकोऽसहायोऽद्वितीयः, सर्वस्य विधानस्य कार्य-तत्त्वार्थवित्; 'विधानं' शास्त्रं, विधीयतेऽनेन कर्माणीति; तस्य 'स्वयंभुवो' नित्यस्या-ऽकृतकस्या-ऽपौरुषेयस्य वेदाख्यस्य; 'सर्वस्य' प्रत्यक्षाक्षरस्या-ऽनुमेयाक्षरस्य च;...'अप्रमेयस्य' इयत्तया परिमातुमशक्यस्य, अतिमहत्त्वात्; अत एव 'अचिन्त्यस्य';...त्वयैव केवलेनैवंविधो वेद आगमितः, अतस्तस्य यः 'कार्यरूपस्तत्त्वार्थः' तं वेत्सि। 'कार्यम्' अनुष्ठेयमुच्यते; अथवा 'कार्य' शब्दः प्रदर्शनार्थो विधेः, प्रतिषेधस्य च; एतावदेव वेदस्य तत्त्वरूपः पारमार्थिकोऽर्थः;...तस्मात्कार्यरूपो वेदस्य तत्त्वार्थ इति" [ म० मे० १,३ [

अत्र श्रीकुल्लूकभट्टस्तु—'कार्यम्' अनुष्ठेयम्-अग्निष्टोमादि, 'तत्त्वं' ब्रह्म,...तदेव 'अर्थः' प्रतिपाद्यभागः, तं वेत्तीति कार्यतत्त्वार्थवित्" इत्याह।

१९. "अन्ये तु 'त्वमेवैकं' इत्याद्यन्यथा वर्णयन्ति। 'अस्य' इति प्रत्यक्षाऽभिनयेन जगन्निर्दिश्यते। सर्वस्यास्य जगतो यद् 'विधानं' निर्माणं, तत् 'स्वयंभुवः' सम्बन्धि; 'अचिन्त्यम्' अद्भुतरूपं, विचित्रमतिमहत्; 'अप्रमेयं' न शक्यं सर्वेण ज्ञातुं, तथा ऋषिः—

'को अद्धा वेद, क इह प्रवोचत्, कुत आजाता, कुत इयं विसृष्टिः' इति। किमिदं जगत्सर्वमुपादानमपेक्ष्य जायते, उत नैर्माणिकमात्रं, यथा बुद्धस्य दर्शनम्?; किमीश्वरेच्छाऽधीनम्, उत केवलकर्मवशजम्, उत स्वाभाविकमप्रमेयम्?; तथा किं महदादिक्रमेण उत्पद्यते, उत द्व्यणुकादिक्रमेण?; अस्य त्वं कार्यं, तत्त्वम्, अर्थं च वेत्सि। 'कार्यं' महतोऽहंकारः; अविशेषास्तन्मात्राण्यहंकारस्य; तन्मात्राणां विशेषाः पञ्च महाभूतानि; अहंकारस्येन्द्रियाण्येकादश; विशेषाणामपि पिण्डः 'कार्यं' ब्रह्मादिस्तम्बपर्यन्तः। तेषामपि प्रत्ययात् 'तत्त्वं' स्वभावः, यथा महतो मूर्तिमात्रत्वं, प्रधानस्य सर्वस्य विकारावस्था 'महद्' इत्युच्यते, 'प्रकृतेर्महान्' इति, प्रकृतिः प्रधानमित्येकोऽर्थः; अहंकारस्य 'तत्त्वम्' अस्मिप्रत्ययमात्रत्वम्; अविशेषा-

'अस्ये'ति जगतः साक्षाद्दृश्यमानस्य सर्वतः अत्राङ्गुल्येव निर्देशो,"जन्माद्यस्ये"ति सूत्रवत्। ब्रह्मणो "ध्यानिकं सर्वमेवैतद्" जगदस्ति; तत् स्वयंभुवो 'विधानं' च, यतस्तेन विधीयते। 'अचिन्त्यं चा-ऽप्रमेयं च' प्रत्यक्षं दृश्यते जगत्, अतः स्थाने महर्षीणां पृच्छा तद्विषया मनौ ! धर्मो जिज्ञासितः पूर्वं; तत्र शङ्का-विधूननं जगतः कार्य-तत्त्वा-ऽर्थवेत्तैव कर्त्तुमर्हति ; मनोस्तद्वत्त्वमेवाऽत्र दर्शयित्वा महर्षयः धर्मोपदेशयोग्यत्वं बोधयन्तीति सङ्गतिः।

विवेक का विषय ही धर्म का 'सूक्ष्म' स्वरूप है । जो पुरुष धर्म के इस सूक्ष्म स्वरूप को सम्यक् रूप से नहीं जानता, वह उसके स्थूल रूप का सिद्धवत् उपदेश नहीं कर सकता, और नहीं तद्विषयक विधान वा शास्त्र ही बना सकता है । किन्तु सभी लोगों को सूक्ष्म धर्म का साक्षात् ज्ञान होना असंभव है, अतः साधारण जनसमाज के लिये स्थूलतः कर्त्तव्य और अकर्त्तव्य के व्यवस्थापक शास्त्र की आवश्यकता है । ऐसे सच्छास्त्र का निर्माण वही अध्यात्मवित्तम महापुरुष कर सकता है, जो धर्म के सूक्ष्म स्वरूप को जानता हो; उसके कारण, स्वरूप, लक्षण, अनुष्ठान-प्रकार, और श्रेयःसाधनत्व का अपरोक्ष अनुभव रखता हो; अन्यथा उसका बनाया हुआ धर्म-विधान तमोनिष्ठ और असच्छास्त्र, अतएव निष्फल हो जाता है । इसी गूढ अभिप्राय से महर्षियों ने मनुजी को 'धर्म का कार्य-तत्त्वा-ऽर्थवित्' कहकर धर्मशास्त्रोपदेश के अत्यन्त योग्य सूचित किया है ।

प्रकृत श्लोक के पूर्वोक्त दो अर्थ, यहाँ केवल दिक्प्रदर्शन के लिये दिखलाये गये हैं; ऐसे ही मनु के अधिकांश श्लोकों के अर्थ लगाये जा सकते हैं । पर, इस प्रकार के व्याख्यानों मे, बुद्धि-कौशल का परिचय, वा पाण्डित्य का प्रदर्शन चाहे जितना हो; तात्त्विकता, सरलता, स्वरसता और लोकोपयोगिता बहुत कम होती है । अतः आगे दिक्प्रदर्शन के लिये भी ऐसे व्याख्यान नहीं लिखे जायँगे; क्योंकि साधारण जनसमाज के कुछ उपकार की शुभाशा से, प्रायः आर्ष वचनों के द्वारा, परम कारुणिक मनु के लोककल्याणमय सरल भावों का, यथामति सरलतम रूप से, प्रदर्शन करना ही, इस आर्षभाष्य का मुख्य उद्देश्य है । अतः अब नीचे इस ( मनु० अ० १, श्लो० ३ ) श्लोक का भी सरल और तात्त्विक आर्ष भाव प्रदर्शित किया जाता है ।

( ३ ) समीप के दृश्यमान पदार्थ को, वा सामने साक्षात् वर्त्तमान वस्तु को 'इदम्' शब्द से ( 'यह', ऐसा कहकर अंगुली से बतलाने का ) अङ्गुलि-निर्देश करने का व्यवहार लोक मे प्रसिद्ध है । जहाँ कोई विशेष निर्दिश्यमान पदार्थ विवक्षित नहीं रहता, वहाँ यदि शास्त्र मे 'इदम्' शब्द का प्रयोग होता है, तो उससे सामान्यतः सबके सामने प्रत्यक्ष दृश्य 'जगत्' का ही ग्रहण किया जाता है । अतएव सुप्रसिद्ध ब्रह्मसूत्र [ १,१,२ "जन्मादि 'अस्य' यतः" ] मे 'अस्य' इस पद से सबके सामने, सब ओर से साक्षात् दृश्यमान जगत् का ही निर्देश माना गया है । ऐसे ही 'मनु' के इस वाक्य मे भी 'अस्य' पद से 'जगत्' का ही निर्देश है । 'ब्रह्मा' वा 'परब्रह्म' को 'स्वयंभू' भी कहते हैं, यह 'जगत्' उन्हीं का 'विधान' ( कार्य ) है; क्योंकि यह सब, ब्रह्म के ( "तदैक्षत" "सोऽभिध्याय" ) 'ध्यान' से ही विहित हुआ ( बना ) है ।

णामविशेषप्रत्ययसंवेद्यत्वमिति । 'अर्थः' प्रयोजनं, पुरुषार्थमिदं वस्तु अनेन प्रकारेण पुरुषायोपयुज्यते, इमं चार्थं साधयति ।...यद्वस्तु प्रमाणषट्कस्याऽप्यविषयः, तदपि त्वमार्षेण चक्षुषा वेत्सि; धर्मः पुनर्वेदगोचरः, सोऽवश्यं त्वया विज्ञात इत्येवं प्रकृतविषयैव प्रवक्तृप्रशंसा । एवं स्तुत्या प्रोत्साहितो जगन्निर्माणमेव तावद्वक्ति 'आसीदिदमिति' इति" [ प्राचीनव्याख्यानोद्धरणं मे० ति० ]

प्रश्नवाक्ये यद् 'अस्ये'ति पदान्निर्दिश्यते जगत् , तदेवोत्तरवाक्येऽपि प्रत्यक्षम् 'इदमा' स्मृतम् । 'अचिन्त्यस्या-ऽप्रमेयस्य सर्वस्यास्य, स्वयंभुवः दृश्यमानविधानस्य, जगद्रूपस्य, हे प्रभो, त्वमेको ह्यसि याथार्थ्यात्कार्यतत्त्वार्थवित्तमः ; तस्माद्वर्णादिधर्माणां मूलतत्त्वोपपत्तये जगतः कार्य-तत्त्वा-ऽर्थानपि नो वक्तुमर्हसि ।' इत्थं प्रश्ने महर्षीणां, यन्मनोरुत्तरं, ततः "आसीदिदं तमोभूतं" 'जगद्' इत्येव बोध्यते । प्रश्ने, तस्योत्तरे, चैवमेकस्य जगतोऽन्वयात् , उभयोरेकवाक्यत्वं, तुल्यार्थत्वं च, जायते । प्रश्नोत्तरविरोधस्य या [२०]शङ्कोत्प्रेक्षिताऽपरैः , न साऽप्यत्र प्रसज्येत, पूर्वापरसमन्वयात् । धर्मतत्त्वाऽवबोधार्थं जगज्ज्ञानमपेक्ष्यते , अतस्तद्विषयोऽपीह कृतः प्रश्नो महर्षिभिः । किं कार्यं? किञ्च वा तत्त्वं? कश्चार्थो? जगतस्त्विति प्रश्नोऽपि सूचितः स्पष्टं 'कार्य-तत्त्वा-ऽर्थवित्'-पदात् । अस्यैव पञ्चमश्लोकादुत्तरं प्रकृताऽनुगम् आरब्धमिति नास्तीह पूर्वापरविरोधिता । संसारगतयः 'कार्यं'; तासां च नियम-क्रमौ ;

---

इस जगत् की सीमा, इयत्ता, वा परिच्छेद नहीं है, अतः इसे 'अप्रमेय' तथा 'अचिन्त्य' ( विचार शक्ति से अगम्य ) भी कहते हैं । ऐसे जगत् के 'कार्य' ( महदादि-क्रम से पदार्थों की उत्पत्ति, नाना योनियो में जीवोंका संसरण, और जड़ तथा चेतन वस्तु की प्रवृत्ति वा निवृत्ति के नियम और क्रम ), 'तत्त्व' ( स्वरूप, स्वभाव, वस्तुधर्म वा रहस्य ), और 'अर्थ' ( प्रयोजन, पुरुषार्थ-साधनत्व ) को जो सम्यक् रूप से नहीं जानता है ( इनका अपरोक्ष अनुभव नहीं रखता है ), वह धर्मोपदेश करने के योग्य नहीं होता । धर्म का साधन और इसका फल भी जगत् मे ही होता है, एवं यह सारा जगत् 'पुरुषार्थ' ( पुरुष, जीव के लिये ) है, अतः यह जानना नितान्त आवश्यक है कि, जगत् की कौन वस्तु, किस रूप से, पुरुषार्थ के उपयुक्त होती, और किस प्रकार से कैसे प्रयोजन को सिद्ध करती, है । जगत् के, ऐसे प्रयोजन वा 'अर्थ' को, तत्त्वतः जानने के लिये, उसके 'कार्य' और 'तत्त्व' का ज्ञान होना अपरिहार्य रूप से अपेक्षित है । जो स्वयं यह नहीं जानता कि यह दृश्य जगत् वस्तुतः क्या है ? इसका मूल कारण क्या है ? इसकी उत्पत्ति किस क्रम से हुई है ? कार्य-कारण का परस्पर सम्बन्ध क्या और कैसे है ? जगत् के पदार्थों मे जो नियम और क्रम देखे जाते हैं, उनका कारण, प्रयोजन, रहस्य और नियामिका शक्ति क्या है ? संसार की गतियाँ ( जन्म-मरण आदि ) क्यों, कब से, और कब तक चलनेवाली हैं ? दुःख और उसके कारण क्या हैं ? उसकी ऐकान्तिक तथा आत्यन्तिक निवृत्ति कैसे हो सकती है ? सुख और उसका साधन क्या है ? हम स्वयं क्या हैं, कहाँ से आये और कहाँ जायँगे ? जीवन और मरण का रहस्य क्या है ? प्रवृत्ति, निवृत्ति, बन्ध, मोक्ष, कर्त्तव्य और अकर्त्तव्य कौन से पदार्थ हैं ? इत्यादि; वह सद्धर्म का सदुपदेश नहीं कर सकता है । पर, मनुजी के विषय में क्या कहना है, जो मनुष्य-वंश के कर्त्ता ही नहीं, प्रत्युत मानवधर्म-कर्म और 'शास्त्र' के भी आदिम प्रवर्तक ( प्रयोक्ता और उपज्ञाता ) माने जाते हैं, और जिन्होंने ही सर्व प्रथम मानवराज्य तथा वर्णाश्रम

---

२०. "क्व अस्ताः, क्व निपतिताः; शास्त्रोक्तनिपतितधर्मान्पृष्टः, तानेव वक्तव्यतया प्रतिज्ञाय, जगतोऽव्याकृताऽवस्थावर्णनम् अप्रकृतम् , अपुरुषार्थं च; सोऽयं सत्यो जनप्रवादः 'आम्रान्पृष्टः, कोविदारानाचष्ट' इति" [ म० मे० १, ५ ]

"धर्मे पृष्टे, मनुर्ब्रह्म जगतः कारणं ब्रुवन् , आत्मज्ञानं परं धर्मं वित्तेति व्यक्तमुक्तवान् ; प्राधान्यात्प्रथमाध्याये साधु तस्यैव कीर्त्तनं , धर्मोऽन्यस्तु तदङ्गत्वाद्युक्तो वक्तुमनन्तरम्" [ म० मु० १, ५ ]

स्वरूपं वा, रहस्यं वा, जगतस्तत्त्वमिष्यते ; 'अर्थो'जीवोपभोगो, वा तत्सर्गादेः'प्रयोजनम्' । जगतः कार्य-तत्त्वा-ऽर्थ-त्रयं ज्ञात्वैव धर्मवित् वस्तुतः स्याद्, अतः पूर्वं तदेवाग्रे निरूप्यते ।३।

**( आद्यश्लोकत्रयस्य श्रीभगवद्दासाचार्यैः पिण्डीकृतः सारार्थः )**

आद्यश्लोकत्रयस्यास्य पूर्वोक्तस्य, मनुस्मृतेः बीजभूतस्य, सारार्थः पिण्डीकृत्य प्रदर्शितः
आचार्यभगवद्दासैः श्लोकवद्वस्तु यः स्वयं; सोऽपीह लिख्यते स्पष्टं तात्पर्यप्रतिपत्तये ।
'मनु'-शब्दस्त्वनेकार्थः; 'मंत्रो'ऽपि मनुरुच्यते, मननात् त्रायते यस्मात्; तथैवाद्यः 'प्रजापतिः';
यस्यान्ववाये संजाताः पृथिव्यां सर्वमानवाः । अभिधानेन तेनैव 'परमात्मापि' कीर्त्यते;
यथा, "एके तं वदंत्यग्निं, 'मनु'मन्ये प्रजापतिम्, इन्द्रमेके, परे प्राणम्, अपरे 'ब्रह्म' शाश्वतम्,
प्रशासितारं सर्वेषाम्, अणीयांसमणोरपि, रुक्माभं स्वप्नधीगम्यं तं विद्यात् पुरुषं परम्" (म०)
मनुस्तु मननाद्यस्मात्, 'मन' एव मनुस्ततः; सङ्कल्पश्च विकल्पश्च मनसो धर्म उच्यते ।
बुद्धिः पितामही तस्य, पिताऽहङ्कार एव च । 'प्रधान'जं बुद्धितत्त्वं, 'महत्तत्त्वं' यदुच्यते

समाज का संस्थापन और संचालन किया था । इसीलिये महर्षियों ने कहा कि "हे प्रभो, आप ही 'स्वयंभू' ब्रह्म के इस 'विधान' जगत् के 'कार्य' 'तत्त्व' और 'अर्थ' को सम्यक् रूप से जानते हैं", अतः हमे वर्णाश्रम धर्म का उपदेश दीजिये ।३।

आरम्भ के तीन श्लोकों का—जिनका सभाष्य उल्लेख अव्यवहित पहले हो चुका है, और जो ही इस मानव धर्मशास्त्र के मूल आधार-स्वरूप हैं—पिण्डीकृत ( एकत्र बंधा हुआ ) सार ( निचोड़ ) अर्थ, स्वयं श्री भगवान् दासजी ने संस्कृत श्लोकों में, दिग्दर्शनार्थ लिख दिया है । मानव-'आर्ष'-भाष्य के आर्ष भाव को, वास्तविक रूप से, समझ लेने के लिये, वे श्लोक यहाँ अविकल उद्धृत कर दिये हैं । वस्तुतः, इन कतिपय श्लोकों मे सम्पूर्ण मनुस्मृति के बीजमन्त्र का सङ्केत है ।

श्री भगवान् दासजी ने, इन श्लोकों के अभिप्राय का, ( अर्थात् "कर्मणा वर्णः" और "वयसा आश्रमः" के सिद्धान्त का, तथा, इन सिद्धान्तों के उचित उपयोग से, मानवजीवन सम्बन्धी सब प्रश्नों का उत्तरण कैसे हो सकता है, इसका ), विस्तार, अपने, संस्कृतपद्यबद्ध ग्रन्थ "मानव-धर्म-सार" मे कर दिया है; किंतु वह ग्रन्थ निवन्धरूप है; मनुस्मृति के श्लोकों के अनुक्रम से भाष्य के रूप मे नहीं है । इस लिये यह ग्रन्थ, 'मानव-आर्ष-भाष्य', ऐसे मनु-श्लोका-ऽनुक्रमी भाष्य के रूप मे लिखा गया है । आर्ष 'भाव' प्राणियों के प्रति कारुण्यमय और परम उदार होते हैं; अतः उन मे स्वभाव से ही स्वप्रकाशता और स्पष्टता रहती है; फिर भी उन की दूरूहता कम नहीं होती । ऐसे ही, आर्ष 'वाक्य' भी, एक अंश मे सरल सुवोध और प्राञ्जल होते हैं, दूसरे अंश मे गूढार्थ भी; एक ओर 'प्रसन्न' भी, दूसरी ओर 'गम्भीर' तथा दुर्वोध भी । श्री भगवान् दासजी के 'मानव-धर्म-सार' ग्रन्थ मे वहुत से आर्ष श्लोकों का उद्धरण, तथा उनके कुछ गूढार्थों का विवरण, तथा वर्त्तमान मानवजीवन सम्बन्धी प्रश्नों के उत्तरण के लिये, आर्ष-सिद्धान्तों के प्रयोग का प्रकार, दिखाया गया है । श्री भगवान् दासजी के जो श्लोक यहाँ उद्धृत किये हैं, उनका भाव, इस 'मानव-आर्ष-भाष्य' के पूर्व-गत संस्कृतभाष्य और हिन्दी सार मे आ गया है, जो ध्यान से मिला कर पढने पर स्पष्ट प्रतीत होगा; इस लिये यहाँ अलग नहीं लिखा जाता । श्री भगवान् दासजी ने, अपने अन्य ग्रन्थों मे, जो हिन्दी और अंग्रेजी भाषा मे लिखे हैं, वर्णाश्रमात्मक 'मानव' समाज-व्यवस्था का, विस्तार से प्रतिपादन किया है ।१-३।

सांख्येषु; प्रकृतिश्चापि प्रधानमिति कथ्यते ; प्रकृतिः पुरुषस्यैव सार्विकी परमात्मनः।
"मनो,महान्,मति,र्ब्रह्मा,पू,र्बुद्धिः,ख्याति,रीश्वरः,विष्णुः,शम्भु,रहंकारः",इति पौराणिकी प्रथा(वा०)
क्रियात्मकं मनो यस्मिन्, उत्कृष्टं बुद्धिरक्षितं, सर्वज्ञानमयं, सर्वलोकप्रियहिते रतं,
व्यापके सर्वजगतः परमात्मनि निष्ठितम ; एतादृशस्य मनसः साक्षान्मूर्तिर्भवेत्तु यः,
प्रजानामपि वात्सल्ये पितृवन्मातृवच्च यः ; मानवस्यास्य वंशस्य, देशे काले च कुत्रचित्,
प्रवर्त्तको भवेद् यश्च, ज्येष्ठः श्रेष्ठः प्रजापतिः ; सोऽपि जीवो 'मनुः' प्रोक्तः पुण्यो योगसमाधिमान्।
अधिकारिपदस्यैतन् नाम जातीयमुच्यते ; व्यक्तेरपि पदस्थस्य परमोत्कर्षभागिनः,
अध्यात्मज्ञाननिष्ठस्य सर्वमान्यस्य सर्वदा। 'आधिकारिक' जीवास्तु वेदान्ते सन्ति वर्णिताः,
बहवो मनवः प्रोक्ताः पुराणेषु पुनः पुनः, ज्यायांसश्च, कनीयांसः, येऽधीना उत्तरोत्तरम्।
ज्ञानवृद्धं वयोवृद्धं सर्ववन्द्यं पितामहम् आर्यावर्ते 'मनुं' जग्मुरीदृशं तु महर्षयः।
शुश्रूषवः पूर्वकाले 'धर्मान्' लोकस्य धारकान्; तादृशानां च धर्माणां सुप्रयोगेण, सर्वतः
'व्यवस्थापयितुं' सर्वान् समाजे संकुलान् जनान्। 'ऋषन्ति' यन् 'महत्सत्त्वं', सज्ज्ञानं प्राप्नुवंति यत्,
सर्वसंग्राहकं शुद्धं, ततस्ते हि महर्षयः'। 'ऋच्छन्ति' परमात्मानं जगतो व्यापकं विभुम्,
आत्मवत्सर्वभूतानम्, अतो ये शुभकांक्षिणः, स्वस्तिमन्तो योगसिद्धास्ततस्ते हि महर्षयः।
पर'ब्रह्मणि' असंख्येया 'ब्रह्माण'स्तु स्वभावतः प्रजायंते स्पंदमयाः ऊर्मयोऽम्बुनिधाविव।
चितेश्चित्तान्यनन्तानि, ब्रह्माणो ब्रह्मणोऽद्वयात् उद्भवन्ति स्वयं यस्मात्तस्मात्ज्ञाताः 'स्वयम्भुवः'।
ब्रह्माणो ननु यावन्तस्तावन्त्येव जगन्त्यपि ; जगन्ति सन्त्यणोरन्तर्जगदन्तस्तथाणवः।
'ब्रह्मणा' 'बुद्धि'रूपेण सर्वमेतद् 'विधीयते' ; जगतो 'बृंहणाद् ब्रह्मा,' विस्तारणविवर्धनात्,
आधानादस्य 'धाता' स्यात्, 'स्रष्टा' चापि तु सर्जनात्, नियमानां विधानाच्च 'विधाता' 'विधि'रुच्यते।
इत्थं भगवतो माया, नितरामसती सती, त'त्स्वभाव'कृतानेव नियमान्नातिवर्तते।
नूनं मायामयास्तेहि नियमा अपि, किन्तु ते नातिक्राम्याः कथंचिच्च कदाचित् केनचित्कचित्।
बन्धमोक्षौ च जीवानां नित्यं तदनुसारिणौ; पूर्वं बन्धः, ततो मोक्षः; क्रमः पूर्वं, ततोऽक्रमः।
निष्क्रिये निष्क्रमे योऽयं त्रिकालक्रमविभ्रमः, स एवायं 'अविद्या'ऽख्यः; 'विद्या' नैष्क्रम्यमिष्यते।
उभयोर्यस्तु पर्यायः, 'स्वभावः' 'प्रकृति'श्च सः। "मन्वंतराण्यसंख्यानि, सर्गः, संहार एव च,
क्रीड़न्निवैतत्कुरुते परमेष्ठी पुनः पुनः" ( मनुः )
ईदृशस्य विधानस्याप्रमेयस्य स्वयम्भुवः अचिंत्यस्याऽप्रतर्क्यस्य 'कार्यतत्त्वार्थविन्' न यः;
'कोऽहं, कथमिहायातः, कस्माद्, गन्ताऽसि कुत्र वा? किमेतत् सकलं दृश्यं, किमर्थं, केन निर्मितम्?
किं जीवितं, किं मरणं, किं दुःखं, किं सुखं, तथा कस्माद् दुःखं, कथं हेयं, कथं मे स्यात्सुखं सदा?
तथा ऽन्येषां च सर्वेषां, किं कार्यं परमं हि नः?' इति सर्वं हि यो जीवो नैव विन्दति तत्त्वतः;
स कथं मनुजानन्यान् कल्याणमुपदेक्ष्यति ; प्रवृत्तेश्च निवृत्तेश्च नियमान् यो न वेत्ति, सः
कथं दुःखार्णवे जीवान् निमग्नानुद्धरिष्यति। येन केन परेशेन चक्रमेतत् 'प्रवर्तितम्',
संसारस्य विधिज्ञो यः सो 'ऽनुवर्तयितुं' क्षमः ; सर्वसंधारकं धर्मं, दुःखेभ्यः सर्व-'तारकम्,
सर्वमेतद् विजानाति, समस्तं व्यस्तमेव च, सविशेषं ससामान्यं, सकलं भगवान् मनुः।
कार्यतत्त्वप्रवेत्तारं, प्रवक्तारं, प्रभामयम्, महर्षयोऽतः पृच्छन्ति सर्वज्ञानमयं मनुम्।
"प्रवृत्तिं च, निवृत्तिं च, कार्याकार्ये, भयाभये, बन्धं, मोक्षं च, या वेत्ति; बुद्धिः सा ह्येव सात्त्विकी।
यया धर्ममधर्मं च, कार्यं चाऽकार्यमेव च अयथावत् प्रजानाति, बुद्धिः सा खलु राजसी।
अधर्मं धर्ममिति या मन्यते तमसावृता, सर्वार्थान् विपरीतांश्च, बुद्धिः सा ननु तामसी।
प्रवृत्तिंच निवृत्तिं च, जना न विदुरासुराः ; असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत्कामहैतुकम्। एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः,
कामोपभोगपरमा एतावदिति निश्चिताः, ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्।

कामामाश्रित्य दुष्पूरं दंभलोभमदान्विताः, मोहाद् गृहीत्वाऽसद्ग्राहान् क्रामक्रोधपरायणाः, प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः'' (गी०)
वेदान्तवाह्याः स्मृतयः, याश्च काश्च कुदृष्टयः, उत्पद्यन्ते च्यवन्ते ताः वर्षर्त्ताविव छत्रकाः।
''प्रत्यक्षं, चानुमानं च, शास्त्रं च विविधागमं, त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता।
धर्मं वुभुत्समानानां प्रमाणं परमं श्रुतिः'' (म०) श्रुत्यर्थं ज्ञातुकामानाम् आत्मज्ञानं परायणम्।
शास्त्रमेव प्रमाणंस्यात्कार्याऽकार्यविनिश्चये; (गी०) किंतु किं नःप्रमाणं स्यात् शास्त्राऽशास्त्रविनिर्णये?
सर्वगुह्यतमं शास्त्रं गुह्याद्गुह्यतरं पुनः, (गी०) हृन्मूर्धा सर्वशास्त्राणाम्, अध्यात्मं शास्त्रमिष्यते;
अर्जुनाय कुरुक्षेत्रे गीतं भगवता स्वयम्। ''न ह्यनध्यात्मवित्कश्चित् क्रियाफलमुपाश्नुते;
सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च;'' (म०) सर्वलोकाधिपत्यं वाऽप्याऽऽत्मशास्त्रविदर्हति।
''अनाम्नातेषु धर्मेषु कथं स्यादिति चेद् भवेत्,'' यं ब्रूयुः ब्रह्मतत्त्वज्ञाः स धर्मः स्यादशंकितः।
''धर्मेणाधिगतो यैस्तु वेदः सपरिवृंहणः। (म०) ते शिष्टा'' ब्रह्मतत्त्वज्ञाः श्रुतिप्रत्यक्षहेतवः,
सर्वं प्रत्यक्षतः कृत्वा श्रुतं दर्शयितुं क्षमाः। ''दशावरा वा परिषत् यं धर्मं परिकल्पयेत्,
त्र्यवरा वाऽपि वृत्तस्था सम्यगध्यात्मवेदिनाम्; विचालयेन् न तं धर्मं; एको वाऽध्यात्मवित्तमः*''
एवं तु कार्यतत्त्वज्ञो विधानस्य स्वयंम्भुवः, अध्यात्मविद्वरिष्ठो यः स धर्मान् वक्तुमर्हति।१-३।

## मनोरुत्तरप्रतिज्ञानम्

**स तैः पृष्टस्तथा सम्यग् अमितौजा महात्मभिः, प्रत्युवाचार्च्य तान्सर्वान्महर्षीन्, श्रूयतामिति।४।**

त्रिश्लोक्या मानवान्धर्मान्वर्णधर्मात्मकान्, तथा जगतः कार्यतत्त्वार्थान्, मनुः पृष्टो महर्षिभिः;
तुर्य्येण प्रतिजानीते श्लोकेनाऽत्र तदुत्तरं, श्रूयतामित्युपक्रम्य तदेवाग्रे भविष्यति।
'सम्यग्' विनीतभावेन, 'तथा-'इत्युक्तप्रकारतः पृष्टस्, तान्प्रत्युवाचेति कर्त्तव्यं पदयोजनम्।
'ओजो'ऽभिधानसामर्थ्यं, तच्च यत्राऽतिमात्रकं, सो-'ऽमितौजा' महातेजा, ज्ञानदानक्षमो मनुः।
सदा परार्थकारी यः, स महात्मोच्यते नरः; तत्त्वादेव महर्षीणां प्रष्टृत्वं न विरुध्यते।
तस्मादेव च तानार्च्य प्रत्युवाच मनुः स्वयम्, अन्यथा न गुरोर्युक्तं विनेयप्रतिपूजनम्।
नन्वेतस्याः स्मृतेः कर्त्ता स्वयं चेद्भगवान्मनुः, 'स पृष्टः प्रत्युवाचेति' कथं संगच्छते वचः?
'प्रत्यब्रवमहं पृष्टो' वक्तव्यमिति साम्प्रतम्। अत्रोच्यते; महात्मानः प्राञ्चः शास्त्रकृतः स्वकं
मतं परापदेशेन प्रायशो ब्रुवते; यथा मीमांसादौ विनिर्देशो जैमिन्यादेः परोक्तवत्।
किं वा मनूक्तशास्त्रस्य वक्तुरेतद्वचो भृगोः; स श्रावयितुमायुक्तः स्वशास्त्रं मनुना स्वयम्
वस्तुतस्तु मनुप्रोक्तं मूलशास्त्रं पुरातनम् आश्रित्य संहिताश्चक्रुस्तच्छिष्या नारदादयः।
''भार्गवीया, नारदीया, वार्हस्पत्या, ऽऽङ्गिरस्यपि, स्वायंभुवस्य शास्त्रस्य चतस्रः संहिता मताः''†
''तस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयं,
स्वायंभुवेषु धर्मेषु शास्त्रे चौशनसे कृते, वृहस्पतिमते चैव लोकेषु प्रतिचारिते‡''
इत्थं मानवशास्त्रार्थे चतस्रः संहिताः स्मृताः, तासामन्यतमा चेयं भार्गवीया मनुस्मृतिः।
अन्यास्तिस्रस्तु नेदानीं स्युरुपलम्भगोचराः; भूयस्तूद्धरणं तासां प्राचां ग्रन्थेषु दृश्यते।
व्यवहारांशमात्रेण नारदीयोपलभ्यते; वार्हस्पत्या-ऽऽङ्गिरस्यौ च राजधर्मांशमात्रतः।
ता इमा मानवे शास्त्रे याः कृता नारदादिभिः; तासामेवांशभूताः स्युर्, अन्या वे, ति न निश्चयः।

आरंभ के तीन श्लोकों मे महर्षियों के प्रश्न की चर्चा हुई है, इस चौथे श्लोक मे उसी के उत्तर देने की प्रतिज्ञा मनु जी करते हैं; आगे के श्लोकों मे इसी की चर्चा होगी।

* ( मनु० या० स्मृ० ) † हेमा० भा० २ दा० खं० प्र० ७ पृ० ५०९। ‡ म० भा० शां० ३३५-४४-४६।

या चैषा भार्गवीयाऽपि प्रायः पूर्णोपलभ्यते , साऽपि प्रक्षेपकैः, पाठाऽशुद्धिभिश्च समाकुला । ये चाऽन्यधर्मशास्त्रेषु, पुराणादिषु, चोद्धृताः , मनुश्लोका, न ते सन्ति प्रायेणाऽस्यां मनुस्मृतौ । तस्मादेषाऽपि सम्पूर्णा भार्गवी मनुसंहिता मूलभूता तु नैव स्याद्, इति निःशङ्कमुच्यते । मानवे कल्पशास्त्रे यद् धर्मसूत्रं च मानवम् आसीत्, तत्तु चिरादेव नामशेषमभूद्भुवि । अथाऽप्यत्राऽवशिष्टायां भार्गवीयमनुस्मृतौ क्षेपका-ऽशुद्धपाठैश्च मिथोव्याहतिभिस्तथा सङ्कीर्णायामपि, व्याप्तं मूलशास्त्रं च मानवं क्षीरे नीरविमिश्रेऽपि सर्वशो नवनीतवत् । तद्विवेको मनोयोगात्पूर्वापरसमीक्षया विद्वद्भिः शक्यते कर्त्तुं, हंसैः क्षीरविवेकवत् । एवं विकृतरूपायामप्यस्यां भूयसी स्थिता लोकोपकारिता, तस्मादद्याऽपीयं समादृता । तन्मनूक्ताऽनुवक्तुः स्याद्भृगोः शिष्यस्य कस्यचिद् उक्तिः—'स'''प्रत्युवाचे'ति,तस्मान्नेयं विरुध्यते।

"महर्षियों द्वारा विनीत भाव से, आदर-सत्कार-पूर्वक, पूछे जाने पर, उपदेश देने की अप्रमित योग्यता रखनेवाले मनु जी ने, उन लोकोपकारी महात्माओं का प्रत्यभिवादन कर के, कहा कि सुनिये" ।

पहले यह कहा गया है कि धर्मादि का अत्यन्त अपरोक्ष ज्ञान रखने वाले ही 'महर्षि' कहलाते हैं, अतः उन का प्रश्न करना अपने धर्मज्ञान के लिये नहीं, किन्तु लोकोपकार के लिये है; अत एव मनु जी ने उन का प्रति-पूजन किया; अन्यथा शिष्य की पूजा करना गुरु का कर्त्तव्य नहीं है । अथ च, यवीयान् के अभिवादन का भी, ज्यायान् को प्रति-अभिवाद-रूप उत्तर देना आवश्यक है ।

यहां यह शङ्का सहज ही उठती है कि, जब कि यह 'स्मृति' मनुकृत है, तब 'महर्षियों से पूछे जाने पर ( सः ) उन्होंने ( मनुजी ने ) कहा' यह कथन कैसे सङ्गत है ? अपने लिये 'उत्तम पुरुष' अहं ( मैं ) का प्रयोग होता है, 'अन्य पुरुष' 'सः' ( वह ) का नहीं । मनु के अन्य टीकाकारों ने यह शङ्का उठाई है, और अपने विचार के अनुसार समाधान भी किया है । पर, इस मे कोई रहस्य की बात नहीं है; पूर्वाचार्यों की प्रायः यह शैली देखी जाती है कि वे अपने ग्रन्थ मे स्वमत का उल्लेख अपने को अन्य पुरुष की तरह प्रयुक्त कर के करते हैं । मीमांसा, वेदान्त आदि दर्शन मे, और इतिहास-पुराणों में ऐसे प्रयोग बहुत मिलते हैं । इस के अतिरिक्त, मनुस्मृति के अनुवक्ता 'भृगु' हैं, इस का उल्लेख इस ग्रन्थ मे ही कई जगह स्पष्ट है, अतः उन्हों ने ही मनु जी को लक्ष्य कर के उपर्युक्त प्रयोग किया होगा ।

वस्तुतः तो यह साक्षात् मनुकृत मूल ग्रन्थ नहीं है; मूल मानवधर्मशास्त्र के आधार पर भृगु, नारद, बृहस्पति, और अङ्गिरा ने पृथक् पृथक् चार संहितायें बनाई थीं, जिन मे यह मनुस्मृति 'भार्गवीया मनुसंहिता' प्रधान है । अन्य तीन संहिताओं का चिरकाल से सर्वथा विलोप हो गया है, उन के नाम और बहुत से उद्धरण इतिहास-पुराणों मे और प्राचीन भाष्य, टीका, निबन्धों मे मिलते हैं । एक 'नारदीयमनुसंहिता' उपलब्ध है, पर वह 'व्यवहार'निरूपक अंशमात्र है । शुक्र, बृहस्पति, और अङ्गिरा के नाम से भी कुछ ग्रन्थ उपलब्ध हैं, इन मे 'शुक्र-नीति' और 'बार्हस्पत्य अर्थशास्त्र', प्रायः राजधर्मविषयक हैं; अङ्गिरा की एक छोटी 'स्मृति' है । यह कहना असंभव है कि ये ग्रन्थ, मूल मनु के आधार पर लिखी गईं, उपर्युक्त संहिताओं के ही अंश हैं, वा स्वतंत्र रचित ।

यह भार्गवीयमनुसंहिता ही प्रायः सम्पूर्ण मिलती है; पर यह भी प्रक्षिप्त श्लोकों से और अशुद्ध तथा स्वतो व्याहत पाठों से विगुण हो गई है । अन्यान्य धर्मशास्त्रों मे और इतिहास

धर्मान्महर्षिभिः पृष्टः स्वयं स्वायंभुवो मनुः अब्रवीत् सारतः पूर्वं मौखिकं; तदनन्तरं भृगुं तद्विस्तराऽऽख्यानेन्ययुङ्क्तात्मसमं मुनिम् ; "एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः" । अतश्चाग्रे महर्षीणां सम्वादो भृगुणा समं ; "श्रुत्वैतानृषयो धर्मान्ज्ञातकस्य यथोदितान्, इदमूचुर्महात्मानमनलप्रभवं भृगुम्;... स तानुवाच धर्मात्मा महर्षीन्मानवो भृगुः" तन्नाम्नैवोपसंहारः शास्त्रस्यान्ते च दृश्यते, "इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्" इति । तस्मात्संक्षेपतः पूर्वं मनूक्तं, भृगुणा पुनः श्रावितं विस्तरादेतद्धर्मशास्त्रं क्रमागतं, भृगोः शिष्य-प्रशिष्येण केनचिद्वा श्रुतर्षिणा ग्रन्थित्वा कालतः श्लोकैः स्याल्लोकेषु प्रवर्तितम्। सर्वेषां वेदशास्त्राणामुत्पत्सावयमेव हि क्रमो विज्ञायते; प्राह यास्काचार्योऽपि, तद्यथा—
"साक्षात्कृतधर्माण ऋषयो बभूवुः; तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः; उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ( निघण्टु ) ग्रन्थं समाम्नासिषुः, वेदं च वेदाङ्गानि च । 'बिल्मं' भिल्मं ( वेदानां भेदनं, भेदो व्यास इत्यर्थः' दु० वृ० ) भासनमिति वा" [ नि० १, २० २ ]
"अविभागाद्धिवृत्तानामभिख्या स्वप्नवच्छ्रुतौ ; भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो, विहिता स्मृतिः"*
"अत्राह नित्यमेवाऽयमागमः सम्प्रवर्तते, आर्षज्ञानाऽवबुद्धो वा पूर्वं भवति कस्यचित् ; ततस्तेनाऽपरेभ्योऽसौ शिष्येभ्यः प्रतिपाद्यते, तैरप्यन्येभ्य, इत्येवं शिष्याचार्यपरम्परा प्रवृत्ता तावदेवास्ते, यावदाभूतसंप्लवम् ।

पुराणों मे, यहाँ तक कि मध्यकालीन भाष्य-टीका-निबन्धों मे भी, जो मनु के श्लोक उद्धृत हैं, उनमें से अधिकतर, वर्त्तमान मनुस्मृति मे नहीं मिलते हैं । अतः यह निःसन्देह कहा जा सकता है कि यह भार्गवी मनुसंहिता भी मूल मनुस्मृति का अविकल प्रतिसंस्करण नहीं है । मानव कल्प-शास्त्र के अन्तर्गत जो 'मानवधर्मसूत्र' ग्रन्थ था, वह तो अज्ञात काल से विलुप्त हो गया है । फिर भी जो यह भार्गवीया मनुस्मृति शेष रह गई है, इस मे यद्यपि समय समय पर बहुत से क्षेपक श्लोक और परस्पर व्याहत अशुद्ध पाठ मिल गये हैं, तथापि मूल मानवधर्म-शास्त्र भी सम्पूर्णतया ओत-प्रोत है । अत्यन्त मनोयोग से, सम्यग्ध्यान पूर्वक, पूर्वापर ग्रन्थ की समीक्षा करने से, मूलांश का विवेक विद्वानों को स्पष्टतया हो सकता है । पर ऐसा विवेक करना अत्यन्तश्रमसाध्य है; फिर भी वह विविक्त ग्रन्थ, सर्वमान्य होगा, वा नहीं, इस मे भी सन्देह है; अतः क्षीर-नीरवत् मिश्रित यह यथोपलब्ध मनुस्मृति ही उपादेय और आर्षवाक्योपबृंहणरूप शर्करा ( शक्कर, खाँड़ ) के साथ सेवनीय है; क्यों कि इस मे, अब भी, अत्यन्त लोकोपकार के अपेक्षित सदुपदेश विद्यमान हैं । इसी लिये, इस विकृत रूप मे भी, इस का समादर लोक मे आज तक होता आया है । अस्तु, यहां कहना यह है कि, मनुप्रोक्त मूल शास्त्र के आधार पर, उस के अनुवक्ता भृगु के किसी शिष्य ने जो संहिता ग्रथित की, उसमें मनुजी के लिये प्रथम पुरुष का प्रयोग होना असङ्गत नहीं है ।

महर्षियों के पूछने पर, पहले मनु जी ने स्वयं ही साररूप से धर्म का मौखिक उपदेश किया; अनन्तर उस का सविस्तर वर्णन सुना देने के लिये, अपने समान सुयोग्य शिष्य भृगुजी को नियुक्त कर दिया । उन्हों ने भी स्यात् मौखिक ही धर्म का वर्णन किया । इस प्रकार महर्षियों के साथ भृगुजी के परस्पर प्रश्नोत्तर-सम्वाद से मानवधर्म का जो सिद्धान्त निश्चित हो गया और शिष्य-प्रशिष्यपरम्परा से प्रवर्त्तमान रहा, उसे ही कालक्रम से, आवश्यकता को देख कर, वा

* वाक्य० ब्र० कां० १४५ ।

पुनः सृष्टौ ततः कश्चिदादावार्षाच्च दर्शनात् नित्यं दृष्ट्वाऽऽगमं साक्षाच्छिष्येभ्यः प्रतिपादयेत्
असाक्षात्कृतधर्मभ्यस्, तेऽपरेभ्यो यथाविधि उपदेशेन सम्प्रादुर्मन्त्रान् ब्राह्मणमेव च ;
अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः ;
प्रथमाः प्रतिभानेन, द्वितीयास्तूपदेशतः, अभ्यासेन तृतीयास्तु वेदार्थं प्रतिपेदिरे।"

**तस्मान्मनूक्तशास्त्रेऽस्मिन्, भृगुणा श्राविते पुनः, तच्छिष्यादिनिबद्धे च परोक्तिर्न विरुध्यते ।४।**

विलुप्त हो जाने के भय से, उन के ही शिष्य-सम्प्रदाय के किसी महात्मा ने, अथवा दूसरे श्रुतर्षिने, श्लोकबद्ध शास्त्र के रूप मे ग्रथित कर के लोक मे प्रचलित कर दिया होगा ।

सभी वेद-शास्त्रों की उत्पत्ति का क्रम प्रायः ऐसा ही सुना जाता है। 'निरुक्त' नामक वेदाङ्ग के कर्त्ता महर्षि यास्क ने अपने ग्रन्थ मे 'पुरातत्त्व' का एक वचन-सन्दर्भ उद्धृत किया है, उस से यह स्पष्ट प्रतीत होता है कि अति प्राचीन काल मे वेद, निघण्टु, और अन्यान्य वेदाङ्गों की उत्पत्ति उपर्युक्त क्रम से ही हुई थी। अर्थात् पुराकल्प के कुछ महर्षियों ने अध्यात्मयोग से, वा तपोबल से, स्वयं धर्म का साक्षात्कार किया, अथवा उन के विशुद्ध हृदय में वेद ( ज्ञान ) का स्वतः उदय ( प्रादुर्भाव ) हुआ ‡। इसे ही 'मन्त्रदर्शन' कहते हैं। मन्त्रद्रष्टा महर्षि लोग उन ऋषियों को, जो स्वतः मन्त्रदर्शन नहीं कर सकते थे, मौखिक उपदेश द्वारा ज्ञान प्रदान करते रहे और वही परम्परा बहुत काल तक चलती रही। चिर काल के बाद, जब अधिक से अधिक लोगों में ऋषिदृष्ट धर्म के प्रचार की आवश्यकता उत्पन्न हो गई और मौखिक प्रचार में विशेष कठिनाई और असुविधा प्रतीत होने लगी, तब नियमित और सुव्यवस्थित 'उपदेश' ( प्रचार ) की चिन्ता से प्रेरित हो कर अन्याऽन्य श्रुतर्षियों ने वेद, निघण्टु, और वेदाङ्ग शास्त्रों का ग्रन्थरूप मे प्रणयन किया।

यही बात इस मानवधर्मशास्त्र के विषय मे भी चरितार्थ है, अतः इस मे 'महर्षियों द्वारा पूछे जाने पर ( स तैः पृष्टः ) मनुजी ने कहा' इत्यादि परवत् निर्देश असङ्गत नहीं है ।४।

---

जगत् मे ही, तथा जीवों और जगत् के सम्बन्ध से ही, धर्म और अधर्म उत्पन्न होते हैं; यह जगत् ही धर्म और अधर्म का कारण भी है, तथा कार्य भी; उन का नियामक, साधन, और बहुत अंश मे साध्य भी यही है; धर्म और अधर्म के प्रयोग तथा फलभोग भी जगत् मे ही होते हैं। अतः धर्मविषयक वास्तविक ज्ञान के लिये महर्षियों ने मनुजी से जगत् के कार्य, तत्त्व, और अर्थ की जिज्ञासा की है, उसी के उत्तर मे मनुजी जगत् की अव्याकृत ( सृष्टि से पहले की ) अवस्था का वर्णन करते हैं।

† वाक्यपदीय ( १, १४५ ) टीकायां धृतम्।

‡ "ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि,
एतान्यपश्यन्गुरवः पुराणाः, स्वान्येव तेजांसि तपोमयानि"
इति उत्तररामचरितोक्तिः ( ६, १५ ) प्रसङ्गान्तरे प्रयुक्ताऽपीह संगच्छते।

४

२१आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ।५।

जगतः कार्य-तत्त्वा-ऽर्थान्धर्मोऽधर्मप्रयोजकान् पूर्वं जिज्ञासितान्वक्तुं तत्प्राग्रूपं निरूप्यते। 'इदं' प्रत्यक्षनिर्देशो जगतस्, तद्विशेषणं तमोभूतादि-सुप्तान्तम्;'आसीद्' इति क्रियापदम्। अक्षरार्थोऽस्ति सुस्पष्टो, दुर्बोधस्तु तदाशयः, सृष्टेः प्राक्कालिकं नैव जगद्रूपं सुनिश्चितम्। जगतोऽव्याकृताऽवस्था नैकरूपा निरूपिता; नाऽस्य सृष्टेः क्रमोऽप्येको; नैकतत्त्वं च कारणम्। "ब्रुवन्ति शङ्करं केचिन्मत्वा कारण-कारणम्। अन्ये विष्णुं स्तुवन्त्येनं सर्वेषां प्रभुमीश्वरम्। धातारं च तथा चाऽन्ये ब्रुवन्ति सृष्टिकारणम्। दिनेशं प्रवदन्त्यन्ये; वासवं च शतक्रतुम्। वरुणं च, तथा सोमं, पावकं, पवनं तथा, यमं, कुबेरं धनदं, गणाऽधीशं तथाऽपरे। भवानीं केचनाचार्याः प्रवदन्त्यखिलार्थदाम् आदिमायां महाशक्तिं प्रकृतिं पुरुषाऽनुगां ब्रह्मैकतासमापन्नां सृष्टिस्थित्यन्तकारिणीं मातरं सर्वभूतानां देवतानां तथैव च। निरञ्जनं निराकारं निर्लेपं निर्गुणं किल अरूपं व्यापकं ब्रह्म प्रवदन्ति मुनीश्वराः। वेदोपनिषदि प्रोक्तस्तेजोमय इति क्वचित्। सहस्रशीर्षा पुरुषः सहस्रनयनस्तथा सहस्रकरकर्णश्च सहस्रास्यः सहस्रपात्। विष्णोः पादमथाकाशं परमं समुदाहृतम्। विराजं विरजं शान्तं प्रवदन्ति मनीषिणः। पुरुषोत्तमं तथा चान्ये प्रवदन्ति पुराविदः। नैकोऽपीति वदन्त्यन्ये प्रभुरीशः कदाचन। अनीश्वरमिदं सर्वं ब्रह्माण्डमिति केचन; न कदाऽपीशजन्यं, यद्, जगदेतदचिन्तितम्; सदैवेदमनीशं च, स्वभावोत्थं सदेदृशम्। अकर्त्ताऽसौ पुमान् प्रोक्तः; प्रकृतिस्तु तथा च सा; एवं वदन्ति सांख्याश्च मुनयः कपिलादयः। एते सन्देहसन्दोहाः प्रभवन्ति, तथाऽपरे" [ दे० भा० स्कं० ३, अ० १ ]
एवं नानामतं सृष्टेः स्वरूपे, च प्रयोजने—"विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः; स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता; इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः;

"सृष्टि से पहले यह जगत् अन्धकारमय, और अत्यन्त अज्ञात था; क्योंकि इस का कोई भी 'लक्षण' चिह्न वा स्वरूप नहीं था; अत एव तर्क शक्ति से परे, ज्ञान का भी अविषय, और सब ओर से 'प्रसुप्त' निश्चेष्ट की तरह था।"

मूल श्लोक का यह अक्षरार्थ बहुत सुगम है, पर उस का आशय अत्यन्त दुरूह है; क्योंकि सृष्टि से पहले जगत् का रूप कैसा था, और इस का मूल कारण कौन सा तत्त्व था; यह बात आज तक विवादास्पद और अनिश्चितसी है। वेदों मे जगत् की प्रागवस्था का वर्णन, और इस के मूल कारण का जो निर्देश है, वह एक प्रकार का नहीं है; सृष्टि के क्रम, तथा आरंभक तत्त्वों और पद्धतियों ( सृष्टि-प्रक्रियाओं ) के विषय मे भी परस्पर विरुद्धवत् नाना वाद उल्लिखित हैं। वेदों के विभिन्न

२१. अयं (मनु० १, ५) श्लोकः बौद्धदार्शनिकप्रवरेण श्रीकमलशीलेन तत्त्वसंग्रहपञ्जिकायां (का० ३११८) 'स्मृतिकार'वचनतया धृतः; श्रीसुरेश्वराचार्येण च बृहदारण्यकभाष्यवार्तिके ( पृ० ४८७ ), श्रीसायणाचार्येण तैत्तिरीयब्राह्मण ( २, २, ९, १ ) भाष्ये, अन्यत्र च स्वकीयवेदभाष्यादिषु, अन्यैश्च बहुभिर्मूल-भाष्य-टीका-निबन्धादिग्रन्थकारैर्यथाप्रसङ्गं स्वस्वग्रन्थेषु बहुत्र प्रमाणतया समादृतो दृश्यते।
"इह हि भगवान्मनुः प्रथमं सर्वभूताऽनुग्रहार्थमाचारस्थितिहेतुभूतं शास्त्रं चकार......अत्राऽयमाद्यः श्लोकः—
आसीदिदं तमोभूतं, न प्राज्ञायत किञ्चन; ततः स्वयंभूर्भगवान् प्रादुरासीच्चतुर्मुखः" [ना० स्मृ० १, ५]
"अव्यक्ते पुरुषं याते, पुंसि सर्वगतेऽपि च, तम एवाऽभवत्सर्वं, न प्राज्ञायत किंचन"
[ म० भा० शां० ३४६, १६ ]
"आसीदेकार्णवं घोरमविभागं तमोमयं शान्तवातादिकं सर्वं, न प्राज्ञायत किञ्चन" [कौर्मे पूर्वविभागे ६, १]

कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः; भोगार्थं सृष्टिरित्यन्ये, क्रीड़ार्थमिति चाऽपरे, देवस्यैष स्वभावोऽयम्, आप्तकामस्य का स्पृहा" [ गौडपा० का० १, ७-९ ]
सद्, असत्, तम, आपो वा, त्रिगुणं, ब्रह्म, कर्म वा, आत्मा, हिरण्यगर्भो वा प्रागासीदिति वेदवाक्[22]

वाक्यों द्वारा सद्, असत्, तमस्, 'आपः' ( जल ), त्रिगुण, ब्रह्म, कर्म, 'आत्मा, और हिरण्यगर्भ, आदि नाना तत्त्वों को सृष्टि से प्राक्कालीन और जगत् का उपादान कारण बतलाया गया है।

२२. "सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयं; तद्धैक आहुर्—'असदेवेदमग्र आसीदेकमेवाऽद्वितीयं, तस्मादसतः सज्जायत'; कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथमसतः सज्जायेतेति; सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं; तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत; तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत;...ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति, ता अन्नमसृजन्त;" [ इत्यादि छा० उ० ६, २-६ ]

"असदेवेदमग्र आसीत्; तत्सदासीत्तत्समभवत्, तदाऽण्डं निरवर्तत; तत्सम्वत्सरस्य मात्रामशयत, तन्निरभिद्यत; ते आण्डकपाले रजतं च सुवर्णं चाऽभवताम्। तद् यद्रजतं सेयं पृथिवी, यत्सुवर्णं सा द्यौः, यज्जरायु ते पर्वता, यदुल्वँ स मेघो नीहारो, या धमनयस्ता नद्यो, यद्वास्तेयमुदकं स समुद्रः" [ छा० उ० ३, १९, १-२ ]

"असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्; अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति; तस्यैष एव शारीर आत्मा,...सोऽकामयत 'बहु स्यां प्रजायेयेति'; स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च; तत्सृष्ट्वा तदेवानुप्राविशत्।...

असद्वा इदमग्र आसीत्, ततो वै सदजायत; तदात्मानं स्वयमकुरुत, तस्मात्सुकृतमुच्यते; यद्वैतत् सुकृतम्" [ तै० उ० २, ६-७ ]

"ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्;
देवानां पूर्व्ये युगेऽसतः सदजायत" [ ऋ० सं० १०, ७२, २ ]

"नाऽसदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्;
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्।
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः;
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास।
तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्;
तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम्।
कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्;
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा।
तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरि स्विदासीत्;
रेतोधा आसन् महिमान आसन् स्वधा अवस्तात् प्रयतिः परस्तात्।
को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः;
अर्वाग्देवा अस्य विसर्जनेनाथ को वेद यत आबभूव।
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न;
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद।" [ऋ० सं० मं० १० सू० १२९]

"किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत्;
यतो भूमिं जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः।
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात्;
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः।

आकाशादि-क्रमात्सृष्टिर् आत्मनो ब्रह्मरूपिणः ; महदादिक्रमाच्चोक्ता प्रधानात्त्रिगुणात्मनः ;

ऐसे ही सृष्टि के क्रम भी नाना प्रकार के लिखे हैं, यथा ( १ ) आत्मरूपी मूल ब्रह्म से ही क्रमशः आकाश, वायु, अग्नि, जल, पृथिवी, ओषधियां, अन्न, और पुरुष की उत्पत्ति हुई [ तै० उ० २, १ ]; ( २ ) पर ब्रह्म से, पहले, क्रमशः तेज, जल, और पृथिवी ( अन्न ), यही तीन

किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ;
मनीषिणो मनसा पृच्छतेदुतद्यदध्यतिष्ठद्भुवनानि धारयन्" [ऋ० सं० मं० १० सू० ८१]

"यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ;
यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या ।
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ;
कंस्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ।
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ;
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः" [ऋ० सं० मं० १० सू० ८२]

"आपो वा इदमग्रे सलिलमासीत्, तेन प्रजापतिरश्राम्यत्, कथमिदं स्यादिति" [तै० ब्रा० १, १, ३, ५]

"आत्मा वा इदमेक एवाग्र आसीत्, नाऽन्यत्किञ्चन मिषत्, स ईक्षत, लोकान्नु सृजा इति; स इमाँल्लोकानसृजत, अम्भो मरीचिर्मरमापः" इत्यादि ऐ० उ० १, १-२ ।

"यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत" [ कठ० ४, ६ ]

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ;
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"
इत्यादिकं ( ऋ० सं० मं० १० सू० १२१ ) द्रष्टव्यम् ।

"ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत;...सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"
[ ऋ० सं० १०, १९०, १-३ ]

"आत्मैवेदमग्र आसीत्" इत्यादि बृहदारण्यके १, ४, १-३ ।

"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः
अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः ;
स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" [श्वे० उ०]

"महतः परमव्यक्तमव्यक्तात्पुरुषः परः; पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" [कठ० ३, ११]

"अथाऽन्यत्राप्युक्तं, यः कर्त्ता, सोऽयं वै भूतात्मा, करणैः कारयिताऽन्तःपुरुषोऽथ यथाऽग्निनाऽयः-पिण्डो वाऽभिभूतः कर्त्तृभिर्हन्यमानो नानात्वमुपैति, एवं वाव खलु असौ भूतात्मा अन्तःपुरुषेणाऽभिभूतो गुणैर्हन्यमानो नानात्वमुपैति; अथ यत् त्रिगुणं चतुरशीतिलक्षयोनिपरिणतं भूतत्रिगुणमेतद्वै नानात्वस्य रूपं, तानि ह वा इमानि गुणानि पुरुषेणेरितानि चक्रमिव चक्रिणेत्यथ यथाऽयःपिण्डे हन्यमाने नाऽग्निरभिभूयति, एवं नाऽभिभूयत्यसौपुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति ।...

तमो वा इदमेकमग्र आस, तत्पश्चात्तत्परेणेरितं विषमत्वं प्रयाति, एतद्वै रजसो रूपं; तद्रजः खल्वीरितं विषमत्वं प्रयाति एतद्वै तमसो रूपं; तत्तमः खल्वीरितं तमसः संप्रास्रवति, एतद्वै सत्त्वस्य रूपं; तत्सत्त्वमेवेरितं तत्सत्त्वात्संप्रास्रवत्, सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः सङ्कल्पाऽध्यवसायाऽभिमान-लिङ्गः प्रजापतिः; तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति; अथ यो ह खलु वावाऽस्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा, अथ यो ह खलु वावाऽस्य तामसोंऽशोऽसौ स योऽयं रुद्रः, अथ यो ह खलु वावाऽस्य सात्त्विकोंऽशोऽसौ स एव विष्णुः" [ मैत्रा० उ० प्रपा० ३-४ ]

अद्भ्यश्च, तेजसः, शब्दब्रह्मणः प्रणवात्मनः क्रमात्सृष्टौ प्रवर्तन्ते वेदवादाः पृथग्विधाः ;
परस्परस्य संभूतिः श्रूयते च परस्परात् ; पित्रोः स्वपुत्रजन्यत्वं तत्राऽपि परमाद्भुतम् २२ (क)

तत्त्व उत्पन्न हुए, पश्चात् उन के मिश्रण से जगत् के सब पदार्थ बने [ छा० ६, २-६ ]; ( ३ )
पहले 'आपः' ( जल ) की उत्पत्ति हुई [ ऋ० सं० १०, ८२, ६; तै० ब्रा० १, १, ३, ५;

"ओमित्येदक्षरमिदं सर्वं, तस्योपव्याख्यानं--भूतं भवद् भविष्यद्, इति सर्वमोङ्कार एव; यच्चाऽन्यत्त्रिकालातीतं, तदप्योङ्कार एव" [ माण्डू० उ० १ ]

"सर्वस्य प्रणवो ह्यादिर्, मध्य,मन्तस्तथैव च" [ गौ० पा० का० १,२७ ]

"आदि-मध्या-ऽन्ता उत्पत्ति-स्थिति-प्रलयाः सर्वस्यैव" इत्यादि तत्रत्यं शाङ्करभाष्यम् ।

"प्रणव-ब्रह्मणोरैक्यं वाच्य-वाचकभेदतः , सूते स मात्रिकं विश्वं शब्दमेकाक्षरो मनुः ;
यतश्चेमानि भूतानि, जीवन्ति च यतः पुनः , प्रलीयन्ते यतो यस्मिं,स्तद्ब्रह्मेति विदुर्बुधाः ;
शक्तिरूपसमाधारे कार्यं तिष्ठति कारणे , ततोऽवस्थान्तरं प्राप्य बहिरन्वेति पूर्ववत् ;
शब्दब्रह्म, परं ब्रह्म, द्वयं वै विश्वकारणम्" [ बृ० ब्र० सं० ६, ४१–४४ ]

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं, विवर्ततेऽर्थभावेन, प्रक्रिया जगतो यतः" [वाक्यप० १, १]

बौद्धदार्शनिकशिरोरत्नायमानेन श्रीशान्तरक्षितेन स्वकीये 'तत्त्वसंग्रहे' एतस्या हरिकारिकाया अर्थः स्वोपज्ञकारिकया ( का० १२८ ) इत्थमनूक्तः—

"नाशोत्पादासमालीढं ब्रह्म शब्दमयं परं यत्, तस्य परिणामोऽयं भावग्रामः प्रतीयते" इति ।
'परम्' इति प्रणवात्मकं, प्रणवो हि किल सर्वेषां शब्दानां सर्वेषां चार्थानां प्रकृतिः" इति श्रीकमलशीलकृता तत्रत्या पञ्जिका ।

"सूक्ष्मार्थेनाप्रविभक्ततत्त्वामेकां वाचमनभिष्यन्दमानाम्
उतान्ये विदुरन्यामिव च एनां नानारूपामात्मनि संनिविष्टाम् ।
त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ।
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनं विवृतं शब्दमात्राभ्य,स्तास्वेव प्रविलीयते"
[ वाक्यप० १, १ स्वोपज्ञवृत्तौ धृतम् ]

"शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः , छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत"
[ वा० प० १, १२० ]

"इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं, तस्मादिमे नाम-रूपे विषूची,
नाम प्राणाच्छन्दसो रूपमुत्पन्न,मेकं छन्दो बहुधा चाकशीति ।
वागेव विश्वा भुवनानि जज्ञे, वाच इत्सर्वममृतं यच्च मर्त्यम्,
अथेद्वाग्बुभुजे, वागुवाच, पुरुत्रा वाचो न परं यच्चनाह ।
विभज्य बहुधाऽऽत्मानं स च्छन्दस्यः प्रजापतिः छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ।
साध्वी वाग्भूयसी येषु पुरुषेषु व्यवस्थिता अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ।
प्राजापत्यं महत्तेजस्तत्पात्रैरिव संवृतं शरीरभेदे विदुषां स्वां योनिमुपधावति ।
यदेतन्मण्डलं भास्वद् धाम चित्रस्य राधसः , तद्भावमभिसंभूय विद्यायां प्रविलीयते"
[ वाक्यपदीये ( १, १२० ) ऋग्वर्ण-पुराकल्पवचनानि ]

२२ (क). "क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः ;
यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः" [ ऋ० सं० १०, ५४, ३ ]

इयमृग् 'इन्द्रः स्वपितरौ स्वकीयायास्तनोरजीजनद्' इति सुव्यक्तमभिधत्ते ।

एवमेव 'अदितेर्दक्षोऽजायत, दक्षाच्चादितिरिति' देवानामन्योन्यस्मादुत्पत्तिरपि श्रूयते—

आरम्भात्, परिणामाच्च, विवर्त्ताज्जगदुद्भवः नैयायिकादिभिस्तैस्तैरप्रतिष्ठैः समर्थ्यते ;
एवं पौराणिका वादाः श्रूयन्ते बहुरूपिणः जगतः सृष्टि-संहारा-ऽनाद्यनन्तत्ववर्णकाः २२(ख)।

ऐ० उ० १, १, २ ], अनन्तर उस से सारा जगत उत्पन्न हुआ; ( ४ ) उस जल मे एक 'अण्ड' ( ब्रह्माण्ड ) उत्पन्न हुआ, उस से 'ब्रह्मा' निकला, और उसने सम्पूर्ण विश्व की सृष्टि की [ छा०

"भूर्जज्ञ उत्तानपदो, भुव आशा अजायन्त , अदितेर्दक्षो अजायत, दक्षाद्वदितिः परि"
[ ऋ० सं० १०,७२,४ ] इति।

अत्र "आदित्यो 'दक्ष' इत्याहुः, आदित्यमध्ये च स्तुतः; अदितिः 'दाक्षायणी'; तत्कथमुपपद्येत ? समानजन्मानौ स्यातामिति। अपि वा देवधर्मेण इतरेतरजन्मानौ स्यातामितरेतरप्रकृती" इति निरुक्तम् ( ११,२३,२-४ )

२२ ( ख ). यद्यपि सर्वेषां पुराणानामुपपुराणानां च मुख्यः प्रथमश्च प्रतिपाद्यः 'सर्ग' एव, अतः सर्वेषु पुराणोपपुराणेषु महाभारतादीतिहासेषु च विशिष्टा सृष्टिवादाऽध्यायास्तज्जिज्ञासुभिः सम्यगनुसन्धेया एव सन्ति; तथापि विशेषतोऽस्मिन्विषयेऽधस्तान्निर्दिष्टानि पुराणादिस्थलानि द्रष्टव्यानि—

( a ) अग्निपु० अ० १७, अत्रत्याः ६–१० श्लोकाः मनोः १, ८–१३ श्लोकसदृशाः सन्ति; अग्निपु० अ० २०, अत्र प्राकृत-वैकृतादिसर्गभेदाः प्रदर्शिताः।

( b ) कूर्मपु० पूर्वविभागे अ० ४–१०, अत्र जगतः सृष्टेः प्राक्कालिकाऽवस्थावर्णनपूर्वकं सोपपत्तिकं प्राकृतादिसर्गनिरूपणं, महदादि-विशेषान्तेभ्योऽण्डोत्पत्तिः, तत्र हिरण्यगर्भस्य जन्म, तेन च जगन्निर्माणं, ब्रह्म-नारायणादिशब्दनिर्वचनं चेत्येवमादयो विषयाः प्रतिपादिताः, मनोः सृष्टिप्रकरणस्था बहवः श्लोका गर्भीकृताश्च ।

( c ) गरुडपु० पूर्वखण्डे अ० ४, अत्राऽनादिनिधनाऽनन्तपुरुषोत्तमादव्यक्तादिक्रमेणाण्ड–हिरण्यगर्भोत्पत्तिः, ततश्च प्राकृतादिसर्गवर्णनं वर्तते ।

( d ) दे० भा स्कं ३, अ० १–७, तथा स्कं० ९ अ० १–३; अत्र तृतीयस्कन्धे साम्याऽवस्थमायोपाधिकब्रह्मणो भगवतीपदवाच्याद् ब्रह्म-विष्णु-रुद्राणां, गौरी-लक्ष्मी-सरस्वतीनां च उत्पत्तिः, भगवत्यैव तासां तेभ्यः प्रदानं चाऽभिहितं, तत्स्वसृष्टिनिरूपणं च सुनिपुणं कृतं; नवमस्कन्धे तु ब्रह्मवैवर्तान्तर्गतप्रकृतिखण्ड इव गोपालसुन्दरीरूपश्रीकृष्णमूर्तेर्ब्रह्मादीनां गौर्यादीनां चोत्पत्तिः, श्रीकृष्णेनैव तेभ्यस्तासां शक्तीनां प्रदानं, श्रीकृष्णचिच्छक्त्या राधया डिंभो( अंड )त्पादनं ब्रह्माण्डगोलके जले तत्प्रक्षेपश्च, ततो विराडादिक्रमेण ब्रह्मण उत्पत्तिः, ततो विश्वसृष्टिश्चेत्यादिकमुक्तम् ; प्रकृति-कृष्णशब्दयोः समीचीनं निर्वचनं च कृतम् ।

( e ) नरसिंहपु० अ० १—५, अत्राऽपि 'अण्ड'कथादिपूर्वकं नवधासृष्टिवर्णनम् ।

( f ) पद्मपु० आदिखं० अ० २; सृष्टिखं० अ० २ श्लो० ८३-११७

( g ) ब्रह्मपु० अ० १, अत्राऽपि ३७–४१ श्लोका मनोः १, ८–१३ श्लोकसदृशा एव सन्ति ।

( h ) ब्रह्मवै० पु० ब्रह्मखंड० अ० ३–७; प्र० खं० अ० १–३, अत्रत्यः सर्वोऽपि ग्रन्थसन्दर्भः अध्यायतः शब्दानुपूर्वीतश्च देवीभागवतनवमस्कन्धेन भूयसा समानो दृश्यते ।

( i ) श्रीमद्भागवतपु० स्कं० २ अ० ५–६ तथा १०; स्कं० ३ अ० ५–१०; स्कं० ११, अ० २४ ; अत्र यथाप्रसङ्गं सर्वेषां सृष्टिप्रस्थानभेदानां सुनिपुणं निरूपणं, विभिन्नदृष्ट्या तया तया द्वारा साधुत्वेनाऽभिमतानां तेषां नानामतानां वेदान्तानुसारतः समन्वयप्रदर्शनं च सोपपत्तिकं सुष्ठुतरं कृतमस्तीति जिज्ञासुभिः प्रत्यक्षमेव दृश्यम् ।

( j ) मत्स्यपु० अ० २, अत्रत्याः २५–२९ श्लोकाः मनोः १, ५–९ श्लोकैः किञ्चित्पाठभेदेन सादृश्यं भजन्ते; अस्मिन्नेवाध्याये आदित्य-ब्रह्मणोरेकत्वं, तन्नाम( आदित्य-ब्रह्म-मार्त्तण्डादि )निर्वचनं च

उ० ३, १९, १-२; मनु० १, ८-१०]; (५) अथवा वही ब्रह्मा ( पुरुष ) अपने शरीर के अर्धभाग

कृतं दृश्यते । मत्स्यपु० अ० ३, अत्र ( श्लो० १४-२९ ) गुणत्रयोद्देशपूर्वकं प्रकृतिलक्षणाऽभिधानं, सांख्याऽनुमतप्रक्रियया जगत्सृष्टिवर्णनं च द्रष्टव्यम् ।

( k ) मार्कण्डेयपु० अ० ४७-४८ तथा अ० १०१-३; अत्राऽपि 'अण्ड'कथा, तत्र ब्रह्मण आविर्भावः, ततश्च सकाशात् प्रणव-व्याहृति- वेदानां विश्वस्य चोत्पत्तिरभिहिता ।

( l ) लिंगपु० पूर्वभागे अ० ७०, अत्र सविस्तरमादिसर्गवर्णनं, "मनो महान्, मतिर्ब्रह्मा" इत्यादिवायुपुराणवन्निरुक्तप्रदर्शनं, स्थाने स्थाने बहूनां सृष्टिप्रकरणीयमनुश्लोकानां क्रोडीकरणं च दृश्यते; 'अण्ड'कथाऽन्यपुराणवदत्राऽपि विद्यत एव ।

( m ) वायुपु० प्रक्रियापादे अ० ३-६, अत्र सांख्यवेदान्तप्रक्रियासमन्वयपूर्वकं वैज्ञानिकं सृष्टितत्त्वकथनं, ब्रह्मादिपदनिर्वचनम्, 'अण्ड'रहस्यार्थसूचनं चेत्यादिकं निपुणतरमुपपादितं दृश्यते ।

( n ) विष्णुपु० अं० १, अ० २, अत्र 'वासुदेव'पदनिरुक्ति( श्लो० १२ )पूर्वकं प्रकृतेः स्वरूपलक्षणं, प्रलयकाले ( सृष्टेः पूर्वं ) जगतस्तत्र सूक्ष्माऽव्यक्तरूपतया ( अव्याकृतनाम-रूपात्मकतया ) अवस्थानं, ततः परस्य ब्रह्मणः ( परमात्मनः ) प्रकृतिं-पुरुषक्षोभकत्वं, तया च द्वारा महदादिक्रमेण महाभूत-पर्यन्तं जगद्व्यञ्जनं, ततो महदादिविशेषान्तसङ्घातैरण्डोत्पादनं, तत्र च विष्णोरेव ब्रह्म( हिरण्यगर्भ )-रूपेणावस्थानं, ततस्तन्निर्भिद्य निर्गतेन ब्रह्मणा समस्तभौतिकविश्वनिर्माणं चेत्यादयो विषयाः सम्यङ्निरूपिताः सन्ति । सृष्टिविषययोः क्रियावाद-परिणामवादयोः सर्वविरोधपरिहारेण यथा समन्वयोऽत्र कृतो दृश्यते, न तथाऽन्यत्र क्वाऽपीति तुलनया विज्ञेयं सृष्टितत्त्वानुसन्धानपरायणैर्विद्वद्भिः । किं बहुना, यदुपज्ञं खलु सर्व-वेदार्थपरिबृंहितं नानेतिहासपुराणं विविधज्ञान-विज्ञानैरद्याऽपि विश्वमखिलं-विशेषतो भारतं वर्षमुद्भासयदतितरां विजयते, तस्य भगवतः श्रीकृष्णद्वैपायनस्य जनकेन महर्षिणा पराशरेण प्रवर्तितमिदं ( विष्णु ) पुराणरत्नं यथाऽन्यस्मिन्विषये सर्वस्मिन्नपि पुराणान्तरमतिशेते, तथैव सृष्टिविद्यायामपीति तत्त्वकथनमेतत् ।

( o ) सौरपु० अ० २१-२४ अत्राऽपि पुराणान्तरवत् प्रायशः सर्वोऽपि सृष्टिवादप्रस्तारः प्रपञ्चितो दृश्यते ।

( p ) स्कं० पु० सूतसं० शिवमाहात्म्यखं० अ० १०-११, अत्र नवविधसर्गनिरूपण-पुरस्सरं हिरण्यगर्भादिविशेषसृष्टिवर्णनं सयुक्तिकं प्राञ्जलं च दृश्यते । सूतसं० यज्ञवैभवखण्डोपरिभागे ब्रह्मगी० अ० ५, अत्र विवर्त्तवादानुसारेण सोपपत्तिकं परमताऽऽलोचनपूर्वकं च परस्य ब्रह्मणो नाम-रूपात्मकजगद्व्याकरणं सुनिरूपितमस्ति ।

( q ) दुर्गास० 'प्राधानिकरहस्यं' सम्पूर्णं सृष्टिविषयकं विद्यते; अत्र 'चण्डिका'पदवाच्यं परब्रह्मैव धर्मिरूपं निर्गुणं जगत्कारणं, तदेव च समष्टिरूपं चण्डिकाख्यं ब्रह्म महालक्ष्म्याद्यात्मकव्यष्टित्रयरूपेण परिणतं सद् हिरण्यगर्भादिक्रमेण विश्वं ससर्जेति विलक्षणमेव सृष्टिक्रमनिरूपणं दृश्यते । अत्रत्यं 'दर्शन'-मवगन्तुं दुर्गासप्तशत्या गुप्तवतीटीकोपद्घातः, तस्यामेव टीकायां ( सप्तशत्याः प्रथमाध्यायारंभे ) 'चण्डिका-पदव्याख्यानं च द्रष्टव्यम् ।

( r ) नारदपञ्चरात्रे बृहद्ब्रह्मसं० प्रथमपादे अ० १३ वासुदेवादिचतुर्व्यूहोत्पत्तिः; द्वि० पा० अ० १ विष्णुनाभिकमलाद् ब्रह्मण उत्पत्तिः; तृ० पा० अ० १ 'अण्ड'वर्णनं, चिदचितोः परब्रह्म-शरीरत्वप्रतिपादनं च; चतुर्थपा० अ० ६ श्लो० २३ 'नारायण'पदनिर्वचनं, ततः सृष्टिक्रमनिरूपणं ब्रह्मणः ( हिरण्यगर्भस्य ) सर्वजीवसमष्टित्व-सर्वजीवनिकायत्वादिवर्णनं च; चतुर्थपा० अ० ९ चिदचिद्विशिष्टस्य परमात्मनः जगदुपादानत्व-तन्निमितत्त्वोपपादनं, ततः सर्वसृष्टिनिरूपणं च विशिष्टाद्वैतसिद्धान्तानुसारतः समीचीनतया कृतं, न किंचिदपि सृष्टिविषयकं प्रतिपित्सितमुपेक्षितमिति सकृदनुवाचनेन प्रत्यक्षं ज्ञास्यते ।

न तु धर्मस्य शास्त्रं स्यात्; प्रसज्येत च विस्तरः ; ईदृग्वादस्य लोकार्थे न चाऽतीवोपयोगिता ;

से स्त्री भी बन गया [ बृ० आ० १, ४, ३; मनु० १, ३२ ] और उस से सारी सृष्टि हुई; ( ६ ) अथवा पानी की उत्पत्ति के पहले ही पुरुष था [ कठ० ४, ६ ]; ( ७ ) पहले हिरण्यगर्भ उत्पन्न हुआ [ ऋ० सं० १०, १२१, १ ] फिर उस से, अथवा 'सत्य' से सारी सृष्टि हुई [ ऋ० सं० मं० १०, सू० १९० ] ; ( ८ ) 'शब्द'रूपी ब्रह्म वा प्रणव ( ओङ्कार ) ही यह सब कुछ (जगद्रूप ) है; अर्थात् उसी से यह सारा नाम-रूपात्मक दृश्यमान जगत्, विवर्तित वा उत्पन्न हुआ [ माण्डू० उ०; गौ० पा० का० १, २७; वाक्यप० १, १; तथा १, १२०; बृहद्ब्रह्मसं० ६, ४४ ]; ( ९ ) एक 'अजा' 'लोहित-शुक्ल-कृष्णा' ( रजः-सत्त्व-तमोमयी ) त्रिगुणात्मिका प्रकृति से ही महद्-आदि के क्रम से सब सृष्टि हुई [ श्वे० उ० ४, ५-१०; ६, १६; कठ० ३, ११; मैत्रायणी ६, १० ]। सांख्य और योग, तथा अन्य कई प्रस्थानों मे भी त्रिगुणात्मक प्रकृति से ही जगत् की उत्पत्ति स्वीकार की गई है। इस के अतिरिक्त सृष्टि की प्रक्रिया के विषय में भी आरंभवाद, परिणामवाद, और विवर्त्तवाद आदि का बहुत प्रपञ्च है। पुराणों मे भी सृष्टि के विविध प्रस्थान प्रपञ्चित हैं। यहाँ टि०-२२(ख) मे कतिपय पुराण, उपपुराण, और महाभारत के सृष्टिप्रकरणों की संक्षिप्त सूचना कर दी गई है; शेष इतिहास-पुराणों मे भी सृष्टि-विषयक बातें प्रायः ऐसी ही हैं। वेदपुराणों की परस्पर विरोधिनी सृष्टि-कथा की जटिल समस्या पूर्वाचार्यों के सामने भी उपस्थित हुई थी, जिसे सुलझाने की चेष्टा श्रीशङ्कराचार्य-प्रभृति विद्वानों ने वेदान्तदर्शन ( २, ३, १-१५ ) में यथामति की है।

( s ) महाभारते आदिप० अ० १ श्लो० २९-४२ अत्र 'अण्ड'वृत्तान्तकथनपूर्वकं हिरण्यगर्भोत्पत्तिवर्णनं, सारतः समस्तसृष्टिक्रमसूचनं च। वनप० अ० २७२ श्लो० ३१-४७ अत्रत्यः ८२तमः श्लोको 'नारायण'पदनिर्वचनपरः; अस्मिन्नध्याये जलनिधौ शेषपर्यङ्कमधिशयानस्य भगवतोऽरविन्दनाभस्य नाभिपद्माद्विश्वाऽभिमानिनः सूत्रात्मनो हिरण्यगर्भस्य जन्म, तेन मरीचिप्रमुखानां नवानां महर्षीणां मनसा सङ्कल्पमात्रेण सर्जनं, तैश्च चराचरात्मकसर्वभूतसृष्टिरित्यादिकं संक्षेपादभिहितम्। शान्तिप० अ० १८२, अत्राऽनादिनिधनः कश्चिद्देवो 'मानसो' नाम जगतो मूलकारणं, स एव महदादिक्रमेण महाभूतपर्यन्तं विश्वमसृत्; तेनैव पद्मं सृष्टं, तस्माद् 'ब्रह्मा' समभवद्, इत्यादि वर्णितम्। अत्रत्य३७तमे श्लोके 'पद्म'-शब्दार्थः 'पृथिवी'ति प्रोक्तः। शान्तिप० अ० १८३ अत्र सलिलादिक्रमेण जगदुत्पत्तिवर्णनं दृश्यते। शान्तिप० अ० २७५, अत्र वेदान्तानुमतक्रमतो गूढार्थं भूतोत्पाद-विनाशादिवर्णनमस्ति। शान्तिप० अ० ३१०, अत्र साङ्ख्यानां चतुर्विंशतितत्त्वानि, नवविधाः सर्गाश्चोक्ताः। शान्तिप० अ० ३११ अत्रत्याः ३-५ श्लोका अर्थतः शब्दतश्च भूयसा मनोः १, ११-१३ श्लोकैः संवदन्ते। शान्तिप० अ० ३३९, अत्र जगतः प्रतिलोमपरिणामेन पृथिव्यादिक्रमतः परमात्मनि लयाऽभिधानपूर्वकं वासुदेवादिचतुर्व्यूहसृष्टि-निरूपणं वर्तते। अत्र ३३-३४ श्लोकाभ्यां शरीरलक्षणं, श्लो० ७२-७५ चतुर्व्यूहोत्पत्तिः, ब्रह्मणः अनिरुद्ध-नाभिकमलोद्भवत्वं च प्रदर्शितम्। शान्तिप० अ० ३४७, अत्राऽपि प्रलयक्रमनिर्देशपूर्वकं सृष्टेः प्राक्कालिक-'तमः'स्थितिवर्णनं, ततोऽनिरुद्धाख्यस्य परमात्मव्यूहस्याविर्भावः, तन्नाभिपद्माद्ब्रह्मणोऽहङ्कारात्मकस्योत्पत्तिः, तस्यानेकजन्मकथा चेत्यादिकमभिहितम्।

( t ) हरिवंशे प्रथमपर्वणि अ० १-३ पर्यन्तं सृष्टिप्रकरणं, तत्र प्रथमाध्याये आदिसर्गकथनमस्ति; अत्रत्या २७-३१ श्लोका मनोः १, ८-१३ श्लोकैः शब्दार्थाभ्यां तुलामधिरोहन्ति।

( u ) बृहद्धर्मपु० मध्यखण्डे अ० ३१-३२ अत्राऽपि विलक्षणं सृष्टिवर्णनं सविस्तरं कृतमस्ति; अत्रत्यौ १२-१३ श्लोकौ क्रमशः मनोः १, ८ तथा १, १० श्लोकाभ्यां समानौ स्तः।

जगत्प्रकाशयतः परमात्मनः प्रादुर्भावः

**ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदं महाभूतादि, वृत्तौजाः प्रादुरासीत्तमोनुदः[२३]।६।**

---

तस्मात्प्रकरणं सर्वं सृष्टिवादात्मकं त्विदम् शब्दार्थमात्रतः प्रायो हिन्द्यैव वक्ष्यते स्फुटम् ।
किन्तु प्रकरणस्यान्ते, सृष्टिवादसमन्वयः, वेदान्तोक्तानुसारेण, सारतः प्रकरिष्यते ।५।
'ततः' प्रसुप्तभावाया महारात्र्या अनन्तरम्, 'इदं' जगत्, 'तमः'संज्ञान्मूलतत्त्वाद्विकाशयन्
सूक्ष्मैः स्थूलस्वरूपैश्च विकारैः क्रमशोऽखिलं महत्तत्त्वादि-भूतान्तं, स्वयं प्रादुरभूत्प्रभुः ।
त्रैगुण्याऽवयवो नाऽत्र 'तमः'शब्देन गृह्यते, किन्तु त्रिगुणमेवेष्टं साम्यावस्थं 'तमो'ऽभिधम्;
'तमो' नाम प्रधानं यो मूलप्रकृतिसंज्ञितं 'नुदति' प्रेरयत्यादौ, परेशः स 'तमोनुदः' ।
"मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना, मत्स्थानि सर्वभूतानि, न चाऽहं तेष्ववस्थितः ।...
सर्वभूतानि कौन्तेय, प्रकृतिं यान्ति मामिकां कल्पक्षये; पुनस्तानि कल्पादौ विसृजाम्यहम् ।...
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।...
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते*"

---

यहां इतना कह देना पर्याप्त होगा कि सृष्टि की, सांख्यसम्मत प्रक्रिया, प्रायः सब को मान्य है । कोई कोई ग्रन्थकार, उस मे, थोड़ा थोड़ा हेर फेर कर लेते हैं । मनुस्मृति मे जो सृष्टि का क्रम कहा है, उस का भी सांख्योक्त क्रम से कोई अपरिहार्य विरोध नहीं है । इस विषय का अधिक स्पष्टीकरण इसी प्रकरण मे आगे होगा ।

मनु जी ने इस ( प्रथम ) अध्याय मे सृष्टि की उपर्युक्त सारी प्रक्रियाओं की ओर सङ्केत कर दिया है; यदि उन सब का समन्वय कर के सृष्टि का कोई नियम-क्रमबद्ध सिद्धान्त निकालने का यत्न किया जाय तो यह भाष्य तर्कशास्त्र हो जायगा, और अनावश्यक ग्रन्थविस्तर भी होगा । साथ ही साधारण जनता के लिये ऐसे शुष्क और नीरस विचार बहुत उपयोगी भी नहीं होते । अतः इस सृष्टिप्रकरण का केवल शब्दार्थ, वह भी प्रायः हिन्दी में ही लिखा जायगा । हाँ, अवश्य ही इस प्रकरण के अन्त में सृष्टि-विषयक ( भाष्य और टिप्पण मे प्रदर्शित ) नाना मतवादों का समन्वय और विरोधपरिहार संक्षेप मे साररूप से वैदान्तिक ( औपनिषद ) सिद्धान्त के अनुसार कर दिया जायगा ।५।

पहले ( १, ५ श्लो० ) जगत् की 'अव्याकृत' अवस्था का वा सृष्टि से पूर्व की स्थिति का वर्णन हो चुका है; उसके बाद 'स्वयंभू' ( स्वयं भवतीति ) स्वेच्छासे होनेवाला ( जिसका अवतार वा शरीर-ग्रहण, संसारी जीवों की तरह कर्म की परतंत्रता से नहीं, किन्तु स्वतन्त्र होता है ); 'भगवान्' ( 'भगो'ऽस्यास्तीति ) समग्र ऐश्वर्य ( ईश्वरभाव, प्रभुत्व ), धर्म, यशः, श्री, ज्ञान और वैराग्य, इन ६ कल्याणगुणों से सम्पन्न, जगत् का संभर्ता, भर्ता, नेता, गमयिता, स्रष्टा, सब

---

२३ "भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः आत्मेच्छाऽनुगतो ह्यात्मा नानाशक्त्युपलक्षितः;
स वा एष तदा द्रष्टा नाऽपश्यद्दृश्यमेकराट्, मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ।
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका 'माया' नाम महाभाग, ययेदं निर्ममे विभुः ।
कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्;
ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात्; विज्ञानात्माऽत्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः
सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया"
[ भा० ३, ५, २३-२८ ] । *भ० गी० अ० ९ ।

**योऽसावतीन्द्रियग्राह्यः सुक्ष्मोऽव्यक्तः सनातनः सर्वभूतमयोऽचिन्त्यः, स एव स्वयमुद्बभौ ।७।**

---

इत्येवं भगवद्गीताश्लोकैः स्पष्टं समर्थ्यते प्रकृतेः प्रेरकत्वेन स्रष्टृत्वं परमात्मनः ।
जगत्कर्त्तृत्वमीशस्य मायोपाधिकमिष्यते , श्वेताश्वतरवेदान्ते तदर्था दृश्यते श्रुतिः—
"अस्मान्मायी सृजते विश्वमेतत्"† 'माया'शब्दात्प्रकृतेरत्र बोधः ;
"मायां तु प्रकृतिं विद्यान्, मायिनं तु महेश्वरं , तस्याऽवयवभूतैस्तु व्याप्तं सर्वमिदं जगत्‡" ।६।
यमिन्द्रियाण्यतिक्रान्तं मनो गृह्णाति योगिनां सोऽसावतीन्द्रियग्राह्यो' न जात्विन्द्रियगोचरः[२४] ;
'सूक्ष्मः' सर्वविकल्पेभ्यः परोऽणीयानणोरपि[२५] , तस्मादेव तथा'ऽव्यक्तो',ऽनाद्यनन्तः 'सनातनः' ;

---

'भूतों' का निवासस्थान और स्वयं सब 'भूतों' में निवास करनेवाला, तथा 'भूतों' की उत्पत्ति, प्रलय, अगति, और गति को एवं 'विद्या' तथा 'अविद्या' को जाननेवाला ( वि० पु० ६, ५, ७३-७९ ); 'अव्यक्त' अयोगियों के अनुभव में न आनेवाला, वा अनात्मज्ञों की अनुभूति का अगोचर; 'धृत्तौजाः' अप्रतिहत सामर्थ्यवाला ( कर्त्तुमकर्त्तुमन्यथाकर्त्तुंसमर्थ ); 'तमोनुद' सृष्टि से पूर्व की 'तमो'ऽवस्था का, 'तमो'नामक त्रिगुणात्मिका 'प्रकृति' का प्रेरक; परमात्मा, इस 'जगत्' का महत्तत्त्व के क्रम से 'महाभूत' और तद्गुण शब्दादि-पर्यन्त विकाश करता हुआ स्वयं 'प्रादुर्भूत' प्रकट हुआ । ६ ।

---

† श्वे० उ० ४, ९ । ‡ श्वे० उ० ४, १० ।

२४ "नैनमूर्ध्वं, न तिर्यञ्चं, न मध्ये परिजग्रभत् ; न तस्य प्रतिमा अस्ति, यस्य नाम महद्यशः ;
न संदृशे तिष्ठति रूपमस्य, न चक्षुषा पश्यति कश्चनैनं ,
हृदा हृदिस्थं मनसा य एनमेवं विदुर्, अमृतास्ते भवन्ति"
[ श्वे० उ० ४, १८–२०; महाना० उ० १, २; कठ० ६, ९; मुण्ड० ३, ८–९ ]
"एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते, दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" [कठ० १, ३, १२]
"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" [ तै० उ० २, ४, १; ब्र० उ० ३ ]
नैवाऽसौ चक्षुषा ग्राह्यो, न तु शिष्टैरपीन्द्रियैः ,
मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः" [ मे० ति० धृतं व्यासवचनम् ]
"योऽसौ आत्मा, 'अतीन्द्रियेण' मनसा ग्रहीतुमशक्यः ;
'सूक्ष्मः' सूक्ष्मबुद्धिग्राह्यत्वात् ; 'सर्वभूतमयः' सर्वस्य तत्प्रभवत्वात्" [ गो० रा० )

२५ "यस्मात्परं नाऽपरमस्ति किंचिद्, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ,
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" [श्वे० उ० ३, ९; महाना० उ० १०, ४]
"अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ,
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्"
[ श्वे० उ० ३, २०; कठ० १, २, २०; महाना० उ० ८, ३; कैवल्य० २० ]
"यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः , तर्का-ऽऽगमा-ऽनुमानेन बहुधा परिकल्पितः ,
व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ सत्याऽनृते च, विश्वात्मा प्रविवेकात्प्रकाशते ।
अन्तर्यामी स भूतानामाराद् दूरे च दृश्यते , सोऽत्यन्तमुक्तो, मोक्षाय मुमुक्षुभिरुपास्यते ।
प्रकृतित्वमपि प्राप्तान्विकारानाकरोति सः ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ।
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते , अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकं ।
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ।...
शान्तविद्यात्मकं योंऽशः (?) तद्दु हैतदविद्यया तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते ।

'मया व्याप्यमस्तीदं सर्वभूतमयं जगत्' इत्थं भावनयाऽत्यन्तं, 'सर्वभूतमयः' स्मृतः ;
यद् भावयति योऽत्यन्तं, कथ्यते स हि तन्मयः, यथा च 'स्त्रीमयः' कामी, भक्तो 'देवमयः' पुमान् ;
सर्वभूताश्रयत्वाद्वा 'सर्वभूतमयो' मतः, 'श्रद्धामयो' हि श्रद्धालुर्, दयालुश्च 'दयामयः',
मयड् नाऽत्र विकारार्थः, 'सर्वभूतमयो'ऽन्यथा परमात्मा विकारी स्याद्, मृत्पिण्डो मृण्मये यथा ;
प्रधानं त्रिगुणं प्रोक्तं शरीरं परमात्मनः, तद्द्वारा परिणामाद्वा 'सर्वभूतमयो'ऽस्ति सः ;
सर्वभूतशरीरित्वाद्[२६] वा युक्ता परमात्मनि सर्वभूतमयत्वोक्तिः सर्वकारण-कारणे ;
सर्वभूतविवर्तानामधिष्ठानतयाऽथवा तत्त्वतोऽद्वैतभावत्वात्सर्वभूतमयो[२७] विभुः ;
"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् प्रकृतिं स्वामधिष्ठाय"§ संभवात्ममायया ।८।

सर्वतः परिवर्तानां परिमाणं न विद्यते, तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते ।
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ;
तथेदममृतं ब्रह्म निर्विकारमविद्यया कलुषत्वमिवाऽपन्नं भेदरूपं विवर्तते"
[ वाक्यपदीये धृतं प्राचीनतमार्षवचनमेतत्प्रतिभाति ; अत्रत्यमाद्यश्लोकद्वयं मेधातिथिनाऽपि स्व-मनुभाष्ये ( १, ७ ) उद्धृतं दृश्यते ]

२६—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी 'शरीरं' यः पृथिवी-मन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः;...यस्याऽऽपः शरीरं...यस्याग्निः शरीरं...यस्यान्तरिक्षं शरीरं... यस्य वायुः शरीरं...यस्य द्यौः शरीरं...यस्याऽऽदित्यः शरीरं...यस्य दिशः शरीरं...यस्य चन्द्र-तारकं शरीरं... यस्य तमः शरीरं...यस्य तेजः शरीरं...यस्य सर्वाणि भूतानि शरीरं...यस्य प्राणः शरीरं...यस्य वाक्शरीरं... यस्य चक्षुः शरीरं...यस्य श्रोत्रं शरीरं...यस्य मनः शरीरं...यस्य त्वक्शरीरं...यस्य विज्ञानं शरीरं......यस्य रेतः शरीरम्" [ बृ० आ० उ० अ० ३ ब्रा० ७ ]

"अयं च ( जगद्-ब्रह्मणोः ) शरीरा-ऽऽत्मभावः अन्तर्यामिब्राह्मणादिषु सुव्यक्तं प्रतिपादितः...'ऐत-दात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो', 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्व-मेति', 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'अयमात्मा ब्रह्म', 'सर्वं खल्विदं ब्रह्म', 'यस्यात्मा शरीरं', 'यस्य पृथिवी शरीरम्' इत्यादि श्रुतिशतैर्भूयोभूयः सम्यगुपदिष्टश्च" [ वेदान्तवादावल्यां शरीरवादटीकाऽवतरणे ]

२७ "कारणाऽभिन्नरूपेण कार्यं कारणमेव, हि सद्रूपेण सदा सत्यं, भेदेनोक्तिर्मृषा खलु ।...
भेदाऽनिरूपणादेव भेदा-ऽभेदो न सङ्गतः, अतश्च कारणं नित्यमेकमेवाऽद्वयं सुराः ।...
प्रतीत्या केवलं शक्तिरचिद्रूपा तमोमयी सर्वप्रकारैर्विद्वद्भिरनिरूप्याऽस्ति शाङ्करी ;
तया दुर्घटकारिण्या तादात्म्येनैव संगतं कारणं सकलस्रष्टृ, सर्वसंहर्तृ",...पालकम् ।
[ सूतसंहितायां ब्रह्मगीता अ० ५ ]

"एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात् अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ;
अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः जन्मादयो विकाराः षड्ॐ भावभेदस्य योनयः ;
एकस्य सर्वबीजस्य यस्य चेयमनेकधा भोक्तृ-भोक्तव्यरूपेण भोगरूपेण च स्थितिः"
[ वाक्यप० १, २-४ ] ।

ॐ "षड् भावविकारा भवन्तीति वार्ष्यायणिः—जायते, अस्ति, विपरिणमते, वर्द्धते, अपक्षीयते, विनश्यतीति;...अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह" [निरु० अ० १, खं० २–३]

"अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्म-स्थिति-नाशानामिह ग्रहणं; यास्कपरि-पठितानां तु 'जायते-अस्ति' इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वाद् मूलकारणादुत्पत्ति-स्थिति-नाशा जगतो न गृहीताः स्युरिति आशङ्क्येत, तन्मा शङ्कीति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते" इति "जन्माद्यस्य यतः" (१, १, २) इति ब्रह्मसूत्रभाष्ये श्रीशङ्कराचार्यः। § भ०गी० ४, ६।

जगत्सर्गार्थं परमात्मनोऽभिध्यानम्, अपां सृष्टिः,
तत्र बीजाधानं, तस्याऽण्डाकारपरिणामः,
ततो ब्रह्मण आविर्भावः

सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः, अप एव ससर्जादौ, तासु बीजमवाऽसृजत् ।८।
तद् 'अण्ड'मभवद्धैमं सहस्रांशुसमप्रभं ; तस्मिञ्जज्ञे स्वयं 'ब्रह्मा' सर्वलोकपितामहः ।९।

---

स स्वदेहात्प्रधानाख्यात्स्रष्टुमिच्छन्महन्मुखाः नानारूपाः प्रजा, आदौ सङ्कल्पादप आसृजत् ; तासु 'बीजं' क्रियाशक्तिस्वरूपं जगदङ्कुरं न्यषिञ्चत्, तदभूदण्डं, तत्र 'ब्रह्मा' व्यजायत ।

---

'योऽसौ' जो लोक और वेद मे अत्यन्त प्रसिद्ध है,[२८] तौभी 'सूक्ष्म' अणु, और 'अव्यक्त' निराकार होने के कारण 'अतीन्द्रियग्राह्य' इन्द्रियों के अगोचर, विशुद्ध मनोमात्र से ग्राह्य ( अनुभवगम्य ) है, वही 'सनातन' सदा विद्यमान रहने वाला ( अनादि तथा अनन्त ), 'सर्वभूतमय' स्वशरीररूप त्रिगुणात्मक 'प्रधान' के द्वारा निखिल चराचर-जगद्रूप मे परिणत होनेवाला, अथवा सर्वभूतमय जगत् के 'विवर्त्त' का अधिष्ठान, 'अचिन्त्य' आश्चर्यरूप, परमात्मा, स्वतः, स्वेच्छा से, अपनी योगमाया के आधार पर, आविर्भूत हुआ ।। ७ ।।

'सः' वह पूर्वोक्त विशेषणों से उपलक्षित, और अपनी ही इच्छा से वा 'माया' से निर्माण-शरीर' धारण किया हुआ, परमात्मा, अपने उस त्रिगुणमय 'प्रधान' (मूलप्रकृति) रूप शरीर २९(क) से नाना प्रकार की 'प्रजा' के सर्जन का इच्छुक, हुआ, और उसने सब से पहले 'आप

---

"अद्वैतदर्शने नैव चेतना-ऽचेतनानि भूतानि पृथक्त्वेन सन्ति, तस्यैवायं विवर्तः, अतो विवर्तानां भूतमयत्वात्, तैश्च तस्याभेदाद्, युक्तमेव तन्मयत्वम् । कथं पुनरेकस्य नानारूपविवर्तितोपपत्तिरेकत्वाद्विरोधिनी उच्यते ? एवमाहुर्विवर्तवादिनः—यथा समुद्राद्वायुनाऽभिहता ऊर्मयः समुत्तिष्ठन्ति, ते च न ततो भिद्यन्ते, नापि लिप्यन्ते, सर्वथा भेदाऽभेदाभ्यामनिर्वाच्याः ; एवमयं ब्रह्मणो विश्वविवर्तः"

[ मनु० १, ७ मे० ति० ]

२८ "तदैक्षत बहु स्यां प्रजायेयेति" [ छा० उ० ६, २, ३ ], स ईक्षत लोकान्नु सृजा इति" [ ऐ० उ० १,१,१ ], "स ईक्षां चक्रे" [ प्रश्न० ६,३ ] "सोऽकामयत" [तै० उ० २, ६] इत्यादि सर्गार्थं परमात्मनोऽभिध्यानमीक्षणरूपमनुसन्धेयम् । अत एव "ईक्षतेर्नाऽशब्दम्" ( १, १, ५ ) "कामाच्च नाऽनुमानापेक्षा" ( १, १, १८ ) "तदभिध्यानादेव तु तल्लिङ्गात्सः" ( २, ३, १३ ) इति वेदान्तसूत्राणि ।

२९—"इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्धबुद्ध-स्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेश-कर्म-विपाका-ऽऽशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः, किं बहुना, यं कारवोऽपि विश्वकर्मेति उपासते; तस्मिन्नेवं जाति-गोत्र-प्रवर-चरण-कुलधर्मादिवदासंसारं सुप्रसिद्धाऽनुभवे भगवति भवे सन्देह एव कुतः, किं निरूपणीयं ? तथापि—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् उपासनैव क्रियते श्रवणानन्तरागता" [न्या० कुसु० १, २]

२९ ( क ) "अद्वैतदर्शने 'प्रधान'मेव तस्येदं शरीरं, तदिच्छानुवर्तित्वात्, स्वतः शरीरनिर्माणहेतुत्वाच्च" [ मे० ति० ]

"अभिध्यानपूर्विकां सृष्टिं वदतो मनोः—'प्रकृतिरेवाऽचेतना स्वतन्त्रा परिणमते' इत्ययं पक्षो न सम्मतः, किन्तु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्त एवाऽभिमतः प्रतिभाति ।...

उत्पद्यन्ताम्' ऐसे सङ्कल्पमात्र से जल को उत्पन्न किया तथा उस मे 'वीज' विश्वसृष्टि के क्रिया-शक्तिमय उपादान का आधान किया; वह 'वीज' सोने के सामान तेजस्वी और सूर्यवत् प्रभा-वाला 'अण्ड' बन गया ( अण्डाकार मे परिणत हो गया ) और उसके भीतर ( अण्डगर्भ मे ) सभी लोकों का पितामह 'ब्रह्मा' हिरण्यगर्भ स्वयं आ गया।

यहां "तस्मिञ्जज्ञे" इस वाक्य का 'उस मे जम गया, गर्भित हुआ' यही अर्थ होना चाहिये, क्योंकि आगे १२ वें श्लोक से उस अण्डे से एक वर्ष के वाद 'ब्रह्मा' के प्रकट होने की बात है; अत एव "तस्माज्जज्ञे" ऐसा पाठ नहीं किया है।

यहाँ पूर्वोक्त ६ से ८ वें श्लोक तक मे निर्दिष्ट 'स्वयंभू' परब्रह्म परमात्मा, और ९–११ श्लोकों मे वर्णित लोकपितामह 'ब्रह्मा' के विषय से 'मनु' के विद्वान् टीकाकारों का मतभेद है। एक मत यह है कि 'परब्रह्म' और 'ब्रह्मा' दोनों एक ही तत्त्व के विभिन्न रूप वा रूपान्तर हैं; पहले परब्रह्म परमात्मा ने आदिम सगुण शरीर मे प्रकट हो कर अभिध्यान से जल की सृष्टि की, अनन्तर उस मे निहित 'वीज' से बने 'अण्डे' मे, 'स्वयं' ब्रह्मा के रूप मे प्रकट होने के लिये, स्वयोगमाया से पूर्वगृहीत शरीर को त्याग कर, प्रवेश किया; अथवा विना शरीर के ही सङ्कल्प-मात्र से जल की और उसमे बीजाधान द्वारा 'अण्ड' की सृष्टि कर के, विश्वसृष्टि के लिये 'ब्रह्मा' वा हिरण्यगर्भ के रूप मे 'निर्माणकाय' धारण करने के लिये उसमे प्रवेश किया।

दूसरा मत यह है कि ६–८ श्लोकों में निर्दिष्ट सभी कारणों का कारण, मूलतत्त्वस्वरूप परब्रह्म परमात्मा परम स्वतन्त्र पृथक् 'तत्त्व' है; और ९-११ श्लोकों में प्रदर्शित 'अण्डज' ब्रह्मा उससे भिन्न पदार्थ है, क्योंकि ११ वें श्लोक में 'ब्रह्मा' को "तद्विसृष्ट" उस परमात्मा से उत्पन्न कहा है[30]। वेदें[31]–पुराणों से भी इसी ( दूसरे ) मत की पुष्टि होती है; पर उपर्युक्त दोनों मत, विभिन्न दृष्टियों से सत्य हैं, क्योंकि अद्वैतवाद के अनुसार 'ब्रह्मादि-स्तम्बपर्यन्त' संपूर्ण जगत् परब्रह्मरूप अधिष्टान में ही 'माया' से कल्पित और तदभिन्नरूप है, अन्य मतों के अनुसार भी परब्रह्म ही यथाप्रयोजन 'ब्रह्मा' आदि का रूप धारण करता है। फिर भी कार्य-कारण रूपसे 'ब्रह्मा' और 'ब्रह्म' में शास्त्र-पुराणों ने विवेक किया है। यद्यपि आत्मा-परमात्मा में वा जीव-परब्रह्म में तात्त्विक दृष्टि से भेद नहीं है, तथापि विश्वकर्माऽऽधिकारिक व्यावहारिक भेद के अनुसार सर्वप्रथम-शरीरी उत्कृष्टतम जीव को 'ब्रह्मा,' और उसमें भी पारमार्थिक परम सद्रूप से अनुस्यूत

---

स्वाच्छरीरादव्याकृतरूपाद्, अव्याकृतमेव भगवद्भास्करीयवेदान्त-दर्शने प्रकृतिः, तदेव तस्य च शरीरम्। 'अव्याकृत'शब्देन पञ्चभूत-बुद्धीन्द्रिय-कर्मेन्द्रिय-प्राण-मनः-कर्मा-ऽविद्या-वासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते; अव्याकृतस्य च ब्रह्मणा सह भेदाऽभेदस्वीकाराद् 'ब्रह्माद्वैतं,' शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते" [ म० मु० ]

"सोऽभिध्याय शरीरात्स्वात्" भूतसूक्ष्मात्स्वाच्छरीरादित्यर्थः" [ ब्रह्मसू० २,१,९ श्रीभाष्ये]

३० "ब्रह्मा हिरण्यगर्भ एव, स्वयमिति उक्तार्थं योगशक्त्या प्राग्गृहीतं शरीरं परित्यज्य अन्तरण्डमनुप्राविशत्; अथवा अशरीर एव अपः ससर्ज, ततोऽन्तरण्डं स्वशरीरं जग्राह। अथवा अन्यो 'योऽसौ' ( श्लो० ७ ) इत्यत्र निर्दिष्टः, अन्यश्च अयमण्डजो 'ब्रह्मा' इति; तथा च वक्ष्यति—'तद्विसृष्टः' ( श्लो० ११ ) इति, तेन ईश्वरेण सृष्टः ( ब्रह्मा )" [ मनु० १, ९ मे० ति० ]

३१ "ॐ ब्रह्म ह वा इदमग्र आसीत् स्वयं त्वेकमेव, तदैक्षत 'महद्वै यक्षं, तदेकमेवास्मि, हन्ताऽहं मदेव मन्मात्रं द्वितीयं देवं निर्ममे' इति;...ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे" [ गो० ब्रा० पू० प्रपाठ० १ ]

उस ( ब्रह्मा ) के भी अन्तर्यामी और नियामक परात्पर तत्त्व, परमात्मा को 'ब्रह्म' कहते हैं। द्वैतदृष्टि से 'ब्रह्मा' तक (हिरण्यगर्भपर्यन्त) 'जीव' की ही गति बतलाई गई है, अर्थात् जीव ही नाना योनियों से क्रमशः ऊर्ध्वगति के द्वारा उत्तरोत्तर उच्चाऽति-उच्च योनियों में जन्म लेता हुआ मनु-प्रभृति के 'आधिकारिक' जीवन को क्रम से पार करके अन्त में 'ब्रह्मा' का परम उत्कृष्ट और चरम-आधिकारिक शरीर तथा 'पद' पा लेता है। अतः जीवभूत 'ब्रह्मा' से परब्रह्म परमात्मा सुतरां भिन्न तत्त्व सिद्ध होता है। इस विषय का सङ्केत 'मनु' के कतिपय टीकाकारों ने तथा अन्य विद्वानों ने भी किया है[३२]। 'ब्रह्मा' शब्द के विविध अर्थों का दिग्दर्शन आगे श्लो० ११ के भाष्य मे किया जायगा।

यद्यपि 'पितामह' पिता के पिता ( दादा ) को कहते हैं, तथापि यहां 'ब्रह्मा' को सब पिता का भी पिता, सबका मूलपुरुष होने के कारण, 'सर्वलोकपितामह' कहा है। कई टीकाकारों ने यह लिखा है कि 'पितामह', यह ब्रह्मा का एक नाम है।

यहां ( ८ वें श्लोक पर ) मेधातिथि ने एक बड़ा मनोरञ्जक प्रश्न उद्धृत करके अपने विचार के अनुसार उसका उत्तर दिया है[३३]। वह मूल प्रश्नोत्तर नीचे टिप्पण में उद्धृत है। उसका अनुवाद यह है कि "कुछ लोग यहां ऐसा विवाद उठाते हैं कि जब सृष्टि के आरंभ मे परमात्मा ने सब से पहले 'अपः' जल का ही सर्जन किया, तब पृथिवी आदि के अभाव मे उस ( सृष्ट जल ) का आधार कौन पदार्थ हुआ ?; पर ऐसा कहनेवालों से भी यह पूछा जा सकता है कि 'सृष्टि के लिये शरीर धारण किये हुए परमेश्वर का भी आधार उस समय क्या था ?'; इस पर यदि यह कहा जाय कि परमेश्वर, अनिर्वचनीय विभूतियोग से अत्यन्त सम्पन्न है, अतः उसकी लोकोत्तर कर्तृत्व-शक्ति के विषय मे कोई प्रश्न ही नहीं उठाया जा सकता, तो इसी न्याय से, सर्वप्रथम सृष्ट जल की स्थिति के लिये भी विलक्षण ऐश्वर्यशाली परमात्मा के अनन्य साधारण प्रभाव को ही आधार समझ लेना चाहिये।"

पर, ऐसे प्रश्नोत्तर वा शङ्का-समाधान यहां वस्तुतः प्रसक्त नहीं हैं; क्योंकि 'आपः' ३३(क) यह नाम 'आकाश' का भी है, और भूतसृष्टि मे आकाश ही सब से पहले परमात्मा के सकाश से उत्पन्न हुआ, यह सर्वविरोध-परिहार पूर्वक सुसमन्वित तथा प्रायः सर्वमान्य वेदान्त-सिद्धान्त है;

---

३२ "येपामपि कर्मप्राप्यं हैरण्यगर्भं पदं, तन्मतेऽपि सनातनत्वं, सत्यप्यादिमत्त्वे अन्तत्वाऽभावात्; न हि सर्गादिफलभोक्तृत्वावस्था कदाचिदपैति" [ मनु० १, ७ मे० ति० ]

"येन पूर्वजन्मनि 'हिरण्यगर्भोऽहमस्मीति' भेदाभेदभावनया परमेश्वरोपासना कृता, तदीयं लिङ्गशरीराऽवच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः" [ मन्वर्थमुक्तावली १, ९ ]

"पूर्वकल्पस्थ एव कश्चिज्जीवो ज्ञान-कर्मवशात् प्रजापतिभावमापद्यत इति 'सोऽबिभेत्, स नैव रेमे', इत्यादिना बृहदारण्यके प्रतिपादितम्" [ दे० भा० ९,३,२१ नीलकण्ठी ]

३३ "अत्रेत्थं चोद्यते—'पृथिव्यादीनां तदानीमभावाद् अपां सृष्टानां क आधारः ?

अन्येभ्य इदमुच्यते—'स्रष्टुरपि परमेश्वरस्य गृहीतशरीरस्य क आधार' इत्यपि वाच्यम्; अथ विलक्षणैश्वर्यातिशययोगादन्यैव सा कर्तृशक्तिरसंचोद्या; प्रकृतधर्मसामान्येनेत्थमेवमेप्स्वपि द्रष्टव्यम्"

[ मनु० १, ८ मे० ति० ]

३३ ( क ) "अम्बरं, वियद्, व्योम, बर्हिः, धन्व, अन्तरिक्षम्, आकाशम्, आपः, पृथिवी, भूः, स्वयम्भूः, अध्वा, पुष्करं, सगरः, समुद्रः, अध्वरम्, इति षोडशाऽन्तरिक्षनामानि" [ निघण्टौ १, ३ ]

एतदण्डकथा किञ्चिद्भिन्नशब्दा-ऽर्थ-पद्धतिः वेदशास्त्रेतिहासेषु बहुत्रास्ति प्रपञ्चिता[३४] ।

अतः प्राथमिक सृष्टि के प्रसंग मे जहां कहीं भी 'आपः' ( अप् ) शब्द का प्रयोग हुआ हो, वहां उस का अर्थ 'आकाश' ही लेना चाहिये । सुतरां आदि-सृष्ट 'अपः' आकाश को न किसी आधार की अपेक्षा थी, अतः न तद्विषयक शङ्का-समाधान की आवश्यकता ही । इस विषय का अधिक खुलासा आगे इसी प्रकरण मे होगा ।

८ वें और ९ वें श्लोक का वाक्यार्थ तथा संक्षिप्त पदकृत्य हो गया; अब 'अण्ड' के विषय मे भी कुछ विचार करना आवश्यक है । इस 'अण्ड' की कथा, शब्द अर्थ और निरूपण-पद्धति मे थोड़ा थोड़ा हेर-फेर के साथ, वेद-पुराणों मे बहुत स्थलों पर वर्णित है । वस्तुतः यह

३४. "स ईक्षत 'इमे नु लोका लोकपालान्नु सृजा' इति; सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्; तमभ्यतपत्, तस्याभितप्तस्य मुखं निरभिद्यत, यथा अण्डम्" [ ऐ० उ० १, ३-४ ]

अस्मिन्विषये पूर्वं २२ टिप्पणे धृतं छान्दोग्यवचनमपि ( ३, १९, १-२ ) अनुसन्धेयम् ।

"उच्छ्वासिते तमो भवति, तमस आपः, अप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति, फेनादण्डं भवति, अण्डाद् 'ब्रह्मा' भवति, ब्रह्मणो वायुः, वायोरोंकारः, ॐकारात्सावित्री, सावित्र्या गायत्री, गायत्र्या लोका भवन्ति" [ अथर्वशिर उ० ६ ]

"एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृड् हिरण्यगर्भः सत्यं प्राणो हंसः शान्तो विष्णुर्नारायणोऽर्कः सविता धाता सम्राडिन्द्र इन्दुरिति य एष तपत्यग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन एष वाव विजिज्ञासितव्योऽन्वेष्टव्यः" [ मैत्रायणी उ० ६, ८ ]

"अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाऽध्यायत, तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत्, ता इमाः प्रतता आपः, ततस्तेजोहिरण्मयमण्डं, तत्र ब्रह्मा चतुर्मुखोऽजायत" [ महोपनिषदि १ ]

"वर्षपूगसहस्रान्ते तद् अण्डमुदकेशयं कालकर्मस्वभावस्थो जीवो जीवमजीवयत्;
स एव पुरुष,स्तस्मादण्डं निर्भिद्य निर्गतः, सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान्;
यस्येहाऽवयवैर्लोकान्कल्पयन्ति मनीषिणः कट्यादिभिरधः सप्त, सप्तोर्ध्वं जघनादिभिः"
[ भा० २, ५, ३४-३६ ]

"यस्मादण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः, तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन्;
यदाऽस्य नाभ्यां नलिनादहमासं महात्मनः, नाविदं यज्ञसंभारान्पुरुषाऽवयवादृते"
[ भा० २, ६, २१-२२ ]

"पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः;
तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान्, तेन 'नारायणो' नाम, यदापः पुरुषोद्भवाः"
[ भा० २, १०, १०-११ ]

"हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः",
[ भा० ३, ६, ६ ]

"दैवेन दुर्वितर्क्येण परेणानिमिषेण च, जातक्षोभाद्भगवतो महानासीद्गुणत्रयात्;
रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः;
तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकं, संहत्य दैवयोगेन हैममण्डमवासृजन्;
सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः, साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः;
तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति सर्वजीवनिकायैको यत्र स्वयमभूत्स्वराट्"
[ भा० ३, २०, १२-१६ ]

'अण्ड' एक 'रहस्य' बन गया है; इसका तात्त्विक अर्थ अभी तक अज्ञात, वा संशयास्पद ही है। पुराणों मे विभिन्न स्थलों पर 'अण्ड' शब्द के अनेक अर्थ नानारूप मे विविध प्रकार से अभिहित हैं।

"विकारैः षोडशैर्युक्तो, विशेषादिभिरावृतः, आण्डकोशो बहिरयं पञ्चाशत्कोटि-विस्तृतः ;
दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत्, लक्ष्यते,ऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः।
तदाहुरक्षरं ब्रह्म सर्वकारणकारणं विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः"

[ भा० ३, ११, ३९-४१ ]

"क्वाऽहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः,
क्वेदृग्विधाऽविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्"

[ भा० १०, १४, ११ ]

"संख्यानं परमाणूनां कालेन क्रियते मया, न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः"

[ भा० ११, १६, ३९ ]

"मया संचोदिता भावाः सर्वे संहत्यकारिणः अण्डमुत्पादयामासुर्ममाऽऽयतनमुत्तमं ;
तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ मम नाभ्यामभूत्पद्मं विश्वाख्यं, तत्र चात्मभूः ;
सोऽसृजत्तपसा, युक्तो रजसा, मदनुग्रहात् लोकान्सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा"

[ भा० ११, २४, ९-११ ]

"पुरुषाधिष्ठितत्वाच्च, प्रधानाऽनुग्रहेण च, महदाद्या विशेषान्ता, ह्यण्डमुत्पादयन्ति ते ;
तत् क्रमेण विवृद्धं सज्जलबुद्बुदवत्समं भूतेभ्योऽण्डं, महाबुद्धे, महत्तदुदकेशयं
प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम्, तत्राऽव्यक्तस्वरूपोऽसौ व्यक्तरूपो जगत्पतिः
विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ; मेरुरुल्बमभूत्तस्य, जरायुश्च महीधराः,
गर्भोदकं समुद्राश्च, तस्यासन्सुमहात्मनः, साद्रिद्वीपसमुद्राश्च, सज्योतिर्लोकसंग्रहः,
तस्मिन्नण्डेऽभवद्विप्र, सदेवाऽसुरमानुषः। वारि-वह्न्यनिलाकाशैस्ततो भूतादिना बहिः
वृत्तं दशगुणैरण्डं, भूतादिर्महता तथा ; अव्यक्तेनाऽऽवृतो ब्रह्मंस्तैः सर्वैः सहितो महान् ;
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतं नारिकेलफलस्यान्तर्बीजं बाह्यदलैरिव।
जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः 'ब्रह्मा' भूत्वाऽस्य जगतो विसृष्टौ संप्रवर्तते"

[ वि० पु० १, २, ५४-६१ ]

"निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते बृहदण्डमभूदेकं प्रजानां बीजमव्ययं
युगस्यादौ, निमित्तं तन्महद्दिव्यं प्रचक्षते ; यस्मिन्संश्रूयते सत्यं ज्योतिर्ब्रह्म सनातनं
अद्भुतं चाऽप्यचिन्त्यं च सर्वत्र समतां गतम् अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकं ;
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ब्रह्मा, सुरगुरुः, स्थाणु, र्मनुः, कः, परमेष्ठ्यथ"

[ म० भा० १, १, २९-३२ ]

"ततो ब्रह्माणमसृजद्धिरण्याण्डसमुद्भवं सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रम।
सम्वत्सरमुषित्वाण्डे, निष्क्रम्य च महामुनिः संदधे स महीं कृत्स्नां दिवमूर्ध्वं प्रजापतिः ;
छायापृथिव्योरित्येष राजन्वेदेषु पठ्यते तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः"

[ म० भा० शां० ३११, ३-५ ]

"स्वरया सह संभूय विरिञ्चोऽण्डमजीजनत्, बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान्,
अण्डमध्ये प्रधानादिकार्यजातमभून्नृप, महाभूतात्मकं सर्वं जगत्स्थावरजङ्गमम्"

[ दुर्गासप्तशत्यां प्रा० र० २६-२७ ]

दिङ्मात्रमेतदुदाहृतम् ; एवमेव प्रायः सर्वेषु पुराणेषु उपपुराणेषु च 'अण्डो'पाख्यानं दृश्यते।

एवमण्डपदार्थोऽपि नानारूपः प्रकल्पितः—'डिम्भो, ब्रह्माण्ड,माकाशो, भूतपिण्ड' इतीदृशः[३५]।
"तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः, येनेदं निखिलं विश्वं जनितं स्थावरं चरम्।
'अण्ड'जातं तु ब्रह्माणं केचिदिच्छन्त्यपण्डिताः; अण्डाद्भिन्नाद्बभुः शैला दिशोऽम्भः पृथिवी दिवं;
द्रष्टव्यं नैतदेवं, हि, कथं जायेद्? अजो हि सः। स्मृतमाकाशमण्डं तु; तस्माज्जातः पितामहः।
तिष्ठेत्कथमिति ब्रूहि? न किञ्चिद्धि तदा भवेत्; 'अहङ्कार' इति प्रोक्तः सर्वतेजोगतः प्रभुः।
नास्त्यण्डम्, अस्ति तु ब्रह्मा[३६]" [ म० भा० अनु० १५३, १५-१९ ]

कहीं उसका अर्थ डिंभ वा डिंब ( पक्षी के अण्डे की तरह गर्भ-लोथ वा गर्भ-गोल गर्भरूप पांचभौतिक शिशु-पिण्ड ), कहीं बिम्ब ( सूर्यमण्डल ), कहीं ब्रह्माण्ड, कहीं आकाश, और कहीं पञ्चमहाभूतों का पिण्ड, इस प्रकार से अनेक किया गया है, जो आगे और पीछे के टिप्पणों को ध्यान से पढ़ने पर स्पष्ट प्रतीत होगा। जो लोग 'अण्ड' का अर्थ 'ब्रह्माण्ड' लेते हैं, फिर भी ब्रह्मा को तज्जन्य मानते हैं; उनको महाभारतकार ने 'अज्ञ' कहा है। मूल वचन संस्कृत भाष्य मे उद्धृत है; उसका सारार्थ यह है कि—"जिसने समस्त चराचर जगत् को उत्पन्न किया; वह प्रजापति ब्रह्मा, अव्यक्त व्यापक और अविनाशी है। कुछ अज्ञ लोग ब्रह्मा को 'अण्ड' (ब्रह्माण्ड-गोलक वा भुवनकोश ) से उत्पन्न हुआ मानते हैं; पर, यह बात असङ्गत है; क्योंकि फटे हुए 'अण्ड' से पहाड़ दिशायें पानी पृथिवी और द्युलोक आदि निकले, ऐसी शास्त्र-कथा प्रसिद्ध है; अर्थात् विश्व के उपादानभूत 'अण्ड' को फोड़ कर ब्रह्मा ने ही इन सभी पदार्थों की सृष्टि की। अतः उसी 'अण्ड' से ब्रह्मा के उत्पन्न होने की बात बिल्कुल बेतुकी है। वस्तुतः तो ब्रह्मा 'अज'

३५. "अथ सा कृष्णचिच्छक्तिः कृष्णाद् गर्भं दधार ह। सुषाव डिम्भं स्वर्णाभं विश्वाधारालयं परम्।
दृष्ट्वा डिम्भं च सा देवी हृदयेन व्यदूयत; उत्ससर्ज च कोपेन ब्रह्माण्डगोलके जले।
अथ डिम्भो † जलेऽतिष्ठद् यावद्वै ब्रह्मणो वयः; ततः स काले सहसा द्विधाभूतो बभूव ह;
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः। स्थूलात्स्थूलतमः सोऽपि नाम्ना देवो महाविराट्।
महाविराड्लोमकूपे ब्रह्माण्डगोलके जले बभूव च विराट्क्षुद्रो विराडंशेन साम्प्रतम्।
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः" [ दे० भा० स्कं० ९ अ० २-३। इमे श्लोका 'डिंभ'शब्द-स्थाने 'अण्ड'शब्दं पठित्वा, किंचित्पाठभेदेन च सह ब्रह्मवैवर्तेऽपि ( प्रकृतिखं० अ० २-३ ) सन्ति।

३६. "ननु ब्रह्माण्डे जातत्वात्कथमण्डमजनयद्? इत्यत्राह अण्डेति; केचिदिति, तन्न इत्यर्थः। दूषयति—द्रष्टव्यमिति; अजत्वादेव ब्रह्मा न अण्डजातः; अण्डजत्ववचनं त्वस्य प्रकारान्तरेणेत्याह—स्मृतिमिति। आकाशम् अव्याकृतम्। आकाशजः पितामहः किमाश्रयेण तिष्ठेदिति चेत्कश्चिद् ब्रूयात्, तं प्रति ब्रूहि—'तदा न किंचिद् भवेदिति;' पितामहस्य निरधिष्ठानत्वे सति तज्जमिदं सर्वं शून्यमेव स्याद्, न किंचिद् भूयादित्यर्थः। ननु कोऽयं 'प्रजापति'पदेनोच्यते? अत आह—अहङ्कार इति प्रोक्त इति। 'प्रभुः' व्यापकः, यतः सर्वतेजोगतः जलचन्द्रन्यायेन कृत्स्नं चैतन्यज्योतिः प्राप्तः। अयं

† "अथ डिंभ इति। 'डिंभोऽपि बालिशे, बाले' इति मेदिनीकोशात् 'डिंभो' बालो यो राधया पूर्वं स्वस्माज्जातो जले प्रक्षिप्तः, स यावद्ब्रह्मणो वयस्तावत्परिमितकालपर्यन्तं जलेऽतिष्ठत्; ततः स बालकः 'काले' परिपूर्णसमये जाते सति द्विधाभूतो बभूव, तदण्डं निर्भिद्य बहिर्निर्गत इत्यर्थः। अनेन च ग्रन्थेन 'पूर्वं राधाया उदरात् पक्ष्यण्डवद् अण्डरूपेण निर्गतः, स च बृहदण्डरूपो भयात्तया जले क्षिप्तः, तद् अण्डं बहुना कालेन पुनर्निर्भिन्नं सद् द्विधा जातं, तन्मध्ये पुरुषो बालकरूपोऽयं स्थित' इति भाति; पुराणान्तरे—'तद् अण्डम् उदकेशयम्' इत्यादिना तथैव प्रतिपदनाच्च" [ नीलकण्ठी ]

तस्यानेकमुपादानं-तेजो, वीर्यं परात्मनः, भूः, पञ्चीकृतभूतानीत्यादि शास्त्रेषु विश्रुतम् ।
तदुत्पत्तेः प्रकारश्च क्रमश्चापि बहुः स्मृतः, तथैवाण्डस्वरूपं च भिन्नभिन्नं निरूपितं—
सर्वभूतमयं, हैमं, मृन्मयं चैवमादिकम् । क्वचित्तद्ब्रह्मणः कार्यं, कारणं च क्वचिन्मतम् ।

( अजन्मा ) है, अतः 'अण्ड' से उसका जन्म होना असम्भव है । शास्त्र-पुराणों मे 'अण्ड' से ब्रह्मा के उत्पन्न होने की जो बातें हैं, उनका तात्पर्य दूसरा है । अर्थात् उन स्थलों पर 'अण्ड' का अर्थ 'आकाश' है और उस से उत्पन्न होने के कारण लोकपितामह ब्रह्मा को अण्डजन्मा कहते हैं । इस पर यहाँ यह प्रश्न उठ सकता है कि जब आकाशरूप निराकार अण्ड से ब्रह्मा उत्पन्न हुआ तब अन्य मूर्त्त आधार के अभाव मे वह ठहरा कैसे ? इसका सरल उत्तर यह है कि 'ब्रह्मा' यह नाम हाड़-मांस के शरीरवाले किसी पुरुष का नहीं है, किन्तु 'सर्वतेजोगत' ( सभी चैतन्य ज्योतियों मे व्याप्त ) 'अहङ्कार' को ही ब्रह्मा कहते हैं । वह अहंकाररूप ब्रह्मा, जब 'अण्ड' नहीं रहता है, तब भी ( ब्रह्माण्ड की उत्पत्ति के पहले और इसके विनाश के बाद भी ) विद्यमान रहता है, अतः वह ब्रह्माण्ड-स्वरूप अण्ड से उत्पन्न कोई शरीरी व्यक्ति नहीं है । ( फिर भी 'ब्रह्मा' "प्रथम शरीरी" इस लिये कहलाता है कि यह सारा ब्रह्माण्ड ही उसका स्थूल शरीर माना गया है जिसमे वह आत्मरूप से व्याप्त है ) इस विषय पर आगे अधिक प्रकाश डाला जायगा ।

उस 'अण्ड' के उपादान कारण भी अनेक तत्त्व और तत्त्वसंघात बतलाये गये हैं । वैशेषिकदर्शन-प्रशस्तपादभाष्य के अनुसार पार्थिव-परमाणुविशिष्ट तैजसपरमाणुओं से वह महद् 'अण्ड' उत्पन्न होता है, जिसमें महेश्वर, सभी भुवनों के सहित, सर्वलोकपितामह चतुर्मुख 'ब्रह्मा' को उत्पन्न करके, प्रजा के सृष्टि-कार्य मे नियुक्त करता है[३७] ।

भावः—सुषुप्तिसदृशादव्याकृताकाशादुत्थितोऽहङ्काररूप उपाधिः, तेन साक्षी सर्वात्मनाऽवच्छिन्नः, सोऽयमहङ्कारविशिष्टो बाह्यं व्योमादिकं कल्पितवान्" इति तत्रत्या नीलकण्ठी ।

३७ "इहेदानीं चतुर्णां महाभूतानां सृष्टि-संहारविधिरुच्यते । ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः, तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेण उत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः, ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते; धर्माऽधर्मसंस्काराऽनुविद्धा आत्मानश्च तावन्तमेव कालम् ।

ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षाऽनन्तरं सर्वात्मगतवृत्तिलब्धाऽदृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान्वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायौ आप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव सलिलनिधौ पार्थिवेभ्यः परमाणुभ्यो ( द्व्यणुकादिप्रक्रमेण समुत्पन्ना ) महापृथिवी संहता घनीभूताऽवतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेण समुत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमानस्तिष्ठति ।

एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महे-( परमे )-श्वरस्याभिध्यानमात्रात् ( इच्छामात्रात्, न तु व्यापारान्तरात् ) तैजसेभ्योऽणुभ्यः पार्थिव-( वादि )-परमाणुसहितेभ्यो महद् 'अण्डम्' उत्पद्यते ( आरभ्यते ); तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनि-

परमात्मा के वीर्य वा बीज को तो स्वयं मनुजी ने ही 'अण्ड' का उत्पादक कहा है, और अन्यान्य पुराणादि शास्त्रों ने भी इसका समर्थन किया है। पर इस परमात्म-बीज के विषय मे भी शास्त्रकारों का मतभेद देखा जाता है। कोई इसे 'शक्ति'रूप, कोई 'शुक्र'रूप और कोई रसरूप मानते हैं। सांख्य-शास्त्रियों के मत से 'पृथिवी'रूप बीज[३८] ही 'अण्ड'रूप से परिणत होता है। वेदान्तियों ने पञ्चीकृत-पञ्चमहाभूतों को 'अण्ड' का उत्पादक वा आरम्भक

---

युङ्क्ते❀। स च महेश्वरेण विनियुक्तो 'ब्रह्मा' अतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञान-वैराग्य-भोगायुषः सुतान्प्रजापतीन् मानसान्, मनु-देव-र्षि-पितृगणान्, मुख-बाहूरु-पादतश्चतुरो वर्णान् अन्यानि चोच्चावचानि † भूतानि च सृष्ट्वा आशयाऽ( वासैना )नुरूपैर्धर्म-ज्ञान-वैराग्यैश्वर्यैः संयोजयतीति" [ प्रशस्तपादभाष्ये द्रव्यग्रन्थे सृष्टि-संहारविधिनिरूपणम् पृ० ४८-४९; पदार्थमालायां कालनि० पृ० ९३; तत्त्वावल्यां परि० ५ पृ० १२६-२७ न्या० को० ]

३८ "स्थूलशरीरोत्पत्तिरुच्यते। दशगुणितमहत्तत्त्वमध्ये अहङ्कारः, अहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगुणितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलं, जलस्याऽपि दशगुणितस्य मध्ये पृथिवी समुत्पद्यते। सैव स्थूलशरीरस्य बीजं; तदेव च पृथिवीरूपं बीजम् 'अण्ड'रूपेण परिणमते। तस्यापि दशगुणितस्याऽण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दश-भुवनात्मकं स्वयंभुवः स्थूलशरीरं, तत्संकल्पादेव, उत्पद्यते। तेनैव शरीरेण स्वयंभूः 'नारायण' इत्युच्यते। तदुक्तं मनुना स्वयंभुवं प्रकृत्य—

सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः, अप एव ससर्जादौ, तासु बीजमवाऽसृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभं, तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ‡

---

❀ "एवमनन्तरोक्तेन प्रक्रमेण उत्पन्नेषु महाभूतेषु 'महेश्वरस्याऽभिध्यानमात्रात्' सङ्कल्पमात्रात्, तैजसेभ्यः परमाणुभ्यः पार्थिव-परमाणुसहितेभ्यो 'महद् अण्डं' महद् विम्बम् आरभ्यते; विम्बारम्भे पार्थिवा अवयवा उपष्टम्भकाः, तेनेदं वह्निपुञ्जप्रायं नाऽभूत्। तस्मिन् अण्डे चत्वारि वदन-कमलानि यस्य तं ब्रह्माणं 'सर्वलोकपितामहं' सर्वेषामेव लोकानामाद्यं पुरुषं, समस्तैर्भुवनैः सहोत्पाद्य प्रजानां 'सर्गे' जनने, 'विनियुङ्क्ते' त्वमिदं कुर्विति" [ तत्रत्या न्यायकन्दली ]

† "अत्रेदं बोध्यम्—एषा हि आदिसृष्टिरयोनिजैव; तत्र 'उच्चा' धर्मविशेषसहकृतेभ्योऽणुभ्यः, 'अवचा' च अधर्मविशेषसहकृतेभ्यो जायते। 'ब्रह्मा' अयोनिजः अतिशयितधर्मविशेषसहकृतेभ्योऽणुभ्यो जायते, ईश्वराऽभिध्यानमात्रात्; ( प्रशस्त० टिप्प० पृ० १९ ) इति" [ न्या० को० ]

‡ "चतुर्दशभुवनात्मकसमष्टिस्थूलशरीरावच्छिन्नस्य हिरण्यगर्भस्य ब्रह्मणः 'नारायण' संज्ञायां मनुवाक्यं प्रमाणयति—'सोऽभिध्याय' इति। तदर्थश्च—'सः' समष्टिसूक्ष्मशरीरा-ऽवच्छिन्नः परमात्मा, विविधाः प्रजाः 'सिसृक्षुः' स्रष्टुमिच्छुः, 'अभिध्याय' 'बहु स्यां, प्रजायेयम्' 'आपो जायन्ताम्' इत्याद्येवंरूपेण स्वसंयोगात्मकेन अभिध्यानमात्रेण, 'स्वात् शरीरात्' अव्याकृत-रूपात् स्वतोऽविभक्तात् प्रधानादिरूपात् शरीरात्, 'आदौ' पृथिवीसृष्टेः प्राक् महदादिसृष्टेः परम्, 'अपः' जलं, 'ससर्ज' सृष्टवान्; 'तासु' अप्सु, 'बीजं' पृथिवीरूपम् 'अवासृजत्' आरोपितवान्। एतेन प्रकृति-पुरुषसंयोगात् प्रकृतेः प्रथमपरिणामरूपा आदिसृष्टिः प्रोक्ता। 'तद्' बीजं पृथिवीरूपं. 'हैमं' हैममिव हैमं शुद्धिगुणयोगाद्विशुद्धरूपम्, अत एव 'सहस्रांशुसमप्रभम्' 'अण्डं' चतुर्दशभुवनावरणभूतं स्वयंभुवः स्थूलशरीरम् 'अभवत्'। 'तस्मिन्' अण्डे समष्टिस्थूलशरीरे, 'सर्वलोकपितामहः' स्वांशद्वारा सकलपुरुषव्यष्टिस्थूलशरीरजनकः, 'ब्रह्मा' विराडाख्यः, 'जज्ञे' प्रकटीभूतः। तस्यैव आदिशरीरित्वे प्रमाणमाह—स वै शरीरी प्रथमः' इति। तस्य 'नारायण'संज्ञायां बीजमाह—'आपः' इति।" सांख्यसारविवेकप्रदीपे पृ० ९४-९५।

माना है[३९]। ३४ वें टिप्पण में उद्धृत किये गये भागवत तथा विष्णुपुराण के वाक्यों से यह विदित होता है कि 'महत्तत्त्व से लेकर विशेष-( पञ्चमहाभूत )-पर्यन्त, इन सभी भावपदार्थों ने मिलकर 'अण्ड' को उत्पन्न किया; क्योंकि भिन्न भिन्न शक्तिवाले, वे प्रकृति के सभी विकार अलग अलग रह कर, परस्पर पूर्ण रूप से मिले विना, विश्वप्रजा की सृष्टि नहीं कर सकते थे[४०]।

उस 'अण्ड' की उत्पत्ति के प्रकार, और क्रम भी अनेकविध बतलाये गये हैं। कई शास्त्रीय स्थलों पर ऐसा निरूपण है कि आदि-सृष्ट 'अपों' ( आपः ) में परमात्माने बीजाधान किया और वह वीज ही 'अण्ड' रूप में परिणत होगया। अनेक पुराणों में यह उल्लेख है कि पहले महत्-आदि के क्रम से महाभूत-पर्यन्त की उत्पत्ति हुई, अनन्तर उनके संमिश्रण-( त्रिवृत्करण, पञ्चीकरण, वा सप्तीकरण )- से 'अण्ड' वना। देवीभागवत और ब्रह्मवैवर्तपुराण के ( पीछे ३५ वें टिप्पण में उद्धृत ) वचनों के अनुसार कृष्णरूप परमात्मा की चित्-शक्ति 'राधा' के गर्भ में श्रीकृष्ण के वीर्य से 'अण्ड' बना। ऐसे ही और भी अण्डोत्पत्ति के प्रकार तथा क्रम, वेद-पुराणों में निरूपित हैं; जो इस प्रकरण में यथाप्रसङ्ग उद्धृत वाक्यों पर ध्यान देने से स्पष्ट प्रतीत होंगे।

---

स वै शरीरी प्रथमः, स वै पुरुष उच्यते, आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्तत §।
आपो नारा इति प्रोक्ता, आपो वै नरसूनवः, ता यदस्यायनं पूर्वं, तेन नारायणः स्मृतः', इत्यादिनेति। तत एव चादिपुरुषाद् व्यष्टिपुरुषाणां विभागाद्, अन्ते च तत्रैव लयात्, स एव चैक आत्मेति श्रुति-स्मृत्योर्व्यवह्रियते। अतो न व्यवहारपरतया 'नारायण एव सर्वभूतानामात्मेति' श्रुति-स्मृतिविरोध इति। ततश्च स नारायणो विराट्शरीरी पृथिवीरूपस्वनाभिकमल-कर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यस्वयंभुवमवान्तरब्रह्माणं सृष्ट्वा तद्द्वारा अन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज। तथाच स्मर्यते—

'तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः'

इति" [ सांख्यसारे पूर्वभा० तृतीयपरि० पृ० ९४–९६ ; सां० तत्त्वविवेचने पृ० ३९–४१ ; तत्त्वयाथार्थ्यदी० पृ० ६८–६९ ]

३९ "एवं पञ्चीकृतानां भूतानामेव अण्डोत्पादकत्वम्। अण्डोत्पादनात्पूर्वसृष्टिः 'समष्टिसृष्टिः'; अनन्तरसृष्टिः 'व्यष्टिसृष्टिः'।··· 'अण्डं' नाम कपित्थफलाकारं पञ्चीकृत-पञ्चभूतारब्धं प्राकृत-द्रव्यम्" [ यतीन्द्रमतदी० अवता० ४ प्रकृतिनि० पृ० ४६–४७ ]

४० "नानावीर्याः पृथग्भूताः सप्तैते संहतिं विना नाऽशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।
समेत्यान्योन्यसंयोगमन्योन्याश्रयिणश्च ते, एकसङ्घातचिह्नाश्च सम्प्राप्यैक्यमशेषतः,
पुरुषाऽधिष्ठितत्वाच्च, अव्यक्ताऽनुग्रहेण च, महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते।
जलबुद्बुदवत्तत्र क्रमाद्वै वृद्धिमागतं भूतेभ्योऽण्डं महाबुद्धे, बृहत्तदुदकेशयम्।
प्राकृतेऽण्डे विवृद्धः सन् क्षेत्रज्ञो ब्रह्मसंज्ञितः, स वै शरीरी प्रथमः, स वै पुरुष उच्यते;
आदिकर्त्ता स भूतानां, ब्रह्माग्रे समवर्त्तत। तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरं;
मेरुस्तस्यानुसंभूतो, जरायुश्चाऽपि पर्वताः; समुद्रा गर्भसलिलं तस्याऽण्डस्य महात्मनः।
तस्मिन्नण्डे जगत्सर्वं सदेवाऽसुरमानुषं, द्वीपाद्यद्रिसमुद्राश्च, सज्योतिर्लोकसंग्रहः"
[ मार्क० पु० ४५, ५९–६६; वि० पु० १, २; ५२–५८; कूर्मपु० अ० ४; लिं० पु० पूर्वार्धे ७०, ५१–६६ वा० पु० प्रक्रियापादे अ० ४ श्लो० ७२–८२ ]

---

§ इह मानवीयत्वेन समुद्धृतः एष श्लोकः साम्प्रतमुपलब्धमनुस्मृतौ न दृश्यते; कूर्मपुराणे ( पूर्ववि० ४ श्लो० ३८ ); वा० पु० ४, ७७; लैङ्ग–मार्कण्डेययोश्च तूपलभ्यते।

जन्माऽपि ब्रह्मणः पद्माद्विष्णुनाभिसमुद्भवात्, क्षुद्रा-ऽनिरुद्धयोर्नाभेः कञ्जाद्[४१], अण्डात्, तथा स्वतः, भगवत्याश्च दुर्गायाः सकाशाद्, एवमादितः कारणाद्विविधादुक्तं; तद्रूपं च पृथग्विधम्।
एवं नानाप्रकारेण ब्रह्मसृष्टिनिरूपणात् विभ्रमः संभवेन्नूनं प्रमायां विदुषामपि।
का कथाऽधीतिनां ग्रन्थे, प्रत्यक्षं शृण्वतामपि सन्देहोऽभून्महर्षीणां पुराणार्थेऽतिदुर्गमे-
"अहो पुराणविदुषामत्यन्तं दुर्गमं वचः, न बुद्धं वचनं किंचिद्धनेशोत्पत्तिपूर्वकम्।
अधुना कथितं जन्म धनेशस्येश्वराद्; इदं पुनर्भिन्नक्रमं जन्म ब्रवीषि कथमेव माम्?"

---

इसी प्रकार 'अण्ड' के स्वरूप भी सर्वभूतात्मक, सुवर्णमय, मृन्मय और सूर्यमण्डलरूप इत्यादि अनेक बतलाये गये हैं। एवं वह 'अण्ड' कहीं 'ब्रह्मा' का 'कार्य' ( स्वरया सह संभूय विरिञ्चोऽण्डमजीजनत् ) और कहीं 'कारण' माना गया है।

'ब्रह्मा' का जन्म भी कहीं विष्णु के नाभि-कमल से, कहीं 'क्षुद्र' विराट् के नाभि-कमल से, कहीं अनिरुद्ध के नाभि-कमल से, कहीं 'अण्ड' से, कहीं पुष्कर ( आकाश ) से, कहीं स्वतः, और कहीं 'दुर्गा' के सकाश से, इस प्रकार के विविध कारणों से हुआ बतलाया गया है; तथा उस ( ब्रह्मा ) का स्वरूप भी नाना- प्रकार का वर्णित है। इसका विशेष विवरण आगे ११ वें श्लोक के भाष्य में होगा।

इस तरह परस्पर विरुद्धवत् आभासमान नाना प्रकारों से 'ब्रह्मा' की सृष्टि का निरूपण होने से विद्वानों के भी यथार्थ ज्ञान में भ्रम हो सकता है। ऐसी बातों को इतिहास-पुराणों के ग्रन्थों में पढ़नेवाले अद्यतन अल्पज्ञ मनुष्यों की चर्चा तो दूर रहे, आदिम पुराणप्रवक्ताओं के साक्षात् संवाद में, उनके मुख से प्रत्यक्ष सुननेवाले विज्ञतम और असाधारण-शेमुषीसम्पन्न महर्षियों को भी पौराणिक बातें समझने में कठिनाई होती थी। इस विषय की चर्चा कतिपय इतिहास-पुराणों में ही स्थान स्थान पर आई है। हमने ब्रह्मवैवर्तपुराण और महाभारतीय भगवद्गीता का उदाहरण देकर ऊपर इस विषय का दिक्प्रदर्शनमात्र किया है। महर्षि शौनक ने सौति से स्पष्ट

---

४१ "दधार गर्भं सा राधा यावद्वै ब्रह्मणः शतं; सुस्राव सा तदन्ते च डिम्भं तत्परमाद्भुतम्।...
जज्ञे महान्विराट् तेन डिम्भेन कलयाश्रयः।... तस्य लोम्नां च कूपानि जलपूर्णानि सन्ततं,
प्रत्येकं क्रमतस्तेषु शेते 'क्षुद्र'विराट् पुनः सहस्रपत्रं कमलं जज्ञे क्षुद्रस्य नाभितः;
तत्र जज्ञे स्वयं ब्रह्मा; तेनाऽयं कमलोद्भवः" [ ब्र० वै० पु० श्रीकृष्णजन्मखं० उत्त० अ० ८४ ]
"ततो भूयो जगत्सर्वं करिष्यामीह विद्यया अस्मिन्मूर्त्तिश्चतुर्थी या, साऽसृजच्छेषमव्ययं;
स हि संकर्षणः प्रोक्तः, प्रद्युम्नं सोऽप्यजीजनत्; प्रद्युम्नादनिरुद्धोऽहं, सर्गो मम पुनः पुनः;
अनिरुद्धात् तथा ब्रह्मा, तन्नाभिकमलोद्भवः; ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च;
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः" [ म० भा० शां० ३३९, ७२-७५ ]
"तमसो ब्रह्म संभूतं तमोमूलामृतात्मकं; तद् विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितं;
सोऽनिरुद्ध इति प्रोक्त,स्तत्प्रधानं प्रचक्षते; तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम।
विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः
जगतश्चिन्तयन्सृष्टिं चित्रां बहुगुणोद्भवाम्। तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः,
अहंकारस्ततो जातो, ब्रह्मा स तु चतुर्मुखः हिरण्यगर्भो भगवान्सर्वलोकपितामहः
पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः" [ म० भा० शां० ३४७, १७-२२ ]

इत्याह शौनकः सौतिं ब्रह्मवैवर्ते;† ईदृशम् एवाऽर्जुनोऽपि कृष्णं च बुद्धिमोहनमात्मनः—
"व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ; तदेकं वद निश्चित्य, येन श्रेयोऽहमाप्नुयाम् ‡"
"संन्यासं कर्मणां कृष्ण, पुनर्योगं च शंससि ; यच्छ्रेय एतयोरेकं, तन्मे ब्रूहि सुनिश्चितम् §"
अन्यस्मिन्विषयेऽप्येवं मिथोभिन्नार्थवद्वचः पुराणादिषु भूयोऽस्ति, यथा सर्गनिरूपणे।
तदेतन्मतभिन्नत्वं कल्पभेदात्समाहितम्, अन्तःसर्गपरत्वाद्वा, वैश्वरूप्यात्परात्मनः[४२]।

कहा है कि 'पुराण-शास्त्रियों का कथन इतना दुर्बोध होता है कि मैंने ज़रा भी नहीं समझा। ऐसे ही अर्जुन ने श्रीकृष्ण को उलाहना दिया है कि 'तुम परस्पर विरुद्ध विषयों की खिचड़ी-सी बातें कहकर मेरी बुद्धि को मोहते-जैसे हो; अतः निश्चय करके एक ही ऐसी बात कहो, जिससे मेरा कल्याण हो।'

इसी तरह अन्यान्य विषयों मे भी परस्पर विरुद्ध वा भिन्न भिन्न प्रतीत होनेवाली अगणित पुराण-वार्ता है; जैसा कि सृष्टि के विषय मे यहाँ दिखलाया गया है। सृष्टिविषयक परस्पर

† ब्र० वै० पु० १, १०, ५–६। ‡ भ० गी० ३, २। § भ० गी० ५, १।

४२. नारायणं प्रति ब्रह्मोक्तिः—

"त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितं ; चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनं ;
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ; त्वत्तः श्रवणजं चाऽपि चतुर्थं जन्म मे विभो ;
नासत्यं चाऽपि मे जन्म त्वत्तः पञ्चममुच्यते ; अण्डजं चाऽपि मे जन्म त्वत्तः षष्ठं विनिर्मितं ;
इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो ; सर्गे सर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जित।"
[ म० भा० शां० ३४७, ४०–४३ ]

"क्वचित्क्वचित्पुराणेषु विरोधो यदि लभ्यते, कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते"
[ ब्र० वै० पु० द्वितीयभागस्य भूमिकायामुद्धृतम् ]

"कल्पभेदेनोभयमपि उपपद्यते। यथा पुराणेषु क्वचित् शिवाद् ब्रह्म-विष्ण्वोरुत्पत्तिः, क्वचित्तु ब्रह्मणः सकाशात् शिव-विष्ण्वोः, क्वचिद्गणेशाद् एतेषां त्रयाणां, तथा सूर्यादेतेषां त्रयाणां, कल्पभेदेनोत्पत्तिरभिहिता; तथैवाऽत्राऽपि कल्पभेदेन उभयार्थस्यापि संभवात्। ननु पुराणभेदेन तत्र भिन्न-भिन्ना सृष्टिप्रक्रिया अभिहिता; अत्र तु एकस्मिन्नेव पुराणे भिन्ना प्रक्रियाऽभिहितेति जनमेजयस्यैकस्य श्रोतुर्व्यामोहः स्यादिति चेद् ? न; महाभारते शिवमाहात्म्यप्रकरणे शिवस्य ब्रह्म-विष्णुकारणत्वं, विष्णुमहात्म्यप्रकरणे विष्णोरेव ब्रह्म-रुद्रकारणत्वमिति मर्यादाया एकस्मिन्नपि पुराणे दृष्टत्वात्; एवमेव कूर्मपुराणादिषु कल्पभेदेन सृष्टिभेदस्यैकपुराणे एव दृष्टत्वाच्च। ननु तथाऽपि श्रोतुर्व्यामोहः कथं न भवतीति चेद् ? न; उभयोर्विरुद्धयोः प्रतिपादनेन, सृष्टेर्मायिकत्वेन मिथ्यात्वात्, मिथ्यापदार्थे श्रुतेः पुराणादीनां च नाग्रह इति श्रोतुर्बोधसंभवात्; यथेन्द्रजालं कस्मादुत्पन्नमिति विमर्शे, न तत्र किंचित्कारणं मायाऽतिरिक्तं लभ्यते; तथाऽत्राऽपि सृष्टौ मायैव मुख्यं कारणमिति बोधनार्थमेव व्यासेन तथोक्तत्वाच्च। यद्येकविधैव सृष्टिः, तस्याश्च कारणमेकविधमेव प्रतिपाद्येत; तदा जगतः सत्यत्वशङ्काऽपि स्यात्; सा मा भवतु, किन्त्वनिर्वचनीयमेव जगद्भवतीति अनिर्वचनीयत्वज्ञानार्थं विविधसृष्टिप्रतिपादनस्य, विविधकारणप्रतिपादनस्याऽवश्यकत्वाच्च। तदुक्तं गौडपादाचार्यैः—
'मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्या चोदिताऽन्यथा, उपायः सोऽवताराय, नास्ति भेदः कथञ्चन'
( गौ० पा० का० ३, १५ ) इति।

व्याख्यातं भगवद्भिर्भाष्यकारैः—

'मृल्लोहविस्फुलिंगादिदृष्टान्तोपन्यासैः सृष्टिर्या 'चोदिता' प्रकाशिता, अन्यथा अन्यथा च सर्वसृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवताराय उपायोऽस्माकम्। यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणमुख्यत्वबोधनाय ( प्राणवैशिष्ट्यबोधाऽवताराय )। तदप्यसिद्धमिति चेद् ? न, शाखा-

मायावादिमते सृष्टिक्रमनानात्वदर्शनं जगतोऽवास्तवत्वस्य द्योतनार्थमिति स्थितम्। ब्रह्माण्डानामनन्तत्वात्, [४३] तत्तद्ब्रह्मादिजन्मनः प्रकार-क्रमभेदो वा शास्त्रेषु स्यान्निरूपितः।

विरुद्ध मतों के सम्बन्ध मे उठनेवाली शङ्का का समाधान भी कई प्रकारों से शास्त्र-पुराणों मे ही किया गया है। उनमे लिखा है कि भिन्न भिन्न महाकल्पों के अनुसार सृष्टि के प्रकार और क्रम मे भी भेद हो जाता है। अर्थात् एक एक ब्रह्मायुष की समाप्ति के बाद महाप्रलय और तदनन्तर जो सृष्टि होती है, उसके प्रकार आदि मे पूर्व सृष्टि की अपेक्षा कुछ भिन्नता आ जाती है। कहीं कहीं ऐसा उल्लेख भी है कि सृष्टिविषयक प्रकारभेद और क्रमभेद की बात अवान्तर-सृष्टिपरक है; अर्थात् प्रतिकल्प ( ब्रह्मा के प्रत्येक दिन ) मे जो अन्तःसृष्टियाँ होती रहती हैं, उनके प्रकार भेदादि का निरूपक है। इस विषय मे वेदान्तियों का समाधान यह है कि सब कारणों का भी

---

भेदेषु अन्यथाऽन्यथा च प्राणादिसंवादश्रवणात्। यदि हि संवादः परमार्थ एवाऽभूत्, एकरूप एव संवादः सर्वशाखास्वश्रोष्यत्, विरुद्धाऽनेकप्रकारेण नाऽश्रोष्यत्; श्रूयते तु; तस्मान्न तादर्थ्यं संवादश्रुतीनाम्। तथा उत्पत्तिवाक्यानि प्रत्येतव्यानि' ( तत्रत्यं शाङ्करभाष्यम् ) इति" [ दे० भा० नील० टी० स्कं० ९ उपोद्घाते ]

इमामेव गौडपादीय-कारिकामुपादाय तैत्तिरीयारण्यक-( प्रपा० ८ अनु० २ )-भाष्ये सायणाचार्योऽपीत्थमाह—

न हि सृष्टिरुपास्यत्वेन ज्ञेयत्वेन वा स्वतन्त्रपुरुषार्थाय कल्पते; 'सृष्टिमुपासीत,' 'सृष्टिवित् श्रेयः प्राप्नोति' इत्येवं वचनाऽभावात्। अत एव श्रुति-स्मृति-पुराणा-ऽऽगमेषु परस्परविरोधेन बहुधा कथ्यमाना सृष्टिः सर्वाऽपि वार्तिककारैरङ्गीकृता—

'यथा यथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि, सा सैव प्रक्रियेह स्यात्साध्वी, सा चाऽनवस्थिता;'

इति। न बहुभिर्दृष्टेषु बहुविधस्वप्नेषु कश्चिदेवाङ्गीकार्यः, न त्वितरेऽङ्गीकार्या इति नियमोऽस्तीति"

"यत्तु शेषशायिनो नारायणस्य नाभि-कमल-श्रोत्र-चक्षु-रादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते, तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यं; दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाऽऽविर्भावः शेषशायिनः सकाशाद् घटते, न त्वादिसर्गेषु; दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति" [सांख्यसारे पू० भा० परि० ३ पृ० ९६-९७; सां० त० वि० पृ० ४१; तत्त्वयाथार्थ्यदी० पृ० ६९ ]

४३. "आधारः सर्वविश्वानां महाविष्णुश्च प्राकृतः ;
प्रत्येकं लोमकूपेषु विश्वानि निखिलानि च अस्याऽपि; तेषां संख्यां च कृष्णो वक्तुं न हि क्षमः।
संख्या चेद्रजसामस्ति, विश्वानां न कदाचन ; ब्रह्म-विष्णु-शिवादीनां तथा संख्या न विद्यते ;
प्रतिविश्वेषु सन्त्येवं ब्रह्म-विष्णु-शिवादयः। पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्।...
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता ऊनपञ्चाशदुपद्वीपाऽसंख्यशैलवनान्विता ,
ऊर्ध्वं सप्त स्वर्गलोका ब्रह्मलोकसमन्विताः , पातालानि च सप्ताऽध,श्चैवं ब्रह्माण्डमेव च।...
एवं सर्वं कृत्रिमं च बाह्याऽभ्यन्तरमेव च जलबुद्बुदवत्सर्वं विश्वसंघमनित्यकम्"

[ दे० भा० स्कं० ९ अ० ३; ब्र० वै० पु० प्रकृतिखं० अ० ३ ]

"एतदावरणीभूतमण्डं विद्धि हिरण्मयम् ; एतेनाऽण्डकटाहेन लोकाः सर्वे समावृताः ;
उपर्युपर्यमी लोकाः कपित्थफलवत् स्थिताः। तद्दशोत्तरसंख्येन वारिणा परिवेष्टितम्
आवृत्याऽण्डं यथा वारि स्थितं, तद्वत्तदग्निना , स वायुना तद्वदेव, वायुश्च नभसाऽऽवृतः ,
सर्वं दशोत्तरं विद्यात्तद्व्योम महताऽऽवृतं , महांश्चाऽऽद्यप्रधानेन, प्रधानं तमसाऽऽवृतं।
तदनन्तं तमस्तस्य संख्यानं नैव विद्यते ; हेतुभूतमशेषस्य तमसः प्रकृतिः परा।
अण्डानामीदृशानां च सहस्राण्ययुतानि च ; बहुना वा किमुक्तेन, संख्या वक्तुं न शक्यते।
अण्डानि तानि सर्वाणि व्याप्य नारायणः स्थितः , अतश्च तेषां भगवान् सर्वाधारः परः पुमान्

कारण परमात्मा है; जगत्कारण के रूप मे जिन दूसरे तत्त्वों का उल्लेख शास्त्रों मे मिलता है, वे सब उसी के रूपान्तर हैं; वा उनके वाचक शब्द, परमात्मा के ही नाम हैं; अतः सृष्टिविषयक नानाकारणवाद और प्रकारादिभेद का अविरोधी समन्वय हो जाता है। मायावादियों के मत के अनुसार वेद-शास्त्रों मे सृष्टि के नाना कारणों अनेक प्रकारों और विविध क्रमों का उल्लेख, जगत् की अवास्तविकता को सूचित करने के लिये हुआ है। कुछ शास्त्रकारों का मत ऐसा है कि 'ब्रह्माण्ड' वा लोक, अनन्त हैं, और प्रत्येक ब्रह्माण्ड मे 'ब्रह्मा' आदि आधिकारिक पुरुष होते हैं; सुतरां उनकी सृष्टि के कारण, प्रकार और क्रम आदि मे कुछ कुछ भेद होता है, जिसका उल्लेख पुराणादि ग्रन्थों मे है, अतः उसमे ( विविध सृष्टिवाद मे ) वस्तुतः कोई विरोध नहीं है।

---

बहिश्च साक्षिवत्सर्वमीक्षमाणोऽवतिष्ठते" [ बृहद्ब्रह्मसं० पा० २ अ० ७ ]

"दृश्यमानमिदं सर्वमनित्यमिति चोच्यते, प्राकृतं कार्यभूतं हि मदनन्यतया स्थितम्।
अहमात्मा च सर्वेषामाधारः पुरुषः परः ; क्रीडार्थं देवदेवेश, मयैव प्रकटीकृतं
लोकैश्चतुर्भिर्दशभिः सागरैर्द्वीपसंयुतैः भूतैश्चतुर्भिर्दशभिर्भूधरैश्च महोत्सवैः
परिपूर्णमिदं रम्यमण्डं प्रकृतिसंभवं दशोत्तरैरावरणैः पुष्टं वस्त्रपुटैरिव।
योजनानां षष्टिकोटिमुन्नतं, विस्तरेण तु पञ्चाशत्कोटिगुणितं प्राकृतं त्वण्डमेव च।
एतदण्डकटाहेन तिर्यगूर्ध्वमधः क्रमात् कृष्टे सस्यं यथा बीजं सर्वतो वै समावृतं,
यथा कपित्थं बीजानि समाकृष्याऽवतिष्ठते, तथाऽण्डमेतदाधारं चेतना-ऽचेतनानि हि"।

[ बृ० ब्र० सं० पा० ३ अ० १ ]

"सर्गे सर्गे पृथग्रूपं, सन्ति सर्गान्तराण्यपि, तेष्वप्यन्तःस्थसर्गौघाः कदलीदलपीठवत्।
चिद्घनैकघनात्मत्वाज्जीवान्तर्जीवजातयः कदलीदलवत्सन्ति कीटा इव धरोदरे।
त्रिजगच्चिदणावन्तरस्ति स्वप्नपुरं यथा, तस्याऽप्यन्तश्चिदणवस्, तेष्वप्येकैकशो जगत्।
आकाशे परमाण्वन्तर्द्रव्यादेरणुकेऽपि च जीवाणुर्यत्र, तत्रेदं जगद्वेत्ति निजं वपुः।
अन्तरन्तस्तदन्तश्च स्वकोशेऽप्यणुकं प्रति जातानि, जायमानानि कदलीदलपीठवत्।
जगतोऽन्तरहंरूपमहंरूपान्तरे जगत् स्थितमन्योन्यवलितं कदलीदलपीठवत्।
परमाणुनिमेषाणां लक्षांशकलनास्वपि जगत्कल्पसहस्राणि सत्यानीव विभान्त्यलम्।
तेष्वप्यन्तस्तथैवान्तः परमाणु-कणं प्रति भ्रान्तिरेवमनन्ताऽहो इयमित्यवभासते।
अणावणावसंख्यानि तेन सन्ति जगन्ति खे ; तेषां तान्यव्यवहारौघान्संख्यातुं क इव क्षमः
अनन्तानि जगन्त्यस्मिन्ब्रह्मतत्त्वमहाम्बरे अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च।
भूयो भूयो विवर्तन्ते सर्गेष्वप्स्विव वीचयः ; अत्यन्तसदृशाः केचित्, केचिदर्धसमक्रमाः,
केचिदीषत्समाः, केचिन्न कदाचित्पुनस्तथा। सर्वासां (?) सृष्टिराशीनां चित्राकारा विचेष्टिताः।
देवमात्रैकसर्गाणि, नरमात्रमयानि च, दैत्यवृन्दमयान्येव, कृमिनिर्विवराणि च।
कदाचित्सृष्टयः शार्व्यः, कदाचित्पद्मजोद्भवाः, कदाचिदपि वैष्णव्यः, कदाचिन्मनुनिर्मिताः।
भूरभून्मृण्मयी काचित्, काचिदासीद्दृषन्मयी, आसीद्धेममयी काचित्, काचित्ताम्रमयी तथा"।

[ श्रीभीखनलालात्रेयसङ्कलिताद् योगवासिष्ठसारादुद्धृतम् ]

**"तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम्। 'अण्डं' च प्रधानस्याऽणुरवयवो, यथा आकाशे खद्योत इति"** [ योगभाष्ये ३,२६ ]

"तदेतत्समग्रं पञ्चाशत्कोटिपरिमितं भूगोलं सुप्रतिष्ठितमण्डमध्ये व्यूढम्। तादृशं च शतकोटि-विस्तरमण्डं सप्ताऽऽवरणसहितमपि प्रधानस्याणुरवयवो, यथा आकाशे खद्योतः; प्रकृतिं प्रकृत्य—

**'अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ईदृशानां प्रदृश्यन्ते कोटिकोटिशतानि च'**

**( वि० पु० २,७,२७ ) इति विष्णुपुराणात्"** [नागोजीभट्टकृता योगसूत्रवृत्तिः ]

एवं नानाविधं शङ्का-समाधानं प्रदर्शितं मिथोभिन्नार्थवादानामण्डादिविषये बुधैः।
अत्राऽण्डप्लवनं त्वप्सु, ब्रह्मणश्चोद्भवस्ततः, प्रायः सामान्यतः प्रोक्तः सर्ववेद-पुराणयोः[४४]।
अप्स्वाकाशस्वरूपासु यद् अण्डं प्लवतेऽनिशं, तत्र सूर्यात्मको 'ब्रह्मा' विष्ठितो राजते भृशम्।
प्रत्यक्षं दृश्यते भास्वद्धिरण्याण्डं खे हिरण्मयं, तस्मिन् हिरण्यगर्भोऽयं स्थितो गर्भ इवांशुमान्[४५]।

इस प्रकरण के संस्कृत भाष्य और टिप्पणों में विविध पुराणादि-ग्रन्थों से जो वाक्य उद्धृत किये हैं, उनसे संस्कृतज्ञ पाठकों को विदित हो जायगा कि ऋषियों ने विविध शब्दों में नाना

४४ "असद्वा इदमग्र आसीत्।...स एव पुरुषः प्रजापतिरभवत्।...सोऽपोऽसृजत। वाच एव लोकाद् वागेवास्य साऽसृज्यत; सेदं सर्वमाप्नोद् यदिदं किञ्च; यदाप्नोत्, तस्माद् 'आपो' यदवृणोत्, तस्माद् वाः। सोऽकामयत, आभ्योऽद्भ्योऽधि प्रजायेयेति; सोऽनया त्रय्या विद्यया सहापः प्राविशत्; त 'आण्डं' समवर्त्तत। तदभ्यमृशद् अस्त्वित्यस्तु भूयोऽस्त्वित्येव। तदब्रवीत्, ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या; तस्मादाहुर्ब्रह्माऽस्य सर्वस्य प्रथमजमिति; अपि हि तस्मात्पुरुषाद् ब्रह्मैव पूर्वमसृज्यत।...सोकामयत प्रजापतिः; भूय एव स्यात् प्रजायेतेति; सोऽग्निना पृथिवीं मिथुनं समभवत्; तत आण्डं समवर्त्तत; तदभ्यमृशत् पुष्यत्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत्। स यो गर्भोऽन्तरासीत्, स वायुरसृज्यत; अथ यदश्रु संक्षरितमासीत्, तानि वयांसि अभवन्; अथ यः कपाले रसो लिप्त आसीत्, ता मरीचयोऽभवन्; अथ यत् कपालमासीत्, तदन्तरिक्षमभवत्। सोऽकामयत भूय एव स्यात् प्रजायेतेति; स वायुनाऽन्तरिक्षं मिथुनं समभवत्, तत आण्डं समवर्त्तत,...ततोऽसावादित्योऽसृज्यत।...स आदित्येन दिवं मिथुनं समभवत्, तत आण्डं समवर्त्तत,...ततश्चन्द्रमा असृज्यत" इत्यादि शतपथे सृष्टिब्राह्मणम् (कां० ६ प्र० १ ब्रा० १–२)

४५ "तं रुक्म उपदधाति। असौ वाऽऽदित्य एष रुक्मोऽथ य एष एतस्मिन्मण्डले पुरुषः, स एष, तमेवैतदुपदधाति।... हिरण्यगर्भः समवर्त्तताग्र इति हिरण्यगर्भो ह्येष समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् इत्येष ह्यस्य सर्वस्य भूतस्य जातः पतिरेक आसीत्; स दाधार पृथिवीं द्यामुतेमामिति एष वै दिवं च पृथिवीं च दाधार; कस्मै देवाय हविषा विधेमेति, प्रजापतिर्वै 'कः' तस्मै हविषा विधेमेत्येतत्"* [ शत० ब्रा० कां० ७ प्र० ३ ब्रा० १ ]

"आदित्यो वा एष एतन्मण्डलं तपति, तत्र ता ऋचस्तदृचा मण्डलँ, स ऋचां लोकः; अथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते, तानि सामानि, स साम्नां लोकः; अथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुष, स्तानि यजूंषि, स यजुषा मण्डलँ, स यजुषां लोकः; सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः, इति" [ तै० आ० प्रपा० १० अनु० १३ ]

"आदित्यो वै तेज, ओजो, बलं, यश,श्चक्षुः, श्रोत्र,मात्मा, मनो, मन्यु,र्मनु,र्मृत्युः, सत्यो, मित्रो, वायु, राकाशः, प्राणो, लोकपालः, कः, किं, कं, तत्, सत्य, मन्न, माधु, रमृतो, जीवो, विश्वः, कतमः, स्वयंभूः, प्रजापतिरिति, संवत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिः, इति" [ तै० आ० प्रपा० १० अनु० १४ ]

* 'आदित्यमण्डलात्मको हि एष रुक्मः, आदित्यमण्डलमध्ये यो हिरण्मयः पुरुष आस्ते, अत एव श्रूयते—य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः (छान्दोग्यब्रा० ३,६,६) इति; एष एवोपधीयमानो हिरण्मयः पुरुषः; रुक्मरूपे आदित्यमण्डले तमेव पुरुषमुपहितवान् भवतीत्यर्थः।...

'एषः' हिरण्यपुरुषः, सूर्यमण्डलान्तवर्त्ती हिरण्यगर्भः; अपञ्चीकृतभूत-तत्कार्याऽभिमानी परमेश्वरो हि 'हिरण्यगर्भः' स च हिरण्मयाऽण्डमध्ये गर्भवदवस्थानाद् 'हिरण्यगर्भ' इत्युच्यते' इत्यादि तत्रत्यं सायणभाष्यम्।

देवमाताऽदितिः काचिद् वेदादिष्वति विश्रुता, तस्या अपत्यमादित्यो नाम, व्याकरणस्मृतेः।
साऽन्तरिक्षादिरूपा[४६] च निरुक्तादौ निरूपिता, तद्गर्भाऽण्डस्थितश्चाऽयं मार्त्तण्डो विश्वलक् मतः।
,मृते' व्यृद्धे-ऽर्थतः शून्ये नभस्यण्डं हिरण्मयं यत्, तन्मृताण्डमित्युक्तं, मार्त्तण्डस्तद्भवः स्मृतः[४७]

प्रकार से सृष्टि का वर्णन किया है। थोड़े शब्दों में उन सबका समन्वय यों हो जायगा कि, आपः, वरुणः, समुद्रः, आदि शब्द, आकाश के भी वाचक हैं, और जल के भी। ब्रह्माण्ड शब्द का अर्थ, स्पष्ट ही ब्रह्म, बृहत्तम, अनादि-अनन्त पदार्थ के ( जिसका एक रूप आकाश, 'खं ब्रह्म', है ) 'अण्ड' अर्थात् गोले, होता है। आकाश में भ्रमण करनेवाले सूर्य, नवग्रह, तथा असंख्य तारा आदि सब 'ब्रह्माण्ड' ही हैं। जैसे एक मनुष्य-शरीर का अधिष्ठाता एक जीव है, वैसे ( पिण्ड और ब्रह्माण्ड के सादृश्य के अनुसार-("पिण्डब्रह्माण्डयोरैक्यम्") प्रत्येक ब्रह्माण्ड का अधिष्ठाता त्रिमूर्त्यात्मक देवता 'ब्रह्मा' के आधिकारिक नाम से पुराणों में कहा जाता है; और जैसे प्रत्येक मनुष्य-समुदाय का एक प्रधान, तथा कई प्रधानों पर एक प्रधान, 'सिर के ऊपर सिर', अधस्तन अधिकारियों पर उपरितन अधिकारी, परम्परा से होते हैं, वैसे ही ब्रह्माण्डों, सौरसम्प्रदायों, जगतों, विश्वों की परम्परा, एक के अन्तर्गत एक, बंधी है। हमारे सौर जगत् में पृथ्वी एक ब्रह्माण्ड है, इसके अधिष्ठाता का नाम भी ब्रह्मा है, और सौर-सम्प्रदाय के महाऽधिकारी, हिरण्मय, आदित्य

४६ "अदितिरदीना देवमाता।
'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः विश्वेदेवा अदितिः पञ्चजना अदितिर्जात-मदितिर्जनित्वम्'
( ऋ० सं० १, ८९, १०; अथ० सं० ७, ६, १; वा० सं० २५, २३ ) इत्यदितेर्विभूतिमाचष्टे; एनान्यदीनानीति वा" [ नि० ४, २२-२३ ]

४७ अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि, देवाँ उपप्रैत्सप्तभिः परा मार्त्ताण्डमास्यत्।
सप्तभिः पुत्रैरदितिरुपप्रैत्पूर्व्यं युगं; प्रजायै, मृत्यवे त्वत्पुनर्मार्त्ताण्डमाभरत्" [ऋ०सं०१०,७२,८-९]

"साऽदितिः सप्तभिः पुत्रैर्देवानुपप्रैत्—उपागच्छत्; अष्टमं पुत्रं 'मार्त्तण्डं' सूर्यम्, 'परास्यद्' उपरि पराक्षिपदित्यर्थः।

अथ 'प्रजायै' प्राणिनामुत्पत्तये, 'मृत्यवे' तेषां मरणाय 'मार्त्ताण्डं' मृताद् व्यृद्धाद् अण्डाजातं मार्त्ताण्डनामानं सूर्यं 'पुनराभरत्' आहरत् द्युलोके अधारयत्; प्राणिमरण-जननादीनां सूर्योदयाऽस्तमयायत्तता स्फुटा" इत्यादि तत्रत्यं सायणभाष्यम्।

'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्; तस्या उच्छेषणमददुः; तत् प्राश्नात्, सा रेतोऽधत्त, तस्यै चत्वार आदित्या अजायन्त; सा द्वितीयमपचत्, साऽमन्यत—'उच्छेषणान्म इमेऽज्ञत, यदग्रे प्राशिष्यामि, इतोऽपि मे वसीयांसो जनिष्यन्त इति;' सा अग्रे प्राश्नात्, सा रेतोऽधत्त, तस्यै व्यृद्ध-माण्डमजायत; साऽऽदित्येभ्य एव तृतीयमपचत्, 'भोगाय म इदं श्रान्तमस्तु इति;' तेऽब्रुवन् वरं वृणामहै—'योऽतो जायाता, अस्माकं स एकोऽसत्, योऽस्य प्रजायामृध्याता, अस्माकं भोगाय भवादिति;' ततो विवस्वान् आदित्योऽजायत; तस्य वा इयं प्रजा, यन्मनुष्याः; तास्वेक एवर्द्धो, यो यजते, स देवानां भोगाय भवति" [ तै० सं० ६, ५, ६, १-२; तै० ब्रा० १, १, ९, १-३ गो० ब्रा० पू० २, १५; मार्कं० पु० अ० १०१, तथा अ० १०५ ]

"स सिसृक्षुरभूद्देवः प्रजापतिरिन्दम, तत्तेजसश्च तत्रैव मार्त्तण्डः समजायत।
मृतेऽण्डे जायते यस्मान्मार्तण्डस्तेन संस्मृतः, रजोगुणमयं यत्तद्रूपं तस्य महात्मनः;
चतुर्मुखः स भगवानभूल्लोकपितामहः। येन सृष्टं जगत्सर्वं सदेवाऽसुरमानुषं,
तमवेहि रजोरूपं महत्सत्त्वमुदाहृतम्" [ मात्स्ये २, ३५-३७ ]

'भवनं' व्यापनं, सत्ता-धारणं तत्र संस्थितिः ; न तु जन्मेति, "तत्राण्डे भवः, तस्मिन् अधिष्ठितः सूर्यात्मा जगतो धाता विधाता च स गीयते[४९] ब्रह्मा नारायणो नाम्नेतीहाऽप्यग्रे प्रवक्ष्यति। "पुष्करे ससृजे ब्रह्म ब्रह्माणम्" इति गोपथे ब्राह्मणे श्रूयते; तस्माच्चाऽयमर्थोऽवगम्यते[५०]।

४८ "ब्रह्म जज्ञानं प्रथमं पुरस्तादिति। असौ वा आदित्यो ब्रह्माऽहरहः पुरस्ताज्जायते;...एष उपवितिष्ठते, सतश्च योनिमसतश्च विवरिति; इमे वै लोकाः सतश्च योनिरसतश्च, यच्च ह्यस्ति, यच्च न; तदेभ्य एव लोकेभ्यो जायते।...स प्रजापतिः, सोऽग्निः" [शत० ब्रा० ७,३,१,१४-१५ ]

"असौ वा आदित्य इति; अत्र प्रादुर्भाव एव जनेरर्थः, न तु उत्पत्तिः,; अयमर्थः—तदुक्तविधं ब्रह्म सगुणं सत् 'असौ' द्युलोकस्थः 'आदित्यो' भूत्वा प्रत्यहं 'पुरस्तात्' पूर्वस्यां दिशि जायते' उदेति।...' एवंभूतः सूर्यः 'सतः' लोकत्रयात्मकस्य भावरूपस्य, 'असतः' अभावात्मकस्य च 'योनिम्' उत्पत्तिस्थानं 'विवः' विवृणोति।...

सः प्रजापतिरित्यादि। 'सः' उपधेयः पुरुषः 'प्रजापतिः' स्थूलप्रपञ्चाऽभिमानिविराडात्मकः, स एव 'अग्निः' सूक्ष्मप्रपञ्चाऽभिमानिहिरण्यगर्भात्मकः" इत्यादि तत्र सायणः।

४९. "चित्रं देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याऽग्नेः,
आप्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्तस्थुषश्च" [ ऋ० सं० १, ११५, १ ]

"ईदृग्भूतो मण्डलान्तर्वर्त्ती 'सूर्यो'ऽन्तर्यामितया सर्वप्रेरकः परमात्मा, 'जगतः' जङ्गमस्य, 'तस्थुषः' स्थावरस्य च 'आत्मा' स्वरूपभूतः; स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणं, कारणाच्च कार्य नातिरिच्यते, तथा च पारमर्षं सूत्रम्–'तदनन्यत्वमारम्भणशब्दादिभ्य इति" इत्यादि तत्र खण्डराजदीक्षितः।

५० "तद्यत् तत्सत्यम् , आप एव तद्, आपो हि वै सत्यं तस्माद् येनाऽऽपो यन्ति, तत्सत्यस्य रूपमित्याहुः; अप एव तस्य सर्वस्याऽग्रमकुर्वंस्तस्माद्यदैवाऽऽपो यन्त्यथेदं सर्वं जायते, यदिदं किञ्च।...

आपो वै पुष्करं, तासामियं (पृथिवी) पर्णं; यथा ह वा इदं पुष्करपर्णमप्स्वध्याहितम् एवमियमप्स्वध्याहिता; सेयं योनिरग्नेः" [ शत० ब्रा० ७,३,१, ६-८ ]

"अपां प्रथमसर्गश्च स्मर्यते—

'अप एव ससर्जादौ, तासु वीर्यमवाकिरत्' इति।...आपो वै पुष्करमित्यादि। 'पुष्करं सर्वतोमुख'मित्यादिनिगदप्रसिद्धिद्योतको 'वै'शब्दः। तासामपां प्रथमसृष्टानामियं पृथिवी 'पर्णं' पर्णस्थानीया। एतदेव विशदयति 'यथा ह वा' इति। 'इदं' पुष्करपर्णं पद्मपत्रं, यथा खलु अप्सु 'अध्याहितम्' उपर्याश्रितं सद् दृश्यते, एवमियं पृथिवी 'अप्सु' उदकेषु (?) 'अध्याहिता' उपर्याश्रिता वर्त्तते" इत्यादि तत्रत्यं सायणभाष्यम्।

"आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निं,
ततो देवानां समवर्ततासुरेकः, कस्मै देवाय हविषा विधेम।
यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञं,
यो देवेष्वधि देव एक आसीत्, कस्मै देवाय हविषा विधेम।"
[ ऋ० सं० १०, १२१, ७–८; वा० सं० २७, २५–२६ ]

"हिरण्यवर्णाः शुचयः पावका, यासु जातः कश्यपो यास्विन्द्रः।
"अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु" [तै० सं० ५, ६, १ ]

"अद्भ्यः संभूतो हिरण्यगर्भः"

"अद्भ्यः संभूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि;
तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे" [ तै० आ० प्रपा० १० अनु० १ ]

"आपो वा इदं सर्वं, विश्वाभूतान्यापः, प्राणा वा आपः, पशव आपो,ऽन्नमापो,ऽमृतमापः, सम्राडापो, विराडापः, स्वराडाप,श्छन्दाँस्यापो, ज्योतींष्यापो, यजूंष्यापः, सत्यमापः, सर्वा देवता आपो, भुर्भुवः सुवराप ओम्" [ तै० आ० प्रपा० १० अनु० २२ ]

'पुष्करं' ह्यन्तरिक्षार्थे निघण्टौ परिपठ्यते ; तस्मिन् हिरणमयं त्वण्डं साक्षात्सवितृमण्डलं, तद्गर्भे च परं ब्रह्म ब्रह्माणं ससृजे पुरा नारायणाऽपराख्यानम् अब्नाराऽऽकाशशायिनम्। एतन्नारायणात् कार्यब्रह्मरूपात्परः पुमान् अन्यो नारायणो, ब्रह्मा यद्भिसृष्टोऽयमिष्यते। क्षीराब्धावन्तरिक्षाख्ये व्याप्य सोऽयमवस्थितः , तन्नाभिकमलं 'पृथ्वी'रूपमुत्प्रेक्षितं बुधैः[५१] ;

नारायण, हिरण्यगर्भ, प्रत्यक्ष देवता का भी नाम 'ब्रह्मा' कहा जाता है[५२]। आकाश में, 'आपः' में, ज्योतिर्मय बीज, (ज्योतिर्मय लिंग, सूर्य, आदि ) उत्पन्न हुआ; अर्थात् (सांख्योक्त) बुद्धितत्त्व, महत्तत्त्व, का एक केन्द्र, पीठ, चक्र, बना; उसने क्रमशः सब सृष्टि फैलाई। वह जब जागता है,

५१ "अनन्तमेतदाकाशं सिद्धदैवतसेवितं रम्यं नानाश्रयाकीर्णं, यस्यान्तोऽनाऽधिगम्यते।
ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः ; तत्र देवाः स्वयं दीप्ता भास्वराभाग्निवर्चसः।
ते चाऽप्यन्तं न पश्यन्ति नभसः प्रथितौजसः दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद।
उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयं प्रभैः निरुद्धमेतदाकाशमप्रमेयं सुरैरपि।
पृथिव्यन्ते समुद्रास्तु, समुद्रान्ते तमः स्मृतं , तमसोऽन्ते जलं प्राहु,जलस्यान्तेऽग्निरेव च।
रसातलान्ते सलिलं, जलान्ते पन्नगाऽधिपाः , तदन्ते पुनराकाश,माकाशान्ते पुनर्जलम्।
एवमन्तं भगवतः प्रमाणं सलिलस्य च अग्नि-मारुत-तोयेभ्यो दुर्ज्ञेयं दैवतैरपि।
अग्नि-मारुत-तोयानां वर्णाः क्षितितलस्य च आकाशादवगृह्यन्ते भिद्यन्ते तत्त्वदर्शनात्।
पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा।
अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् ? सिद्धानां देवतानां च यदा परिमिता गतिः।
तदा गौणमनन्तस्य नामाऽनन्तेति विश्रुतं नामधेयाऽनुरूपस्य मानसस्य महात्मनः।
यदा तु दिव्यं यद्रूपं ह्रसते वर्धते पुनः कोऽन्यस्तद्वेदितुं शक्यो योऽपि स्यात्तद्विधोऽपरः।
ततः पुष्करतः सृष्टः सर्वज्ञो मूर्त्तिमान् प्रभुः 'ब्रह्मा' धर्ममयः पूर्वः प्रजापतिरनुत्तमः।
मानसस्येह या मूर्त्तिर्ब्रह्मत्वं समुपागता , तस्यासनविधानार्थं 'पृथिवी' पद्ममुच्यते।
कर्णिकान्तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः, तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः"
[ म० भा० शां० अ० १८२ ]

५२ "पुरुषाऽधिष्ठितत्वाच्च अव्यक्ताऽनुग्रहेण च महदादि-विशेषान्ता ह्यण्डमुत्पादयन्ति ते।
तस्मिन्कार्यं च करणं संसिद्धं परमेष्ठिनः प्राकृतेऽण्डे विरिञ्चिस्तु क्षेत्रज्ञो ब्रह्मसंज्ञितः।
सर्वैः शरीरैः प्रथमः, स वै पुरुष उच्यते , आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्तत।...
ब्रह्माण्डमेव विप्रेन्द्रा ब्रह्मणः क्षेत्रमुच्यते ; क्षेत्रज्ञश्च स एवोक्तो विरञ्चिश्च प्रजापतिः।
सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः ; ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः।
आज्ञया देवदेवस्य महादेवस्य शूलिनः , ब्रह्माण्डानामसंख्यानां ब्रह्म-विष्णु-हरात्मनाम्
उद्भवे, प्रलये हेतुर्महादेव इति श्रुतिः" [ सौरपु० अ० २१ ]

"नारदीये च—

'सृष्टिस्थित्यन्तकरणे ब्रह्मविष्णुमहेश्वराः यस्यायुतायुतांशांशास् , तद्ब्रह्मेत्यभिधीयते'' इति।

न चाऽस्मिन्वाक्ये परमात्मांशत्वमेव अण्डशरीराणां गम्यते, न तु प्रकृत्यंशत्वं ब्रह्माण्डस्येति वाच्यम् ? शक्तिशक्तिमतोरंशांशिभावेन शक्त्योरपि अंशांऽशिभावसिद्धेः; अग्निविस्फुलिङ्गादिश्रौतदृष्टान्तेषु तथा दर्शनात्।

'मायां तु प्रकृतिं विद्याद्, मायिनं तु महेश्वरम् अस्याऽवयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इति श्रुतेश्चेति" [ योगवार्तिके ३, २६ ]

तस्योपरि हिरण्याभश्चतुर्दिग्दृश्यमण्डलः 'ब्रह्मा' चतुर्मुखो नाम मार्तण्डात्मा विराजते।
आदित्यमण्डले देवः स्थितः कश्चिद्धिरण्मयः स्तूयते[५३], तेन चाऽप्येतन्मतं साधु प्रतीयते।
वेदोत्पत्तिप्रसङ्गाच्च ब्रह्मा-ऽऽदित्याऽभिधानयोः पुंसोरेकत्वमेवाद्धा तत्त्वतः प्रसमीक्ष्यते।
आदित्यः 'सविता', ब्रह्मा 'विश्वसृट्' च निगद्यते; अर्थतस्तु तयोरैक्यं जगत्सर्गक्रियास्वपि।
सोऽयं चतुर्विधो ब्रह्मा(१) महद्रूपो, मनोमयः, अहङ्कारस्वरूपोवा;(२)स्वब्रह्माण्डाऽभिमानिकः;
(३)सर्गेचाऽधिकृतो देवः;(४)समष्ट्यात्मेति च स्मृतः[५४]; इत्थं चतुर्विधत्वेन प्रोक्तश्चैष 'चतुर्मुखः'।
एतच्चत्वारि रूपाणि वस्तुतः परमात्मनः एकस्यैव, प्रभिन्नानि माया-ऽविद्याद्युपाधितः।
चतुःशाखश्चतुर्व्यूहः परात्मैव चतुर्मुखः; चतुर्दिग्गतिसामान्यात्तत्त्वं लोकेऽपि कल्प्यते।
वासुदेवाद्यथैकस्माद् व्यूहाः सङ्कर्षणादयः, परस्माद्ब्रह्मणस्तद्वद् अन्ये ब्रह्माण उद्गताः।
तस्मादभेद एवेष्टः कार्यब्रह्म-परात्मनोः; कार्य-कारणभावश्च तयोरौपाधिको मतः।
अतो ब्रह्मसमुत्पत्तिस्तत्तद्रूपात्परात्मनः भिन्नक्रम-प्रकाराऽपि शास्त्रोक्ता न विरुध्यते।
एवमण्डकथादीनां रहस्यार्थाऽनुवर्णनात् संभवेदविरोधेन नानावादसमन्वयः।
तथा चाऽधुनिकेनाऽपि विज्ञानेन तदेकता भूयसांशेन जायेत, प्रत्यक्षाऽनुभवेन च।
प्रत्यक्षं व्यवहारार्थाश्चाऽनुभूय महात्मभिः "प्रभवार्थाय लोकानां" तत्तच्छास्त्रं विनिर्मितम्।
रोचका-ऽऽकर्षकैरुक्तैर्यथा बालोपलालनं कुर्वन्ति लौकिकास्, तद्वद् ऋषयो लोकशिक्षणम्।
श्रोतृ-वक्तृप्रवृत्त्यर्थम् अर्थवादैः प्ररोचकैः नानाक्रमप्रकाराद्यैरेकैकार्थं च तेऽब्रुवन्।
तस्माच्च सर्वशास्त्रार्थान् बुद्धिमाश्रित्य सात्त्विकीं प्रत्यक्षेणाऽनुमानेन "व्यवहारगतिं नयेत्"।
संदिग्धं च विरुद्धं च शास्त्रवाक्यं सुबुद्धिमान् निर्ब्रूयादेव सद्युक्त्या लोकलाभार्थयोजनैः;
न त्वेव न च निर्ब्रूयात्[५५], "संशयात्मा विनश्यति"। "सर्वं न्याय्यं युक्तिमत्त्वात्" तद्युक्तार्थं प्रकल्पयेत्;
"न बुद्धिभेदं जनयेदज्ञानां" त्वरितं सुधीः; शनैश्छन्दाऽनुरोधेन तत्त्वार्थे तन्मतिं नयेत्।

---

तब सृष्टि फैलती है, जब सोता है, तब सब जगत् उसमें प्रलीन हो जाता है, जैसे एक मनुष्य के

---

५३ "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्"
[ ऋ० सं० ३,६२,१०; वा० सं० ३,३५ ]

यो भर्गो नो धियः प्रचोदयात्, देवस्य सवितुस्तद्वरेण्यं धीमहि' ( अन्वयः )

'यः' सवितृनामकसूर्यमण्डलमध्यवर्ती नारायणो, जगद्भरण-धारण-पोषणकर्तृत्वाज् ज्ञानगमन-कर्तृत्वादित्यर्थः गमनकर्तृत्वात्संसारदाहकर्तृत्वाद्वा 'भर्गः', 'नः' अस्माकं, 'धियो' बुद्धीः, 'प्रचोदयात्' प्रेरयेत्; तस्य 'देवस्य' क्रीडादिगुणविशिष्टस्य, 'सवितुः' जगत्प्रसवकर्तुर्नारायणस्य, तनोतीति 'तत्' व्याप्तं, 'वरेण्यं' श्रेष्ठं, भजनीयं रूपं वयं 'धीमहि' ध्यायेम, चिन्तयामः" [ अज्ञातकर्तृकं बह्वृच्सन्ध्या-पद्धतिभाष्यम्; अत्र वा० सं० ३,३५ उवट-महीधरभाष्यमपि द्रष्टव्यम् ]

"ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः"

५४ ब्रह्मणो महदादिरूपत्वोपव्याख्यानमग्रे ( ११ श्लो० ) भाष्ये द्रष्टव्यम्।

५५ "यथो एतदविस्पष्टार्था भवन्तीति; नैष स्थाणोरपराधो, यदेनमन्धो न पश्यति; पुरुषाऽपराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति; पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति" [ निरु० १, १६, १० ]

"अथ निर्वचनम्। तद् येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनाऽन्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथाऽनन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत, केनचिद्वृत्तिसामान्येन। अविद्यमाने सामान्येऽपि अक्षर-वर्णसामान्यान्निर्ब्रूयात्; न त्वेव न निर्ब्रूयात्; न संस्कारमाद्रियेत; विशयवत्यो हि वृत्तयो भवन्ति, यथार्थं विभक्तीः सन्नमयेत्" इत्यादि निरुक्ते ( अ० २ पा० १ )

यथा दूरस्थगन्तव्यस्थानं बालकान्नयन् मनोरञ्जकदृश्यानि दर्शयन् पथि याति ना,
तेषामश्रमबोधार्थं चाऽङ्गुल्या निर्दिशन्मुहुः गन्तव्यस्थानसांनिध्यं ब्रूते स्वार्थेऽनृताक्षरम्;
तथैव गूढशास्त्रार्थं क्रमाद्बोधयितुं जनान्, तन्मनोऽस्वार्थतात्पर्यैरर्थवादैर्विनोदयन्
नानारूपकविन्यासैः, शास्त्रकृच्च शनैः शनैः अधिकाराऽनुगं शास्ति शिष्यबुद्धिमखेदयन्।
अतो नानाप्रकाराणां शास्त्रार्थानां समन्वयः कार्योऽधिकारिभेदेन[१६] तत्तद्योग्यतया बुधैः।
सृष्टिक्रम-प्रकारादौ मिथः शास्त्रार्थभिन्नताम् ऋषयोऽन्वभवंस्तेषामकुर्वंश्च समन्वयम्[१७]।
तदेतद् ब्रह्मणो जन्म यदप्स्वण्डादिहोदितं तत्प्रसङ्गेन शास्त्रार्थः प्रोक्तः किंचित्सविस्तरः। ८-९।

---

जीवन में प्रत्यक्ष देख पड़ता है। बस, इतना कह कर यह 'अण्ड' सृष्टिप्रकरण समाप्त किया जाता है। ८-९।

---

५६. "यः पुमाँल्लोकायतमताऽनुसारेण देहमात्मत्वेनाऽभिमन्यमानः स्वर्ग-नरकयोर्गन्तारं देहव्यतिरिक्तमात्मानमज्ञात्वा कर्माणि ज्योतिष्टोमादीनि चाऽननुतिष्ठन् उपास्यमीश्वरमज्ञात्वा तदुपासनेऽपि ब्रह्मलोकहेतौ न प्रवर्त्तते, तादृशस्य जीवेश्वरविवेकाय प्रयतमानो गौतमादिर्महर्षिः परमाणुभ्यः पृथिव्याद्युत्पत्तिमुवाच। मूलकारणात् परब्रह्मण उत्पन्ना आकाश-काल-दिशः परमाणवश्च यदा व्यवस्थिताः, तदा तत आरभ्य उत्तरकालीना सृष्टिर्गौतमाद्युक्तप्रकारेण व्यवतिष्ठताम्।

यथा मन्दाऽधिकारिणो देहव्यतिरिक्तं स्वर्गप्राप्तियोग्यं कर्त्तारमात्मानं बोधयितुं गौतमस्योद्योगः, तथा मध्यमाऽधिकारिणो ब्रह्मबोधयोग्यतायै कर्त्तृत्वरहितं साक्षिणं चिदात्मानमसङ्गं बोधयितुं कपिलमहर्षिः सांख्यशास्त्रं निर्ममे। तत्र परमाणुभ्यः प्राचीना चिदचिद्विवेकहेतुरवान्तरसृष्टिः कियत्यपि वर्णिता। अखण्डैकरसे ब्रह्मणि मायया चिज्जडभेदः, चिदात्मनां परस्परभेदः, सत्त्वादिगुणाश्च, इत्येते पदार्थाः कल्पिताः; तत उत्तरकालीना सृष्टिः सांख्येनाऽभिधीयताम्। एवमुपास्यमीश्वरं विवेक्तुं सांख्योक्तेभ्यः पञ्चविंशतितत्त्वेभ्यः पूर्वभावीन्येकादश तत्त्वानि शैवागमेषु निरूप्यन्ते। श्रुतिस्तु प्रदर्शनार्थत्वेन आकाशादिकां कियतीमपि सृष्टिमुदाजहार; साकल्येन त्वभिधानमशक्यम्, अनुपयुक्तं च, ब्रह्माऽवबोधद्वारत्वेन तदभिधानात्; तच्च द्वारत्वमल्पाऽभिधानेऽपि सम्पद्यते" [ तै० आ० प्रपा० ८ अनु० २ सा० भा० पृ० ५६५ ]

५७ "अथो आहुः—अग्निमेव सृष्टं वसवोऽन्वसृज्यन्त, तानस्यामुपादधाद्; वायुं रुद्रा,स्तानन्तरिक्षे, आदित्यमादित्या,स्तान्दिवि, विश्वेदेवाश्चन्द्रमसं, तान्दिक्षूपादधादिति।

अथो आहुः—प्रजापतिरेव इमाँल्लोकान्सृष्ट्वा पृथिव्यां प्रत्यतिष्ठत्, तस्मा इमा ओषधयोऽन्नमपच्यन्त, तदाश्नात्, स गर्भ्यभवत्, स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत, येऽवाञ्चः प्राणाः, तेभ्यो मर्त्याः प्रजाः; इत्यतो यतमथाऽसृजत, तथाऽसृजत; प्रजापतिस्त्वेवेदं सर्वमसृजत यदिदं किञ्च'* [शत० ब्रा० ६,१,२,१०-११]

---

* 'अत्र केचिद् वसु-रुद्रा-ऽऽदित्य-विश्वेदेवानामुत्पत्तिमग्निपूर्वां दर्शयन्ति—'अथो आहुरग्निमेव सृष्टं वसवोऽन्वसृज्यन्तेति'। 'इति' शब्द एकीयपक्षसमाप्त्यर्थः।

'अथो आहुः प्रजापतिरेव' इत्यादेरयमर्थः—'अथो' अपरे ब्रह्मवादिन एवमाहुः, प्रजापतिरेव लोकत्रयं सृष्ट्वा पृथिव्यां प्रतिष्ठितः सन् पक्वा अन्नरूपा ओषधीः प्राश्य गर्भी भूत्वा सः ऊर्ध्वेभ्यः प्राणेभ्यः देवान् सृष्टवान्, अवाचीनेभ्यः प्राणेभ्यो मर्त्याः प्रजा इति। सृष्टौ यद्यपि प्रकार-विशेषोऽस्ति, तथाऽपि स्थावर-जङ्गमात्मकस्य जगतः प्रजापति-सृष्टत्वं निश्चितमिति श्रुतिः स्वमतं निरूपयति–अतो यतमथेति'; येन प्रकारेण सृष्टवान्, तेनैव प्रकारेण सृष्टिरस्तु, सर्वात्मना प्रजापतिरेवेदं सर्वमसृजदिति सत्यमित्यर्थः" इति तत्रत्यं सायणभाष्यम्।

*आपो नारा इति प्रोक्ता, आपो वै नरसूनवः, ता यद्, अस्याऽयनं पूर्वं, तेन नारायणः स्मृतः ।१०।
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकं, तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ।११।

---

'यद्' अत्यन्तं प्रसिद्धं सच्चाऽ'व्यक्त'मगोचरं, 'कारणं'कारणानां च, न कार्यं कस्यचित्तु यत्, 'सद्-असत्' चिद्-अचिद्, यस्य शरीरं, तत्, तदात्मकं, 'नित्यं' सद्वस्तुरूपं, यत्परं ब्रह्मेति गीयते ; 'तद्विसृष्ट'स्ततो योऽयम् अन्तरण्डं विनिर्मितः, स एव पुरुषो लोके 'ब्रह्मेति' कथ्यते जनैः ।

"ब्रह्मा देवानां प्रथमं संबभूव, विश्वस्य कर्त्ता भुवनस्य गोप्ता" [ मुण्ड० १,१ ]

"ब्रह्मा विश्वः कतमः स्वयंभूः प्रजापतिः संवत्सरः, इति । संवत्सरोऽसावादित्यो, य एष आदित्ये पुरुषः, स परमेष्ठी ब्रह्मा आत्मा इति" [ तै० आ० प्रपा० १० अनु० ६३ ]

"बृहद् ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः‡" "महानात्मा मतिर्विष्णुर्जिष्णुः शंभुश्च वीर्यवान् बुद्धिः प्रज्ञोपलब्धिश्च तथा 'ब्रह्मा' धृतिः स्मृतिः, पर्यायवाचकैरेतैर्महानात्मा निगद्यते । ..

---

आदिसृष्ट 'अपों' के गर्भस्थ 'अण्ड' मे आविर्भूत 'ब्रह्मा' का नाम 'नारायण' भी है, इस बात को उपर्युक्त श्लोक से प्रमाणित करते हैं—

सब से पहले 'नर'-नामक परमात्मा से 'आपः' उत्पन्न हुईं, अतः उनको 'नारा' ( नर के अपत्य, सन्तान ) भी कहते हैं; वे ( आपः ) ही हिरण्यगर्भरूप से अवस्थित 'ब्रह्मा' का प्राथमिक ( सर्गादिकालीन ) आधार हुईं, अतः वह 'नारायण' कहा जाता है ।

मनु का यह श्लोक बड़े महत्त्व का, और सृष्टितत्त्व की सूचना से भरा है; यही कारण है कि यह प्रायः सभी पुराण उपपुराण और महाभारत मे भी पाया जाता है†, तथा अनेक भाष्यादि-ग्रन्थकारों ने इसे यथाप्रसंग उद्धृत किया है ।

वेद, निरुक्त और पौराणिक ग्रन्थों को देखने से प्रथम-सृष्ट 'आपः' का अर्थ 'अदिति' ( अखण्ड महाप्रकृति ) महत्तत्त्व या महाकाश ही अधिक सङ्गत प्रतीत होता है । महाभारतकारने ( टि० ५२ ) जल और आकाश मे तत्त्वतः अभेद दिखला कर अनन्त आकाशरूप पुष्कर से 'ब्रह्मा' की उत्पत्ति बतलाई है, और उसके 'आसन' के लिये पृथिवी को 'पद्म' रूप से उत्प्रेक्षित किया है । इस विषय का अन्यद् अपेक्षित वक्तव्य, पीछे के पृष्ठों मे दिया जा चुका है ।

यदि अन्य अधिक आवश्यक, नितान्त समयोपयोगी, परम प्रयोजनीय, वर्णधर्म, आश्रमधर्म, राजधर्म-सम्बन्धी विषयों के प्रतिपादन कर चुकने के पीछे, अवकाश बचा, तो एक विस्तृत टिप्पणी मे, परिशिष्टरूप से, 'नारायण'आदि-शब्दविषयक, पुराणादिग्रन्थों के वाक्यों का उद्धरण कर दिया जायगा ।१०।

जो सब के अनुभव मे प्रसिद्ध है, जो केवल 'कारण' है किसी का कार्य नहीं, अथवा जो कारणों का भी कारण है, जो इन्द्रियों के अगोचर और सदा वर्तमान रहनेवाला, परमार्थतः

---

* अतः परमधस्तनः श्लोकः केषुचित्पुस्तकेष्वधिको दृश्यते—

"नारायणपरोऽव्यक्तादण्डमव्यक्तसंभवम्, अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपाऽत्र मेदिनी" इति।

‡ म० भा० शां० ३३६, २ ।

† यथा अग्निपु० १७, ८; हरिवं० १,२८; म० भा० वन० २७२, ४१-४२; म० भा० उ० ७०, १०; म० भा० शां० ३४१, ३९-४०; विष्णुसहस्रना० श्लो० ३९ शां० भा०; लिं० पु० पूर्वार्धे ७०, ११५-२०; वा० पु० ६, १-५; बृहद्ब्रह्मसं० पा० ४ अ० ६ श्लो० १४-२४; एवमादि द्रष्टव्यम् ।

विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः†" "गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे ; एका मूर्त्तिस्त्रयो देवा ब्रह्म-विष्णु-महेश्वराः‡" "तस्मात्पद्मात्समभवद् ब्रह्मा वेदमयो निधिः, 'अहङ्कार' इति ख्यातः सर्वभूतात्मभूतकृत् §" "अहङ्कारस्ततो जातो, ब्रह्मा स तु चतुर्मुखः, हिरण्यगर्भो भगवान् सर्वलोकपितामहः¶" "अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः‖" "मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः प्रज्ञा चितिः स्मृतिः संविद् विपुरं चोच्यते बुधैः।... बृहत्त्वाद् बृंहणत्वाच्च भावानां, सलिलाश्रयात्, यस्माद्बृंहयते भावान्, ब्रह्मा तेन निरुच्यते卐" "मन एव विरिञ्चित्वं, तद्धि सङ्कल्पनात्मकं, स्ववपुः स्फारतां नीत्वा मनस्तेदं वितन्यते। विरिञ्चो मनसो रूपं, विरिञ्चस्य मनो वपुः; ...मनस्तामिव यातेन ब्रह्मणा तन्यते जगत्※"

"चेतनाऽचेतनं सर्वं शरीरं परमात्मनः, चेतनेषु च सर्वेषु चेतनोऽयं प्रजापतिः

ब्रह्माऽस्माकं गुरुर्ज्ञेयः कृपापात्रं रमापतेः समष्टिः सर्वजीवानां, जलानां वारिधिर्यथा।

सद्रूप है; जो 'सत् और असत्' चित् और अचित्, चेतन अथवा जड़, और भाव और अभाव, इन दोनों प्रकार के पदार्थों का 'आत्मा' है; उस परमात्मा के द्वारा जो तदंशभूत समष्टिजीव, आदि सृष्ट, पूर्वोक्त 'अण्ड' मे तदात्मरूप से ( उस 'अण्ड' के अभिमानी वा शरीरी के रूप से ) 'विसृष्ट' ( छोड़ा गया वा उत्पादित ) हुआ, वही प्रथम पुरुष, 'लोक मे' पुराणादि ग्रन्थों मे, 'ब्रह्मा' इस नाम से पुकारा जाता है।

वेद-पुराणों में 'ब्रह्मा' का विविध रूपों मे जो वर्णन हुआ है, उसका संक्षिप्त परिचय और समन्वय संस्कृत भाष्य मे कर दिया है। उस मे सार रूप से 'चतुर्मुख,' अर्थात् चारो दिशाओं मे व्याप्त, सबका देखने जाननेवाला, त्रिकालज्ञ, सर्वज्ञ, सब का धाता, विधाता, विधि-विधान-नियति-नियमन करनेवाला, सांख्योक्त महत्तत्त्व, बुद्धितत्त्व, ही पौराणिक 'ब्रह्मा' शब्द का तात्त्विक अर्थ है। उसी बुद्धितत्त्व का एक केन्द्र, एक 'ब्रह्म-अंड', कहलाता है। यहाँ उद्धृत श्लोकों मे तथा अन्यत्र पुराणादि ग्रन्थों मे भी, अनेकशः, ब्रह्मा का एक नाम 'चतुर्मुख' मिलता है, जो अवश्य ही आरंभ मे 'ब्रह्मा' के विशेषण-रूप से प्रयुक्त हुआ होगा, अर्थात् 'चतुर्मुख ब्रह्मा' ऐसा एक साथ विशिष्ट प्रयोग होता रहा होगा। प्राचीनतम ऋषि लोग, प्रायः, लोक मे प्रचलित सर्वसाधारणजन-परिचित सरल मुहावरों मे गंभीर तत्त्वों का भी निदश कर गये हैं। लोक मे आज भी 'चौमुख' शब्द प्रचलित है, जो स्पष्ट ही 'चतुर्मुख' का अपभ्रंश वा विकृत रूपान्तर है। 'चौमुख' उस दीपक को कहते हैं, जिसका प्रकाश चारों ओर फैलता है। सम्प्रति भी देहातों मे विवाह आदि के अवसरों पर 'चौमुख' दीपक जलाने की प्रथा प्रचलित है। उस केन्द्र स्थान को भी चौमुख चौमुहाना चौहटा एवं चौक आदि कहते हैं, जहाँ से चारो तरफ को रास्ता निकला रहता है। 'ब्रह्मा' के विशेषणवत् प्रयुक्त 'चतुर्मुख' शब्द का भी ऐसा ही अर्थ, आर्ष-मताऽनुगृहीत है; अर्थात् 'चतुर्मुख ब्रह्मा' चारो ओर बृहत्, बृंहित, सब ओर से बड़ा, सर्वत्र वढ़ा वा फैला हुआ; 'बृंहक' सब ओर से, चारो तरफ सृष्टि को फैलानेवाला; इत्यादि अर्थ ही ऋषि-सम्मत है।

† म० भा० अश्व० अ० ४०।

‡ मात्स्ये ३, १६। § म० भा० शां० १८२, १६। ¶ म० भा० शां० ३४७, २१।

‖ म० भा० अनु० १५३, १८। 卐 वा० पु० अ० ४; लिं० पु० पू० अ० ७०। कू० पु० पू० अ० ४।

※ योगवा० ३, ३, ३४-३९।

तस्मिन् अण्डे स भगवानुषित्वा परिवत्सरं, स्वयमेवात्मनो ध्यानात् तदण्डमकरोद् द्विधा ।१२।
ताभ्यां स शकलाभ्यां च दिवं, भूमिं [५८] च, निर्ममे ;
मध्ये व्योम, दिशश्चाऽष्टा,वपां स्थानं च शाश्वतम् ।१३। *

---

व्यष्ट्यात्मको यथा जीवः स्वशरीरे महामते, सर्वेषां हृदयज्ञोऽयं प्रेरकः सर्ववृत्तिषु
परमात्मा स्मृतो राजन् समष्टिवपुषस्तथा । अस्य ब्रह्माण्डदेहस्य सत्तावृत्तियुतः पुमान्
आत्मा चतुर्मुखो ज्ञेयः पूज्यो वन्द्यश्च देहजैः । बृहन्तोऽस्य गुणास्तस्माद् 'ब्रह्मा' चेत्यभिधीयते[†]।"
एवं नानाविधं रूपं ब्रह्मणः प्रसमीक्षितं, एतत्संगच्छते सर्वं वैश्वरूप्यात्स्वयंभुवः ।
मूलतत्त्वस्य चैकत्वान्नानाकार्यात्मनाऽऽत्मनः व्याकृतावपि नो भेदो वस्तुतस्तत्र जायते ।
तस्मादेकैकतत्त्वस्य विश्वरूपत्ववर्णनं वेदान्तोक्तं मिथोभिन्नं युज्यते, न विरुध्यते ।
एवं च ब्रह्मणो रूपं नानातत्त्वात्मकं स्मृतं कार्य-कारणयोरैक्यादविरुद्धं समञ्जसम् । ११ ।

---

पीछे कालक्रम से 'चतुर्मुख' शब्द का अर्थ, पौराणिक पण्डित लोग भी 'चारमुँहवाला' समझने लगे, और उन्होंने इसी इनिष्ट भाव को साधारण जनता मे भी फैला दिया जो अब तक वद्धमूल है । यहाँ तक कि सर्वप्रथम–दिव्यशरीरी, परमतेजोमय, हिरण्यगर्भ के अतिशय सौन्दर्य-मय रूप मे ऋषियों ने जिस ब्रह्मदेव की कल्पना की, उसकी मूर्त्तियाँ और चित्र भी चारमुँहवाले भद्दे और कुरूप वनाये जाते हैं; ये सब अनार्ष भाव हैं; इन का परित्याग, और पौराणिक निर्देशों के तात्त्विक अर्थ का प्रचार होना चाहिये । ११ ।

साधारणतः लोक में भी प्रायः एक वर्ष मे गर्भपरिपाक होता है; ब्रह्मा का वर्ष, उनके अपने काल–परिमाण के अनुसार माना गया है । जिस 'अण्ड' मे ब्रह्मा ने पहले हिरण्यगर्भ-रूप से प्रवेश किया था, उस मे ब्रह्ममान से एक वर्ष निवास कर के, उन्होंने स्वतः अपने सङ्कल्प से उस 'अण्ड' के दो खण्ड कर दिये । उन अण्ड-कपालों से स्वर्लोक की ( ऊपरवाले खण्ड से ) और भूलोक की ( नीचेवाले खण्ड से ) सृष्टि की; एवं दोनों के बीच मे आकाश, आठ दिशायें, ओर जलों के अन्तरिक्षरूप सनातन, वा समुद्ररूप स्थिर स्थान वनाये ।

यह रूपकमय वा आलङ्कारिक वर्णन है । इस के रहस्यार्थ पर प्रकाश डालने की चेष्टा, पिछले पृष्ठों के संस्कृत भाष्य और टिप्पणों में उद्धृत आर्ष वचनों के आधार पर यथाप्रसङ्ग संक्षेप से की गई है । १२–१३ ।

---

५८. "आपो गर्भं जनयन्तीरित्यपां गर्भः पुरुषः" [ गो० ब्रा० पू० १,३९ ]

"आपो वा इदमग्रे सलिलमासीत्, तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्; स इमां (भूमिं) अपश्यत्, तां वराहो भूत्वाऽहरत्, तां विश्वकर्मा भूत्वा व्यमार्ट्; साऽप्रथत, सा 'पृथिवी' अभवत् तत्पृथिव्यै पृथिवित्वम्" [ तै० सं० ७,१,५,१ ]

"तद् यदपां शर आसीत्, तत् समहन्यत; सा 'पृथिवी' अभवत्" [ शत० ब्रा० कां० १० प्र० ४ ब्रा० ८ कं० २ ]

* अतः परमधस्तनः सार्धैकश्लोकः क्वचिदधिकः पठ्यते ।

"वैकारिकं तैजसं च, तथा भूतादिमेव च, एकमेव त्रिधाभूतं महानित्येव संस्थितम् ।
इन्द्रियाणां समस्तानां प्रभवं प्रलयं तथा" इति ।

† बृ० ब्र० सं० पा० ४ अ० ६ ।

८

**उद्बबर्हात्मनश्चैव मनः सदसदात्मकं, मनसश्चाऽप्यहङ्कारमभिमन्तारमीश्वरं ।१४।**
**महान्तमेव चात्मानं, सर्वाणि त्रिगुणानि च, विषयाणां ग्रहीतृणि शनैः पञ्चेन्द्रियाणि च ।१५।†**

---

जगदुत्पत्तिसूक्तानामृचः प्राक्काश्चिदुद्धृताः, ब्राह्मण-श्रुतयो नानाप्रस्थानाश्चेह दर्शिताः ‡।
तासु मुख्यतया सृष्टेः क्रमो द्वेधा निरूपितः, परस्माद्ब्रह्मणस्त्वेकः, प्रधानादपरः, तयोः
आद्यो वेदान्तिनामिष्टः, साङ्ख्यानामन्तिमो मतः ; मनुस्त्वत्राऽविरोधेन तयोः प्राह समन्वयम् ।
महत्तत्त्वमहङ्कारात्पूर्वं, प्राङ्मनसश्च तं, 'ब्रह्माऽऽत्मनः' प्रधानाख्यात्स्वदेहाद्, उद्बबर्ह सः[५९] ;
'महान्तमेव चात्मानं'[६०] महत्तत्त्वात्मकं स्वकं वपुः, ब्रह्मोद्बबर्हादौ, अहङ्कारं ततः परं,

---

'ब्रह्मा' महाविराट्, अखिल ब्रह्माण्ड के सूत्रात्माने, 'आत्मनः' अपने मे से, स्व-सकाश से, अपनी 'आत्मा' शरीर, त्रिगुणात्मक प्रकृतिरूप, जगत् के मूल उपादान कारण से 'सद्‌—असद्रूप' ( कारण-रूप से 'सत्' नित्य, और कार्यरूप से 'असत्' अनित्य ) 'मन' को ( मनन-द्वारा निश्चयात्मक वृत्तिवाले बुद्धितत्त्व, महत्तत्त्व को ) उद्धृत किया, निकाला; अर्थात् 'ब्रह्मा' ने स्व-शरीररूप महाप्रकृति से, पहले, जिस का एक नाम 'मनः' भी है, उस महत्तत्त्व को विकसित परिणत वा उत्पन्न किया । अनन्तर उस मनस्तत्त्व, महत्तत्त्व से 'अभिमन्ता' अभिमान-वृत्तिवाले, और इन्द्रिय-तन्मात्र आदि की सृष्टि के सामर्थ्यरूप 'ऐश्वर्य' से सम्पन्न 'अहङ्कार को उत्पन्न किया; अर्थात् 'अहङ्कार' के रूप मे 'महान्-आत्मा' ( महान्तमेव चात्मानं ) को, महत्तत्त्वरूप स्वशरीर को ही विकसित वा परिणत किया । प्रकृत्यात्मक शरीरवाला 'ब्रह्मा', तत्परिणामभूत, महत्तत्त्व मे भी आत्म-रूप से अनुस्यूत होता है, अतः 'महान्' भी उसका 'आत्मा' शरीर कह-

---

† अतः परं च श्लोकार्धं क्वचित्पुस्तकेऽधिकं दृश्यते, तद् यथा—
"अविशेषान् , विशेषांश्च, विषयांश्च पृथग्विधान्" इति ।

‡ ऋक्संहितायां विश्वोत्पत्तिसूक्तानि—मं० १० सू० ७२; मं० १० सू० ८१–८२; मं० १० पुरुषसू० ९०; मं० १० हिरण्यगर्भसू० १२१; मं० १० नासदीयसू० १२९; एवमादीनि बहूनि सन्ति। ब्राह्मणग्रन्थेषु तु देवतोपाख्यानप्रसङ्गैः, यज्ञादिसम्बन्धैश्च करम्बिताः सृष्टिवादाः प्रायेण पदे पदे श्रूयन्ते; तेषु कियन्ति सृष्टिब्राह्मणानि भारतीयार्षतत्त्वविद्याया मूलभूतानि रमणीयतराणि च सन्तीति तै० ब्रा० कां० २ प्रपा० २ अनु० ९; शत० ब्रा० कां० ६ प्रपा० १ ब्रा० १–२; गोपथब्रा० पूर्वभा० प्रपा० १, एवमादीनां सृष्टिब्राह्मणनां सकृदनुवाचनेनैव सुव्यक्तं भविष्यति । टि० २२ पृ० २७–२९ पश्यत ।

५९ तत्त्वसृष्टिरिदानीमुच्यते…प्रधानात् स्वस्माद्रूपाद् मन उद्धृतवान् । प्रातिलोम्येनेयं तत्त्वोत्पत्तिरिहोच्यते—'मनसः पूर्वमहङ्कारं,…महान्' इति संज्ञया सांख्यानां तत्त्वं प्रसिद्धम् 'आत्मानम्' इति महता सामानाधिकरण्यं, सर्वपिण्डसृष्टौ च महत्तयाऽनुस्यूतम् , अत आत्मव्यवहारः; अहङ्कारात्पूर्वं पूर्वेण न्यायेन ( महान्तं ) ससर्ज" इति मेधातिथिः । इत्थमेव गोविन्दराजादिभिरपि व्याख्यातम् ।

६० "अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेद, इत्यादि श्रुतिस्मृतिषु च हिरण्यगर्भे चेतनेऽपि 'महान्' इति शब्दो बुद्ध्यभिमानित्वेनैव; यथा पृथिव्यभिमानिचेतने पृथिवी शब्दः, तद्वत् । एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः । प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताऽभिमानिपर्यन्तानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैव अंशा इति" [ साङ्ख्यप्रवचन भा० २, १३ ]
"बुद्धिर्महान्मनो ब्रह्मा मतिः ख्यातिरपूर्वकं प्रज्ञा भूतिर्धृतिर्ज्ञानं सन्ततिः स्मृतिरित्यपि,
हैरण्यगर्भ्यां बुद्धेस्तु महतो नाम सूचितम्" इति,
"महच्छब्देन हैरण्यगर्भो, 'बुद्धिः' उच्यते" इति च सांख्यतत्त्वविवेचने [ सा० सं० पृ० ६ तथा २६ ]

तस्माच्च मन, इत्येवं प्रातिलोम्येन वाऽन्वयः कर्त्तव्य इह सांख्यादिप्रक्रियाऽनुमतक्रमात्।
वस्तुतस्तु मनो ह्यत्र महत्तत्त्वात्मकं मतम्, अस्यैवा'ऽसद्' इति ख्यातात्प्रधानादादिकारणात्
उद्भवः श्रूयते स्पष्टं ब्राह्मणे तैत्तिरीयके, साङ्ख्य-वेदान्तयोश्चतन्मतं साधु निरूपितं[६१];
मनस्त्वव्यक्तजं प्रोक्तं, विकारः प्रथमः स्मृतः §" उपाध्यायवदत्राऽग्रे शिष्योऽप्येतत्प्रवक्ष्यति—
"तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते; प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ।†"
"मनो महान्" इति प्रोक्तं वायु-लिङ्गपुराणयोः; तस्माद् यथाश्रुतादेव क्रमाद्युक्त इहाऽन्वयः;
ब्रह्माऽऽत्मनः सकाशात् प्राग्बीजावस्थ-महन्मयं[६२] 'मनः' उद्धृतवान्, तस्माच्चाऽहङ्कारं क्रमादिति।

लाता है। 'मनः'संज्ञक महत्तत्त्व से अहङ्कार के उद्धरण के बाद पुनः 'ब्रह्मा' ने क्रमशः उस 'अहङ्कार' से सभी त्रिगुणात्मक तत्त्वों (पञ्चतन्मात्र) को, 'शब्द' आदि पञ्चविषयों को और उन के ग्राहक 'श्रोत्र' आदि पञ्च ज्ञानेन्द्रियों को उत्पन्न किया। यहाँ मूल श्लोक (१५ वें) के अन्त मे जो 'च'कार प्रयुक्त हुआ है, वह 'अनुक्तसमुच्चायक' (अकथित विषय का संग्रह सूचक) माना जाता है, तदनुसार, अहंकार से ही अनुक्त (प्रत्यक्ष अश्रुत) पञ्च-कर्मेन्द्रिय, और उभयात्मक 'मन' (उपर्युक्त प्रथम-कार्यरूप मननवृत्तिक महत्तत्त्वात्मक 'मनः' से भिन्न) संकल्पक अन्तःकरणरूप इन्द्रियविशेष की उत्पत्ति भी समझ लेनी चाहिये; क्यों कि सांख्य आदि शास्त्रों मे तत्त्वसृष्टि का ऐसा ही क्रम कहा है।

यहाँ मनुजी ने तत्त्वसृष्टि के उस बहुमतमान्य क्रम का ही निरूपण किया है जो विशेष रूप से सांख्योक्त होने पर भी मूलतः वेदविहित है, और जिसे प्रकृति की परम स्वतन्त्रतावाली सांख्यों की बात को छोड़कर सभी इतिहास-पुराणकार, आगमिक और विभिन्न प्रस्थानवाले आधुनिक वेदान्ताचार्य भी मानते हैं।

फिर भी सृष्टि की यह प्रक्रिया बहुत प्राचीन काल से सांख्यों की ही विशेष सम्पत्ति मानी जाती है। यही कारण है कि महाभारत ने, सृष्टि आदि के विषय मे, सांख्योक्त ज्ञान को प्रधानता दे कर, इतिहास, पुराण, और अर्थशास्त्र आदि सब मे उस की व्याप्ति बतलाई

६१ "इदं वा अग्रे नैव किंचनासीत्, न द्यौरासीत्, न पृथिवी, नान्तरिक्षं; तद् 'असत्' एव सन् मनोऽकुरुत 'स्याम्' इति।... असतोऽधि 'मनो'ऽसृज्यत, मनः प्रजापतिमसृजत, प्रजापतिः प्रजा असृजत; तद्वा इदं मनस्येव परमं प्रतिष्ठितं, यदिदं किञ्च। तदेतत् 'श्वोवस्यसं' नाम 'ब्रह्म' इति" [तै० ब्रा० कां० २ प्रपा० २ अनुवा० ९]

"महदाख्यमाद्यं कार्यं, तन्मनः※। चरमोऽहङ्कारः" [सांख्यद० १, ७१-७२]

"प्रजापतिर्वा इदमग्र आसीत्, स आत्मानमैक्षत, स मनोऽसृजत; तन्मन एवाऽसीत्, तदात्मानमैक्षत, तद्वाचमसृजत" इति ब्र० सू० २, ३, १५ शां० भा० धृता श्रुतिः।

"मनुते सर्वभूतानां यस्माच्चेष्टाफलं विभुः सूक्ष्मत्वेन विवृद्धानां, तस्मात्तन्मन उच्यते।
तत्त्वानामग्रजो यस्मान्महांश्च परिमाणतः शेषेभ्यो गुणतत्त्वेभ्यो, महानिति ततः स्मृतः" [वा० पु० ४, २८-३०]

§ कू० पु० पू० ४, २१। † मनु० १, ७४। अत्र म० भा० शां० २१०, ३१-३२ अपि द्रष्टव्यम्।

६२ महदहङ्कारमनस्त्रितयात्मकस्याऽन्तःकरणस्य 'महत्तत्त्वं' बीजाऽवस्थेति" [सां०सा०पृ०८५]

※ "महदाख्यमाद्यं कार्यं, तन् 'मनः' मननवृत्तिकं, मननमत्र निश्चयः, तद्वृत्तिका बुद्धिरित्यर्थः। 'यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकं, महत्तत्त्वमिति प्रोक्तं, बुद्धितत्त्वं तदुच्यते' इत्यादिवाक्येभ्यो बुद्धेरेवादिकार्यत्वाऽवगमात्" इति तत्रत्यं प्रवचभाष्यम्।

'महान्तमेव चात्मानं' मनोऽहङ्काररूपतः उद्बबर्ह क्रमाद् ब्रह्मा, महत्तत्त्वाऽभिमानिकः ; ततश्चेन्द्रिय-तन्मात्रप्रभृतीनि क्रमात्पुनः भूतान्तानि[६३] विसृष्टानि सर्वाणि त्रिगुणानि च ।१४-१५।

है, और यहाँ तक कहा है कि इस लोक का सारा ज्ञान, सांख्यशास्त्र से ही आया है[६४]। सृष्टि-विषयक जिस तत्त्वज्ञान का प्रकाश, बीजरूप से सर्वप्रथम वेदों मे हुआ, अनन्तर सांख्याचार्यों ने जिस का विशेषरूप से क्रमबद्ध निरूपण और प्रचार किया, तथा जो इतिहास-पुराण आदि सभी शास्त्रों मे किंचित् सुधार के साथ पूर्णतः स्वीकृत हुआ; उस मे, प्रकृतिस्वातन्त्र्यवाले विचारांश से कुछ ऊपर उठ कर वेदान्तियों तथा पौराणिकों के मत का भी समन्वय कर लेने से सृष्टि का प्रायः सर्वमान्य 'क्रम' यही निश्चित किया गया है कि सब से पहले 'परब्रह्म' परमात्मा के अभिध्यान वा सङ्कल्प से त्रिगुणात्मिका 'असत्'संज्ञक मूल प्रकृति वा महामाया मे क्षोभ हुआ, उस से महत्तत्त्व की, महत्तत्त्व से अहङ्कार की, अहङ्कार से मनः, दश इन्द्रिय, और पञ्च तन्मात्रों की एवं पञ्चतन्मात्रों से क्रमशः पञ्च महाभूतों की उत्पत्ति हुई । परन्तु मनु के प्रकृत ( १४–१५ ) श्लोकों का अर्थ, आपाततः यही प्रतीत होता है कि ब्रह्मा ने अपने 'प्रधान'रूप शरीर से

६३ "मूलप्रकृतिरविकृतिः, महदाद्याः प्रकृति-विकृतयः सप्त, षोडशकस्तु विकारो, न प्रकृतिर्न विकृतिः पुरुषः;"।३।
"प्रकृतेर्महान्, ततोऽहङ्कारः, तस्माद् गणश्च षोडशकः, तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ।२२।
'अभिमानो'ऽहङ्कारः, तस्माद् द्विविधः प्रवर्तते सर्गः , एकादशकश्च गणः, तन्मात्रपञ्चकश्चैव ।२४।
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ; भूतादेस्तन्मात्रः, स तामसः; तैजसादुभयम् ।२५।
तन्मात्राण्यविशेषाः, तेभ्यो भूतानि पञ्च पञ्चभ्यः एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च" ।३८।
इति साङ्ख्यकारिकासु ।

"सत्त्व-रज-स्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारो,ऽहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष, इति पञ्चविंशतिर्गणः" [ सां० द० १, ६१ ]

"महदादिक्रमेण पञ्चभूतानाम्" [ सां० द० २, १० ]

"सृष्टिरिति पूर्वसूत्रादनुवर्तते । यद्यपि 'एतस्मादात्मन आकाशः संभूतः' ( तै० उ० २, १ ) इत्यादिश्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरिष्टेत्यर्थः । तेज-आदिसृष्टिश्रुतौ ( छा० उ० अ० ६ खं० २ ) गगन-वायुसृष्टेरापूरणवत् उक्तश्रुतावपि आदौ महदादिसृष्टिः पूरणीयेति भावः । किञ्च—
'एतस्माज्जायते प्राणो, मनः, सर्वेन्द्रियाणि च , खं, वायु,र्ज्योति-रापश्च पृथ्वी विश्वस्य धारिणी' ( मुण्ड० २, १, ३ ) इति श्रुत्यन्तरस्थपाठक्रमानुरोधेन, 'स प्राणमसृत्, प्राणाच्छ्रद्धां खं वायुम्' इत्यादि-श्रुत्यन्तरेण च पञ्चभूतसृष्टेः प्राङ् महदादिसृष्टिरवधार्यत इति । 'प्राणश्चान्तःकरणस्य वृत्तिभेद' इति वक्ष्यति, अतोऽस्यां श्रुतौ प्राण एव महत्तत्त्वमिति । तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति—'अन्तरा विज्ञान-मनसी, क्रमेण तल्लिङ्गाद्' ( ब्र० सू० २, ३, १५ ) इति ।
खद्-आकाशयोर्मध्ये बुद्धि-मनसी उत्पाद्ये, इति क्रमेणेत्यर्थः । मनसि चाऽहङ्कारस्य प्रवेश इति ।"
इति तत्रत्यं प्रवचनभाष्यम् ।

६४ "ज्ञानं महद् यद्धि महत्सु राजन् , वेदेषु, सांख्येषु, तथैव योगे ,
यच्चाऽपि दृष्टं विविधं पुराणे , सांख्यागतं तन्निखिलं नरेन्द्र ;
यच्चेतिहासेषु महत्सु दृष्टं , यच्चाऽर्थशास्त्रे नृप, शिष्टजुष्टे ,
ज्ञानं च लोके यदिहाऽस्ति किंचित् , साङ्ख्यागतं तच्च महन्महात्मन् ।,...
सांख्यं विशालं परमं पुराणम्" [ म० भा० शां० ३०१,१०८–९]

**तेषां त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसां सन्निवेश्यात्ममात्रासु, सर्वभूतानि निर्ममे ।१६।**

---

षण्णामिति महत्तत्त्व-तन्मात्राणां तु केचन, अहङ्कारस्य पञ्चानां तन्मात्राणां च वाऽपरे, मनःषष्ठेन्द्रियाणां वा केचिदिच्छन्ति संग्रहम् । सर्वभौतिककार्याणां सर्गस्य प्रतिपादकम् अमुं श्लोकं च मन्यन्ते केचिद्; अथ च केचन सर्व-सूक्ष्मशरीराणां निर्माणविषयं बुधाः[६५] ।

---

सर्वप्रथम 'मनः' को, मनः से अहंकार को और अहंकार से महत्तत्त्व को निकाला । यह अर्थ, उपर्युक्त वेद-शास्त्र-पुराणादिसम्मत सृष्टिक्रम के सर्वथा विपरीत क्रम का बोधक, स्पष्ट ही है । इस आपत्ति से वचने के लिये मनु के विद्वान् टीकाकारों ने इन श्लोकों के अर्थ को ही प्रतिलोम क्रम से उलट दिया है; अर्थात् "मनसः चाऽपि अहङ्कारम्" इत्यादि मनु वाक्य का अर्थ यह किया है कि 'मनः' से पहले अहंकार को, तथा अहंकार से भी पहले महत्तत्त्व को, ब्रह्मा ने, स्व-शरीरात्मक 'प्रधान'तत्त्व से उद्धृत किया वा निकाला । किन्तु वस्तुतः इस क्लिष्ट कल्पना की आवश्यकता नहीं है । महत्तत्त्व वा बुद्धि-तत्त्व का वेद-शास्त्रसम्मत एक नाम 'मनः' भी है; इस विषय का संक्षिप्त शास्त्रार्थ, संस्कृत भाष्य और टिप्पणों मे, शास्त्रीय वचनों के द्वारा ही बतला दिया गया है । अतः इन श्लोकों का यथाश्रुत पाठक्रम से अनुलोम अन्वय तथा अर्थ करने मे भी कोई अनुपपत्ति नहीं है । फिर भी यह सब शास्त्रीय वर्णन, सृष्टिक्रम को समझाने के लिये एक सङ्केतमात्र है[६६] । वस्तुतः तो जगत् का मूल तत्त्व और उसकी परिणति वा सर्जन-क्रिया का क्रम, अत्यन्त दुरूह और अनिर्वचनीय है । एक ही मूल तत्त्व के सतत अनुवर्तनशील परिणाम-चक्र मे अधरोत्तर क्रम से आविर्भूत और प्रलीन होनेवाले, तद्रूपान्तरात्मक (उसी मूलतत्त्व के रूपान्तरस्वरूप) नाना अवान्तर तत्त्वों के कार्य-कारणक्रम का सर्वथा स्थिर एकरूप होना असंभव है । सृष्टि-प्रलय के अनन्तकालिक चक्र मे पड़कर सभी तत्त्व कभी आरंभक कारण और कभी अवान्तर कार्य वन जाते हैं । अतः पुराणादि मे वर्णित सृष्टि के विविध क्रमों को कल्पभेद से यथार्थ ही समझना चाहिये । साथ ही तत्त्व-परिणाम की गति इतनी सूक्ष्म और परस्पर संमिश्र हैं कि उसके क्रम का विश्लेषण तथा निरूपण करना सर्वथा अशक्य है । इस विषय की शास्त्र-कथायें, सृष्टिक्रम के नाना आर्ष अनुभवों का दिक्प्रदर्शनमात्र करती हैं; उनकी सिद्धान्तरूपता का प्रतिपादन नहीं ।१४–१५।

---

६५ "तत्र षट्संख्यया वक्ष्यमाणानि पञ्च तन्मात्राणि, अतिक्रान्तश्चाऽहङ्कारः, प्रति-निर्दिश्यते । 'आत्ममात्राः' तेषां स्वविकाराः—तन्मात्राणां भूतानि, अहङ्कारस्येन्द्रियाणि । पृथिव्यादिषु भूतेषु शरीररूपतया तिष्ठत्सु 'सूक्ष्मानवयवान्' तन्मात्राऽहङ्कारान् , 'संनिवेश्य' यथास्थानं योजनं कृत्वा, 'सर्वभूतानि' देव-मनुष्य-तिर्यक्-पक्षि-स्थावरादीनि, निर्ममे" इति मेधातिथिः ।

"तेषां षण्णां पूर्वप्रयुक्तानां—महतः, शब्दादितन्मात्राणां च" इत्यादि गोविन्दराजः ।

षण्णामिति, षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकं, तथा च अयमर्थः—स्वयंभूः स्वलिङ्गशरीराऽव-यवान् 'सूक्ष्मान्' स्वल्पान् , 'आत्ममात्रासु' स्वांशचेतनेषु, संयोज्य सर्वप्राणिनः ससर्ज इत्यर्थः—[ सां० सा० पृ० ९२–९३; सां० त० वि० पृ० ३९; तत्त्वया० दी० पृ० ६७ ]

६६ "अत्र 'प्रकृतेर्महान् , महतोऽहङ्कारः' इत्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम् अनुमानेन सामान्यतः कार्याणां सकारणकत्वमात्रसिद्धेः; न तु सृष्टौ मूतादिक्रमो वा, अन्तःकरणादिक्रमो वा, इत्येक-तराऽवधारकमनुमानं सम्भवति, स्पष्टलिङ्गाभावात् । श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चिल्लिङ्गं तु महदादि-क्रमेऽस्तीति' भाष्ये ( साङ्ख्यप्रवचनभाष्ये २, १० ) अस्माभिः प्रदर्शितम्" [ साङ्ख्यसारे पृ० ८५–८६ ]

यत्, मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्,
तस्मात्, [६७]शरीरमित्याहुस्तस्य मूर्तिं मनीषिणः ।१७।

---

प्रागव्यवहितश्लोके महत्तत्त्वं निरूपितं, मनो-ऽहङ्कारयोस्तेन चाऽभिन्नत्वं प्रदर्शितं, तस्माच्च पञ्चतन्मात्रैः सहाऽस्यैव परिग्रहः अत्र मूलाऽनुकूलः स्याद्, अन्यशास्त्रैश्चसम्मतः। 'तेषां तु' पूर्वमुक्तानां, सृष्टिवीर्याऽतिशालिनां, महत्तन्मात्रतत्त्वानां षण्णामवयवान्प्रभुः 'सूक्ष्मान्' अल्पांशतः, स्वस्य मात्रास्वात्मांशशक्तिषु 'सन्निवेश्य' यथायोग्यं संयोज्य, निखिलानि सः 'भूतानि' भौतिकानीह[६८] ब्रह्मा कार्याणि निर्ममे ।१६।

---

पहले ( १४–१५ श्लोकों मे ) महत्, अहङ्कार और मनस्तत्त्व की उत्पत्ति कही गई है, और इन तीनों को तत्त्वतः अभिन्न महत्तत्त्वरूप ही माना है; अथ वा महत्तत्त्व मे ही उस के परिणामरूप अहङ्कार तथा मनः का भी समावेश कर के उनको एक तत्त्व गिना है। अतः महत्तत्त्व और पञ्चतन्मात्र, मिल कर छः हुए। विश्वसृष्टि के अप्रमित वीर्यवाले इन छः तत्त्वों के सूक्ष्म वा स्वल्प अशों को अपने चैतन्यांशों मे मिला कर अर्थात् स्वांशभूत चेतनाशक्तियों से युक्त कर के, ब्रह्मा ने 'सर्वभूतों' की ( तत्तदभिमानिविशिष्ट पञ्चीकृत पञ्च स्थूल महाभूतों, और तत्तच्चैतन्यविशिष्ट मनुष्यादि प्राणियों, तथा अन्यान्य भौतिक पदार्थों की ) सृष्टि की। अत्रत्य तात्पर्य का खुलासा, सृष्टिक्रम के विहङ्गमाऽवलोकन से होगा। सृष्टि से पहले वा महाप्रलय के बाद, परमात्मा ही अपनी 'असत्' नामक अनन्त शक्ति, प्रकृति वा माया को आत्मसात् किये रहता है। कालयोग से उस मे सिसृक्षा उत्पन्न होती है। वह 'बहु-भवन' का अभिध्यान करता है। उस से प्रकृति मे 'क्षोभ' पैदा होता है, और महद् आदि के क्रम से पञ्चतन्मात्र ( अपञ्चीकृत सूक्ष्म पञ्च महाभूत ) पर्यन्त तत्त्वपरिणाम हो जाता है। फिर उन सब का संघटन होता है, जिस से 'अण्ड' वा समष्टिविश्व का विराट् केन्द्र बन जाता है। उस मे तदभिमानिरूप से परमात्मा का समष्टि-चेतनात्मक अंस उद्भूत होता है, जो 'ब्रह्मा' कहलाता है। अनन्तर 'ब्रह्मा' के चैतन्यांशों, तथा अहङ्कारादिगर्भित महत्तत्त्व, और पञ्च तन्मात्रों के सूक्ष्मांशों के ( त्रिवृत्करणादिद्वारा ) मेल से सब भौतिक सृष्टि होती है। इसी विषय का निरूपण इस परम गूढ़ार्थ श्लोक मे है। १६।

---

६७. "पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं, ते समेता महात्मानः 'शरीर'मिति सञ्ज्ञितं; तदाऽऽविशति यो ब्रह्मन् अदृश्यो लघुविक्रमः उत्पन्न एव भवति, शरीरं चेष्टयन्प्रभुः। न विना धातुसङ्घातं शरीरं भवति क्वचित्, न च जीवं विना ब्रह्मन् वायवश्चेष्टयन्त्युत। स जीवः परिसङ्ख्यातः शेषः 'संकर्षणः' प्रभुः, तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा, यस्मिंश्च सर्वभूतानि प्रलये यान्ति संक्षयं, स मनः सर्वभूतानां 'प्रद्युम्नः' परिपठ्यते; तस्मात्प्रसूतो यः कर्त्ता कारणं कार्यमेव च, तस्मात्सर्वं संभवति जगत्स्थावर-जङ्गमं, सोऽनिरुद्धः स ईशानो व्यक्तः स सर्वकर्मसु। यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः, ज्ञेयः स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः; सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते; प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः। मत्तः सर्वं संभवति जगत्स्थावर-जङ्गमम् अक्षरं च क्षरं चैव सच्चाऽसच्चैव नारद" [ म० भा० शां० ३३९, ३३–४२ ]

६८ "भौतिकसृष्टावेव चतुर्मुखस्याधिकारात्, भूतानां च प्रागेव सृष्टत्वात्" इत्यादि नैलकण्ठीये भारतभावदीपे ( शान्तिप० १८३, ५ ) द्रष्टव्यम्।

तदाविशन्ति भूतानि महान्ति, सह कर्मभिः, मनश्चाऽवयवैः, सूक्ष्मैः, सर्वभूतकृदव्ययम् ।१८।

---

'तस्य' च ब्रह्मणो मूर्तेः सूक्ष्मा अवयवास्तु ये , अर्थात् तदात्मनः स्वल्पा अंशा व्यष्ट्यात्मरूपिणः, ते यतः प्रागिहोक्तानि महत्तत्त्वादिकानि षट् , आश्रयन्तीति तत्सङ्घः तच्छरीरं निरुच्यते ।१७। 'तत्' पूर्वोक्तं शरीरं, तु सर्वभूतकृदव्ययं , 'भूतानि' महदादीनि तन्मात्रान्तानि, 'कर्मभिः' जीवानां कर्मभिः सूक्ष्मैरदृष्टैराशयाऽभिधैः सहा'ऽऽविशन्ति', संभूय तत्र सन्तीति योजना ।

अर्थान्महदहङ्कारतन्मात्रेन्द्रियसंहतेः , प्राक् समष्ट्यात्मकं सूक्ष्मं शरीरं ब्रह्मणः स्वयं सर्वसूक्ष्मशरीराणां मूलभूतं सनातनम् एकमेवाऽक्षय्यं विश्वस्थानं सम्पद्यते; ततः व्यष्टिलिङ्गशरीराणि विभज्यन्ते सहस्रशः ब्रह्मांशव्यष्टिजीवानां, विस्फुलिङ्गा[६९] इवाऽनलात् १८

---

यतः, उस 'ब्रह्मा' की 'मूर्ति' ( आत्मा, समष्ट्यात्मकस्वरूप ) के 'सूक्ष्म अवयव' व्यष्ट्यात्मरूप से विभक्त हुए छोटे छोटे अंश, 'इन' पूर्वोक्त 'षट्' छःहों ( महत्तत्त्व और पञ्च तन्मात्राओं ) को अपना 'आश्रय' ( स्वस्वलिङ्गशरीररूप मे आधार ) बनाते हैं; अतः 'इन' की मूर्ति को ( महदादि की मूल समष्टि को ) विद्वान् लोग 'तस्य' उस समष्टिचेतनात्मक ब्रह्मा का ( लिङ्ग ) 'शरीर' कहते हैं । इसी समष्टि-लिंग शरीर से, तदंशभूत अगणित व्यष्टिलिंग शरीर बनते हैं, जो समष्टिचेतनात्मक 'ब्रह्मा' के अंशों से बने अनन्त व्यष्टिचेतनों के 'आश्रय' होते हैं ।१७।

'तत्' वह, पूर्व-श्लोक मे निर्दिष्ट, 'ब्रह्मा' का सूक्ष्म शरीर, जो 'सर्वभूतकृत्' ( अपने मे से सभी 'भूतों' को विभक्त वा उद्भूत करता ) है, और जो 'अव्यय' ( जीवों के समष्टि-आश्रयरूप मे सदा वर्तमान रहनेवाला, अर्थात् स्थूल पिण्ड-ब्रह्माण्डमय जगत् का नाश हो जाने पर भी नष्ट नहीं होनेवाला ) है; उस मे जीवों की सूक्ष्म समष्टि-कर्म-वासनाओं के साथ सभी 'महाभूत' ( महाभावस्वरूप, महत्तत्त्व अहंकार और पञ्चतन्मात्र ) तथा अपने 'अवयवों' ( अङ्गसदृस दश इन्द्रियों ) के सहित मन, ये सब महातत्त्व प्रवेश किये हुए हैं; अर्थात् 'ब्रह्मा' के आदिभूत लिङ्गशरीर मे ये सब समवेत हैं । जीवों के व्यष्टिलिङ्ग-शरीर, 'ब्रह्मा' के समष्टिलिङ्गशरीर के ही अंश होते हैं, अतः इनमें भी अंशतः उपर्युक्त तत्त्वों का समवाय रहता है ।१८।

पहले ( १४-१५ श्लोकों मे ) महद्, अहंकार, आदि की उत्पत्ति बतलाई है; अनन्तर ( १६ वें श्लोक मे ) इन के सूक्ष्म अवयवों मे ब्रह्मांशभूत चेतनों के योग से सर्वभूतमय चराचर जगत् के निर्माण की बात कही है । बीच मे ( १७–१८ श्लोकों मे ) पूर्वोक्त तत्त्वों के संघटन से निष्पन्न होनेवाले मूलसमष्टिरूप, ( ब्रह्मा के ) लिङ्ग शरीर का निरूपण किया है, और उस से विभक्त होनेवाले ( ब्रह्मांश चेतनों के ) अनन्त व्यष्टिलिङ्गशरीरों की सूचना दी है । अब अगले ( १९ वें ) श्लोक मे, महत्तत्त्व, अहंकार, और पञ्चतन्मात्राओं के ( पञ्चीकरणादिप्रक्रिया द्वारा ) संघटन से, जो स्थूल पञ्चमहाभूत और पिण्ड-ब्रह्माण्डादिरूप भौतिक जगत् उत्पन्न होता है, उसका निरूपण करते हैं । मूल श्लोक का अक्षरार्थ यह है कि—

---

६९. "तदेतत्सत्यं यथा सुदीप्तात्पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः , तथाऽक्षराद् विविधाः सोम्य, भावाः प्रजायन्ते; तत्र चैवापियन्ति" [मुण्ड० २ खं० १, १]

तेषामिदं तु सप्तानां पुरुषाणां महौजसां सूक्ष्माभ्यो मूर्तिमात्राभ्यः संभवत्यव्ययाद् व्ययम् ।१९।
आद्याद्यस्य गुणं त्वेषामवाप्नोति परः परः, यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः ।२०।

---

प्राक् 'षण्णाम्' अत्र 'सप्तानाम्' इत्युक्तिर्न विरुध्यते, अहङ्कारस्य पूर्वोक्तौ महत्त्येवोपसंग्रहात् । 'तेषां' महदहङ्कारतन्मात्राणां; 'महौजसां' कार्यवीर्यवतां, विश्व-सृष्टिसामर्थ्यशालिनां; पुंसां तेषु शयानानां पूरूपत्वात्, प्रपूरणात्, परस्मिन्पुरुषे नित्यं शयनात्, पुरुरूपतः, पुरुषार्थस्वरूपत्वात्, तद्धेतुत्वाद्यथाऽपि च, सृष्टेः पुरुषकारेण युक्तत्वाद् उपचारतः 'पुरुषाणां'; पुरोगाणां स्थूलसृष्टेर्महात्मनां, 'सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः' पञ्चीकरणकर्मणा संहतेभ्यस्तदंशेभ्यः; 'संभवत्यव्ययाद् व्ययं' 'अव्ययाद्' अक्षरात्कूटस्थादव्यक्तस्वरूपतः प्रधानाद् 'इद'मध्यक्षं दृश्यमानं जगद्'व्ययं' क्षरं विनश्वरं व्यक्तं स्थूलरूपं प्रजायते ।

अत्र ये पुरुषाः सप्त महत्तत्वादयः स्मृताः, त एव प्राणसंज्ञाभिर्वेदे शतपथे श्रुताः ।
तत्रोक्ता जगदुत्पत्तिप्रक्रियैवाऽत्र शब्दतः अर्थतश्च मनोः श्लोके निबद्धेव विभाव्यते ।
एषा प्रतिपदं प्रायः पूर्णश्रौतमनुस्मृतिः पतिव्रतेव भर्तारं, वेदार्थमनुगच्छति ।१९।

'एषाम्' अनन्तरोक्तानां महत्तत्वादिसंज्ञिनां पूर्वोत्पन्नस्य तत्त्वस्य गुणं तज्ज्ञः परः परः पदार्थो लभते स्वस्वसङ्ख्यागुणितमात्रया । यस्माद् आद्यविकाराद् यः परिणामक्रमे भवेत् यावत्सङ्ख्यः, स विज्ञेयस्तावत्सङ्ख्यगुणाऽधिकः । यथा त्रैगुण्यमय्याद्याद्विकारान्महदात्मकात् याति द्विगुणितं तस्य कार्येऽहङ्कारसंज्ञिते; तत्, तन्मात्रेष्वहङ्कारायोत्कर्षेणाऽनुवर्तते; कारणाद्धि गुणोत्कर्षः कार्ये स्यादुत्तरोत्तरम् ।

यथा वा क्रमजातेषु पञ्चभूतेषु तत्क्रमात् शब्दादिगुणसंक्रान्तिस्तत्तत्पूरणसङ्ख्यया ।
"आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत्, द्विगुणस्तु ततो वायुः शब्द-स्पर्शात्मकोऽभवत्
रूपं तथैवाऽऽविशतः शब्द-स्पर्शगुणावुभौ, त्रिगुणः स्यात्ततो वह्निः,स शब्द-स्पर्श-रूपवान्
शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत्, तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः

---

असीम सृष्टि की अनन्त बीजशक्ति से सम्पन्न जो महद् अहंकार और पञ्चतन्मात्ररूप सात 'पुरुष' ( पदार्थ वा तत्त्व ) पहले कहे गये हैं, उनकी 'मूर्ति' ( राशि ) के सूक्ष्म अंशो से पञ्चीकरणादि -द्वारा, 'अव्यय' ( अक्षर प्रकृति ) के सकाश से 'व्यय' ( क्षर, विनश्वर ) जगत् उत्पन्न होता है ।

मनु के इस ( प्रकृत १९ वें ) श्लोक मे जिन सात 'पुरुषों' की चर्चा है, उनका प्रायः ऐसा ही उल्लेख ( केवल किञ्चित् पाठभेद के साथ ) शतपथब्राह्मण ( कां० ६, प्रपा० १, ब्रा० १ ) मे भी पाया जाता है । यह पूर्णतः श्रौती ( वेदमयी ) मनुस्मृति, इसी प्रकार प्रायः पदे पदे वेदार्थ का अनुसरण करती है । १९ ।

पूर्व श्लोक मे जिन सात ( महद् अहंकार और पञ्चतन्मात्र ) तत्त्वों का उल्लेख हुआ है, उन्हीं का निर्देश, इस श्लोक के 'एषां' पद से किया गया है । इन तत्त्वों की, कारण-कार्यरूप से, परम्परा चलती है । इस परम्परा के पहले पहले तत्त्व के गुण को अगले अगले तत्त्व, प्राप्त करते हैं । इन मे परिणाम के क्रम से जो तत्त्व 'यावतिथ' जौवां ( जितनीसङ्ख्यावाला ) होता है, वह उतने ही गुणवाला माना जाता है । यहां प्रकृत सात तत्त्वों मे, महत् से अहंकार मे, तथा अहंकार से तन्मात्रों मे होनेवाला गुणसंक्रमण, और तन्मूलक द्वैगुण्य आदि, गुणोत्कर्षरूप ही हो सकता है; अर्थात् महत् की अपेक्षा से अहंकार मे, और अहंकार की अपेक्षा से तन्मात्रों मे

**सर्वेषां स तु नामानि, कर्माणि च पृथक्पृथक् वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ।२१।**

---

शब्दः स्पर्शश्च रूपं च रसो गन्धं समाविशत्, तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु शब्द्यते ।
गुणं पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरं ; तेषां यावच्च यद्यच्च तत्तत्तावद्गुणं स्मृतम् †"
"आकाशवायुतेजांसि सलिलं पृथिवी तथा, शब्दादिभिर्गुणैर्ब्रह्मन्, संयुक्तान्युत्तरोत्तरैः§"।२०।
अत्र स्वभावजं 'कर्म' वह्नेर्दाहकतादिवत् वस्तुधर्ममयं ग्राह्यं, 'सर्व'सम्बन्धवर्णनात् ;
न तु कर्त्तव्यरूपार्थं, तद्धि मानवमात्रगम् । मनुष्यस्य च सत्त्वादिः स्वभावप्रभवो गुणः,
तन्मूलकः शमादिश्च ब्राह्मण्यादिप्रयोजकः, अत्र 'कर्मणि' संग्राह्यो; न त्वेवाऽध्ययनादिकं ;
अध्ययनादिकर्माणि, वृत्त्यर्थानीतराणि च, त्रेतायां विहितानीह त्वादिसृष्टिकथोच्यते ।
'संस्था' तु वृत्तिमर्यादा, श्रेणिर्वा, स्थितिरिष्यते । एवं सम्पद्यते चाऽस्य श्लोकस्यायमधस्तनः—
'सर्वेषां' विश्ववस्तूनां, 'नामानि' वाचकानि 'सः', 'कर्माणि' गुणधर्माणि, 'संस्था' वृत्तिव्यवस्थितीः,
'वेद-शब्देभ्य एवादौ' स्मृतप्राक्कल्पवेदतः, निर्ममे भगवान्ब्रह्मेत्यक्षरार्थः समासतः ।
"नाम रूपं च भूतानां कर्मणां च प्रपञ्चनं वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ।
ऋषीणां नामधेयानि, याश्च वेदेषु दृष्टयः शर्वर्यन्ते प्रसूतानां, तान्येवैभ्यो ददात्यजः*"
अनादि-निधना दिव्या वागुत्सृष्टा स्वयंभुवा आदौ वेदमयी, भूता यतः सर्वाः प्रवृत्तयः¶"
एवमाद्यैः पुराणोक्तैश्चाऽयमर्थः समर्थ्यते ; शब्दसाम्यं महच्चैषां मनोः श्लोकेन दृश्यते ।
अत्राऽग्रे द्वादशेऽध्यायेऽप्येवमेव प्रवक्ष्यति सर्वस्य भूत-भव्यादेर्वेदादेव समुद्भवम्—
"चातुर्वर्ण्यं, त्रयो लोका, श्चत्वारश्चाश्रमाः पृथक्, भूतं, भव्यं, भविष्यं च, सर्वं वेदात्प्रसिध्यति ।
शब्दः, स्पर्शश्च, रूपं च, रसो, गन्धश्च पञ्चमः, वेदादेव प्रसूयन्ते; प्रसूतिर्गुणकर्मतः" ।

---

सत्त्व आदि त्रिगुण का उत्तरोत्तर उद्रेक होता है, क्योंकि ये तीनों (महत्, अहङ्कार, पञ्चतन्मात्र) वैशेषिकरूप से त्रिगुणात्मक वा त्रिविध माने गये हैं ।

किन्तु 'शब्द' आदि पञ्च तन्मात्राओं से क्रमशः जो आकाश आदि स्थूल पञ्च महाभूत परिणत होते हैं, उन मे अनुक्रम से 'शब्द' आदि गुणों की भी वृद्धि होती जाती है; अर्थात् आकाश मे शब्द, वायु मे शब्द और स्पर्श, तेज मे शब्द स्पर्श और रूप, जल मे शब्द स्पर्श रूप और रस, तथा पृथिवी मे सब्द स्पर्श रूप रस और गन्ध, ये पांचो गुण समवेत होते हैं ।२०।

उस ( पूर्वोक्त ) 'ब्रह्मा' ने सृष्टि के आरम्भ मे, सुप्त-प्रबुद्धवत्, पूर्वकल्पीय वेद का स्मरण करके वा अपने उत्पादक परमात्मा से ही 'वेद' को प्राप्त करके, उसके शब्दों से ही सब पदार्थों के नाम ( आकाश, वायु, आदि ), अलग अलग कल्पित किये; और उन उन पदार्थों के 'कर्म' गुणधर्म ( अग्नि मे दाहकत्व आदि ) भी पृथक् पृथक् निर्मित किये; तथा सभी पदार्थों की 'संस्था' का, ( अमुक प्राणी, अमुक प्रकार से अमुक साधन-द्वारा जीवनवृत्ति चलावे, जैसे वृक्ष, जड़ से रस खींच कर जीवे, इत्यादि ) वृत्ति-मर्यादा का, निर्माण किया । 'संस्था' का अर्थ—स्थिति, सत्ता, वा अस्तित्व, भी है; इस अर्थ से, ब्रह्मा ने प्रत्येक पदार्थ के अधिकार-काल

---

† वा० पु० ४, ६४–७०; कू० पु० पू० अ० ४; मार्क० पु० ४५, ५२–५८; लिङ्गपु० पू० ७०, ४३–५० । § वि० पु० १, २, ५० ।

७० "अणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके" [ निरु० १, २, ५ ]

* वा० पु० ९, ६३–६४; लिं० पु० पू० ७०, २५७–५८; कू० पु० पू० अ० ७; मार्क० पु० ४८, ४२–४३; वि० पु०, ५, ६३–६४ । ¶ कू० पु० पू० अ० २ ।

एतस्मिन्विषये द्वेधा मतं दृष्टं मनीषिणाम्—
(१) वेदशब्देभ्य एवादौ ब्रह्मा निर्मितवाञ्जगत्, अर्थाज्जगदुपादानं शब्दब्रह्मैव सोऽकरोत्।
"शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः; छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत‡"
"इन्द्राच्छन्दः प्रथमं प्रास्यदन्नं, तस्मादिमे नाम-रूपे विषूची,
प्राणाच्छन्दसो नाम-रूपमुत्पन्न,मेकं छन्दो बहुधा चाकशीति।
वागेव विश्वाभुवनानि जज्ञे, वाच इत्सर्वममृतं यच्च मर्त्यम्,
अथेद्वाग्बुभुजे, वागुवाच, पुरुत्रा वाचो न परं यच्च नाह।
विभज्य बहुधात्मानं स च्छन्दस्यः प्रजापतिः छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम्§"
इत्याद्येकं मतं, तच्च साक्षाद्वेदाऽनुमोदितं[७१] ब्रह्मसूत्रादिभिश्चा;ऽन्यन्मतं त्वित्थं निरूप्यते—
(२) वेद शब्देभ्य इत्यर्थाद् वेदशब्दाऽनुसारतः ब्रह्मा नामादि सर्वेषां यथापूर्वमकल्पयत्।
अन्तरण्डं समुत्पाद्य वेदमध्यापयद्विधिं[७२] परमात्मा; स तच्छब्दैः 'सर्व'-नामादि निर्ममे।
इत्थं द्विधाऽस्य भावार्थो मनोः श्लोकस्य वर्ण्यते विद्वद्भिः; प्रक्रिया त्वत्र नोच्यते ग्रन्थविस्तरात्।
मार्कण्डेयपुराणादौ¶ वेदाद्विश्वविनिर्मितेः प्रक्रियोक्ता प्रपञ्चेन; ज्ञेया जिज्ञासुभिस्ततः।२१।

---

( जीवनाऽवधि ) वा भोगकाल की मर्यादा बांध दी; अर्थात् 'ओषधियां फल के पकने तक ही विद्यमान रहें' इत्यादि रूप से सब की 'नियति' कर दी; ऐसा तात्पर्य समझना चाहिये। श्रेणि, राशि, वर्ग, वा एक जातीय समूह, भी 'संस्था' शब्द का अर्थ है; तदनुसार यहाँ—'विधाता ने स्वसृष्ट जगत् के सब पदार्थों की 'संस्था' श्रेणी ( एक एक जाति ( किस्म ) के एक एक पदार्थ की शृङ्खला ) अलग अलग ( एक दूसरे से विलक्षण, इतर-व्यावृत्त ) बनाई; जैसे 'अण्डजसंस्था' तथा तदन्तर्गत 'पक्षिसंस्था'; ऐसा अर्थ भी लगाया जा सकता है।

इस मानव श्लोक ( २१ वें ) के अर्थ, विद्वानों ने दो प्रकार से किये हैं—

( १ ) ब्रह्मा ने वेद के शब्दों से ही सब नाम कर्म और संस्थामय विश्व की रचना की। ( २ ) परमात्माने ब्रह्मा को उत्पन्न करके उसे वेद प्रदान किया ( ज्ञान दिया ) और ब्रह्मा ने उन्हीं वेद-शब्दों के अनुसार पूर्वकल्पवत् सभी पदार्थों के नाम कर्म और संस्था का निर्माण किया। वेद के शब्द से ही विश्व की सृष्टि कैसे हुई, इस की प्रक्रिया, शास्त्र-पुराणों मे सविस्तर बतलाई गई है; स्वयं वेदान्त भी शब्द ( तन्मात्र ) से ही, आकाशादिक्रम से, विश्वसृष्टि का निरूपण करता है। वेद के शब्द से वा शब्दमात्र से ही विश्वनिर्माण की प्रक्रिया का प्रदर्शन यहाँ ग्रन्थ विस्तर के भय से नहीं किया जा रहा है। जिज्ञासुओं को मार्कण्डेयपुराणादि मे स्वयं देखना चाहिये। २१।

---

‡ वाक्यप० १, १२०। § वाक्यपदीयधृतानि ऋग्वर्ण-पुराकल्पवचनानि ( ब्र० कां० १२० )।

७१. स उ एवैष ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषः, पुरुषो वै लोकः।......एष वै छन्दस्यः साममयः प्रथमो (?) क्षन् वैराजः पुरुषो योऽन्नमसृजत, तस्मात्पशवोऽन्वजायन्त, पशुभ्यो वनस्पतयो, वनस्पतिभ्योऽग्निः" [ वा० प० १, १२० धृताः श्रुतयः ]

"प्रजापतिरकामयत, प्रजायेयेति;......स भूरिति व्याहरत्, स भूमिमसृजत" ( तै० ब्रा० २, २, ४, २ ) इत्यादि श्रुतिषु 'भूरादिव्याहृतय एव लोकत्रयरूपेण परिणताः इत्युक्तमनुसन्धेयम्।

"शब्द इति चेद्; न, अतः प्रभवात्" ( ब्र० सू० १, ३, २८ ) इत्यादि ब्रह्मसूत्रम्, "अत एव हि वैदिकात् शब्दाद् देवादिकं जगत् प्रभवति" इत्यादिकं तत्रत्यं शाङ्करभाष्यं च द्रष्टव्यम्।

७२ "यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै"; [ श्वे० उ० ६, १८ ]

¶ मार्क० पु० अ० १०१ श्लो० २१–२७ तथा अ० १०२।

कर्मात्मनां,च देवानां,सोऽसृजत्प्राणिनां प्रभुः, साध्यानां[७३] च,गणं सूक्ष्मं, यज्ञं चैव सनातनम् ।२२।

(१) 'कर्मात्मनां' नृरूपाणां 'प्राणिना'मर्थसिद्धये , 'देवाना'मिन्द्रमुख्यानां यज्ञियानां 'गणं', ततः 'सूक्ष्मं' देवविशेषाणां 'साध्यानां' च गणं, तथा 'यज्ञं' च शाश्वतं धर्मस्वरूपं 'सोऽसृजत्प्रभुः।
(२) कर्मण्येवाऽथवा यज्ञे येषां देवत्वमिष्यते , त एवाऽक्षादयस्त्वत्र 'कर्मात्मानो' विवक्षिताः ;

इस श्लोक के निम्नलिखित प्रकारों से दो अर्थ किये जाते हैं—

( १ ) 'ब्रह्मा' ने कर्मात्मा प्राणियों ( मनुष्यों ) के अभ्युदय के लिये, इन्द्र-आदि देवताओं के 'गण' को, तथा उनसे भी सूक्ष्म रूपवाले 'साध्य'नामक देवों के गण ( वर्ग ) को, और 'यज्ञ'रूप ( कर्ममय ) सनातन धर्म को वा सतत प्रवर्त्तमान 'यज्ञ' मानवीय कर्म को उत्पन्न किया ।

इस अर्थ मे 'कर्मात्मनां' पद, 'प्राणिनां' पद के साथ अन्वित होता है, और 'कर्मात्मा प्राणी' का अर्थ, 'मनुष्य' लिया जाता है, क्योंकि यज्ञादि कर्म के अनुष्ठान की योग्यता मनुष्यप्राणी मे ही होती है । जैसे 'धार्मिक' के अर्थ मे 'धर्मात्मा' शब्द का प्रयोग होता है, वैसे ही 'कार्मिक' वा कर्ममय ( श्रद्धामयवत् ) पुरुष के अर्थ मे यहाँ 'कर्मात्मा' शब्द का प्रयोग हुआ, जानना चाहिये ।

दूसरे अर्थ मे 'देव' के ही 'कर्मात्मा' और 'प्राणी' ये दो भेद माने गये हैं । इनमे जिन ( अक्ष, ग्रावा, रथाङ्ग, आदि ) जड़ पदार्थों को यज्ञप्रयोग मे ही देवता मानते हैं, अन्यदा, अन्यत्र, वा स्वरूपतः नहीं, वे यज्ञरूपी कर्म मे देवतात्मत्व प्राप्त करने के कारण 'कर्मात्मा' कहे जाते हैं; और जो इन्द्र, रुद्र, विष्णु आदि, स्वरूपतः देव, प्राणवान्, तथा पुरुषविग्रह, माने जाते हैं, और जिनकी पूजा-उपासना वैदिक यज्ञ से अन्यत्र भी, स्वतन्त्ररूप से सदा होती है, वे 'प्राणि'-देव कहलाते हैं । यद्यपि 'साध्यगण भी 'प्राणिदेव' हैं, तथापि यहां उन का पृथक् निर्देश, केवल स्तुतिभाक् होने के कारण, अथवा इन्द्रादि की अपेक्षा से सूक्ष्मतर-स्वरूप होने के कारण, किया है । इस प्रकार प्रकृत ( २२ वें ) श्लोक का दूसरा अर्थ यह निष्पन्न होता है कि–

( २ ) 'ब्रह्मा' ने अप्राणिदेवों ( अक्षादिकों ) और प्राणिदेवों ( इन्द्रादिकों ) तथा केवल

७३. "तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः , तेन देवा अयजन्त साध्या ऋषयश्च ये" इति ,
"यज्ञेन यज्ञमयजन्त देवा,स्तानि धर्माणि प्रथमान्यासन् ;
ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवाः"
इति च त्रयीषु पौरुषे सूक्ते श्रूयते ।

"साध्याः, सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः" इति, "पूर्वे साध्याः, पुरातना विराडुत्पत्ति-साधका देवा सन्ति" इति च तत्र सायणः ।

"रश्मयः...सप्तऋषयः साध्याः" [ निघण्टौ १,५ ] "साध्याः" [ निघ० ५,६,२८ ]
"साध्या देवाः, साधनात्" [ निरु० १२,४०, ३ ]

"ते हि सर्वमिदं साधयन्ति; यदन्येन सर्वकर्मभिरसाधितं, तत् साधयन्तीति 'साध्या' उच्यन्ते । ते च पुनः प्राणा विश्वसृजः ऋषयः, ये सहस्रसंवत्सरसत्रेणेदं विश्वमसृजन्त, त एवैतेऽधिदैवं रश्मयः । विज्ञायते हि—'प्राणा वै सप्तऋषयः साध्या विश्वसृजः', 'विश्वसृजः प्रथमे सत्रमासत' इति । शिरो

अग्नि-वायु-रविभ्यस्तु त्रयं ब्रह्म सनातनं दुदोह यज्ञसिद्ध्यर्थम्*ऋग्यजुःसामलक्षणम्† ।२३।

येषां त्विन्द्रादिरूपाणां देवतात्वं स्वरूपतः, प्राणवत्त्वं च शास्त्रोक्तं, ते ह्यत्र 'प्राणिनः' स्मृताः ।
तस्माद्भेदेन निर्देशः 'कर्मात्म-प्राणि'शब्दतः अक्षादीन्द्रादिदेवानामप्राण-प्राणिनामिह ।
केवलस्तुतिभाक्त्वेन साध्यानां तु गणः पृथक् सूक्ष्मत्वेन च निर्दिष्टो, हविर्भाग्देववर्गतः ।
इत्थं च 'कर्मनिर्वर्त्यदेवत्वानां जडात्मनां, तथा प्राणवतां चाऽपि देवानां स हविर्भुजां,
केवलस्तुतिभाजां च साध्याना,मसृजत्प्रभुः गणं; यज्ञं च तादर्थ्यम्' इत्यर्थोऽपीह वर्ण्यते ।२२।
'अग्निवायुरविभ्यः' स्याच्चतुर्थ्यन्तमिदं पदं, चतुर्थी चाऽत्र तादर्थ्ये विभक्तिः सूपपद्यते ।
यज्ञादिसम्प्रदानत्वाद् अग्न्यादीनामपीह वा सम्प्रदाने चतुर्थीयं, तथा चाऽर्थोऽयमिष्यते—
(१) 'अग्निवायुरविभ्यस्तु यज्ञसिद्ध्यर्थं',मर्थतः तत्प्रीत्यर्थं तु यज्ञानां विधानस्य प्रसिद्धये,
स त्रयं 'ब्रह्म' वेदाख्यम्, ऋग्यजुः सामलक्षणं दुदोहात्मानमेव[७४] स्वं ब्रह्माऽऽत्मस्थं सनातनम् ।
दुहेर्द्विकर्मकस्याऽत्राऽनुक्तं कर्म स्वयं प्रभुः, प्रधानं तु श्रुतं कर्म 'ऋग्यजुःसामलक्षणम् ।

स्तुतिभाक् 'साध्यों' ( देवविशेषों ) के गण को, और उनके तर्पण ( तोषण, इष्टभावन, तुष्टि, प्रीति, पूजा ) के लिये सनातन 'यज्ञ' को भी उत्पन्न किया ।२२।

निरुक्त आदि के अनुसार, वैदिक देव, अग्नि वायु और सूर्य, ये तीन ही हैं। वेदों मे नाना नामों से इन्हीं तीनों का उल्लेख है। इन मे अग्नि ऋग्वेद का प्रधान देव, वायु यजुर्वेद का प्रधान देव, और सूर्य सामवेद का प्रधान देव है; अर्थात् ऋग् आदि तीन वेदों मे क्रम से अग्नि आदि तीन देवों के लिये मुख्यतः स्तुति और यज्ञ आदि का निरूपण है। इसी अर्थ का प्रतिपादन मनु के इस ( २३ वें ) श्लोक मे किया गया है; अर्थात् "ब्रह्मा ने अग्नि वायु और रवि के लिये, 'यज्ञ' सिद्ध करने को, ऋग् यजुः और साम, ये तीन सनातन वेद, अपने मे से निकाले"। इस श्लोक मे वेद के लिये 'सनातन' विशेषण लगाया है, जिसका अर्थ 'सदा वर्तमान रहनेवाला' होता है; और ब्रह्मा-द्वारा अपनी आत्मा से वेद का 'दोहन' करना, निकालना मात्र कहा गया है, नया प्रणयन वा निर्माण करना नहीं। इससे उन धारणाओं की सूचना होती है, जो वेद के विषय मे चिरकाल से वैदिक सम्प्रदायों मे बद्धमूल और मान्य हैं। ये धारणायें मुख्यतः तीन प्रकार की हैं। ( १ ) वेद अपौरुषेय है; किसी पुरुष का बनाया हुआ नहीं है; अत एव वह

ह्यध्यात्मं द्युस्थानभक्तिः, अतः सप्तऋषयः, देवाः, विश्वे देवाः, साध्याः, इति सर्वे एते 'प्राणा' रश्मयो' वेत्युपपद्यते" इति तत्रत्या दौर्गी वृत्तिः ।

* पुरुषविद्याऽनित्यत्वात्कर्मसम्पत्तिर्मन्त्रो वेदे" [ निरु० १,२,७ ]

† "तेषामृग्, यत्राऽर्थवशेन पादव्यवस्था ।
गीतिषु सामाख्या । शेषे यजुः शब्दः" [ मी० द० अ० २ पा० १ सू० ३५-३७ ]

७४. "तस्माद्यज्ञात्सर्वहुत ऋचः, सामानि, जज्ञिरे; छन्दांसि जज्ञिरे तस्माद्; यजुस्तस्मादजायत" [ ऋ० सं० १०,९०,९; वा० सं० ३१,७ ]

"अस्य महतो भूतस्य निःश्वसितमेतद्, यद्, ऋग्वेदो, यजुर्वेदः, सामवेदो,ऽथर्वाङ्गिरसः" [ बृ० आ० उ० २,४,१० ]

इत्यादिश्रुतिभ्यो हिरण्यगर्भादिमूर्तेः परमात्मनः सकाशादेव वेदोत्पत्तिरवगम्यते ।

(२)अग्नेर्वायोस्तथाऽऽदित्याद्[७५] वेदोत्पत्तिश्रुतेरिह यथाश्रुतार्थमादाय प्राहुरर्थान्तरं परे—
'अग्निवायुरविभ्यस्तु' तेभ्य एव सकाशतः, ऋग्वेदादित्रयं ब्रह्मा दुदोहेत्यादि पूर्ववत्।
(३) पञ्चम्यन्तं पदं मत्वाऽपीदं केचिन्मनीषिणः अन्यथाऽर्थमिह प्राहुर्गोपथादिप्रमाणतः[७६] —
'अग्निवायुरविभ्यो'ऽर्थात् तत्तच्छब्देभ्य एव सः आरभ्याऽऽविश्चकारादौ त्रयं ब्रह्म प्रजापतिः।
वेदोत्पत्तिकथा नानाप्रस्थाना वैदिकेष्वपि ग्रन्थेषु श्रूयते, तच्च टिप्पणोद्धरणैः[७७] स्फुटम्।
ज्ञानस्याऽनन्तशाखत्वाद्, वैश्वरूप्याच्च, तन्मये वेदे, नानाक्रमोत्पत्तिविज्ञानं, न विरुध्यते।
ऋषिप्रणीत एवाऽस्ति वेदराशिस्तु वस्तुतः[७८], तद्बुद्धिप्रेरणादीशेऽपीष्टा वेदस्य कर्तृता।
बुद्धिमद्भिः कृता वेदा ऋषिभिस्तत्त्वदर्शिभिः बुद्धिपूर्वकमेवेति शास्त्रादेवाऽवधार्यते[७९]।

नित्य, अनादि-निधन, वा सनातन है। ( २ ) वेद, पौरुषेय हैं, पर ईश्वररूप-पुरुषकृत है, साधारण पुरुषकृत नहीं, क्योंकि जीवों मे भ्रम, प्रमाद, तथा विप्रलिप्सा आदि दोष होते हैं, अतः वे सर्वथा निर्दोष, परमप्रमाणभूत, वेद की रचना नहीं कर सकते थे। ( ३ ) वेद, अर्थात् शब्द, अर्थ और उनके सम्बन्ध का ज्ञान, अपौरुषेय और नित्य वा सनातन है; उसी का प्रकाशन, प्रतिकल्प मे 'ब्रह्मा', तथा प्रतिमन्वन्तर और युगान्तर मे मनु सप्तर्षि और व्यास आदि आधिकारिक महा-पुरुष, ऋगादिवाङ्मय के रूप मे प्रवाह से करते रहते हैं; अतः प्रावाहिक नित्यता के कारण, शब्दार्थसम्बद्ध ज्ञान ( ऋग्-आदिरूप ) को भी 'सनातन' प्रवाहतः नित्य, कहते हैं।

७५. "प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति; स तपोऽतप्यत, स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्; ताँल्लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त, अग्निरेव पृथिव्या अजायत, वायुरन्तरिक्षाद्, आदित्यो दिवः; तानि ज्योतींष्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त, ऋग्वेद एवाऽग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" इत्यादि [ ऐ० ब्रा० अ० २५ खं० ७; शत० ब्रा० कां० ११ अ० ५; गो० ब्रा० पू० १,६ ] द्रष्टव्यम्।

७६. ऋचामग्निर्दैवतं, तदेव ज्योतिः, गायत्रं छन्दः, पृथिवी स्थानम्, 'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातमम्' इत्येवमादिं कृत्वा ऋग्वेदमधीयते। यजुषां वायुर्दैवतं, तदेव ज्योतिः, त्रैष्टुभं छन्दः, अन्तरिक्षं स्थानम्, 'इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु; श्रेष्ठतमाय कर्मणे' इत्येवमादिं कृत्वा यजुर्वेदमधीयते। साम्नामादित्यो दैवतं, तदेव ज्योतिः, जागतं छन्दः, द्यौः स्थानम्, 'अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि' इत्येवमादिं कृत्वा सामवेदमधीयते" [ गो० ब्रा० पू० १, २९ ] इति गोपथब्राह्मणानुसारेण पृथिवीस्थानमग्निम्, अन्तरिक्षस्थानं वायुं, द्युस्थानमादित्यम्-अर्थात् तद्वाचकशब्दघटितमन्त्रं प्रारभ्य ऋग्यजुःसामलक्षणं ब्रह्म (वेदं) 'दुदोह' आविश्चकार,प्रजापतिरित्येवार्थः सिध्यति।

७७. "अत्र पश्चाद्गतयोः ७४-७५ तमटिप्पणयोरुद्धृतानि वेदवचनान्यनुसन्धेयानि; अन्यच्च—
"शास्त्रयोनित्वात्" [ ब्र० सू० १,१,३ ]
"महत ऋग्वेदादेः शास्त्रस्याऽनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थाऽवद्योतिनः सर्वज्ञकल्पस्य 'योनिः' कारणं ब्रह्म; न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति" [ तत्रत्यं शाङ्करभाष्यम् ] इत्यादिकमपि द्रष्टव्यम्।

७८. "साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः, उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" [ निरु० १,२०,२ ]

७९. "बुद्धिपूर्वा वाक्यकृतिर्वेदे ।१। ब्राह्मणे संज्ञाकर्म (बुद्धि)-सिद्धिलिङ्गम् ।२। बुद्धिपूर्वो ददाति ।३। तथा प्रतिग्रहः ।४। असमद्बुद्धिभ्यो लिङ्गमृषेः ।५।" [ वै० द० अ० ६ आ० १ ]

अतो नानाविधैरेव भावोद्रेकैरिहाऽभवन् उच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयः[८०]।
"अथर्वऋग्यजुःसाम्नां वेदेष्विह पृथक्पृथक् ऋषीणां तप्यतां तेषां तपः परमदुश्चरं, मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह, असन्तोषाद् भयाद्दुःखान्मोहाच्छोकाच्च पञ्चधा*"
एवं मत्स्यपुराणादौ स्पष्टमेवाऽभिधीयते। यथा कवष ऐलूषः सत्राद्दृषिवहिष्कृतः, शोकादेवाऽथवा दुःखान्मंत्रसूक्तं ददर्श सः† यथा क्रौञ्चवधं दृष्ट्वा शोकार्त्तस्य महामुनेः स्वयं श्लोकः समुद्भूतः प्राचेतसस्य चेतसि‡
न चाऽसद्धेतुभूतेभ्यः शोकादिभ्यः प्रवर्तितं शास्त्रमप्यसदेव स्याद्, अप्रमाणं च तन्मतम्, इति शङ्क्यं; सतां भावा यतो लोकदशामयाः। सार्वलौकिकदुःखादीननुभूयैव सज्जनः यः स्वयं तन्मयो भूत्वा नितान्तं परिदूयते; स पुनस्तानपाकर्त्तुं सर्वलोकात्प्रवर्तते शास्त्रप्रणयनेनाऽतो न तच्छास्त्रमसद्भवेत्। कश्चित्तु दुःखशोकादीनात्मन्येवाऽनुभूय, तान् भूयोलोकगतान्दृष्ट्वा सज्जनः परितप्यते; ततस्तान्सर्वलोकेभ्यो दूरीकर्त्तुं, शुभेच्छया प्रेरितः कुरुते शास्त्रं, तच्छ्रद्धेयं च सच्च नः। व्यक्ते,वर्गविशेषस्य वा स्वार्थेन प्रवर्तितः राग-द्वेषादिकः सद्भिरसद्धेतुर्निगद्यते; तन्मूलकं तु यच्छास्त्रं, तदेवाऽसदिति स्थितिः। अलं प्रासङ्गिकेनाऽत्र; प्रकृतार्थोऽनुगम्यते। 'बुद्ध्यैव निर्मिता वेदा' इत्यर्थः प्रकृतस्त्विह। शोकादिक्षुब्धया बुद्ध्या शान्तिचिन्ताऽनुविद्धया कार्याकार्यविवेकिन्या प्राणिकारुण्यधूतया लोकशोकजिहीर्षायाः सत्सङ्कल्पेन पूतया वेदान्, अन्यानि शास्त्राणि चाऽकुर्वत महर्षयः।

इन तीनों धारणाओं मे तत्त्वतः कोई विरोध नहीं है। ईश्वर स्वयं 'वेद'-( ज्ञान )-स्वरूप माना जाता है; अत एव वेद को 'ब्रह्म' भी कहते हैं। यह सारा जगत् भी 'वेदमय' अर्थात् नाम ( शब्द ), रूप ( अर्थ ), और ज्ञान-( अनुभूति )-मय है। यह सव अपौरुपेय भी है, और एक दृष्टि से पौरुपेय भी। इसी की अभिव्यक्ति, ऋक्-प्रभृति ग्रन्थात्मक 'वेद' से भी होती है; सुतराम् यह भी, नित्य शब्द, अर्थ, और ज्ञान के सम्बन्ध से अपौरुपेय, तथा ग्रन्थरूप मे ऋषि-प्रणीत होने के कारण पौरुपेय, भी है। इस विषय पर श्रद्धेय डा० श्री भगवान्दास जी ने अपने 'मानवधर्मसार'नामक संस्कृतपद्यवद्ध निवन्ध मे (पृ० १७८–८३) तात्त्विक विचार प्रकट किया है; जिज्ञासु सज्जन वहाँ देख सकते हैं। वेदों के ऋषिप्रणीत होने मे वेद-पुराणों से अनेक प्रमाण यहाँ संस्कृत भाष्य और टिप्पणों मे उद्‌धृत किये गये हैं। साथही यह भी प्रमाणित किया है कि ऋषियों ने असन्तोष, भय, दुःख, मोह, शोक, आदि मनोविक्षोभों से, तथा स्तुति, आशीर्वाद, शपथ, अभिशाप, भावविवक्षा, परिदेवना, निन्दा और प्रशंसा आदि नाना भावनाओं से प्रेरित होकर, बुद्धिपूर्वक, वेदों की रचना की है। ऋषियों की उक्त भावनायें, वेदग्रन्थों मे पदे पदे प्रत्यक्षतः अनुभूत होती हैं। पूर्वमीमांसादर्शन ( अ० १ पा० ३ अधि० २ सू० ४ ) मे हेतु-मूलक स्मृतियों को ( हेतुदर्शनाच्च ) अप्रमाण तथा अमान्य कहा है; और स्वयं मनुजी ने 'हेतुशास्त्र' ( असद्-हेतुमूलक शास्त्र ) के अनुयायिद्विजवर्ग का भी सज्जनों द्वारा बहिष्कार

८०. "अथापि स्तुतिरेव भवति, नाशीर्वादः; अथाऽपि आशीरेव, न स्तुतिः; अथाऽपि शपथाऽभिशापौ; अथापि कस्यचिद्भावस्याचिख्यासा; अथापि परिदेवना कस्माच्चिद्भावात्; अथाऽपि निन्दा-प्रशंसे; एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति" [ निरु० अ० ७ खं० ३ ]

* म० पु० अ० १४५; वा० पु० अ० ५९। † ऐ० ब्रा० अ० ८ खं० १; अत्र चोपक्रमे ( पृ० ८२ ) भाष्ये द्रष्टव्यम्। ‡ वाल्मीकीयरामायणे बालकाण्डे द्वितीयः सर्गो द्रष्टव्यः।

अवर्णता वा वर्णबाह्यता के प्रतिपादन में; क्योंकि व्यभिचारज वा दौष्कुलेय लोगों में वर्णसम्पत का अपेक्षाकृत अनुत्कर्ष भले ही हो, पर, किसी न किसी वर्ण का अवश्यंभावी 'स्वभावप्रभव' गुण-वृत्त, उनमें भी रहता ही है''; और तदनुसार उनका भी सामाजिक स्थान, यथायोग्य, चातुर्वर्ण्य के भीतर ही होता है। पञ्चम वर्ण नहीं होता, और न समाज में किसी गृहस्थ की अवर्णस्थिति ही हो सकती है, अतः कुलीन अकुलीन सबका, मनुष्यमात्र का यथागुण-कर्म, चातुर्वर्ण्यव्यूह में अवश्य ही समावेश होता है; सुतरां 'विकल्प'संज्ञित चित्तवृत्ति के ( 'शब्द-ज्ञानाऽनुपाती वस्तुशून्य' मिथ्या ज्ञान के ) विषयभूत जन्मान्त्यजों का, वास्तविक वर्णव्यवस्था के साथ किञ्चित् भी प्रतिबन्धक संसर्ग नहीं है।

F. क्रम से अधिजनन, संस्कार और शिक्षण के द्वारा योग्य अधिकारी होकर, वृत्तिकर्म से युक्त होने पर, अन्तिम रूप से वर्ण के स्वरूप की सिद्धि और पूर्णता होती है; अतः वर्णता की प्राप्ति में मुख्य, निर्णायक और अन्तिम कारण, वृत्तिकर्मयोग ही है; अधिजनन और संस्कार-शिक्षा आदि, इसी ( वृत्तिकर्म, पेशे ) की योग्यता के सम्पादक हैं; अतः वे भी परम्परासम्बन्ध से 'वर्ण' के कारक और उपकारक, हेतु माने जाते हैं। इससे यह सच्छास्त्रसिद्धान्त स्पष्ट है कि जीविका-कर्म ही, वर्णव्यवस्था का अनन्य, वैशेषिक और अन्तिम नियामक है; अतः तदनुसार, किसी भी कुल, जाति, धर्म ( मज़हब, मत, पन्थ ), सम्प्रदाय, रङ्ग-रूप और देश के मनुष्य, यथावृत्ति ( अपने अपने पेशे के अनुसार ) चातुर्वर्ण्यव्यूह में निर्विरोध, निष्प्रत्यूह और निर्द्वन्द्व स्थान पाने के पूर्ण अर्ह, परम अधिकारी, हैं।

G. कर्मसङ्कर—विशेषतः वृत्तियों, जीविका कर्मों, पेशों का सङ्कर—ही वास्तविक 'वर्णसंकर' कहलाता है; वर्णव्यवस्था पर इसका साक्षात् कुप्रभाव पड़ता है, वा यों कहिये कि इससे वर्णव्यवस्था का स्वरूप, उद्देश्य और कार्य, सब कुछ नष्ट-भ्रष्ट हो जाता है; 'मात्स्य' न्याय का संघर्ष उत्पन्न होता है; अतः कर्ममूलक, वृत्तिसांकर्यमय, इस घोर, अनिष्टकर, सामाजिक वर्णसंकर का निवारण, सभी संभव प्रयत्नों से, राजशक्ति के प्रयोग द्वारा भी, करना चाहिये।

यहां यह प्रघट्ट समाप्त हुआ; इसके सम्बन्ध की शेष ज्ञातव्य बातें दशम अध्याय के भाष्य में कही जायंगी।

अब हम इस प्रकरण के प्रकृत मुख्य विषय का अनुसरण करेंगे; 'कर्मणा वर्णः' के सत्सिद्धान्त में कतिपय शास्त्रीय प्रमाणों का सयुक्तिक, सत्तर्कयुक्त, उल्लेख करना ही इस प्रकरण का मुख्य प्रकृत विषय है; जिसके चार प्रघट्ट समाप्त हुए; आगे कर्मप्राप्त पांचवें, छठवें आदि कतिपय प्रघटकों में, कुछ और प्रमाणों का दिक्प्रदर्शन करके, यह प्रकरण समाप्त किया जायगा। प्रासङ्गिक विषयों की चर्चा से मुख्य विषय, कुछ अन्तरित, व्यवहित हो गया है, दूर पड़ गया है, अतः पाठकों को पूर्वापरका स्मरण दिलाने के लिये ऊपर का अवतरण, पुनः किया है।

---

२१. "न तदस्ति पृथिव्यां वा, दिवि, देवेषु वा, पुनः, सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः; ब्राह्मण-क्षत्रिय-विशां, शूद्राणां च परन्तप, कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः"

[ भ० गी० १८, ४०—४१ ]

"मनो बुद्धिः स्वभावश्च त्रय एते स्वयोनिजाः, न गुणानतिवर्तन्ते गुणेभ्यः परमागताः;... रजस्तमश्च सत्त्वं च त्रय एते स्वयोनिजाः, समाः सर्वेषु भूतेषु; तान्गुणानुपलक्षयेत्"

[ म० भा० शां० अ० २४७ ]

"सत्याऽभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् , अजायन्त द्विजश्रेष्ठ, सत्त्वोद्रिक्ता मुखात्प्रजाः ; वक्षसो रजसोद्रिक्तास्तथा वै ब्रह्मणोऽभवन् ; रजसा तमसा चैव समुद्रिक्तास्तथोरुतः ; पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज द्विजसत्तम , तमःप्रधानास्ताः सर्वाः; चातुर्वर्ण्यमिदं ततः ; ब्राह्मणाः, क्षत्रिया, वैश्याः, शूद्राश्च द्विजसत्तम , पादोरुवक्षस्थलतो मुखतश्च समुद्गताः ; यज्ञनिष्पत्तये सर्वमेतद्ब्रह्मा चकार वै , चातुर्वर्ण्यं महाभाग, यज्ञसाधनमुत्तमम्*"[२२]
"ब्रह्मणः सृजतः पूर्वं सत्याऽभिध्यायिनस्तथा , मिथुनानां सहस्रं तु मुखात्सोऽथाऽसृजन्मुने ; जातास्ते ह्युपपद्यन्ते सत्त्वोद्रिक्ताः सचेतसः । सहस्रमन्यद्वक्षस्तो मिथुनानां ससर्ज ह ; ते सर्वे रजसोद्रिक्ताः शुष्मिणश्चाऽप्यमर्षिणः । ससर्जाऽन्यत्सहस्रं तु द्वन्द्वानामूरुतः पुनः ; रजस्तमोभ्यामुद्रिक्ता ईहाशीलास्तु ते स्मृताः । पद्भ्यां सहस्रमन्यच्च मिथुनानां ससर्ज ह ; उद्रिक्तास्तमसा सर्वे निःश्रीका ह्यल्पचेतसः । ततः संहर्षमाणास्ते द्वन्द्वोत्पन्नास्तु प्राणिनः अन्योन्या हृच्छयाविष्टा मैथुनायोपचक्रमुः । मासि मास्यार्त्तवं यत्तु न तदासीत्तु योषितां , तस्मात्तदा न सुषुवुः सेवितैरपि मैथुनैः ; आयुषोऽन्ते प्रसूयन्ते मिथुनान्येव ताः सकृत् , ततः प्रभृति कल्पेऽस्मिन्मिथुनानां हि सम्भवः । इत्येषा मानसी सृष्टिर्या पूर्वं वै प्रजापतेः, तस्यान्ववाये सम्भूता, यैरिदं पूरितं जगत्"†।

"ब्रह्माननः, क्षत्रभुजो, महात्मा विड्रुरुर्, अङ्घ्रिश्रितकृष्णवर्णः" [ भा० २, १, ३७ ]

( ५ ) संस्कृत भाष्य में वर्णोत्पत्तिविषयक जो कतिपय उद्धरण दिये गये हैं, उनसे भी 'कर्मणा वर्णः' के सिद्धान्त का ही प्रतिपादन होता है । इन उद्धरणों में चातुर्वर्ण्य की उत्पत्ति एक ही प्रकार से नहीं कही गई है; इतिहास-पुराण आदि में एतद्विषयक जो अनेक प्रकार प्रदर्शित हुए हैं, उनमें से कुछ का उल्लेख संस्कृत भाष्य में किया है, जिसका सारार्थ यह है—

( क ) जगत् के निर्माण की इच्छा से ब्रह्मा ने सत्य का अभिध्यान ( संकल्प ) किया, उस के मुख से सत्त्वगुणप्रधान, वक्षःस्थल से रजःप्रधान, जंघों से रजस्तमःप्रधान, और पादों ( पैरों ) से तमःप्रधान प्रजा उत्पन्न हुई, जिस से ब्राह्मण क्षत्रिय वैश्य और शूद्रनामक 'चातुर्वर्ण्य' सम्पन्न हुआ ।

( ख ) ब्रह्मा के मुख से 'ब्रह्म', ब्राह्मधर्म, का अभिमानी 'भृगु' उत्पन्न हुआ; उसके बाहुओं से 'क्षत्र', क्षात्र-धर्म, का अभिमानी 'मनु'; ऊरुओं से 'विट्', वैश्यधर्म, का अभिमानी 'वास्तु'; तथा पाद से शौद्रधर्म का अभिमानी 'कृति' उत्पन्न हुआ ।

* वि० पु० १, ६, ३–७ । "ब्राह्मणादीनां चतुर्मुखादुत्पत्तिकथनं न साक्षात, किन्तु तत्तद्वर्णात्मकस्य तत्तद्वर्णाऽभिमानिन उत्पत्तिद्वारेणैव; तदुक्तं षाड्गुण्ये—
'ब्रह्माऽभिमानी तु भृगुरजनि ब्रह्मणो मुखात् ; क्षत्राऽभिमानी तु मनुर्ब्रह्मबाह्वोरजायत ;
ऊर्वोर्विडभिमानी च वास्तुः; पादात्कृतिस्तथा ; एते पूर्वं हरेर्जाता, ब्रह्मणस्तदनन्तरम्'; इति"
[ वि० पु० टीका दत्तात्रेयकृता ]

२२ इमे विष्णुपुराणस्थ-श्लोकाः किञ्चित्पाठभेदेन पाद्मे सृष्टिखण्डे (अ० ३ श्लो० ११९–२३) चेत्थमुपलभ्यन्ते—
"सत्त्वाऽभिध्यायिनस्तस्य सिसृक्षोर्ब्रह्मणः प्रजाः अजायन्त कुरुश्रेष्ठ, सत्त्वोद्रिक्ता मुखाद् द्विजाः ;
वक्षसो रजसोद्रिक्तास्तथाऽन्या ब्रह्मणोऽभवन् राजन्याः; रजसा वैश्यास्तमोद्रिक्तास्तथोरुतः ;
पद्भ्यां समसृजद् ब्रह्मा शूद्रान्नृपवरोत्तम , तमःप्रधानास्ते सर्वे; चातुर्वर्ण्यमिदं ततः
ब्राह्मणाः, क्षत्रिया, वैश्याः, शूद्राश्च, नृपसत्तम , पादोरुवक्षस्थलजा मुखतश्च समुद्भवाः..." इति ।

† मार्कण्डेयपु० अ० ४९ श्लो० ३—१२; वायौ च अ० ८ श्लो० ३६—४६ ।

"पुरुषस्य मुखं ब्रह्म, क्षत्रमेतस्य बाहवः,
ऊर्वोर्वैश्यो भगवतः, पद्भ्यां शूद्रोऽभ्यजायत" [ भा० २, ५, ३७ ]
"ब्रह्म वक्त्रं, भुजौ क्षत्रम्, ऊरू मे संस्थिता विशः,
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च" [ म० भा० वन० १८९, १३ ]
"ब्रह्म वक्त्रं, भुजौ क्षत्रं, कृत्स्नमूरूदरं विशः,
पादौ यस्याश्रिताः शूद्रास्, तस्मै वर्णात्मने नमः" [ म० भा० शां० ४७, ६७ ]

"मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह, यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः;
बाहुभ्योऽवर्तत क्षत्रं, क्षत्रियस्तदनुव्रतः, यो जातस्त्रायते वर्णान् पौरुषः कण्टकक्षतात्;
विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः, वैश्यस्तदुद्भवो, वार्तां नृणां यः समवर्तयत्;
पद्भ्यां भगवतो जज्ञे शुश्रूषा धर्मसिद्धये, तस्यां जातः पुरा शूद्रो, यद्वृत्त्या तुष्यते हरिः"¶
"तदा स भगवान्ब्रह्मा मुखात्सोमं चकार ह द्विजराजं महाप्राज्ञं सर्ववेदविशारदम्;
भुजाभ्यां भगवान्ब्रह्मा क्षत्रराजं महाबलं सूर्यं च जनयामास राजनीतिपरायणम्;
ऊरुभ्यां वैश्यराजं च समुद्रं सरितां पतिं रत्नाकरं च कृतवान्परमेष्ठी पितामहः;
पद्भ्यां च जनयामास विश्वकर्माणमुत्तमं दक्षं नाम कलाऽभिज्ञं शूद्रराजं सुकृत्यकम्;
सोमाद्वै ब्राह्मणा जाताः, सूर्याद्राजन्यवंशजाः, समुद्रात्सकला वैश्याः, दक्षाच्छूद्रा बभूविरे ×"
य एवाग्निः, स वै तेजो ब्राह्मं परमकारणं, बाहुभ्यामप्यसौ तेजः क्षात्रं तेजः ससर्ज ह;
ऊरुभ्यामपि वैश्यांश्च, पद्भ्यां शूद्रांस्तथा विभुः" [ वराहपुराणे अ० ९ श्लो० १५-१६ ]
एवं नानाविधा वर्णव्यवस्थाविषया स्मृतिः; अतः स्पष्टतरं तत्र रूपकत्वं प्रतीयते।
क्वचिद्ब्रह्ममुखादिभ्यो जनिस्तदभिमानिनाम्। ब्रह्म-क्षत्रादिधर्माणामेवोत्पत्तिः क्वचित्स्मृता,
ब्राह्मणाद्याख्यया प्रोक्ता मानवास्तदनुव्रताः। क्वचित्सत्त्वादियुक्तानां जन्म प्रोक्तं मुखादितः;
तत्सर्वं संभवेन्नूनं रूपारोपेण वर्णनात्। अन्यथा शास्त्रवाक्येषु मिथो व्याहतिरापतेत्,
अस्वाभाविकवाग्दोषस्, तथाऽसंभववक्तृता। चालनन्यायतश्च स्यादनृतत्वं परस्परम्;
एकस्य सत्यतायां, स्यादन्येषामप्रमाणता। प्रश्ने वर्णव्यवस्थाया यत् 'कतिधा व्यकल्पयन्',
'मुखं किमस्य ?' इत्यादि प्रोक्तं; यच्च तदुत्तरे 'ब्राह्मणोऽस्य मुखम् आसीद्' इत्याद्युक्तं; ततोऽपि च
कल्पितः कर्मणा वर्णो, मुखकर्मादिरूपणाद्; इत्येवाक्षरतः स्पष्टं श्रुतेरर्थः प्रसिध्यति;

---

( ग ) 'ब्रह्म' ब्राह्मधर्म वा ब्राह्मण वर्ण, परमात्म-पुरुष का मुख है; 'क्षत्र' क्षात्रधर्म वा क्षत्रिय वर्ण इसका बाहु है; इस के ऊरुरूप से 'विशः' वैश्यधर्म वा वर्ण संस्थित है; और शौद्र धर्म वा शूद्र वर्ण इस के पाद हैं।

( घ ) परमात्मपुरुष के मुख से 'ब्रह्म' ब्राह्मधर्म, प्रवर्तित हुआ, जिस का आश्रयण करनेवाला विद्वद्वर्ग, वर्णों मे मुख्य और श्रेष्ठ हुआ; परमात्मा के बाहु से 'पौरुष'रूप 'क्षत्र' क्षात्रधर्म, प्रवर्तित हुआ, उस का अनुव्रत शूर-वीरसमाज क्षत्रिय माना गया, जो सभी वर्णों को दुष्टों के घात से बचाता है; उस ( पुरुष ) के ऊरुओं से 'लोकवृत्तिकरी' सब लोगों की जीविका करनेवाली, 'विशः' ( वैश्यधर्म ) प्रवृत्त हुई, उस के लिये उद्भूत हुए लोग वैश्य कहलाये, जिन्हों ने मनुष्यों की जीविका का प्रवर्त्तन किया; भगवान् के चरणों से, धर्म की, लोकधारणार्थक कर्म की, वा अभ्युदय-निःश्रेयससाधन की, सिद्धि के लिये 'शुश्रूषा' ( शूद्रधर्म, सेवाधर्म ) उत्पन्न

---

¶ भा० ३, ६, ३०-३३।
× भ० पु० प्रति० प० खं० ४ अ० ५ श्लो० ९-१३।

अन्यवाक्यैश्च सम्वादादेव एव समर्थ्यते। चतुर्थं चरणं त्वस्याः "पद्भ्यां शूद्रो अजायत" करोत्यापाततः किञ्चिदुत्पत्त्यर्थभ्रमं; परं प्रसिद्धार्थकपादानां त्रयाणामनुरोधतः पद्भ्यामिति चतुर्थ्यन्तं पदं नेयं तदर्थकम्। आशुद्रवणसामर्थ्याद्यस्तु पाद इव क्षमः धारणाय समाजस्य नरो लोकेष्वजायत, स सर्वैः कल्पितः 'शूद्रः' 'पद्भ्यां' पादस्य कर्मणे; इत्यर्थः स्वरसादेव तस्य सम्पद्यते स्फुटम्§।

साक्षात्तु स्मर्यते यत्र क्वचिद्ब्रह्ममुखादितः ब्राह्मणादिसमुत्पत्तिः,[23] तत्र तत्तत्पदार्थतः

---

हुई, उस के निमित्त, पुराकाल मे, शूद्र वर्ण कल्पित हुआ, जिसकी सेवारूप वृत्ति से भगवान् सन्तुष्ट होता है

( ङ ) भगवान् ब्रह्मा ने मुख से सोम को, बाहु से सूर्य को, ऊरु से समुद्र को, और पाद से विश्वकर्मा दक्ष को उत्पन्न किया, जिन से क्रमशः ब्राह्मण क्षत्रिय वैश्य और शूद्र ये चार वर्ण उत्पन्न हुए।

---

§ "ते ( आर्याः ) च प्रधानतश्चतुर्भिर्वर्णैर्विभज्यन्ते, ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति; यत्रेदमाम्नायते—

'ब्राह्मणोऽस्य मुखमासीद्, बाहू राजन्यः कृतः
ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत' इति।

'पद्भ्यां' पादौ, प्रथमार्थे पञ्चमी। तत्राद्यास्त्रयस्त्रैवर्णिका इत्याख्यायन्ते, चतुर्थः शूद्रस्त्वेकवर्ण इति" [ वेदान्तसूत्र ( १,३,३१ ) वैदिकवृत्तौ ]

२३. "ब्राह्मणो मुखतः सृष्टो ब्रह्मणा राजसत्तम, बाहुभ्यां क्षत्रियः सृष्टः, ऊरुभ्यां वैश्य एव च,
वर्णानां परिचर्यार्थं त्रयाणां भरतर्षभ, वर्णश्चतुर्थः संभूतः पद्भ्यां शूद्रो विनिर्मितः"
[ म० भा० शां० ७२, ४—५ ]

"ब्राह्मणा क्षत्रिया वैश्याः शूद्राश्चेति चतुर्विधं ब्रह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता;
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै; यदीदमेकवर्णं स्याज्जगत्सर्वं विनश्यति,
सहैव देवि वर्णानि चत्वारि विहितान्यतः; मुखतो ब्राह्मणाः सृष्टाः, तस्मात्ते वाग्विशारदाः;
बाहुभ्यां क्षत्रियाः सृष्टाः, तस्मात्ते बाहुगर्विताः; ऊरुभ्यामुद्गता वैश्याः, तस्माद्वार्तोपजीविनः;
शूद्राश्च पादतः सृष्टाः, तस्मात्ते परिचारकाः" [ म० भा० अनु० २०८, २—५ कुं० सं० ]
ब्रह्माऽसृजत्स्वमुखतो युष्मानात्मपरीप्सया छन्दोमयांस्तपोविद्यायोगयुक्तानलम्पटान्;
तत्राणायाऽसृजच्चाऽस्मान्दोःसहस्रात्सहस्रपात्; हृदयं तस्य हि ब्रह्म, क्षत्रमङ्गं प्रचक्षते;
अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः; रक्षति स्माऽव्ययो देवः स यः सदसदात्मकः"
[ भा० ३, २२, २-४ ]

"ससर्ज यो वक्त्रत एव विप्रान्, भुजान्तरे क्षत्र,मथोरुयुग्मे
विशः, पदाग्रेषु तथैव शूद्रान्, नमामि तं विश्वतनुं पुराणम्" [ वराहपु० ३, १९ ]

"ससर्ज ब्राह्मणान्वक्त्रात्, क्षत्रियांश्च भुजाद्विभुः, वैश्यानूरुद्वयाद्देवः, पद्भ्यां शूद्रान्पितामहः,
यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं| ससर्ज ह, गुप्तये सर्वदेवानां, तेभ्यो यज्ञं हि निर्बभौ"
[ कूर्मपु० पू० विभागे अ० २ ]

---

| 'शूद्रवर्जम्' इति अर्थित्व-सामर्थ्य-विद्वत्त्वादिविरहतया यज्ञेऽनवक्लृप्तपुरुषवर्जनाऽभिप्रायम्; "अर्थी समर्थो विद्वानधिक्रियते" "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इति श्रुतेः। अर्थि-समर्थ-विदुषां तु शूद्राणामपि यज्ञेऽधिकारः समस्त्येव; सामान्यतः चातुर्वर्ण्यस्य सर्वस्य यज्ञनिष्पत्तय एव ब्रह्मणा सृष्टत्वात्। तदुक्तमितिहासपुराणयोः—

सूक्ष्मं वर्णशरीरं वा, तद्धर्मो वा विवक्षितः ; वर्ण-प्रकृतिभूतानां गुणानां वा समुद्भवः ।
ब्राह्मं वर्चः, तथा क्षात्रं तेजः, वैश्यं महः, तथा शौद्रं रंहः, तु वर्णानां सूक्ष्मरूपं क्रमान्मतम् ।
ब्राह्मो धर्मः शमादिश्च, क्षात्रः शौर्यादिकः, विशः कृष्यादिकर्मदक्षत्वं, शौद्रः सेवादिकौशलम् ।
सत्त्वं ब्राह्मं, रजः क्षात्रं, तमो वैश्यं, प्रधानतः ; स्याच्चोपसर्जनीभूतं सर्वत्राऽन्यद्गुणद्वयम् ;
सत्त्वं हि त्रिषु वर्णेषु द्विजत्वस्य प्रयोजकं तिष्ठत्येव क्रमादल्पोद्गुद्धस्वांशेन सर्वदा ;
तमः शौद्रमनुद्बुद्धरजःसत्त्वोपसर्जनं , तत्र चोद्बुद्धसत्त्वस्याऽभावान्न द्विजसंस्कृतिः ।
"शूद्रो ब्राह्मणतामेति";सत्त्वोत्कर्षाच्च सा भवेत् ; तस्माद्बीजस्वरूपेण शूद्रे सत्त्वमपि स्थितम् ।
अन्योन्यमिथुनत्वाच्च गुणानां, त्रिगुणात्मकाः सामान्यात्सर्ववर्णाः स्युः; वैशेष्यात्तु पृथग्गुणाः ।
"वेदो नारायणः साक्षाद्विवेकी हंसरूपवान् नृणां च गुणभेदेन वर्णभेदं चकार ह ;

( च ) विश्वविधाता ने मुख से ब्राह्म तेज ( ब्रह्मवर्चस ) को, बाहु से क्षात्र तेजस् को, ऊरु से वैश्य तेज ( महस् ) को, और पाद से शौद्र तेज ( रंहस् आदि ) को उत्पन्न किया ।

( छ ) वैराज पुरुष से 'आत्माऽऽचारलक्षण' उस उस वर्ण के आचारस्वरूप, विप्र क्षत्रिय विट् और शूद्र उत्पन्न हुए; अर्थात् इन वर्णों के आचार वा कर्त्तव्यरूप धर्म ही विराट् पुरुष के

"चातुर्वर्ण्यस्य कर्माणि, चातुर्वर्ण्यं च केवलम्
असृजत्स हि यज्ञार्थं पूर्वमेव प्रजापतिः" [म० भा० अनु० ४८, ३]
"यज्ञनिष्पत्तये सर्वमेतद् ब्रह्मा चकार वै
चातुर्वर्ण्यं महाभाग, यज्ञसाधनमुत्तमम्" [ विष्णुपुराणे पाद्मे च ]

महाभारते शान्तिपर्वणि षष्टितमेऽध्याये तु स्पष्टमेव शूद्राणामपि यज्ञाऽधिकारोऽभिहितः; तथा हि—

"उक्तस्त्रयाणां वर्णानां यज्ञः, तस्य ( शूद्रस्य ) च भारत ;
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ , ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ;
यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ,... तस्माद् वर्णैः सर्वयज्ञाः संसृज्यन्ते, न काम्यया ;
यज्ञो मनीषया तात सर्ववर्णेषु भारत ,... ततः सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते"
[ म० भा० शां० अ० ६० ]

"अस्त्येव शूद्रस्याऽपि यज्ञेऽधिकारः ;...
'वर्णैः' सशूद्रैः 'सर्वयज्ञाः' श्रौताः स्मार्ताश्च, 'न काम्यया' (किन्तु) स्वभावात् 'संसृज्यन्ते' इति"
( नैलकण्ठीयम् )।

केचित्तु 'शूद्रवर्जम्' इत्यादि शूद्राणां समन्त्रकयज्ञनिषेधार्थम्; तथा हि—

"स्वाहाकार-वषट्कारौ मन्त्रः शूद्रे न विद्यते , तस्माच्छूद्रः पाकयज्ञैर्यजेताऽव्रतवान्स्वयम् ;...
ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ; अनृग्यजुरसामा च प्राजापत्य उपद्रवः"
[ म० भा० शां० अ० ६० ]

"तस्य शूद्रस्य च अमन्त्रको यज्ञोऽस्तीत्यर्थः ।
'तस्माद्' इति; 'पाकयज्ञैः' क्षुद्रयज्ञैर्ग्रहशान्तिवैश्वदेवादिभिर्यजेत; 'अव्रतवान्' श्रौतव्रतोपायहीनः ।
'ऋगिति'; 'द्विजः' त्रैवर्णिकः, पूज्यः शूद्रेण; उप द्रवतीति तत्समीपगामित्वाद् 'उप-द्रवो' दासः, शूद्रः; स वेदहीनोऽपि 'प्राजापत्यः' प्रजापतिदेवताकः, यथा आग्नेयो ब्राह्मणः, ऐन्द्रः क्षत्रियः, तद्वत् ; तथा च मानसे देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्त इत्यर्थः" इति तत्रत्यं नैलकण्ठीयम् ।

एवं च शूद्राणाम्, अर्थादवेदविदुषां पुरुषाणामक्लृप्तत्वाद् असमर्थत्वादेव ( क्लृपिः सामर्थ्ये ) समन्त्रकयज्ञाऽनर्हत्वम् ; अर्थित्व-सामर्थ्य-विद्यावतां तु सर्वेषां, चतुर्णामपि वर्णानामविशेषादस्त्येव समन्त्रकेऽपि यज्ञेऽधिकार इति निष्कर्षो बोध्यः ।

सद्गुणो ब्राह्मणो वर्णः, क्षत्रियस्तु रजोगुणः, तमोगुणस्तथा वैश्यो, गुणसाम्यात्तु शूद्रता*"
"गौरो, रक्तः, तथा पीतः, श्यामः, ते ब्राह्मणादयः†"
"ब्राह्मणानां सितो वर्णः, क्षत्रियाणां तु लोहितः, वैश्यानां पीतको वर्णः, शूद्राणामसितस्तथा‡"
"तमोगुणाऽधिकं क्षात्रं, ब्राह्मं सत्त्वगुणाऽधिकम्, अन्यद्रजोऽधिकं तेजः; तेषु सत्त्वाऽधिकं वरम्;
सर्वाऽधिको ब्राह्मणस्तु जायते हि स्वकर्मणा, तत्तेजसोऽनुतेजांसि सन्ति च क्षत्रियादिषु।...
ब्राह्मं तेजो बुद्धिमत्सु, क्षात्रं शूरे (राज्ञि) प्रतिष्ठितम्" [ शुक्रनी० सा० अ० ३ ]
वर्णानामिष्यते रूपं सूक्ष्मं स्थूलमिति द्वयम्, वर्चःप्रभृति तत्सूक्ष्मं, स्थूलमध्यापनादिकम्।
तदेवोत्प्रेक्षितं सृष्टं नूनं ब्रह्ममुखादितः; नो तदाश्रयभूतानां नृणां सृष्टिः, असंभवात्।
वर्णा-ऽऽश्रमस्वरूपस्य धर्मस्यैव समुद्भवः इष्टो ब्रह्ममुखादिभ्यः; न तद्रूपशरीरिणाम्।
भागवताऽनुसन्धानाच्चाऽयमर्थोऽवधार्यते; वर्ण्यस्येव हि तत्रोक्तः आश्रम्यस्य समुद्भवः
वैराज-जघनादिभ्यो; न त्वाश्रमि-वपुष्मताम्; तत्सन्नियोगशिष्टेषु वर्णेष्वपि तथा नयः।
"आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः; कृतकृत्याः प्रजा यस्मात्, तस्मात्कृतयुगं विदुः;
वेदः प्रणव एवाऽग्रे, धर्मोऽहं वृषरूपधृत्; उपासते तपोनिष्ठा हंसं मां मुक्तकिल्विषाः।
त्रेतामुखे महाभाग, प्राणान्मे हृदयात्त्रयी विद्या प्रादुरभूत्; तस्या अहमासं त्रिवृन्मुखः।
विप्र-क्षत्रिय-विट्-शूद्रा, मुखबाहूरुपादजाः, वैराजात्पुरुषाज्जाता; य आत्माऽऽचारलक्षणाः;
गृहाऽऽश्रमो जघनतो, ब्रह्मचर्यं हृदो मम,
वक्षःस्थानाद्वनेवासो, न्यासः शीर्षणि संस्थितः ( संन्यासः शिरसि स्थितः )।
वर्णानामाश्रमाणां च जन्मभूम्यनुसारतः आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः;
शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवं मद्भक्तिश्च दया सत्यं, ब्रह्मप्रकृतयस्त्विमाः;
तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः स्थैर्यं ब्रह्मण्यतैश्वर्यं, क्षत्रप्रकृतयस्त्विमाः;

---

'मुख' आदि अङ्गों से उत्पन्न हुए, जिन का अनुष्ठान करने के कारण, तत्तदाचारशील जनवर्ग को भी, ब्राह्मण आदि धर्मों के नाम से ही अभिहित करने लगे; धर्म कर्म ज्ञान और उस के प्रतिपादक ग्रन्थ को भी ब्राह्मण ( यथा शतपथब्राह्मण ) आदि कहने की प्रथा बहुत पुरानी है। जैसे विराट् के मुख आदि से ब्राह्मणधर्म–प्रभृति वर्णधर्म की उत्पत्ति का रूपक है, वैसे ही, आश्रम धर्म का भी। स्वयं विराट् पुरुष के मुख से 'भागवत' मे यह भी कहलाया है कि 'गृहस्थ आश्रम मेरे जघन से, ब्रह्मचर्य हृदय से, और वानप्रस्थ वक्षस्थान से हैं, तथा संन्यास आश्रम मेरे शिर पर स्थित है।' यहाँ सुस्पष्ट है कि जिस प्रकार वैराजपुरुष के 'मुख' आदि से 'ब्राह्मण' आदि धर्म ( आचार-लक्षण ) उत्पन्न हुए, नररूप ब्राह्मण आदि वर्ण नहीं; उसी प्रकार विराट् के जघन आदि से गृहस्थ आदि आश्रमधर्म उत्पन्न हुए, आश्रमी मनुष्य नहीं। यहाँ गृहस्थ आश्रम और वैश्य वर्ण को वैराज के जघनस्थानीय, वानप्रस्थ और क्षत्रिय को वक्षःस्थानीय, संन्यास और ब्राह्मण को शिरः-स्थानीय रूपित कर के इन वर्णाश्रमों मे परस्पर कर्म-सहयोग की सूचना की है। शारीरिक सेवा और आध्यात्मिक सेवा के साधर्म्य से शूद्रवर्ण और संन्यास आश्रम का जोड़ भी मिलाया जाता है।

---

* भ० पु० प्रति० प० खं० ४ अ० २३ श्लो० ९७–९८। † भ० पु० प्रति० प० ४, २६, ८।
‡ म० भा० शां० १८८, ५; अत्र—"वर्णाः, सात्त्विकं, राजसं, तामसं, मिश्रं चेति स्वच्छत्वादिसाम्याद्गुणवृत्तं 'वर्ण'शब्देनोच्यते 'सितः' स्वच्छः सत्त्वगुणः प्रकाशात्मा शम-दमादिस्वभावः, 'लोहितः' रजोगुणः प्रवृत्त्यात्मा शौर्य-तेजआदिस्वभावः, 'पीतकः' रजस्तमोव्यामिश्रः कृष्यादि...कर्मप्रवर्तकः, 'असितः' कृष्णः आवरणात्मा तमोगुणः स्वतः प्रकाश-प्रवृत्तिहीनः शकटवत्परप्रेर्यः" इति नैलकण्ठीयम्।

आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् अतुष्टिरर्थोपचयै,र्वैश्यप्रकृतयस्त्विमाः ;
शुश्रूषणं द्विजगवां देवानां चाऽप्यमायया , तत्र लब्धेन सन्तोषः , शूद्रप्रकृतयस्त्विमाः ;
अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः कामः क्रोधश्च तर्षश्च, स्वभावोऽन्तेऽवसायिनाम् ;
अहिंसा सत्यमस्तेयमकामक्रोधलोभता भूतप्रिय-हितेहा च, धर्मोऽयं सार्ववर्णिकः §"
अत्र स्पष्टमेवोक्तं, यद् 'आत्माऽऽचारलक्षणाः' वर्णा वैराजतो जाताः; न त्वेव नरदेहिनः ;
धर्मा एवाश्रमाणां च ब्रह्मचर्यादिरूपिणः , जाता उत्प्रेक्षिताः; नैव त्वाश्रम्याकृतिमन्नराः ;
अर्थात्, सूक्ष्मशरीराणां वर्णा ये वर्चआदयः , तथा स्थूलशरीराणां स्वाध्यायादिक्रियात्मकाः ,
तेषामेव समुत्पत्तिः सत्त्वादिगुणजन्मनां स्मृता ब्रह्ममुखादिभ्यः;साऽपि रूपात्, न वस्तुतः ।
वर्णो न जातिरूपस्तु नृवर्गात्माऽस्ति, तत्त्वतः वृत्त-वृत्तिस्वरूपाणां वर्णत्वं गुण-कर्मणाम् ;
तदाधारे मनुष्ये तु गौणं तदभिधीयते , पीतरूपाश्रयत्वेन वस्त्रं पीतं यथोच्यते ।
सत्त्वं, शमादि, संस्कारो,वर्चश्चा,ऽध्यापनादि च , कार्यकारणभावेन ब्राह्मण्येऽन्तर्भवन्ति हि ।
रजः, शौर्यादि, तेजश्च, रक्षा, न्याय्यकरग्रहः , दुष्टे दण्डप्रयोगश्च, क्षत्रवर्णे व्यवस्थिताः ।
रजःसत्त्वोपसंसृष्टं तमः, कृष्यादियोग्यता , महः कृष्यादिकर्मेति वैश्यवर्णमया गुणाः ।
अनुद्बुद्धरजःसत्त्वसंसृष्टोग्रतमोगुणः , शारीरश्रमसामर्थ्यं, रंहः, शिल्पादिकर्म च ,
लोकसेवा च वृत्त्यर्था शौद्रे वर्णे प्रवेशिताः । ईदृग्वर्णविशिष्टे च नरे 'वर्ण' इति प्रथा ।
सुस्पष्टं मनुजन्यत्वं चातुर्वर्ण्यस्य वर्णितं ; तस्माद्ब्रह्ममुखादिभ्यस्तज्जन्मोक्तिस्तु रूपकम् ।
"मनुर्मनुष्याञ्जनयद्, राम, पुत्रान्यशस्विनः
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्च मनुजर्षभ" [ वा० रा० अरण्यकां० १४, २९ ]

वर्णोत्पत्तिकी इन विविध कथाओं पर स्थूल विचार करने से भी यह स्पष्टतः सिद्ध होता है कि ये आलंकारिक वर्णन वा रूपकमात्र हैं, तत्त्वकथा नहीं । ब्रह्मा, विराट् वा परमात्मपुरुष के, अथवा समाजात्मक शरीर के, मुख आदि अङ्गरूपसे चातुर्वर्ण्य तथा चातुराश्रम्य को रूपित करने का गूढ तात्पर्य, प्रत्येक वर्ण और आश्रम के कर्त्तव्य की सच्ची इतिकर्त्तव्यता सूचित करने मे है; अर्थात् जैसे शिर, बाहु, उदर, और पैर, निसर्गतः अपना काम किया करते हैं, वैसे ही ब्राह्मण क्षत्रिय वैश्य और शूद्र वर्ण के लोगों को भी स्वभावतः अपने कर्त्तव्य का पालन करते रहना चाहिये । शिर वा शिरःस्थ नयन, अपने को नहीं देखता, यदि वह अपने को ही देखने लगे तो सम्पूर्ण शरीर को निष्कण्टक मार्ग नहीं दिखला सकता है, सुतरां पैर ठोकर खा सकता है और सारा शरीर और स्वयं शिर भी, गिर कर चोट खा सकता है; अतः शिर, स्वस्थित नयन द्वारा हाथ पैर आदि दूसरे अङ्गों को ही सावधानी से देखता और कर्ममार्ग दिखाता है, अपनी ओर कभी नहीं देखता, वा देख ही नहीं सकता है । इस नैसर्गिक, निष्कारण, निष्काम वा अस्वार्थमय परार्थ कार्य से, शिर वा नयन, सन्मार्ग दिखा कर, सम्पूर्ण शरीर का योग-क्षेम कराता है; जिससे शिर का भी सच्चा स्वार्थ स्वतः सिद्ध हुआ करता है । ऐसे ही, जब कभी शिर पर वा दूसरे अङ्ग पर शस्त्र द्वारा आक्रमण वा आघात होता है, तब बाहु, अपनी परवा किये विना ही, निसर्गतः उठ जाता, आगे बढता और आक्रमणकारी के हथियार को अपने ऊपर रोकता, स्वयं चोट खा कर दूसरे अङ्गों को, विशेषतः शिर को, बचाता है, साथ ही मौक़ा मिलते ही आक्रमणकारी पर वार कर के शरीर की रक्षा करता है । यदि हाथ अपनी ही रक्षा में लग जाय, चोट बचाने के लिये हथियार के सामने न आवे, वा छिप जाय, तो मारनेवाले का शस्त्र शिर पर

§ भा० स्कं० ११ अ० १७ श्लो० १०—२१ ।

"धर्मात्मा स मनुर्धीमान्, यत्र वंशः प्रतिष्ठितः, मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत्;
ब्रह्म-क्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः; ततोऽभवन्महाराज, ब्रह्म क्षत्रेण सङ्गतम्
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन्" [ इत्यादि म० भा० आदि० ७५, १३-१५ ]

"मनुना च प्रजाः सर्वाः सदेवाऽसुरमानुषाः
स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति" [ म० भा० वन० १८७, ५३ ]

चातुर्वर्ण्यवदन्येऽपि विराड्देहसमुद्गताः भावाः, तदङ्गरूपाश्च क्वचिच्छास्त्रेषु रूपिताः--

"तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्, पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये;
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे, छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत;
तस्मादश्वा अजायन्त, ये के चोभयादतः, गावो ह जज्ञिरे तस्मात्, तस्माज्जाता अजावयः।
चन्द्रमा मनसो जातः, चक्षोः सूर्यो अजायत, मुखादिन्द्रश्चाऽग्निश्च, प्राणाद्वायुरजायत;
नाभ्या आसीदन्तरिक्षं, शीर्ष्णो द्यौः समवर्तत,
पद्भ्यां भूमि,र्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्" (पुरुषसूक्ते)

"दक्षस्त्वजायताऽङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः;
वामादजायताऽङ्गुष्ठाद्भार्या तस्य महात्मनः, तस्यां पञ्चाशतं कन्याः स एवाऽजनयन्मुनिः।
स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः निःसृतो भगवान्धर्मः सर्वलोकसुखावहः।
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः, भृगोः पुत्रः कविर्विद्वाञ्छुक्रः, कविसुतो ग्रहः†"

"तस्मिन्सलिलमग्ने तु पुनरन्यं प्रजापतिं ब्रह्मा ससर्ज भूतेषु दक्षिणाङ्गुष्ठतः परम्;
वामे चैव तथांगुष्ठे तस्य पत्नीमथाऽसृजत्; स तस्यां जनयामास मनुं स्वायंभुवं प्रभुः ‡"

"प्राणाद्ब्रह्माऽसृद्दक्षं, चक्षुर्भ्यां च मरीचिनम् शिरसोऽङ्गिरसं देवो, हृदयाद्भृगुमेव च,

और शरीर के दूसरे अङ्गों पर ही पड़ेगा और उसे क्षत-विक्षत कर देगा, जिसका कुफल हाथ को भी भोगना ही होगा। ऐसे ही उदर अपने में सञ्चित, संगृहीत, उदरस्थकृत अन्न पान को यदि स्वयं पचा जाय, सम्पूर्ण शरीर में रसवितरण न करे, तो निःसन्देह सर्वनाश हो जायगा; किन्तु उदर के द्वारा अन्नग्रहण और सारे शरीर में रसवितरण की क्रिया नैसर्गिक भाव से होती रहती है, जिस से शरीर के साथ ही स्वयं उदर की भी रक्षा होती है। ऐसे ही पाद वा पैर के विना न शरीर चलता, नहीं कोई कार्य ही हो सकता है; यदि पैर बैठ जाय, अकर्मण्य हो जाय, स्वयं आराम करने लगे; परिश्रम करना छोड़ दे, तो सम्पूर्ण शरीर के साथ यह भी दुर्बल और क्षीण हो जायगा, सूख जायगा; सुतरां यह धावन, आशुद्रवण, सेवन, सहायन, शुश्रूषण, परिश्रमण का काम स्वतः करता रहता और अपने साथ ही सम्पूर्ण शरीर का योग-क्षेम करता है।

इस प्रकार के शिरः मुख वा नयन आदि से, ब्राह्मण आदि को रूपित करने का अभिप्राय भी यही है, कि शिर आदि की तरह ही, ब्राह्मणप्रभृति वर्ण भी, नैसर्गिक निःस्वार्थ निष्कारण भाव से, सम्पूर्ण समाजशरीर के साथ ही अपने भी सच्चे पुरुषार्थ की सिद्धि के लिये स्वकर्त्तव्य का पालन करते रहें; ब्राह्मण, समाज की शिक्षा का, क्षत्रिय रक्षा का, वैश्य जीविका का, और शूद्र सेवा-सहायता का सत्कार्य करे।

(६) वाल्मीकीय रामायण मे लिखा है कि 'मनु' नाम्नी दक्षकन्या ने, प्रजापति कश्यप से, मैथुनधर्मद्वारा, ब्राह्मण आदि चारो वर्णों के मनुष्यों को पैदा किया।

† म० भा० आदि० अ० ६६। ‡ वराहपु० अ० १ श्लो० १८-१९।

नेत्राभ्यामत्रिनामानं, धर्मं च व्यवसायतः, संकल्पं चैव संकल्पात्, सर्वलोकपितामहः,
पुलस्त्यं च तथोदानाद्, व्यानाच्च पुलहं मुनिम्, अपानात्क्रतुमव्यग्रं समानाच्च वसिष्ठकम्,
इत्येते ब्रह्मणा सृष्टाः साधका गृहमेधिनः, आस्थाय मानवं रूपं धर्मस्तैः सम्प्रवर्तितः §"
"अथाऽभिध्यायतः सर्गं दशपुत्राः प्रजज्ञिरे, भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः;
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः, भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः।
उत्सङ्गान्नारदो जज्ञे, दक्षोऽङ्गुष्ठात्स्वयंभुवः, प्राणाद्वसिष्ठः संजातो, भृगुस्त्वचि, करात्क्रतुः,
पुलहो नाभितो जज्ञे, पुलस्त्यः कर्णयोर्ऋषिः, अङ्गिरा मुखतोऽक्ष्णोऽत्रि,र्मरीचिर्मनसोऽभवत्
धर्मः स्तनाद्दक्षिणतो, यत्र नारायणः स्वयम्, अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः,
हृदि कामो, भ्रुवः क्रोधो, लोभश्चाधरदच्छदात्,
आस्याद्वाक्, सिन्धवो मेढ्रान्, निर्ऋतिः पायोरघाश्रयः,
छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः, मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत्।
ऋग्यजुःसामाथर्वाख्यान्वेदान्पूर्वादिभिर्मुखैः, शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात्;
आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मभूः स्थापत्यं चाऽसृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः;
इतिहास-पुराणं च पञ्चमं वेदमीश्वरः सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः;
षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवं,
विद्या, दानं, तपः सत्यं,¶ धर्मस्येति पदानि च, आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः;
सावित्रं प्राजापत्यं च ब्राह्मं चाऽथ बृहत्तथा, वार्तासंचयशालीनशिलोञ्छ इति वै गृहे,
वैखानसा वालखिल्यौदुंबराः फेनपा वने, न्यासे कुटीचकः पूर्वं बहूदो हंस-निष्क्रियौ,
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च, एवं व्याहृतयश्चाऽऽसन्प्रणवो ह्यस्य दह्रतः;
तस्योष्णिगासील्लोमभ्यो, गायत्री च त्वचो विभोः,
त्रिष्टुम्मांसात्,स्नुतोऽनुष्टुब्, जगत्यस्थ्नः प्रजापतेः,
मज्जायाः पङ्क्तिरुत्पन्ना, बृहती प्राणतोऽभवत्, स्पर्शस्तस्याऽभवज्जीवः, स्वरो देह उदाहृतः,
ऊष्माणमिन्द्रियाण्याहुरन्तस्था बलमात्मनः, स्वराः सप्त विहारेण भवन्तिस्म प्रजापतेः;
शब्दब्रह्मात्मनस्तस्य व्यक्ताऽव्यक्तात्मनः परः ब्रह्माऽवभाति विततो नानाशक्त्युपबृंहितः ※"
"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्, सर्वव्यापी भुवः स्पर्शादध्यतिष्ठद्दशाङ्गुलम्;
यद्भूतं यच्च वै भाव्यं सर्वमेव भवान्यतः त्वत्तो विश्वमिदं तात, त्वत्तो भूतं भविष्यति;
त्वत्तो यज्ञः सर्वहुतः पृषदाज्यं पशुर्द्विधा, त्वत्तो ऋचोऽथ सामानि, त्वत्तश्छन्दांसि जज्ञिरे;

महाभारत से तथा अन्यान्य पुराणों मे ऐसा उल्लेख है कि स्वायंभुव ( कहीं कहीं वैवस्वत) 'मनु' से मानववंश की उत्पत्ति हुई, अत एव ब्राह्मण क्षत्रिय आदि चारो वर्णों के लोग, मनु से उत्पन्न होने के कारण ही, 'मानव' ( मनोरपत्यानि मानवाः ) कहलाये।

इन बातों से भी यही प्रमाणित होता है कि ब्रह्मा वा विराट् के मुख आदि से ब्राह्मण आदि के उत्पन्न होने की बातें रूपकमयी हैं, और 'कर्मणा वर्णः' का सिद्धान्त ही सर्वशास्त्र-सम्मत है।

( ७ ) इस लिये भी गुण कर्माऽनुसारिणी वर्ण-व्यवस्था ही शास्त्राऽनुमोदित है कि विराट् पुरुष के कल्पित अङ्गों से ब्राह्मण आदि वर्णों की तरह ही जगत् के सभी पदार्थों की उत्पत्ति का रूपण वा उत्प्रेक्षण भी वेद-पुराणों मे किया है। वेदों के पुरुषसूक्त आदि मे, तथैव

§ कू० पु० पू० वि० अ० ७। ¶ 'तपः शौचं दया सत्यम्" इति पाठान्तरम्।

※ भा० स्कं० ३ अ० १२।

त्वत्तो यज्ञाश्च जायन्ते त्वत्तोऽश्वाश्चैव दन्तिनः, गावस्त्वत्तः समुद्भूतास्त्वत्तो जाताऽवयो मृगाः; त्वन्मुखाद्ब्राह्मणा जाताः, त्वत्तः क्षत्रमजायत, वैश्यास्तवोरुजाः, शूद्रास्ते च पद्भ्यां समुद्गताः; अक्ष्णोः सूर्योऽनिलः श्रोत्राच्चन्द्रमा मनसस्तव, प्राणोऽन्तःसुषिराज्जातो, मुखादग्निरजायत; नाभितो गगनं, द्यौश्च शिरसः समवर्तत, दिशः श्रोतात्, क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम्। न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः, ससर्ज विश्वमखिलं बीजभूते तथा त्वयि; बीजांकुरसमुद्भूतो न्यग्रोधः समुपस्थितः विस्तारं च यथा याति, त्वत्तः सृष्टौ तथा जगत्। यथा कदल्या नाऽन्यत्वं त्वक्पत्रेणाऽथ दृश्यते, एवं विश्वमिदं नाऽन्यत्त्वत्स्थं सम्प्रति दृश्यते*"

"एतानि सृष्ट्वा भगवान्ब्रह्मा तच्छक्तिचोदितः,
ततः (स्वदेहतः) स्वच्छन्दतोऽन्यानि वयांसि (वयसः) पशवोऽसृजत्।
मुखतोऽजाः ससर्जा,ऽथ वक्षसश्चाऽवयोऽसृजत्;
[ अवयो वाहुत (वक्षस)श्चक्रे, मुखतोऽजांश्च सृष्टवान् ]
सृष्टवानुदराद्गाश्च, महिषांश्च (पार्श्वाभ्यां च) प्रजापतिः;
( गावश्चैवोदराद्ब्रह्मा पार्श्वाभ्यां च विनिर्ममे )
पद्भ्यां चाऽश्वान्समातङ्गान्रासभान् (शशकान्) गवयान्मृगान्
उष्ट्रानश्वतरांश्चैव न्यंकूनन्याश्च (नानारूपाश्च) जातयः
ओषध्यः फलमूलिन्यः (फलमूलानि)रोमभ्यस्तस्य जज्ञिरे।
गायत्रं(त्रीं) च त्र्यृचं (ऋचः) चैव त्रिवृत् साम (सोमं) रथन्तरम्
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात्; यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा,
बृहत्साम तथोक्थं च दक्षिणादसृजन्मुखात्; सामानि जगतीछन्दः स्तोमं सप्तदशं तथा,
वैरूममतिरात्रं च पश्चिमादसृजन्मुखात (निर्ममे पश्चिमान्मुखात् );
एकविंशमथर्वाणमाप्तोर्यामाणमेव च, अनुष्टुभं (च) सवैराजमुत्तरादसृजन्मुखात्।
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च, वयांसि च ससर्जादौ कल्पस्य, भगवान्विभुः;
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे। सृष्ट्वा चतुष्टयं पूर्वं देवाऽसुरपितॄन्प्रजाः,
ततोऽसृजत्स भूतानि स्थावराणि चराणि च; यक्षान्पिशाचान्गन्धर्वांस्तथैवाऽप्सरसां गणान्
नरकिन्नररक्षांसि वयःपशुमृगोरगान्; अव्ययञ्च व्ययञ्चैव यदिदं स्थाणु जङ्गमम्"

[ पाद्मे सृष्टिखं० अ० ३; मार्क० पु० अ० ४८; विष्णु पु० अं० १ अ० ५; लैङ्गे पूर्वार्धे अ० ७० ]

एवमेव विराड्देहे विश्वरूपे परात्मनः तत्तदङ्गस्वरूपेण जगत्सर्वं प्ररूपितम् †"

एकैकवस्तुनश्चाऽस्ति विराड्रूपेण वर्णनं, यथा पाद्मे § पुराणानां विराडङ्गत्वरूपणम्;

---

इतिहास पुराणों के विभूतियोगवर्णन और विश्वरूपदर्शन के प्रसङ्ग मे, जगत् के नाना पदार्थों को विराट् पुरुष के विभिन्न अवयवों के रूप मे उत्प्रेक्षित किया है, और कहीं कहीं उन से ( परमात्माङ्गों से ) उत्पन्न हुआ भी बतलाया है, जो स्पष्ट ही रूपक है। 'ब्रह्मा' के अङ्गुष्ठ

---

* पाद्मेसृष्टि खं० अ० ४। † विश्वरूपवर्णनं-महाभारते वनप० अ० १८८-८९; उद्योगप० अ० १३१; भीष्मप० अ० ३४-३५ भगवद्गीतासु अ० १०-११; अश्वमेधप० अनुगी० अ० ५५। भागवते-स्कं० २ अ० १ श्लो० २४-३९; अ०५ श्लो० ३५-४२; अ० ६ श्लो० १-१०; अ० १० श्लो० १३-३२। स्कं० ३ अ०६; अ०७ श्लो० २१-२२। स्कं० ४ अ० ९। स्कं० ८ अ० २० श्लो० २१-३४। स्कं० १० अ० ७ श्लो० ३६-३७; अ० ८ श्लो० ३७-३८; अ० ४० श्लो० १३-१५; अ० ६३ श्लो० ३५-३६। स्कं० ११ अ० १६ श्लो० १०-४१। स्कं० १२ अ० ११ श्लो० ५-९; एवमादिषु स्थलेषु, अन्यत्र च पुराणादिषु द्रष्टव्यं; विस्तरभयादिह नोद्धृतम्। § अत्र 'उपक्रमे' पृ० ९५-९६ द्रष्टव्यम्।

छन्दोमयो विराडेकः, शब्दब्रह्ममयोऽपरः, नाना वाङ्मयरूपश्च विराड् अस्ति पृथक्पृथक्,
सर्वलोकशरीरो यो विश्वरूपो महाविराट्, प्रत्येकमन्तरण्डं स्युस्तस्यांशाः क्षुद्रसंज्ञकाः;
तत्राऽप्येकैकभावानां समष्टेरभिमानिनः विराजः परिकल्प्यन्ते; यथा यज्ञमयो विराट्;
"पुरुषो यज्ञ इत्येव यत्परं परिकीर्तितं, यच्चाऽन्यत्पुरुषाख्यं स्यात्, स एव पुरुषोत्तमः;
ये च यज्ञकरा विप्रा य ऋत्विज इति स्मृताः अस्मादेव पुरा भूता यज्ञेभ्यः श्रूयते तथा;
ब्राह्मणं प्रथमं वक्त्रादुद्गातारं च सामगं, होतारं च तथाऽध्वर्युं बाहुभ्यामसृजत्प्रभुः;
ब्रह्माणं ब्राह्मणाच्छंसि-प्रस्तोतारौ च सर्वशः, मेढ्राच्च मैत्रावरुणं प्रतिष्ठातारमेव च,
उदरात्प्रतिहर्त्तारं, पोतारं चैव पार्थिव, पाणिभ्यामथवाऽऽग्नीध्रमुन्नेतारं च याजुषम्;
अच्छावाकमथोरुभ्यां, सुब्रह्मण्यं च जानुषु, एवमेवं स भगवान् षोडशैताञ्जगत्पतिः
स्वयंभूः सर्वयज्ञानामृत्विजोऽसृजदुत्तमान् तदा स वै वेदमयः पुरुषो यज्ञसंज्ञितः ||"
चातुर्वर्ण्यविराड्रूपं यन्मनुष्ये प्रकल्पितं तच्च विश्वांशभूतस्य नृरूपस्यैकवस्तुनः;
तस्मिन्मुखादिरूपेण ब्राह्मणादिप्रकल्पनं स्वाभाव्यगुणसाधर्म्यात्तत्तद्धर्मविधित्सया;
न तूच्च-नीचभावाय, तत्तदङ्गाऽनुसारतः जन्मवर्णाय वा, तादृगन्यवाक्येष्वदर्शनात्;
भागवतादिवाक्येषु ये प्रजापतयः स्मृताः ब्रह्मणोऽङ्गसमुद्भूताः, ते सर्वे ब्राह्मणा मताः;
न जन्माङ्गाऽनुसारेण भिन्नजातिप्रकल्पनं दक्षादिब्रह्मपुत्राणां, न चैवोत्तम-नीचता;
ये यज्ञपुरुषाङ्गेभ्यः समुद्भूता निरूपिताः ऋत्विजः, ते च सर्वेऽपि ब्राह्मणा एव वर्णतः,
तस्माद् ब्रह्माङ्गसंभूतेः, किंवा तत्त्वेन रूपणात्, चातुर्वर्ण्ये न तन्मूलो जातिभेदोऽस्ति सङ्गतः;
नैवमुत्तम-नीचत्वं; तत्सर्वं तु भवेद्गुणैः, चातुर्वर्ण्यमभूद्ब्राह्मं, कर्मभिर्भिन्नतां गतम्।
ऋत्विजो जन्मतः केचिन्न भवन्तीति दृश्यते, तत्तत्कर्म-प्रयोगेण यज्ञे स्युः षोडशर्त्विजः;
तेऽपि सृष्टाः प्ररूप्यन्ते यज्ञाख्यपुरुषाङ्गतः; एवमेवाऽनुसन्धेयं चातुर्वर्ण्येऽपि रूपकम्।
"वर्णाश्रमविभागांश्च रूप-शील स्वभावतः" (भा० ३,७,२९)
कृष्णद्वैपायनः प्राह; न तु जन्माऽनुसारतः,
वर्णानामाश्रमाणां च लोकेषु गुण-कर्मभिः सिद्धानामेव वेदादौ विराडङ्गेषु रूपणम्।
तस्मान्न 'जन्मना वर्णः' संभवेदिति निर्णयः वेदशास्त्रपुराणानाम्, अतः सिद्धः स कर्मणा।
ब्रह्मा कर्मानुसारेण चातुर्वर्ण्यमकल्पयत्, एवं वायुपुराणादौ सुस्पष्टं वर्णितं; यथा—
"ब्रह्मा स्वयंभूर्भगवान्दृष्ट्वा सिद्धिं तु कर्मजां, मर्यादाः स्थापयामास यथारब्धाः परस्परम्;

---

आदि विभिन्न अङ्गों से उत्पन्न हुए बतलाये गये दक्ष-प्रभृति प्रजापतियों की एक ही जाति (ब्राह्मण) मानी गई है, इस लिये भी विभिन्न अङ्गों से उत्पन्न रूपित होने के कारण ब्राह्मण आदि चातुर्वर्ण्य मे जन्मकृत जातिभेद नहीं होना चाहिये, किन्तु कर्मकृत वर्णभेद का मानना ही युक्तिसङ्गत है और शास्त्रों मे भी यही मन्तव्य स्वीकार किया गया है; "ब्राह्मणा पूर्वसृष्टं हि सर्वं ब्राह्ममिदं जगत्, कर्मभिर्वर्णतां गतम्।" अथ च 'यज्ञपुरुष' के अङ्गों से सोलह ऋत्विजों की उत्पत्ति का रूपक बांधा गया है, जो प्रत्यक्ष ही कल्पित बात है; फिर भी 'यज्ञपुरुष' के विभिन्न अवयवों से उत्पन्न कहे गये सब ऋत्विजों की एक ही ब्राह्मण जाति मानी जाती है। ऐसे ही 'विराट्' वा 'ब्रह्मा' के चतुरङ्ग से उत्पन्न रूपित होने पर भी चातुर्वर्ण्य मे जन्मकृत जातिभेद, तत्त्वतः नहीं हो सकता; तस्मात्, 'कर्मणा वर्णः', का मन्तव्य ही सच्छास्त्रीय है।

---

|| पाद्मे सृष्टिखं० ३६, ८१–८७।

ये वै परिग्रहीतारस्तासामासन्" विधायकाः "इतरेषां कृतत्राणाः, स्थापयामास क्षत्रियान्;
उपतिष्ठन्ति ये तान्वै" बोधयन्तश्च "निर्भयाः सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते।
ये चाऽन्येऽप्यबलास्तेषां वैश्यसत्कर्मसंस्थिताः", कुत्सितान् "नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः
वैश्यानेव तु तानाहुः कीनाशान्वृत्तिसाधकान्। शोचन्तश्च द्रवन्तश्च परिचर्यासु ये रताः
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः; तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात्प्रभुः;
संस्थितौ प्राकृतायां तु चातुर्वर्ण्यस्य सर्वशः"‖

"ततस्तासां च वृत्त्यर्थं वार्तोपायं चकार ह; तासां स्वयंभूर्भगवान्हस्तसिद्धिं स्वकर्मजां,
संसिद्धकार्यां वार्तायां ततस्तासां प्रजापतिः मर्यादां स्थापयामास, ययाऽरक्षन्परस्परम्।
ये वै परिग्रहीतारस्तासामासन्बलीयसः इतरेषां कृतत्राणान्स्थापयामास क्षत्रियान्।
उपतिष्ठन्ति तावन्तो यावन्तो निर्भयास्तथा–'सत्यं ब्रूत यथाभूतं, ध्रुवं वो ब्राह्मणास्तु ते'।
ये चाऽन्ये ह्यबलास्,तेषां संरक्षाकर्मणि स्थिताः कीला(टा)नि नाशयन्तिस्म पृथिव्यां ते व्यवस्थिता
वैश्यानित्येव तानाह कीनाशान्वृत्तिसाधकान्। सेवन्तश्च द्रवन्तश्च परिचर्यासु ये रताः
निस्तेजसोऽल्पवीर्याश्च, शूद्रांस्तानब्रवीच्च सः। तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात्प्रभुः।
संस्थित्यां तु कृतायां हि चातुर्वर्ण्यस्य तेन वै, पुनः प्रजास्तु ता मोहाद् धर्मं तं नाऽन्वपालयन्;
वर्णधर्मैरजीवन्त्यो व्यरुध्यन्त परस्परम्। ब्रह्मा बुद्ध्वा तु तत्सर्वं याथातथ्येन स प्रभुः
क्षत्रियाणां बलं दण्डं युद्धमाजीवमादिशत्। संस्थित्यां सुकृतायां वै चातुर्वर्ण्यस्य तस्य, ते
वर्णास्तु दण्डभयतः स्वे स्वे वर्ण्ये व्यवस्थिताः। ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान्"卐

अतो वर्णव्यवस्थायाः कालश्चाऽपि सहेतुकः निर्दिष्टो दृश्यते व्यासैरितिहास-पुराणयोः।

"कृतं नाम युगं तात यत्र धर्मः सनातनः; कृतमेव, न कर्त्तव्यं, तस्मिन्काले युगोत्तमे।
न तत्र धर्माः सीदन्ति, क्षीयन्ते न च वै प्रजाः; ततः कृतयुगं नाम कालेन गुणतां गतम्।
न सामऋग्यजुर्वेदाः, क्रिया नासीच्च मानवी,
अभिध्याय फलं तत्र, धर्मः ( आभ्युदयिकः ) संन्यास एव च ( नासीत् )।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चाऽकृतलक्षणाः कृते युगे समभवन्; सत्कर्मनिरताः प्रजाः।
समाश्रयं समाचारं समज्ञानं च केवलं; तदा हि समकर्माणोऽवर्णा धर्मानवाप्नुवन्।
एकदेवसमायुक्ता एकमन्त्रविधिक्रियाः एकवेदा-ऽपृथग्धर्मा धर्ममेकमनुव्रताः
चातुराश्रम्ययुक्ता न, कर्मणा कालयोगिना अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम्।
आत्मयोगसमायुक्तो धर्मो योऽकृतलक्षणः कृते युगे चतुष्पादोऽचातुर्वर्ण्यस्य शाश्वतः।
ततो यज्ञाः प्रवर्तन्ते, धर्माश्च विविधाः क्रियाः, त्रेतायां, भावसङ्कल्पाः क्रियादानफलोपगाः;
प्रचलन्ति न वै धर्मात् तपोदानपरायणाः; स्वधर्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन्×"

"पूर्वकल्पे प्रजा जाताः सर्वबाधाविवर्जिताः शुद्धान्तःकरणाः सर्वाः स्वधर्मपरिपालिकाः।
ततः कालवशात्तासां रागद्वेषादिकोऽभवत् अधर्मो, मुनिशार्दूलाः, स्वधर्म-प्रतिबन्धकः
ततः सा सहजा सिद्धिस्तासां नाऽतीव जायते; रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाऽभवन्।

---

(८) कर्म के अनुसार ही वर्णव्यवस्था हुई, अत एव इतिहास-पुराणों मे उसके समय और कारण का उल्लेख है। संस्कृत भाष्य में उद्धृत महाभारत आदि के श्लोकों से यह प्रमाणित होता है कि पहले 'कृत' (सत्य) नामक युग था, जिस मे सब कुछ 'कृत' (किया-कराया, स्वयंसिद्ध, अथवा अलं, पर्याप्त, वा परिपूर्ण ) था; प्राणियों के योगक्षेम की आवश्यक सामग्री स्वतः प्राप्त होती थी, अत एव

---

‖ वा० पु० अ० ८। 卐 ब्रह्माण्डपु० पू० भा० अनु० पा० २ अ० ७ श्लो० १५२–६८

× म० भा० वन० १४९, ११–२६

तासु क्षीणास्वशेषासु कालयोगेन, ताः पुनः वार्तोपायं पुनश्चक्रुर्हस्तसिद्धिं च कर्मजाम्।
ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत्; स्वायंभुवो मनुः पूर्वं धर्मान् प्रोवाच सर्वदृक्;
साक्षात्प्रजापतेर्मूर्तिर्निसृष्टा ब्रह्मणो द्विजाः भृग्वादयस्तद्वचनाच्छ्रुत्वा धर्मानथोचिरे—
यजनं, याजनं, दानं, ब्राह्मणस्य प्रतिग्रहः, अध्यापनं, चाऽध्ययनं, षट् कर्माणि द्विजोत्तमाः।
दानमध्ययनं, यज्ञो धर्मः क्षत्रिय-वैश्ययोः; (वृत्तिः) दण्डो युद्धं क्षत्रियस्य, कृषिर्वैश्यस्य शस्यते।
शुश्रूषैव द्विजातीनां, शूद्राणां धर्मसाधनम्, कारुकर्म तथाऽऽजीवः, पाकयज्ञादि धर्मतः।
ततः स्थितेषु वर्णेषु, स्थापयामास चाऽश्रमान्, गृहस्थं च, वनस्थं च, भिक्षुकं, ब्रह्मचारिणम् *"
"कृते त्वमिथुनोत्पत्तिर्वृत्तिः साक्षादलोलुपा, प्रजास्तृप्ताः सदा सर्वाः सर्वानन्दाश्च भोगिनः;
अधमोत्तमत्वं नास्त्यासां, निर्विशेषाः, पुरञ्जय; तुल्यमायुः सुखं रूपं तासु तस्मिन्कृते युगे।...
ततः प्रादुरभूत्तासां, रागो लोभश्च सर्वशः अवश्यम्भावितार्थेन त्रेतायुगवशेन वै।...
सदाचारे विनष्टे तु बलात्काल-बलेन च, मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद्भगवानजः
ससर्ज क्षत्रियान्ब्रह्मा ब्राह्मणानां † हिताय वै; वर्णाश्रम-व्यवस्थाश्च त्रेतायां कृतवान्प्रभुः;
यज्ञप्रवर्त्तनं चैव पशुहिंसाविवर्जितम् ‡"
"ताः प्रजाः कामचारिण्यो मानसीं सिद्धिमास्थिताः; तुल्यमायुः सुखं रूपं तासामासीत्कृते युगे।
धर्मा-ऽधर्मौ तदा न स्तः कल्पादौ प्रथमे युगे; स्वेन स्वेनाधिकारेण जज्ञिरे तु प्रजाः कृते।
समं जन्म च, रूपं च, प्रीयन्ते चैव ताः समाः, तदा सत्यमलोभश्च सन्तुष्टिश्च सुखं दमः,
निर्विशेषाश्च ताः सर्वा रूपायुःशिल्पचेष्टितैः। अबुद्धिपूर्विका वृत्तिः प्रजानां भवति स्वयम्;
अप्रवृत्तिः कृतद्वारे कर्मणोः शुभ-पापयोः; वर्णाश्रमव्यवस्थाश्च न तदाऽऽसन्, न तस्कराः;
अनिच्छाद्वेषयुक्तास्ता वर्तयन्ति परस्परम्। तुल्यरूपायुषः सर्वा अधमोत्तमवर्जिताः
सुखप्राया विशोकाश्च उत्पद्यन्ते कृते प्रजाः। लाभा-ऽलाभौ न वा स्यातां मित्रा-ऽमित्रौ प्रिया-ऽप्रियौ;
मनसा विषयस्तासां निरीहाणां प्रवर्तते; नाऽतिहिंसन्ति वाऽन्योन्यं, नाऽनुगृह्णन्ति वै तदा §"
"ध्याते तु मनसा तासां प्रजानां जायते सकृत् शब्दादिर्विषयः शुद्धः प्रत्येकं पञ्चलक्षणः;
इत्येषा मानसी सृष्टिर्या पूर्वं वै प्रजापतेः तस्याऽन्ववाये संभूता, यैरिदं पूरितं जगत्।
सरित्सरः-समुद्रांश्च सेवन्ते पर्वतानपि; तास्तदा ह्यल्पशीतोष्णा युगे तस्मिंश्चरन्ति वै;
पृथ्वीरसोद्भवं नाम आहारं ह्याहरन्ति वै ताः प्रजाः कामचारिण्यो मानसीं सिद्धिमास्थिताः;
तृप्तिं स्वाभाविकीं प्राप्ता विषयेषु महामते, ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः।
ततः सहस्रशस्तासु प्रजासु प्रथितास्वपि न तासां प्रतिघातोऽस्ति, न द्वन्द्वं नाऽपि च क्लमः।¶
पर्वतोदधिवासिन्यो ह्यनिकेतास्तु सर्वशः ×, विशोकाः सत्त्वबहुला एकान्तसुखिताः प्रजाः।

'कर्त्तव्य' की आवश्यकता नहीं पड़ती थी; इसी लिये उस युग का नाम 'कृत' हुआ। एक ही वेद, एक ही वर्ण, एक ही धर्म, एक ही आचार, एक ही ज्ञान, एक ही कर्म सब का था; अलग अलग चार वर्ण, चार आश्रम, चार वेद, पृथक् पृथक् धर्म, कर्म, आचार नहीं थे।

वायुपुराण आदि मे स्पष्ट शब्दों मे कहा है कि कृतयुग मे वर्णादि-व्यवस्था नहीं थी। त्रेता मे आरंभ हुई। ब्रह्मा ने, सर्वलोकपितामह परमवृद्धने, बृहत्तम महापरिवृढ ने, महतत्त्व, बुद्धितत्त्व के अधिष्ठातृ—

* कू० पु० पू० विभा० अ० २। † अत्र 'ब्राह्मण'शब्दः, ब्रह्मणोऽपत्यार्थे मनुष्यमात्रवचनोऽवगन्तव्यः 'ब्राह्मणानां' ब्रह्मणोऽपत्यानां मनुष्याणां सर्वेषां हितायेत्यर्थः। ‡ कू० पु० पूर्व० वि० अ० २९।

§ ब्रह्माण्ड पु० पू० भा० अनुषङ्गपा० २ अ० ७ श्लो० ४२–५८।

¶ "न द्वेषो नाऽपि मत्सरः" इति पाठो मार्कण्डेयपुराणस्थः।

× "ह्यनिकेताश्रयास्तु ताः" इति वायौ पाठः।

पिशाचोरगरक्षांसि तथा मत्सरिणो जनाः पशवः पक्षिणश्चैव न तदाऽऽसन्सरीसृपाः नोद्भिज्जा नारकाश्चैव ; ते ह्यधर्मप्रसूतयः॥ । न मूलफलपुष्पाणि, नर्तवो (नार्त्तवा)वत्सराणि च,
( न मूलफलपुष्पं च, नाऽऽर्तवमृतवो न च )
सर्वकाल( काम )सुखः कालो, नाऽत्यर्थं घर्म-( ह्युष्ण )-शीतता ।
मनोऽभिलषिताः कामास्तासां सर्वत्र सर्वदा , उत्तिष्ठन्ति पृथिव्यां वै ताभिर्ध्याता रसोल्लसाः।[२४]
बलवर्णकरी तासां सिद्धिः सा रोगनाशिनी , कालेन गच्छता तासां चित्रा सिद्धिरजायत ।
ततश्च तेषां पूर्वाह्णे मध्याह्ने च वितृप्तता पुनस्तथेच्छतां तृप्तिरनायासेन साऽभवत् ।
इच्छतां च तथायासो मनसः समजायत , अपां सौक्ष्म्यात्ततस्तासां सिद्धिर्नाना रसोल्लसा समजायत चैवाऽन्या सर्वकामप्रदायिनी । असंस्कार्यैः शरीरैश्च प्रजास्ताः स्थिरयौवनाः ।
तासां विना तु सङ्कल्पं ( तासां विशुद्धात्सङ्कल्पात् ) जायन्तेऽमिथुनाः प्रजाः ।
समं जन्म च रूपं च म्रियन्ते चैव ताः समम् अनिच्छाद्वेषसंयुक्ता वर्त्तन्ते तु परस्परं , तुल्यरूपायुषः सर्वा अधमोत्तमतां विना ( अधमोत्तमवर्जिताः )
तदा सत्यमलोभश्च क्षमा तुष्टिः सुखं दमः ; निर्विशेषास्तु ताः सर्वा रूपायुःशीलचेष्टितैः , अबुद्धिपूर्वकं वृत्तं प्रजानां जायते स्वयम् । सुखप्राया ह्यशोकाश्च उत्पद्यन्ते कृते युगे , नित्यप्रहृष्टमनसो महासत्त्वा महाबलाः । चत्वारि तु सहस्राणि वर्षाणां मानुषाणि वै आयुः प्रमाणं जीवन्ति; न च क्लेशाद्विपत्तयः । लाभाऽलाभौ न तास्वास्तां मित्राऽमित्रे प्रियाऽप्रिये, मनसा विषयस्तासां निरीहाणां प्रवर्तते ; न लिप्सन्ति हि ताऽन्योन्यं, नाऽनुगृह्णन्ति चैव हि।
क्वचित्क्वचित्पुनः साऽभूत् (स्थितिरासां , न सर्वतः) क्षितेर्भागे, न सर्वशः ।
कालेन गच्छता नाशमुपयान्ति यथा प्रजाः , तथा ताः क्रमशो नाशं जग्मुः सर्वत्र सिद्धयः ।
एवं कृते तु निःशेषे सिद्धिस्त्वन्तर्दधे तदा , तस्यां च सिद्धौ भ्रष्टायां मानस्याम् , अभवत्ततः सिद्धिरन्या युगे तस्मिंस्त्रेतायामन्तरे कृता । सर्गादौ या मयाऽष्टौ तु मानस्यो वै प्रकीर्तिताः , अष्टौ ताः क्रमयोगेण सिद्धयो यान्ति संक्षयम् । कल्पादौ मानसी ह्येषा सिद्धिर्भवति सा कृते , मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः । ततः कृतांशे क्षीणे तु, बभूव तदनन्तरं , त्रेतायां युगमन्यत्तु कृतांशमृषिसत्तमाः ; तस्मिन्क्षीणे कृतांशे तु तच्छिष्टासु प्रजास्विह , प्रणश्यति तदा सिद्धिः कालयोगेन, नाऽन्यथा ; तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्तत । तासु सर्वासु नष्टासु नभसः प्रच्युता रसाः , पयसः कल्पवृक्षास्ते सम्भूता गृहसंस्थिताः ।

---

देव ने, मनुष्यों की आयु, रूप, बल, बुद्धि आदि मे, ( जो कृतयुगमें सब मे साधारण, अर्थात् समान थीं ) त्रेतायुग मे, विषमता, भेद, का आरंभ हो जाने से, चतुर्विध प्रकृति के अनुसार, चातुर्वर्ण्य की व्यवस्था करदी, और उनके धर्म कर्म को अलग अलग बाँट दिया । पहिले तो सबलोग तदनुसार अपने अपने धर्म का पालन करते थे । पर क्रमशः उनको मोह हुआ, काम

---

|| अत्राऽस्मत्पुरोवर्तिनि मार्कण्डेयपुराणपुस्तके पाठाः प्रच्युता विकृताश्च लक्ष्यन्ते; उपरितनः पाठस्तु वायुपुराणाऽनुसारी धृतः ।

२४. रसोल्लासाद्यष्टसिद्धयस्तु स्कन्दपुराणे इत्थमुक्ताः—

"रसस्य स्वत एवान्तरुल्लासः स्यात्कृते युगे , रसोल्लासाख्यिका सिद्धि,स्तया हन्ति क्षुधं नरः ; स्त्र्यादीनां नैरपेक्ष्येण सदा तृप्ताः प्रजास्तथा द्वितीया सिद्धिरुद्दिष्टा सा तृप्तिर्मुनिसत्तमैः ; धर्मोत्तमश्च योऽस्त्यासां सा तृतीयाऽभिधीयते ; चतुर्थी तुल्यता तासामायुषः सुख-रूपयोः ; ऐकान्त्यबलबाहुल्यं विशोका नाम पञ्चमी ; परमात्मपरत्वेन तपोध्यानादिनिष्ठता षष्ठी च; कामचारित्वं सप्तमी सिद्धिरुच्यते ; अष्टमी च तथा प्रोक्ता यत्रक्वचनशायिता" इति ।

अपां सौक्ष्म्ये प्रतिगते तदा मेघात्मना तु वै, मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम्;
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले प्रादुरासंस्तदा तासां वृक्षास्तु गृहसंस्थिताः,
सर्वप्रत्युपभोगश्च तासां तेभ्यः प्रजायते; वर्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः।
ततः कालेन महता तासामेव विपर्ययात्, रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत्;
मासि मास्यार्त्तवोत्पत्त्या गर्भोत्पत्तिः पुनः पुनः, ततः प्रभृति कल्पेऽस्मिन्मिथुनानां हि सम्भवः
रागोत्पत्त्या ततस्तासां वृक्षास्ते गृहसंस्थिताः प्रणेशुः; अपरे चाऽऽसंश्चतुःशाखा महीरुहाः;
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च, तेष्वेव जायते तेषां गन्धवर्णरसान्वितम्;
अमाक्षिकं महावीर्यं पुटके पुटके मधु; तेन ता वर्त्तयन्ति स्म मुखे त्रेतायुगस्य वै;
हृष्ट-तुष्टास्तया सिद्ध्या प्रजा वै विगतज्वराः। ततः कालान्तरेणैव पुनर्लोभान्वितास्तु ताः,
वृक्षांस्तान्पर्यगृह्णन्त ममत्वाविष्टचेतसः। नेशुस्तेनापचारेण तेऽपि तासां महीरुहाः;
ततो द्वन्द्वान्यजायन्त शीतोष्णक्षुन्मुखानि वै। तास्तद्द्वन्द्वोपघातार्थं चक्रुः पूर्वं पुराणि तु,
मरुधन्वसु दुर्गेषु पर्वतेषु दरीषु च, संश्रयन्ति स्म दुर्गाणि वार्क्षं पार्वतमौदकं,
कृत्रिमं च तथा दुर्गं मित्वा मित्वात्मनोऽङ्गुलैः, यथायोगं यथाकामं समेषु विषमेषु च,
आरब्धास्ते निकेता(न्वै)वै कर्त्तुं शीतोष्णवारणम्; ततः संस्थापयामासुः खेटानि च पुराणि च,
ग्रामांश्चैव यथाभागं, तथैवान्तःपुराणि च। ता एवं नगरादींस्तु कृत्वा वासार्थमात्मनः,
निकेतनानि द्वन्द्वानां चक्रुरावसथाय वै। गृहाकारा यथा पूर्वं तेषामासन्महीरुहाः,
तथा संस्मृत्य तत्सर्वं चक्रुर्वेश्मानि ताः प्रजाः। कृत्वा द्वन्द्वोपघातं ता वार्तोपायमचिन्तयन्;
नष्टेषु मधुना सार्धं कल्पवृक्षेष्वशेषतः, विषादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधार्दिताः।
ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतामुखे तदा वार्ता स्वसाधिता त्वन्या वृष्टिस्तासां निकामतः
(वार्तार्थसाधिकाऽप्यन्या वृत्तिस्तासां हि कामतः) तासां वृष्ट्युदकानीह यानि निम्नगतानि वै,
वृष्ट्यावरुद्धैरभवन् स्रोतःखातानि निम्नगाः। ये पुरस्तादपां स्तोका आपन्ना पृथिवीतले
ततो भूमेश्च संयोगादोषध्यस्तास्तदाऽभवन्, अफालकृष्टाश्चाऽनुप्ता ग्राम्यारण्याश्चतुर्दश;
ऋतुपुष्पफलाश्चैव वृक्षा गुल्माश्च जज्ञिरे; प्रादुर्भावस्तु त्रेतायामाद्योऽयमौषधस्य तु,
तेनौषधेन वर्तन्ते प्रजास्त्रेतायुगे मुने। रागलोभौ समासाद्य प्रजाश्चाकस्मिकौ तदा
ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान्; वृक्षगुल्मौषधीश्चैव मात्सर्याच्च यथाबलम्;
तेन दोषेण ता नेशुरोषध्यो मिषतां द्विज। अग्रसद्भूर्युगपत्तास्तदौषध्यो महामते।
ततस्तासु प्रनष्टासु विभ्रान्तास्ताः पुनः प्रजाः ब्रह्माणं शरणं जग्मुः क्षुधार्ताः परमेष्ठिनं,
वृत्त्यर्थमभिलिप्सन्त आदौ त्रेतायुगस्य तु।
( वार्ता वृत्तिः समाख्याता कृषिकामप्रयत्नतः, अन्यथा जीवितं तासां नास्ति त्रेतायुगे तु वै )
ब्रह्मा स्वयंभुर्गवान् ज्ञात्वा तासां मनीषितं, युक्तं प्रत्यक्षदृष्टेन दर्शनेन विचार्य च,
ग्रस्ताः पृथिव्या ओषध्यो ज्ञात्वा प्रत्यदुहत्पुनः, कृत्वा वत्सं सुमेरुं तु दुदोह पृथिवीमिमाम्;
दुग्धेऽयं गौस्तदा तेन सस्यानि पृथिवीतले, जज्ञिरे तानि बीजानि ग्राम्यारण्यास्तु ताः पुनः,
ओषध्यः फलपाकान्ता गणाः सप्तदश स्मृताः। ( हस्तोद्भवा ह्यपश्चैव भवन्ति बहुशस्तदा )
उत्पन्नाः प्रथमा ह्येता आदौ त्रेतायुगस्य तु, अफालकृष्टा ओषध्यो ग्राम्यारण्याश्च सर्वशः;

---

क्रोध के वश मे पड़े, आपस मे द्रोह करने लगे, अपने अपने धर्मों का पालन छोड दिया। आपस के विरोध को मिटाने के लिये वे फिर ब्रह्मा के आदेश से मनु के पास गये। तब मनु ने अपने पुत्र, प्रियव्रत और उत्तानपाद को उनके ऊपर दंडधर राजा बना दिया, कि जो धर्म का पालन न करे उसको दंड दें। यहाँ उद्‌धृत कूर्म, मत्स्य, और ब्रह्माण्ड आदि पुराणों के श्लोकों का

वृक्षा गुल्मलता वल्ली वीरुधस्तृणजातयः, मूलैः फलैश्च रोहिण्यो, गृह्णत्पुष्पं च यत्फलम्; पृथ्वी दुग्धा तु बीजानि यानि पूर्वं स्वयंभुवा ऋतुपुष्पफलास्ता वै ओषध्यो जज्ञिरे त्विह। यदा प्रसृष्टा ओषध्यो न प्ररोहन्ति ताः पुनः, ततः स तासां वृद्ध्य(त्य)र्थं वार्त्तोपायं चकार ह; ब्रह्मा स्वयंभुर्भगवान् हस्तसिद्धिं च कर्मजाम्। (तदाप्रभृति चौषध्यः फालकृष्टास्त्वितस्ततः, वार्तां कृषिं समायाता वर्तुकामाः प्रयत्नतः) ततः प्रभृत्यथौषध्यः कृष्टपच्यास्तु जज्ञिरे; (तत्राऽपि जगृहुः सर्वे ह्यन्योन्यं क्रोधमूर्छिताः, सुतदारधनाद्यांस्तु बलाद्युगबलेन च, मर्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः ससर्ज क्षत्रियांस्त्रातुं क्षतात्कमलसंभवः, वर्णाश्रमप्रतिष्ठां च चकार स्वेन तेजसा) संसिद्धायां तु वार्तायां ततस्तासां स्वयं प्रभुः मर्यादां स्थापयामास यथान्यायं यथागुणं, वर्णानामाश्रमाणां च धर्मान्धर्मभृतां वर" §

"अमरेन्द्र, मया बह्व्यः प्रजाः सृष्टास्तदा प्रभो,
एकवर्णाः समाभाषा एकरूपाश्च सर्वशः, तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा" ||
एकवर्णमिदं पूर्वं विश्वमासीद् युधिष्ठिर, क्रिया-कर्मविभेदेन चातुर्वर्ण्यं प्रतिष्ठितम्" ¶
'एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः, एको नारायणो देवः, एकोऽग्नि,वर्ण एव च X"
"यथा कृतयुगे पूर्वमेकवर्णमभूत्किल, तथा कलियुगस्यान्ते शूद्रीभूताः प्रजास्तथा 卐"
इत्थमुक्ता पुराणादौ प्राङ् नृणामेकवर्णता; चातुर्वर्ण्यव्यवस्था तु त्रेतायां गुण-कर्मभिः।

"धर्माऽधर्मौ न तास्वास्तां, निर्विशेषाः प्रजास्तु ताः; तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे।... अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः; वर्णाश्रमव्यवस्थाश्च न तदाऽऽसन्, न सङ्करः। ब्रह्मणो मानवास्ते वा उत्पन्ना योजनादिह, शान्ताश्च, शुष्मिणश्चैव, कर्मिणः, सेविनस्तदा; ततः प्रवर्त्तमानास्ते त्रेतायां जज्ञिरे पुनः ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा, द्रोहिजनास्तथा"※
"तत्र त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ते श्रौतं स्मार्त्तं च धर्मं च ब्रह्मणा च प्रचोदितं दाराग्निहोत्रसंयोगमृग्यजुःसामसंज्ञितम् इत्यादि लक्षणं श्रौतं धर्मं सप्तर्षयोऽब्रुवन्; परम्परागतं धर्मं स्मार्त्तं चाऽऽचारलक्षणं वर्णाश्रमाऽऽचारयुतं मनुः स्वायंभुवोऽब्रवीत्।... तदा प्रमुदिता वर्णास्त्रेतायां धर्मपालिताः क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनस्तथा। ब्राह्मणाननुवर्त्तन्ते क्षत्रियाः, क्षत्रियान्विशः, वैश्याऽनुवर्त्तिनः शूद्राः परस्परमनुव्रताः।... वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तथाऽकरोत्; पुनः प्रजास्तु ता मोहात्तान्धर्मान्न ह्यपालयन् परस्परविरोधेन; मनुं ताः पुनरन्वयुः। मनुः स्वायंभुवो दृष्ट्वा याथातथ्यं प्रजापतिः ध्यात्वा तु शतरूपायां पुमान् स उदपादयत्; प्रियव्रतोत्तानपादौ प्रथमं तौ महीपती। ततः प्रभृति राजान उत्पन्ना दण्डधारिणः; प्रजानां रक्षनाच्चैव राजानस्त्वभवन्नृपाः।

भी यही आशय है। जैसे शैशव-अवस्था में सभी बालक प्रायः 'समान' ही जान पड़ते हैं, उनके सब कार्य माता-पिता द्वारा 'कृत' ही रहते हैं; उनका 'कर्त्तव्य' दूध पीने के सिवा कुछ भी नहीं। क्रमशः वयस् अधिक होने पर उनकी प्रकृतियों मे 'वि-समानता' विषमता देख पड़ने लगती है। यही उपमा कृतयुगमे 'समता' और त्रेता मे 'विषमता' आदि की है। वर्णव्यवस्था के इस इतिहास से भी 'कर्मणा वर्णः' का ही प्रतिपादन होता है।

§ मार्क० पु० अ० ४९; वायुपु० अ० ८; लिं० पु० पू० अ० ३९, पद्मपु० सृष्टिखं० अ० ३; विष्णुपु० अं० १ अ० ६ ]

|| वा० रा० उ० कां० स० ३० श्लो० २१-२२। ¶ म० भा० वन० तथा शां०।

X भा० स्क० ९ अ० १४ श्लो० ४८। 卐 मात्स्ये १४४, ७८। ※ वा० पु० अ० ८।

वर्णानां प्रविभागाश्च त्रेतायां सम्प्रकीर्तिताः संहताश्च ततो मन्त्रा ऋषिभिर्ब्राह्मणैस्तु ते।†"
"ततः समुदिता वर्णास्त्रेतायां धर्मशालिनः क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनश्च वै ;
शुभाः प्रकृतयस्तेषां, धर्मा वर्णाश्रमाश्रयाः, त्रेतायुगे ह्यविकलः कर्मारम्भः प्रसिद्ध्यति।
आयू रूपं बलं मेधा आरोग्यं धर्मशीलता, सर्वसाधारणं ह्येतन्नासीत् त्रेतायुगे तु वै।
वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तदाऽकरोत्; संहताश्च तथा मन्त्रा ऋषिभिर्ब्रह्मणः सुतैः;
यज्ञः प्रवर्तितश्चैव तदा ह्येव तु दैवतैः; इज्या दानं तपः सत्यं त्रेताधर्मास्तु वै स्मृताः।
तदा प्रवर्तते धर्मो वर्णाश्रमविभागशः; मर्यादास्थापनार्थं च दण्डनीतिः प्रवर्तते‡"
यद्धि वर्णव्यवस्थाया मूलमुक्तं मिताक्षरम्, तदेवार्षमहावाक्यैः किञ्चिदत्रोपबृंहये।
मनूपज्ञत्वमात्रेण मानवत्वं न मन्यते, वर्णाश्रमस्य, किं तर्हि ? मानवप्रकृतिस्थितेः।
मानवं देहसंस्थानमनुकृत्यैव पूर्वजैः, चतुर्वर्णाश्रमात्मायं देहः सामाजिकः कृतः।
शिरो बाहुश्च मध्यश्च पादश्चाङ्गचतुष्टयम्, प्राधान्याद्दृश्यते देहे, तद्विना नात्मसंस्थितिः;
तद्वत्समाजदेहेऽपि चतुरङ्गं प्रकल्पितम्, चातुर्वर्ण्यं, विना तेन लोकस्यापि न संस्थितिः।
आश्रित्य चतुरङ्गानि यथा चाङ्गान्तरं स्थितम्, तथाश्रमादिकश्चापि वर्णमाश्रित्य तिष्ठति;
अतः संगच्छते वर्णव्यवस्थाश्रुति-कल्पितम्, मुखबाहूरुपद्रूपं विराडङ्गचतुष्टयम्।
इत्थं प्रकृतिसिद्धत्वात्कायव्यूहानुसारतः, वर्णाश्रमव्यवस्थानं नृणां वैज्ञानिकं परम्।
वर्णाश्रमविभागोऽयं लोके जयति सर्वदा, देशकालादिभेदेन नामरूपान्तरात्मना।
नृणां शिक्षा च, रक्षा च, जीविका च, सहायता, यावदावश्यकी लोके, तावद्वर्णव्यवस्थितिः।
अद्यत्वेऽपि जयत्येषा सर्वदेशनिवासिषु, शिक्षा-शासन-वाणिज्य-श्रमकर्म-विभागशः।
यावच्च पुरुषार्थानामेषणा नृषु संभवेत्, तावदाश्रमसंस्थायाः स्यादवश्यं प्रयोजनम्।
विद्यावित्तैषणा मुख्या विद्यार्थिब्रह्मचारिणां, दार-पुत्रैषणा त्वेवं गृहस्थानां प्रधानतः,
लोकैषणा वनस्थानां वैशेष्यादुपजायते, संन्यासिनां मुमुक्षाख्या मुख्या मोक्षैषणा भवेत्।
"शैशवेऽभ्यस्तविद्यानां, यौवने विषयैषिणां, वार्द्धके मुनिवृत्तीनां, योगेनान्ते तनुत्यजाम्" ※
विद्यार्थिनां, गृहस्थानां, वनस्थाश्रमिणां, वयः-क्रमात्सन्न्यासिनां, चोक्तं चातुराश्रम्यमीदृशम्।
तस्मादेवाश्रमाश्चापि जयन्त्येव सदा क्षितौ, येन केनापि रूपेण देशकालानुसारतः।
धर्म्यं गुरुकुलं त्वासीदाश्रमो ब्रह्मचारिणाम्; गृहमेव गृहस्थानां; वनं च वनिनां पुरा;
नित्यव्रजनशीलानां सर्वभूतहितैषिणाम्, आश्रमोऽभूत्परिव्राजां सर्वमेव महीतलम्।

( ९ ) भगवद्गीता मे भगवान् ने स्वयं कहा है कि 'मैंने गुण के अनुसार कर्म का विभाग ( बटवारा ) करके चातुर्वर्ण्य का निर्माण वा व्यवस्थापन किया है, अर्थात् स्वभावप्रभव गुणों के आधार पर प्रत्येक वर्ण के कर्मों ( कर्त्तव्य और जीविकाकर्म ) को प्रविभक्त ( पृथक् पृथक्, असङ्कीर्णरूप से बाँट ) कर के चातुर्वर्ण्य समाज का व्यूहन किया है'। भगवान् की इस उक्ति का आशय यह है कि प्रत्येक मनुष्य मे एक विशेष स्वभाव, प्रकृति, वा निसर्ग होता है; यद्यपि प्रकृतिभूत स्वभाव वा निसर्ग मे सत्त्व रजः और तमः स्वरूप तीन अंश हैं, जो अन्योन्यमिथुन परस्पर ओतप्रोत मिथःपरिव्याप्त वा अपृथक्सिद्ध कहे जाते हैं; तथापि एक एक व्यक्ति मे एक एक गुण की प्रधानता विशेषता आधिक्य उद्रेक वा उत्कर्ष होता है, तदनुसार, प्राधान्यव्यपदेश, भूयसा निर्देश, वा वैशेष्यवाद से, उसका स्वभाव, सात्त्विक राजस वा तामस माना जाता है। इस प्रकार के विशेष विशेष स्वभाव से विशेष विशेष गुणों का प्रभव ( उत्पत्ति )

† वा० पु० अ० ५७ ‡ मात्स्ये अ० १४२, ※ र० वं० १, ८

( १ ) छात्रावासः; ( २ ) क्रियाक्षेत्रं जीविकावृत्तिहेतुकम् ;
( ३ ) लोकसंस्था; ( ४ ) गृहे न्यासः क्रमात्साम्प्रतमाश्रमाः ।
नामरूपान्तरैरित्थं सदा वर्णाश्रमस्थितिः , इहाऽवर्णाश्रमी स्थातुं न समाजश्चिरं क्षमः ।
वर्णाश्रमविभागस्याऽबुद्धिपूर्वस्थितावपि , वैगुण्याज्जायते लोके घोराऽशान्तिः समन्ततः ।
विज्ञानोन्नतिसत्त्वेऽपि हाहाकारस्तु सर्वतः , सर्वं कर्मापि दुःखान्तं, मिथोलोके महद्भयम् ,
उग्रमान्दोलनं नित्यं वर्गाणां स्वार्थमूलकम् , तद्धेतुकश्च लोकेषु कलहो, राष्ट्रविप्लवः ,
सामाजिकविधानानि राजशास्त्राणि चासकृत् उत्पद्यन्ते च्यवन्ते च प्रायशः प्रतिवत्सरम् ।
यदा कामस्य चार्थस्य स्यादेवं दुरवस्थितिः , तदा धर्मस्य का चिन्ता, का मोक्षस्य कथाऽथवा ?
तथा, धर्मस्य मोक्षस्य च,स्यादेवं तु दुःस्थितिः , तदा ह्यर्थस्य कामस्य वा स्यात्सम्पन्नता कथम् ?
"धर्मादर्थश्च कामश्च" प्राप्यतेऽभ्युदयाऽभिधः , आत्मज्ञानमयाद्धर्मान्मोक्षो निःश्रेयसात्मकः ;
धर्मस्याऽचिन्तनादेव, तस्यैवं दुरवस्थितेः , मोक्षो दूरतरः पुंसां; दुर्दशा चाऽर्थ-कामयोः ।
एवं च कारणं लोके महोत्पातस्य निश्चितम् , वर्णाश्रमेषु वैगुण्यं वृत्तिसाङ्कर्यमूलकम् ।
तमोनिष्ठेषु राष्ट्रेषु जायन्ते हि कुदृष्टयः , नानाऽर्वाक्कालिका वादा असत्या निष्फलास्तथा ।
अन्धेन नीयमानानामन्धानामिव दुर्दशा , नृणां प्रवर्त्तमानानां तमोनिष्ठाऽग्रयायिना ।
वृत्तिव्यत्यास-साङ्कर्यप्रयुक्तार्थाऽव्यवस्थितेः , भिद्यते वर्णमर्यादा समाजश्च विषीदति ।
तस्मादवश्यकर्त्तव्यं लोकवृत्तिनियन्त्रणम् , राजकीयविधानेन माहाजनिकपर्षदा ।
न देशो बाधको वर्णे, न मतानि, न संस्कृतिः , न जातिरिति पूर्वेषामाचारादपि दृश्यते ।
हिन्दू-क्रैस्तव-मुस्लिम-प्रभृत्याख्याभिराहृताः तत्तद्विशेषधर्मास्तु 'मतानि'इति पदान्मताः
शकाश्च यवना हूणा अन्ये चाप्यन्यधर्मिणः , वैदेशिका विजातीयाश्चातुर्वर्ण्ये प्रवेशिताः ।
स्वीयां जातिं स्वधर्मं च रक्षित्वापि यथास्थितम् , तत्तद्वर्णत्वमर्हन्ति नरा वृत्तिव्यवस्थया ।
धर्मभेदेऽपि शैवाद्या जातिभेदेऽपि चेतरे , तत्तद्वर्णेषु वृत्त्यैव यथायोग्यं व्यवस्थिताः ।
न जातिः कारणं वर्णे, न वा धर्मो, न संस्कृति , न भोजनं, विवाहो वा, वृत्तिरेव तु कारणम् ।
वृत्त्या निर्णीयते वर्णो, वृत्त्यैव विनियम्यते , वृत्त्या संगृह्यते लोक,स्तस्माद्वृत्तिर्गरीयसी ।

होता है, और तदनुसार ही वर्णों के विशेष कर्म, प्रविभक्त होते हैं; वर्णव्यवस्था की यही प्रक्रिया शास्त्रसम्मत वैज्ञानिक और लोकव्यवहार के उपयुक्त है । इस विषय का अधिक खुलासा यों समझना चाहिये कि मनुष्य, प्रधानरूप से सात्विक राजस तामस वा मिश्र स्वभाव को लेकर पैदा होता है, वा जन्म से ही मनुष्य की प्रकृति मे, सत्त्व रजः तमः वा मिश्र गुणों मे से किसी एक की प्रधानता होती है; सुतरां उस के वैसे विशेष स्वभाव से 'प्रभव' गुणधर्म भी तदनुसार विशिष्ट प्रकार के ही होते हैं; अतः उस का कर्म प्रविभाग और वर्ण भी तदनुरूप ही होता है । उदाहरण के लिये मान लीजिये कि यदि किसी कुल मे कोई बालक प्रधानतः सत्त्वगुणमय स्वभाव लेकर पैदा हुआ हो, तो उस के उस स्वभाव से 'प्रभव' शम दम तपः शौच आदि गुणधर्म वा सहज स्वभावज कर्म, उस मे अवश्य होंगे, जिन की सूचना उस की आरंभिक जीवन-चर्याओं, चेष्टाओं और प्रवृत्तियों से ही मिलने लगेगी । आगे चल कर, उन 'स्वभाव-प्रभव' गुणों के उपयुक्त ही उस के संस्कार आचार शिक्षण और कार्ययोग्यत्व होंगे; तथा अन्त मे तदनुकूल ही उस के कर्म ( कर्त्तव्य और वृत्तिरूप ) अध्ययन अध्यापनादि प्रविभक्त होंगे और उसे तदर्ह 'वर्ण' ब्राह्मणत्व प्राप्त हो जायगा । वर्णप्राप्ति की यही प्रक्रिया यथागुणवृत्त और यथायोग्य क्षत्रिय आदि के लिये भी लागू होती है ।

धर्मप्रस्थानभेदेऽपि येषां वृत्त्या समानता, तेषामेवैकवर्णत्वं, नाऽऽकृत्या न च जन्मना।
यथा गौडादिजात्या वा शैवधर्मादिना मिथः भिन्नानां, ब्राह्मणो वर्णो विद्यावृत्त्यैव कल्पितः;
तथैव यवनादीनां विद्यामात्रोपजीविनाम्, जातिधर्मादिभेदेऽपि, ब्राह्मण्यमनुमन्यते।
यथा दैत्यकुले जाताः, रक्षोवंशेऽपि चोद्गताः, पुराणेष्वितिहासेषु ब्राह्मणाः सन्ति वर्णिताः।
वेदघोषं हि लङ्कायां शुश्राव ब्रह्मरक्षसाम् आञ्जनेयश्चरन्रात्रौ कर्म गौप्तचरं श्रितः।
धर्मैकत्वेऽपि शाक्तादेर्वर्णभेदो व्यवस्थितः, गुणकर्मानुसारिण्या स्वस्ववृत्त्या नियन्त्रितः।
शेषवर्णव्यवस्थायां चैष न्यायः प्रवर्त्तते, वृत्त्यैव क्षत्रियो वैश्यः शूद्रो वेति विनिर्णयः।
यत्र वंशक्रमादेका वृत्तिरेवानुवर्तते, तत्र वर्णोऽपि जातित्वं जन्मनाऽऽपद्यते कुले।
जातिवर्णत्वयोरैक्यमनेनैवाभिसन्धिना, क्वचिदुक्तं; न तत्त्वेन तयोरैक्यमिति स्थितिः।
का ते जातिरिति प्रश्ने, ब्राह्मणोऽहमितीदृशः व्यवहारोऽस्ति लोके यः, सोऽपि प्रोक्ताभिसन्धिकः
वस्तुतस्तु न चैकत्वं जातिवर्णत्वयोरिति वक्ष्यामो दशमाध्याये विवेकेन समासतः।
स्वधर्मो विहितः शास्त्रे, तत्र स्वपदबोधितः वर्ण एवेति, तद्धर्मः, स्वधर्म इति गृह्यते।
स द्विधा, कारकश्चेति, कर्त्तव्य इति च, स्मृतः; आद्यो 'वृत्ता'त्मक,श्चान्त्यः कर्मयोगस्तु 'वृत्ति'कृत्।
वर्णानां कारको धर्मो 'वृत्त'रूपः शमादिकः; कर्त्तव्यस्तु सदाचारो, 'वृत्ति'हेतुश्च यः स्मृतः।

"श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्,
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः"। ( भ० गी० ३-३५ )
"वरं स्वधर्मो विगुणो* न पारक्यः स्वनुष्ठितः,
परधर्मेण जीवन्हि सद्यः पतति जातितः"। ( मनु० १०-९७ )

---

आर्ष धर्मशास्त्रों की सूक्ष्म अन्वीक्षा करने से वर्णव्यवस्था वा वैज्ञानिक समाजव्यूहन के विषय मे निम्नलिखित बातें ज्ञात होती हैं--

I. मुख्यतः दो प्रकार के वर्णधर्म हैं, कारक और कर्त्तव्य। इनमे वर्णकारक धर्म, कारण--कार्यरूप से दो भागों में बाँटे जा सकते हैं।

सत्त्व रजस् तमस् और अनुद्बुद्ध मिश्र गुणों को कारणरूप वा मूलभूत वर्णकारक धर्म कहते हैं; ये ही मनुष्य की प्रकृति, निसर्ग, वा स्वभाव कहलाते हैं। इन्हीं स्वभावभूत मूल गुणों से शम, शौर्य आदि जिन गुणधर्मों का 'प्रभव' ( उत्पत्ति ) होता है, अथवा ऐसे स्वभाव ही जिन के प्रभव ( कारण ) होते हैं, वे कार्यरूप वर्णकारक धर्म कहलाते हैं; इन्हीं को 'स्वभाव-प्रभव गुण', सहज कर्म, स्वभावज कर्म, और 'वृत्त' आदि शब्दों से अभिहित करते हैं। ये सत्त्वादि गुणमय मूलस्वभावभूत धर्म, और तत्प्रभव ( तज्जन्य ) शम-शौर्यादिरूप गुण-धर्म, इस लिये वर्णकारक कहलाते हैं कि इन्हीं के अनुसार वा इन्हीं से, मनुष्य के सूक्ष्म और स्थूल शरीर के वर्ण बनते हैं; अर्थात् सत्त्वप्रधान मनुष्य मे तत्प्रभव शम दम आदि गुणवृत्त उत्पन्न

---

* विगुणत्वं तु धर्माणां बोध्यं सप्रतियोगिकं, तन्मिथःपरधर्माऽऽप्य-फलाऽऽसाधनतांशतः
प्राकृतानां च लोकानां दृष्ट्यैव; न तु तत्त्वतः। यथा ज्ञानप्रधानानां धर्मे ह्यध्यापनादिके
बहुवित्तार्जनाभावाद् वैगुण्यमिव लक्ष्यते; यथा शौर्यादिमुख्यानां क्षत्राणां खलनिग्रहे
धर्मे शमादिवैगुण्यं विभातीवाल्पमेधसः। एवं विट्-शूद्रयोर्धर्मे वैगुण्यार्थोऽवधीयताम्।
साधनादेश्च वैकल्ये न्यूनत्वे वा, फलस्य च अलाभेऽपि च वैगुण्यं धर्मे भवितुमर्हति।
एवं च साधनादीनां वैकल्येऽपि, फलस्य च स्वल्पलाभे त्वलाभे वा सेव्यः स्वधर्म एव हि;
परधर्माऽवरोधेन न कार्यो वृत्ति-सङ्करः; एवमाद्याशयो ज्ञेयो धर्म-वैगुण्यवाग्गतः।

इत्यादिषु स्वधर्मेण वृत्तिधर्मो विवक्षितः, भयोक्तेः पतनोक्तेश्च परधर्मेण जीवताम्।
"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः..., श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन् नाऽऽप्नोति किल्बिषम्,
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्"। ( भ० गी० अ० १८ )
इत्यादिषु स्वधर्मेण तत्तद्योग्यस्वभावजम् वर्णकारककर्मैव सत्त्वादिगुणजं स्मृतम्।
स्वभावाऽनुगुणो धर्मो ब्राह्मणादेः शमादिकः शौर्याद्यैर्विगुणश्चाऽपि श्रेयान्सात्म्यतया भवेत्;
स्वभावविपरीतस्तु धर्मः सम्यगुपासितः, शौर्यादिर्ब्रह्म-वैश्याद्यैरसात्म्यत्वान्न शस्यते।
सत्त्वादि-प्रकृतेर्यस्य यत्तु कर्म स्वभावजम्, तदेव तेन कर्त्तव्यं तद्वर्णत्वप्रसिद्धये।
सत्त्वाधिक-नरस्यास्ति ब्रह्मकर्म स्वभावजम्, ब्राह्मणत्वमतस्तेन स्वस्मिन्साध्यं शमादिभिः।
न सत्त्वप्रकृतेः पुंसः क्षात्रं कर्म स्वभावजम्, नातः स्वनुष्ठितं चापि तस्मिन् शौर्यादि सिध्यति।
एवं रजःप्रधानस्य शौर्यादि सहजं स्मृतम्, तेन साध्यं यथा क्षात्रं, न ब्राह्मण्यादिकं तथा।
रजस्तमःस्वभावस्य कृष्यादौ सहजा क्रिया, अतस्तस्मिन्ननायासाद्वैश्यत्वं सिध्यति द्रुतम्।
इत्थं तमःप्रधानस्य प्रवृत्तिः सहजा स्वतः शारीरश्रमसाध्येषु परिचर्यादिकर्मसु;
तस्मात्स्वाभाविको वर्णस्तस्य शौद्रः प्रकीर्तितः, न स्वनुष्ठितमप्यन्यत्कर्मास्य सहजं भवेत्।
यद्यस्य सहजं कर्म, श्रेयस्तस्य तदेव हि, विगुणं वा सदोषं वा, नाऽन्यकर्म स्वनुष्ठितम्।
सत्त्वादिप्रकृतेः पुंसो यस्य, नैसर्गिकं तु यत् कर्म, तस्यैव तज्ज्ञेयं 'सहजं' तद्गुणाऽनुगम्।
स्वभावनियतं कर्म कुर्वन् क्लेशं च नाश्नुते, स्वभावविपरीतं तु कुर्वन् प्राप्नोति किल्बिषम्।
तस्माद्गुणानुसारेण कर्मणां प्रविभागशः, स्वे स्वे कर्मणि संसिद्धस्तत्तद्वर्णत्वमाप्नुयात्।
एवं कारक-कर्त्तव्यभेदाद्धर्मो द्विधा स्मृतः, आद्यः स्वभावजः पुंसां द्वितीयस्तु तदाश्रितः।
सत्त्वादिगुणवत्त्वेन ब्रह्मकर्मादियोग्यताम्, सुनिश्चित्यादितो बालान् तत्कारयति सद्गुरुः।
संस्कारादिक्रमात्तेषु कर्मभिस्तत्स्वभावजैः, वर्णत्वं गमितेष्वेव वृत्तिधर्मो नियम्यते।
अस्वभावजधर्मेण सम्यग्वर्णो न सिध्यति, वृत्तेरनियमादेवं न समाजे व्यवस्थितिः।
तस्माच्च द्विविधस्यापि कर्मणोऽस्ति स्वधर्मता, इयांस्तत्र विशेषस्तु धर्मशास्त्रेषु दृश्यते।

---

हो जाते हैं उन से इस के सूक्ष्म शरीर मे ब्रह्मवर्चस, ज्ञान आदि सूक्ष्म वर्ण, तथा स्थूल शरीर मे गौर रङ्ग शुचि-आचार पिङ्गल-कपिल केश आदि स्थूल वर्ण वा उनके स्वरूप-लक्षण उत्पन्न हो जाते हैं। अनन्तर उन्हीं स्वभावप्रभवगुणों के आधार पर तत्तद्वर्ण के विशेष कर्म प्रविभक्त किये जाते हैं; इसी अर्थ का निर्देश, भगवान् ने--"गुण-कर्मविभागशः" "कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः" इन वाक्यों से सुस्पष्ट किया है।

II. कर्त्तव्यरूप वर्णधर्म भी दो विभागों मे विभक्त हैं; उन मे एक को 'वृत्त' और दूसरे को 'वृत्ति'धर्म कहते हैं। इनमे 'वृत्त' से शिक्षा रक्षा पोषण और सेवारूप, वर्णों के सामाजिक कर्त्तव्य की विवक्षा है। यद्यपि 'वृत्त' शब्द से वर्णकारक स्वभावप्रभव गुणधर्म, वर्णत्वसम्पादक संस्कार आचार आदि, और वर्णस्वरूपाधायक अध्ययनादि कर्म भी बोधित होते हैं; तथापि उनका ग्रहण यहाँ इस लिये अभिप्रेत नहीं है कि वर्णकारक धर्म मे ही उनका संग्रह है; और वे सब वर्णों के साधारण धर्म हैं; अतः यहाँ 'वृत्त' शब्द का विशेष अर्थ ( प्रत्येक वर्ण का विशेष धर्म, तत्तत्सामाजिक कर्त्तव्य ) ही अभीष्ट है। दूसरा, 'वृत्ति'रूप वर्णधर्म, अत्यन्त प्रसिद्धार्थक है; प्रत्येक वर्ण की जीविका के लिये जो विशेष विशेष ( अध्यापन, करादान, कृषि-वाणिज्यादि और शिल्प कारुकर्म आदि ) कार्य-कर्म, उन के गुणवृत्त के उपयुक्त, नियत हों, उन सब का

'शम' इत्यादि गीतोक्तं यत्तु कर्म स्वभावजम् , तद् , वर्णकारको धर्मः सर्वजातिषु संभवेत् ।
अर्थात् कुलेषु सर्वेषु स्युः सत्त्वादिगुणाऽधिकाः वालाः शमादिधर्माणो ब्राह्मण्याद्यधिकारिणः ;
तस्मात्साधारणो धर्मश्चातुर्वर्ण्ये शमादिकः , अध्यापनादिरूपस्तु ब्राह्मणादि-विशेषगः ।
शूद्रजेऽपि हि सत्त्वाढ्ये संभवन्ति शमादयः ; अध्यापनं तु वृत्त्यर्थं नाऽब्राह्मण्यं गतोऽर्हति ।
अध्यापनादि यत्कर्म स्मृतं वृत्तिनियामकम् , तत्स्वधर्मोऽस्ति विप्रादेरसाधारणरूपतः ।
सत्त्वादिगुणमूलेन कर्मणैव शमादिना स्वभावजेन वर्णस्तु पूर्वं निर्णीयते नृणाम् ;
पश्चात्तदनुसारेण संस्काराध्ययनादिकम् , वर्णकर्म, स्वधर्मेण वृत्तिश्च विनियस्यते ।
स्वधर्मस्य परित्यागे परधर्मस्य संग्रहे दोषोऽपि वृत्तिधर्माणामाशयेनैव दर्शितः ।
वृत्तिकर्मैव वर्णानां स्वधर्मोऽस्ति पृथक् पृथक् , तत्त्यागे कथितो दोषः परवृत्त्यार्थसंग्रहे ।
अविशेषेण सर्वेषामनुष्ठेयाः शमादयः , न विशिष्य स्वधर्मत्वं तेषां कस्यापि युज्यते ।
क्षत्रादिष्वपि शस्यन्ते ब्रह्मधर्माः शमादयः , ब्रह्ममात्रस्वधर्मत्वं तस्मात्तेषां न विद्यते ।
"यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह" * "शूद्रो यज्ञेऽनवक्लृप्तः" तत्सामर्थ्याद्यभावतः ।
"इज्या-ऽध्ययन-दानानि" समानानि चतुर्ष्वपि वर्णेषु, शूद्रवर्जं तु त्रिष्वेवेति मतं क्वचित् ;
"चातुर्वर्ण्यस्य कर्माणि, चातुर्वर्ण्यं च, केवलं असृजत्स हि यज्ञार्थं पूर्वमेव प्रजापतिः" †
चातुर्वर्ण्ये निषिध्यन्ते वृत्तिधर्माः परस्परम् , तस्मादध्यापनादीनां ब्राह्मणादिस्वधर्मता ।
तत्तद्वर्णत्वयोग्यानां कर्म तत्तत्स्वभावजम् , तत्तत्स्वधर्मरूपं तु तत्तद्वर्णकरत्वतः ।
यत्र स्वभावजाः सन्ति सत्त्वमूलाः शमादयः , स यः कोऽपीह वर्णेन ब्राह्मणः स्यादिति स्थितिः ।
ब्राह्मणत्वं गतस्यैव पश्चादध्यापनादयः , स्वधर्मत्वेन युज्यन्ते वृत्तिहेतोरनापदि ।
एष एवास्ति सन्न्यायः शेषवर्णेष्वपि त्रिषु , कर्मणा वर्णताप्राप्तौ कर्मयोगे च तद्भवे ।
येषु स्वभावजं न स्याद्ब्रह्मकर्म शमादिकम् , विश्वामित्रवदभ्यासादपि तत्तेषु जायते
यस्मात्-शमादि कर्मैव ब्राह्मण्यार्थमनुष्ठितम् , विश्वामित्रादिभिः पूर्वं न त्वेवाध्यापनादिकम् ;
कृत्वा ब्राह्मण्यसंप्राप्तिं पूर्वं सत्त्वशमादिभिः , वृत्तिकर्माऽन्वतिष्ठंस्तु पश्चात्ते हि यथोचितम् ;
विश्वामित्रस्य विख्यातं याजनं, च प्रतिग्रहः , महाकुलपतेस्तस्याऽध्यापनं चाऽस्ति नः श्रुतम् ;
तस्मादपि शमाद्येव वर्णकारकमिष्यते ; अध्यापनादिकं तूक्तं वर्णानां वृत्तिकारकम् ।
अध्यापनादिहीनानां ब्राह्मणत्वं न हीयते ; शम-शौचादिहीनानां तदेव च्यवते नृणाम् ।
आपत्काले स्ववृत्तीनां परित्यागो विधीयते , अन्यवृत्तिग्रहश्चापि;न तु शौचादि-कर्मणाम् ।

समावेश 'वृत्तिधर्म' मे होता है । ये वृत्त और वृत्तिरूप कर्म ही स्वभावप्रभवगुणों के अनुसार प्रविभक्त हो कर मनुष्य को वर्ण का अन्तिम और प्रायः चिरस्थायी, यावज्जीवभावी, स्वरूप प्रदान कर देते हैं ।

III. उपर्युक्त दोनों प्रकार के वर्णधर्मों मे से पहला ( कारकरूप ) सभी वर्णों के लिये समान वा चारो वर्णों का साधरण धर्म है । इसका तात्पर्य यह है कि शम शौर्य आदि गुणधर्म से युक्त मनुष्य विविध कुलों जातियों वा वर्णों मे उत्पन्न हो जाते हैं; किसी एक ही कुल वंश जाति वा वर्ण मे नियमतः और वंशपरम्परा से किसी एक ही वर्ण के स्वभावप्रभव गुणवृत्त का अनुवर्त्तन नहीं होता; अर्थात् ऐसी वंशाऽनुक्रमणी कोई जाति संभव नहीं हो सकती है, जिसकी सभी सन्ततियां नियतरूपसे सदैव एक ही वर्ण के स्वभावप्रभव गुणधर्म से युक्त ही उत्पन्न होती रहें । ब्राह्मण माता-पिता के सब सन्तान, ब्राह्मस्वभाववाले ही नहीं होते; उनमे क्षात्र वैश्य और

* कू० पु० पू० अ० २ । † म० भा० अनु० ४८, ३ ।

आपद्धर्मोऽपि वर्णानां साऽपवादोऽनुमन्यते पश्चादेतन्निमित्तेन प्रायश्चित्तविधानतः ।
नित्यं वर्णकरं कर्म सात्त्विकादि-शमादिकम् , संस्कारादि तु नैमित्तं, काम्यमध्यापनादिकम् ।
यतः सर्वाधिकारोऽस्ति वर्णकारककर्मसु , अतः साधारणो धर्मो नृणामुक्तः शमादिकः ।
ब्राह्मणादिकमुद्दिश्य विहितोऽध्यापनादिकः असाधारणधर्मोऽस्ति तत्तद्वर्णस्य वृत्तये ।
"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका , त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति ,
अध्यापनं, याजनं च, तृतीयश्च प्रतिग्रहः ; वैश्यं प्रति तथैवेति निवर्तेरन्निति स्थितिः"
इत्थं च ब्राह्मणाद्यर्थे याजनादिनियन्त्रणात् , वृत्तिकर्मैव वर्णानां धर्मो वैशेषिकः स्मृतः ।
अवृत्त्यर्थं, तथापत्सु वृत्त्यर्थमपि, चेतरे कर्त्तुमर्हन्ति तत्कालं यावद्धर्मान्तरग्रहम् ।
अर्थाज् , ज्ञानप्रचारार्थं पुरस्कारं विना नृभिः सर्वैरध्यापनं कर्त्तुं शक्यते; न तु वृत्तये ;
वृत्त्यर्थं केवलं तद्धि ब्राह्मणस्य नियम्यते ; शिक्षार्थं तु स्वपुत्रादिः क्षत्राद्यैरपि पाठ्यते ;
एवं राष्ट्रादिरक्षार्थं जाते सति प्रयोजने , क्षत्रकर्माऽपि युद्धादि कर्त्तव्यं ब्राह्मणादिभिः ;
न वृत्त्यर्थं; तदर्थं तु क्षत्रियस्यैव तन्मतम् ; अन्येषां पोषणायैव वैश्यकर्म तथेतरे
कर्त्तुमर्हन्त्यनापत्सु, न तु वृत्त्यर्थमात्मनः ; एवं लोकोपकारार्थं शूद्रकर्म द्विजातिभिः
स्वयंसेवकभावेन कर्त्तव्यं; न भृतेः कृते ; भृत्यर्थं शूद्रवर्णानामेव सेवादि शस्यते ;
आपत्सु त्वन्यवृत्त्याऽपि स्ववृत्त्या जीवनेऽक्षमैः जीवितव्यमवश्यं; तन् न स्याद्धर्मोपघातकं ;
साक्षाद्धर्मरहस्यज्ञो विश्वामित्रः श्वजाघनीम् आत्मरक्षार्थमापत्सु श्वपाकाद् अहरद् ऋषिः ;
"एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ;
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् , जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ;
तस्मात्कौन्तेय, विदुषा धर्माऽधर्मविनिश्चये बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं कृतात्मना"†

शौद्रस्वभाव के लोग भी होते हैं । ऐसे ही क्षत्रियप्रभृति के सन्तानों में भी ब्राह्म आदि स्वभाव के लोग होते हैं । इस विषय मे—

सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते,
ब्राह्मः स्वभावः सुश्रोणि, समः सर्वत्र मे मतः"

[ लोक मे सभी, 'वृत्त' से, ब्राह्मण होते है; क्योंकि ब्राह्मस्वभाव सर्वत्र ( सभी वर्णोंके सन्तानों मे ) सम है; अर्थात् केवल ब्राह्मण माता-पिता से ही ब्राह्मस्वभाव का सन्तान नहीं होता, प्रत्युत सभी वर्णों और कुल-जातियों मे ब्राह्मवृत्त के मनुष्य उत्पन्न होते हैं; अतः 'वृत्त' के कारण ही सभी जातियों के लोगों मे ब्राह्मण होते हैं.] महाभारत और ब्राह्मपुराण का यह वचन है; तथा ऐसे ही अन्यान्य वेद-पुराणों के भी प्रमाण हैं । यही बात क्षात्र आदि स्वभाव के विषय मे भी समझनी चाहिये ।

यद्यपि इस मानी मे प्रत्येक वर्ण के कर्त्तव्यरूप धर्म भी चारो वर्णों के लिये समान हैं; क्योंकि सब वर्णों मे सभी सामाजिक कार्यों और पेशों के स्वरूपयोग्य, प्रभविष्णु, लोग उत्पन्न होते हैं; तथापि कारक धर्मों को ही चातुर्वर्ण्य के लिये साधारण, और 'कर्त्तव्य' को तत्तद्वर्ण का विशेष धर्म कहने का तात्त्विक अभिप्राय यह है कि स्वभावप्रभव गुणों के अनुसार प्रविभक्त कर्म (कर्त्तव्य) के द्वारा एक स्थिर वर्ण हो जाने पर भी, अन्य वर्णों के गुणवृत्त सामान्यतः गौणरूप से, सभी वर्ण के लोगों मे सम्भव हो सकते और होते हैं; फिर भी उन से मुख्य वर्ण वा उसके विशेषधर्म मे कोई बाधा वा हानि नहीं होती; न वर्णसङ्करता फैल कर समाज का ही

† म० भा० शां० १४१, १००–२

गुणाः कर्म च योनिश्च त्रयं वर्णस्य कारणम्, एकैकेनांशिको वर्णः, पूर्णस्तत्त्रययोगजः।
एतद्वर्णव्यवस्थायां मूलकारणमिष्यते, वृत्तिकर्मानुसाराच्च क्रियते वर्णसंग्रहः।
वैदेशिका इहागत्य भारते निवसन्ति ये, यथावृत्ति भवेत्तेषां वर्णव्यूहे प्रवेशनम्।
तेषामपि च सन्तानाः प्रजायन्त इहैव ये, गुण-कर्मानुसारेण तेषां वर्णविनिर्णयः।
यावद्यत्रानुवर्तन्ते गुणकर्माणि जन्मना, वंशानुक्रमशस्तावत्तत्र वर्णव्यवस्थितिः।
गुणकर्मविहीनेन जन्मना नास्ति वर्णता, जातिशेषस्य पुंसः स्याद्वृत्त्या वर्णविपर्ययः।
प्राग्व्यवस्थाप्यते वर्णः शमाद्यैर्गुणकर्मभिः, पश्चादध्ययनाद्यैस्तु वर्णाचारैः प्रयुज्यते।
अतो नाध्ययनादीनां गणना वर्णकर्मणाम्, शम-शौर्यादिवर्गेषु वर्णकारककर्मसु।
वर्णकारककर्माणि सत्त्वादिगुणजानि तु, गीतायां भगवानाह शम इत्यादिना स्वयम्।
"चातुर्वर्ण्यं मया सृष्टं गुण-कर्मविभागशः", (भ० गी० ४-१३)
"ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप, कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः *"

ह्रास करती है। कोई व्यक्ति यदि सत्त्वगुणप्रधानस्वभाव, और तत्प्रभव ब्राह्मसम्पदभिजात, शम दम तपः शौच ज्ञान विज्ञानादि स्वभावज ब्रह्मधर्म से सम्पन्न होने के कारण, इन सद्गुणों के आधार पर, प्रविभक्त कर्म ( शिक्षादि सामाजिक कर्त्तव्य और प्रतिग्रहादि जीविकाकर्म ) से युक्त होकर, ब्राह्मण वर्ण का हो जाय, तो भी साधारणरूप से उसमे अन्य, क्षत्रियादि वर्ण के, शौर्यादि गुणधर्म भी रह सकते हैं; इसमे कोई विरोध की बात नहीं है। लोक मे प्रत्यक्ष ही देखा जाता है, और इतिहास-पुराणों मे भी इसके अगणित उदाहरण पाये जाते हैं, कि एक एक मनुष्य गौणप्रधानभाव से अनेक वर्णों के गुणधर्म से युक्त होता है। विश्वामित्र, परशुराम, दुर्वासा, द्रोणाचार्य, जनक, भीष्म, युधिष्ठिर प्रभृतियों मे गौणप्रधानरूप से ब्राह्म और क्षात्र दोनों ही धर्म सङ्गत थे; सूत, विदुर, और धर्मव्याधप्रभृतियों मे, शौद्र और ब्राह्मधर्मों का संमिश्रण था; ऐसे ही उदाहरण अन्यान्य वर्णधर्मों के परस्पर सम्मिश्रण के भी, अगणित दिये जा सकते हैं। वस्तुतः तो सभी वर्णों के सव गुणधर्म, सभी वर्णों मे अन्योन्यमिथुन रहते हैं, क्योंकि वे जिन स्वभावभूत सत्त्वादिगुणों के 'प्रभव' वा परिणाम होते हैं, वे स्वयं सर्वथा परस्पर सम्बद्ध, अविभजनीय, मिथोऽनुस्यूत रहते हैं। अतः 'ब्रह्मकर्म, क्षत्रकर्म' आदि शब्दों से भूयोवाद मे ही तात्पर्य है; अर्थात् जिसमे स्वभावज ब्रह्मकर्म की, सत्त्वमय ब्राह्मस्वभाव से प्रसूत शम आदि गुणधर्म की, प्रधानता हो, वह उसके उपयुक्त संस्कार आचार शिक्षा दीक्षा के द्वारा योग्य होकर, तदनुसार प्रविभक्त, अपने हिस्से मे प्राप्त, कर्मयोग से ब्राह्मणवर्णवाला हो जाता है; उस दशा मे भी उसमे सामान्यरूप से वर्णान्तर के गुणधर्म भी रह सकते और प्रायः रहते हैं। यही बात अन्य वर्णों के विषय में भी चरितार्थ है।

किन्तु प्रत्येक वर्ण का विशेष धर्मरूप कर्त्तव्य और वृत्तिकर्म, केवल उसी में व्यवस्थित रहता है; कोई भी व्यक्ति एक स्थिर वर्ण को प्राप्त कर लेने के बाद स्ववर्ण के लिये 'गुणकर्मविभागशः' स्वभाव से प्रभूत गुणों के अनुसार प्रविभक्त, स्वधर्मरूप विशेष सामाजिक कर्त्तव्य और जीविका-कर्म को ही अपना सकता है; एक साथ अन्यान्य वर्णों के विशेष कर्त्तव्यों और जीविका कर्मों का सङ्कर नहीं कर सकता। सारांश यह कि चारों वर्णों के शम, शौर्य, कृष्यादि-कर्मदाक्ष्य, और शारीरश्रमकार्मण्य-प्रभृति गुणधर्म, प्रधानरूप से ब्राह्मण आदि एक एक वर्ण मे

* भ० गी० १८-४१

तुर्ये वर्णव्यवस्थोक्ता प्रसंगाद्गुणकर्मभिः, अष्टादशे तु तत्रोक्तं 'गुणकर्म' विवेचितम्।
अत्र प्रकरणादेव ग्राह्याः सत्त्वादयो गुणाः स्वभावप्रभवा,स्ते च हेतवो वर्णकर्मणाम्।
स्वस्य भावः स्वजन्मैव, येषां तेन सहैव तु गुणानां प्रभव,स्ते च स्वभावप्रभवाः स्मृताः;
तैरेव प्रविभक्तानि वर्णकर्माणि सर्वशः, कर्माणीत्यस्य पूर्वं च कारकाणीति शिष्यते।
"ब्राह्मण-क्षत्रिय-विशां शूद्राणां कारकाणि तु; कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः",
"शमो दमस्तपः शौचं क्षांतिरार्जवमेव च; ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्; दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्; परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।"";
'ब्रह्मकर्म' पदस्यार्थः कर्म ब्राह्मणकारकम्; क्षात्रकर्मादिशब्दार्थश्चैवं क्षत्रादिकारकम्।
महाभारतटीकायां चैतत्सर्वं निरूपितम्, गीताया 'ब्राह्मणेत्यादि'श्लोकव्याख्याप्रसङ्गतः[२५]

रहने पर भी, सामान्यतः और गौणरूप से अन्य वर्णों मे भी अविरोधतः रहते हैं; अतएव इनको चातुर्वर्ण्य का साधारण धर्म भी कह सकते हैं। पर एक वर्ण का सामाजिक कर्त्तव्य और जीविका-कर्मात्मक अनन्य-साधारण धर्म, दूसरे वर्ण के लिये अत्यन्त प्रतिषिद्ध है; अतः वह तत्तद्वर्ण का विशेषधर्म वा 'स्वधर्म' कहलाता है; इसके साथ 'परधर्मों' का सङ्कर करना समाज तथा व्यक्ति दोनों के लिये 'भयावह' संघर्षकारक, विप्लवप्रवर्तक, होता है। अतः सामान्यगुण धर्मों, नीतिधर्मों, और मोक्षधर्मों का, सभी वर्णों मे, सामान्य-विशेषरूप से, वा गौण-प्रधानभाव से, मिश्रण होने पर भी, विशेष वर्णधर्मों का असाङ्कर्य ही सुरक्षणीय है।

। भगवद्गीता अ० १८।

२५..."ब्राह्मणस्वभावस्य सत्त्वगुण एव प्रभवः, शान्तत्वात्; क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः, ईश्वरस्वभावत्वात्; वैश्यस्वभावस्य तमउपसर्जनं रजः, कृष्यादिस्वभावत्वात्; शूद्रस्वभावस्य रजउपसर्जनं तमः, शुश्रूषास्वभावत्वात्। अथवा स्वभावः प्राग्भवीयः संस्कारः, तत्प्रभवैः (गुणैः); न तु जातिमात्रप्रभवैः पक्षिणामाकाशगमनवत्। अत एव जात्यन्तरव्यावृत्तानां धर्माणां शमादिषु पाठो न दृश्यते। न हि शूद्राद् व्यावृत्तं त्रैवर्णिकानामध्ययनादिकं वा, इतरद्वयाद्व्यावृत्तं ब्राह्मणानामध्यापनादिकं वेह पठ्यते। किन्तु सर्वे सर्वजातीयानां साधारणा धर्माः शमादयो दृश्यन्ते। यथा हि—द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं, भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टम्; एवमितरत्र। तस्माद्यस्मिन्कस्मिंश्चिद्वर्णे शमादयो दृश्यन्ते, स शूद्रोऽपि एतैर्लक्षणैर्ब्राह्मण एव ज्ञातव्यः; यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते स शूद्र एव। तथा च आरण्यके सर्पभूतं नहुषं प्रति युधिष्ठिरवाक्यम्—

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा दृश्यन्ते यत्र नागेन्द्र, स ब्राह्मण इति स्मृतः; तथा
यत्रैतल्लक्ष्यते, सर्प, वृत्तं स ब्राह्मणः स्मृतः; यत्रैतन्न भवेत्,सर्प, तं शूद्रमिति निर्दिशेत्; इति।

जातिधर्मास्तु मनुना दर्शिताः—

अध्यापनं चाध्ययनं यजनं याजनं तथा दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्;
प्रजानां रक्षणं दानमिज्याध्ययनमेव च विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत्;
पशूनां रक्षणं दानमिज्याऽध्ययनमेव च वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च;
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्—एतेषामेव वर्णानां शुश्रूषामनसूयया;' इति।

तस्मात्, शमादयो यत्राऽब्राह्मणे ब्राह्मणे वा दृश्यन्ते, स एव ब्राह्मण इत्यत्र विवक्षितम्; 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते पराम्' इत्यत्र तु मनूक्तान्यध्यापनादीन्येव स्वकर्माणि ग्राह्याणि, न तु शमादीनि; न हि ज्ञान-विज्ञानवतोऽन्या संसिद्धिः लब्धव्यास्ति; तस्मात्, शमादयो ब्रह्मिष्ठस्यैव ब्राह्मणस्य लक्षणमिति दिक्।" (भ० गी० अ० १८ श्लो० ४१ नी० टीका)

सुस्पष्टं 'कर्मणा वर्णः' भारतेऽरण्यपर्वणि, शान्त्यनुशासनादौ च, हेतुपूर्वो निरूपितः—
"ब्राह्मणः को भवेद्राजन्", इत्थं पृष्टो युधिष्ठिरः सर्पात्मनहुषेणा,ऽधस्तनं प्राह सदुत्तरम्—
"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा दृश्यन्ते यत्र नागेन्द्र, स ब्राह्मण इति स्मृतः।"
"चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि, शूद्रेष्वपि च सत्यं च दानमक्रोध एव च
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर"; इत्थं पर्य्यनुयुक्तश्च पुनः प्राह युधिष्ठिरः—
"शूद्रे तु यद्भवेल्लक्ष्म, द्विजे तच्च न विद्यते, न वै शूद्रो भवेच्छूद्रो, ब्राह्मणो न च ब्राह्मणः;
यत्रैतल्लक्ष्यते सर्प, वृत्तं, स ब्राह्मणः स्मृतः; यत्रैतन्न भवेत्सर्प, तं शूद्रमिति निर्दिशेत्।"
"यदि ते वृत्ततो राजन्, ब्राह्मणः प्रसमीक्षितः, वृथा जातिस्तदाऽऽयुष्मन्, कृतिर्यावन्न विद्यते;"
एवं पर्य्यनुयोगे तु सर्पेणोत्थापिते पुनः युधिष्ठिरो महाप्राज्ञः प्रत्यवोचत; तद्यथा—
"जातिरत्र महासर्प, मनुष्यत्वे महामते सङ्करात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः।
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः; वाङ्मैथुनमथो जन्म मरणं च समं नृणाम्।
इदमार्षं प्रमाणं च 'ये यजामहे' इत्यपि; तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः[२६]।
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते; तत्राऽस्य माता सावित्री, पिता त्वाचार्य उच्यते;
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते; तस्मिन्नेवं मतिद्वैधे, मनुः स्वायम्भुवोऽब्रवीत्[२७]।

अस्तु, हमें यहां यह कहना है कि चातुर्वर्ण्य के कारक और कर्त्तव्यरूप धर्मों की विवेचना से, और तदनुसार वर्णप्राप्ति की इतिकर्त्तव्यता प्रक्रिया और क्रम-नियमों की मीमांसा करने से भी, 'कर्मणा वर्णः' का सत्सिद्धान्त ही, वेद-शास्त्र-पुराणादिसम्मत, और लोकपरलोकोपयोगी प्रमाणित होता है।

(१०) महाभारत के 'वन' 'शान्ति' और 'अनुशासन' पर्व मे विशेष रूपसे, तथा अन्य पर्वों मे यथाप्रसंग सामान्यरूप से, प्रश्नोत्तरपूर्वक, 'कर्मणा वर्णः' के आर्ष सत्सिद्धान्त का ही, सद्बुद्धिग्राह्य, सद्वैज्ञानिक, हेतुओं, सत्तर्कों, से, सुस्पष्ट और असन्दिग्ध निरूपण, है; इस लिये भी गुण-कर्मानुसारिणी वर्णव्यवस्था ही, आर्षी, सच्छास्त्रीया, प्राचीनतमा और सतत लोकोपयोगिनी प्रमाणित होती है। संस्कृत भाष्य मे और टिप्पणों मे, इस विषय के जो मूल उद्धरण तत्तदाकर ग्रन्थों से यहाँ दिये गये हैं, वे प्रायः स्पष्टार्थक हैं; अतः हिन्दी मे उनका 'सार' देकर अनावश्यक ग्रन्थविस्तर नहीं किया है।

२६. "वागादीनामिव मैथुनस्याऽपि साधारण्याज्जातिर्दुर्ज्ञेया, तथा च श्रुतिः—'न चैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा?" इति ब्राह्मण्ये संशयमुपन्यस्यति। ननु जात्यनिश्चये कथं 'ब्राह्मणोऽहम्' इत्याद्यभिमानपुरःसरं यागादौ प्रवर्तेत? इत्याशङ्क्याऽऽह—'इदमार्षम्' इति। अत्र 'ये यजामहे' इत्यनेन च—'ये वयं स्मो ब्राह्मणा अन्ये वा, ते वयं यजामहे' इति ब्राह्मण्येऽनवधारणं दर्शितम्; मन्त्रलिङ्गमपि—'य एवाऽस्मि, स सन् यजे' इति। नन्वेवं स्वस्याऽब्राह्मणत्वपक्षे यज्ञस्याऽनिष्टकरत्वमापतति, इत्याशङ्क्य तत्परिहाराय यागे यजमानस्य प्रवरणं क्रियते याज्ञिकैः; तच्च 'अग्निर्होता' इति मन्त्रे 'गौतमवद्, अयास्यवद्, अङ्गिरोवद्, ब्राह्मणवद्, इति कुर्वन्ति; तस्य च प्रयोजनम्—अब्राह्मणस्याऽपि यजमानस्य ब्राह्मणत्वसम्पादनम्; तस्मात्, आचार एव ब्राह्मण्यनिश्चये हेतुः, वेदप्रामाण्यात्, इत्युपसंहरति—'तस्माद्' इति" [ तत्रत्यं नैलकण्ठीयम् ]

२७. "कर्मैव ब्राह्मण्यहेतुः, इत्याह—'प्राग्' इति। 'नाभिवर्धनात्' नालच्छेदनात्। 'जायते' संयुज्यते; वेदसंयोगाऽनन्तरमेव ब्राह्मण्यमुदेति, तद्वत्प्रवरणेनाऽपीति भावः। 'द्वैधे' जातौ संशये सति" [ नैलकण्ठीयम् ]

कृतकृत्याः सर्व-( पुनः )-वर्णा , यदि वृत्तं न (पश्यति) विद्यते ;
सङ्करस्त्वत्र नागेन्द्र , बलवान्प्रसमीक्षितः ।
यत्रेदानीं महासर्प, संस्कृतं वृत्तमिष्यते , तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम*"
अग्रे यक्षस्य प्रश्नेऽपि तत्रैवारण्यपर्वणि , 'वृत्तेन' कर्मणैवाऽऽह वर्णसंस्थां युधिष्ठिरः—
राजन्, कुलेन, वृत्तेन, स्वाध्यायेन, श्रुतेन वा ब्राह्मण्यं केन भवति ? प्रब्रूह्येतत् सुनिश्चितम् ।
शृणु यक्ष, कुलं तात, न स्वाध्यायो, न च श्रुतं , कारणानि द्विजत्वस्य; वृत्तमेव तु कारणम् ।
वृत्तं यत्नेन संरक्ष्यं, ब्राह्मणेन विशेषतः , अक्षीणवृत्तो न क्षीणो, वृत्ततस्तु हतो हतः ।
पठकाः, पाठकाश्चैव, ये चान्ये शास्त्रचिन्तकाः , सर्वे व्यसनिनो मूर्खाः; यः क्रियावान् स पण्डितः ।
चतुर्वेदोऽपि दुर्वृत्तः, स शूद्रादतिरिच्यते ; योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः†"
"शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः वैश्यत्वं लभते ब्रह्मन्, क्षत्रियत्वं तथैव च ,
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते‡" इत्याह गुणतो वर्णं धर्मव्याधोऽपि कौशिकम् ।
सद्वृत्तस्थं च तं व्याधं ब्राह्मणं प्राह कौशिकः—"साम्प्रतं च मतो मेऽसि ब्राह्मणो, नाऽत्र संशयः ।
ब्राह्मणः पतनीयेषु वर्त्तमानो विकर्मसु दाम्भिको दुष्कृतप्रज्ञः शूद्रेण सदृशो भवेत् ।
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः तं ब्राह्मणमहं मन्ये, वृत्तेन हि भवेद्विजः§"
शान्तिपर्वणि चाऽप्येवं प्रश्नोत्तरपुरःसरं , 'कर्मणा वर्ण' इत्येव सिद्धान्तः प्रतिपादितः—
भरद्वाजः—"चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ,
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः ;
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः , सर्वेषां नः प्रभवति, कस्माद्वर्णो विभिद्यते ?
स्वेदमूत्रपुरीषाणि , श्लेष्मा पित्तं सशोणितं , तनुः क्षरति सर्वेषां, कस्माद् वर्णो विभज्यते ?
जङ्गमानामसङ्ख्येयाः स्थावराणां च जातयः , तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ?
भृगुः—न विशेषोऽस्ति वर्णानां, सर्वं ब्राह्ममिदं जगत् ,
ब्रह्मणा पूर्वसृष्टं हि, कर्मभिर्वर्णतां गतम्[२८] ।

* म० भा० वन० अ० १८० । † म० भा० वन० अ० ३१३ । ‡ म० भा० वन० २१२, ११–१२ । जातस्येति कर्मणि षष्ठी; वैश्यत्वं कर्तृ, सद्गुणवन्तं वैश्यत्वादयः स्वयमायान्तीति गुणकृत एव वर्णविभागो, न जातिकृत इति भावः । 'ब्राह्मण्यं' ब्रह्मवित्त्वम्" [ नी० कं० ] § म० भा० वन० २१६, १२–१५ ।

२८ ब्रह्मणोऽपत्यत्वात् सर्वे मनुष्याः पूर्वं ब्राह्मणा एव संजाताः; पश्चात्कालक्रमेण तत्तद्विशेषकर्मभिः क्षत्रियादिवर्णतां गताः; अत एव क्षत्रियादीनां ब्राह्मणादुत्पत्तिः शास्त्रेषु बहुत्रोक्ता संगच्छते; तथा हि—

"तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये , तृप्त्यर्थं पितृदेवानां, धर्मसंरक्षणाय च ;
सर्वस्य प्रभवो विप्राः श्रुताऽध्ययनशीलिनः , तेभ्यः क्रियापराः श्रेष्ठा,स्तेभ्योऽप्यध्यात्मवित्तमाः"
[ याज्ञवल्क्यस्मृतौ १, १९८–९९ ]

"असृजद् ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्" [ म० भा० शां० १८८, १ ]
"संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः" [ म० भा० शां० ६०, ४२ ]
"सृष्टयः सन्तानानि, तेन सर्वेषां वर्णानां ब्राह्मणजत्वाद् अस्त्येव शूद्रस्याऽपि यज्ञेऽधिकार इत्यर्थः" [नीलकं०] इति ।

"स्वं दैवतं ब्राह्मणः स्वेन नित्यं परान्वर्णानयजन्नेवमासीत् ,
अधरो वितानः; संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः ;
तस्माद्वर्णा ऋजवो, ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव ;
एकं साम, यजुरेकमृगेका, विप्रश्चैको निश्चये तेषु सृष्टः"
[ म० भा० शां० ६०, ४६—४७ ]

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः, त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः।
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः, स्वधर्मान्नाऽनुतिष्ठन्ति, ते द्विजा वैश्यतां गताः।
हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः, कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः।
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः; विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः*।

भरद्वाजः—"ब्राह्मणः केन भवति, क्षत्रियो वा द्विजोत्तम,
वैश्यः, शूद्रश्च विप्रर्षे, तद्ब्रूहि वदतां वर,"

भृगुः—"जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः
वेदाऽध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः
शौचाऽऽचारस्थितः सम्यग्विघसाशी गुरुप्रियः नित्यव्रती सत्यपरः, स वै ब्राह्मण उच्यते;
सत्यं दानमथाऽद्रोहः आनृशंस्यं त्रपा घृणा तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः।
क्षत्रजं सेवते कर्म वेदाऽध्ययनसङ्गतः दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते।
वणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः वेदाऽध्ययनसम्पन्नः स वैश्य इति संज्ञितः।
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः।
शूद्रे चैतद्भवेल्लक्ष्म, द्विजे तच्च न विद्यते, न वै शूद्रो भवेच्छूद्रो, ब्राह्मणो न च ब्राह्मणः†।"

जनकः—"वर्णो विशेषवर्णानां महर्षे, केन जायते,
एतदिच्छाम्यहं ज्ञातुं, तद् ब्रूहि वदतां वर;
यदेतज्जायतेऽपत्यं स एवाऽयमिति श्रुतिः; कथं ब्राह्मणतो जातो विशेषग्रहणं गतः?

पराशरः—"एवमेतन्महाराज, येन जातः स एव सः[२९];
तपसस्त्वपकर्षेण जातिग्रहणतां गतः।

---

"यस्मात् त्रिपु वर्णेषु ब्राह्मणो यज्ञस्रष्टा, तस्मात् सर्वेऽपि वर्णा 'ऋजवः' साधव एव, यज्ञसंयोगात्। एवं धर्मसाम्येऽपि, ज्ञातिसाम्यं नास्ति, इत्याशङ्क्य आह—'ज्ञातिवर्णा' अपि क्षत्रिय-वैश्य-शूद्राः, 'तस्य' ब्राह्मणस्यैव, 'विकारे' क्षत्रियादिकन्यासूत्पन्ने मूर्धाऽभिषिक्तादौ, संसृज्यन्त एव; तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम्। तत्र हेतुमाह—'एक' इति; तेषु तत्त्वनिश्चये क्रियमाणे एको 'विप्रो' ब्रह्मैव, प्रथमो ब्राह्मणः 'सृष्टो' जातः; ब्राह्मणसन्ततित्वात् सर्वेऽप्येते ( क्षत्रिय-वैश्य-शूद्रा इति तत्तत्कर्मयोगात्संज्ञिता अपि मनुष्या ब्रह्मसन्तानत्वान्मूलजातितः ) ब्राह्मणा एवेत्यर्थः। तत्र दृष्टान्तः—'एकं सामेति'; 'अकारो वै सर्वा वाक्, सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति श्रुतेः, एकम् अकाररूपमेव अक्षरं यथा सामादिरूपं, तथा ब्रह्मैव ब्राह्मणादि ( चातुर्वर्ण्य ) रूपमित्यर्थः" (नीलकं०)
अस्मिन्विषये ११९—२० पृष्ठस्थं १ टिप्पणं द्रष्टव्यम्।

* म० भा० शां० अ० १८८। † म० भा० शां० अ० १८९। शूद्रे चेति; 'एतत्' सत्यादिसप्तकं, 'द्विजे' त्रैवर्णिके; धर्म एव वर्णविभागे कारणं, न जातिरित्यर्थः" [ नी० कं० ]

२९. "माता भस्त्रा, पितुः पुत्रो, येन ( यस्मात् ) जातः स एव सः"
[ म० भा० आदि० ७४, ११०; भा० ९, २०, २१; वि० पु० ४, १९, १२; हरिवं० १, ३२, ११ ]

"माता जानाति यद्गोत्रं, माता जानाति यस्य सः, मातुर्भरणमात्रेण प्रीतिः स्नेहः, पितुः प्रजाः"
[ म० भा० शां० २६६, ३५ ]

"मातरं विना ब्रह्माऽपि गर्भस्य धातारं न वेदेति भावः।...तथा च श्रुतिः—'जनयितुः पुत्रो भवति, साम्पराये मोघं वेत्ता कुरुते तन्तुमेतम्' इति" हरिवंशे ( १, २५, ४२–४४ ) नैलकण्ठीयम्

"एवं धर्मान् श्रुत्वा उत्तरोत्तरमुत्कर्षं प्रपित्सुः पृच्छति—वर्ण इति। तत्र वर्णाः पूर्वोक्ताः षट्, कृष्ण–धूम्र-नील-रक्त-पीत-श्वेताः क्रमेण बुद्धिसत्त्वे तमो-रजोंऽशयोराधिक्य-साम्या-ऽपकर्षजाः। तत्र 'विशेषः' स्वाभाविकवर्णादाधिक्यं, तमो-रजसोर्ह्रास इत्यर्थः।

सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति सम्भवः ; अतोऽन्यतरतो हीनादवरो नाम जायते।
वक्त्राद्,भुजाभ्याम्,ऊरुभ्यां, पद्भ्यां चैवाऽथ जज्ञिरे, सृजतः प्रजापतेर्लोकानिति ब्रह्मविदो विदुः ;
मुखजा ब्राह्मणास्तात, बाहुजाः क्षत्रियाः स्मृताः , ऊरुजा धनिनो राजन्, पादजाः परिचारकाः ;
चतुर्णामेव वर्णानामागमः पुरुषर्षभ ;...

जनकः--ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथं?
बहूनीह हि लोके वै गोत्राणि मुनिसत्तम।

यत्र तत्र कथं जाताः, स्वयोनिं मुनयो गताः, शुद्धयोनौ समुत्पन्ना वियोनौ च तथा परे?

पराशरः--राजन्नैतद्भवेद्ग्राह्यम्, अपकृष्टेन जन्मना
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम्;

उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह, स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ;
पितामहश्च मे पूर्वमृष्यश्रृङ्गश्च काश्यपः, वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः,
यवक्रीतश्च नृपते, द्रोणश्च वदतां वरः, आयुर्मतङ्गो दत्तश्च द्रुमदो मात्स्य एव च ;
एते स्वां प्रकृतिं प्राप्ता वैदेह, तपसोच्छ्रयात्, प्रतिष्ठिता वेदविदो दमेन तपसैव हि।
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव, अङ्गिराः, कश्यपश्चैव, वसिष्ठो, भृगुरेव च।
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव, नामधेयानि तपसा, तानि च ग्रहणं सताम्।

जनकः—किं, कर्म दूषयत्येनम् अथो जातिर्महामुने?
सन्देहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि।

पराशरः—असंशयं महाराज, उभयं दोषकारकं,
कर्म चैव हि जातिश्च; विशेषं तु निशामय—

जात्या च कर्मणा चैव दुष्टं कर्म न सेवते, जात्या दुष्टश्च यः, पापं न करोति, स पूरुषः ;

---

यदेतदिति। सात्त्विकस्य ब्रह्मणोऽपत्यैर्लोकैः सात्त्विकैरेव ब्राह्मणैर्भवितव्यं; कथं रजआदिप्रधानं क्षत्रादिविशेषजातिग्रहणं तत उत्पन्नस्येत्याक्षेपार्थः।

तपसोऽप्यपकर्षः कुत इत्यत आह—सुक्षेत्रादिति। सात्त्विकयोर्दम्पत्योः पुण्यः सम्भवः, तयोरन्यतरस्य हीनत्वे हीन इत्यर्थः। अन्यतरहीनत्वमपि कुत इत्याशङ्क्य उत्पत्तिस्थानभेदादित्याह—वक्त्रादिति—द्वाभ्याम्।

ननु निरवयवादव्याकृतादजगज्जातमिति सर्वत्र श्रूयते; तत्र कुतोऽवयवकल्पनेति शङ्कते-ब्रह्मणेति; 'नानात्वं' ब्रह्म-क्षत्रियादिभावेन भिन्नत्वम्, 'गोत्रतः' अन्वयतः, 'गोत्राणि; ब्रह्म-क्षत्रियादीनि, तस्माज्जातितारतम्यमयुक्तमित्यर्थः। तस्यादरेऽपि व्यभिचारमाह—यत्रेति। यथा काक्षीवता शूद्रायामुत्पादिताः पुत्रा ब्राह्मणत्वं नीता; न तु ते निषादत्वं प्राप्ता इत्यर्थः; तस्मात्कारणद्वारा कार्यद्वारा वा जातिभेदो न युक्त इति भावः।

तदेतदभ्युपगमेनैव परिहरिष्यन्नस्याऽर्थस्य दुर्ग्रहत्वमाह—राजन्निति। 'अपकृष्टेन' वर्णतारतम्यदृष्टिमता रजस्तमोग्रस्तेन। मूलेति। 'मूलं' कार्यब्रह्म, तत्र चत्वारि 'गोत्राणि' नामानि, समुत्पन्नानि, गुणयोगात्; तथा च श्रुतिः—'एतमङ्गिरा इत्याक्षते, अङ्गानां हि रसस्तेनेति, तं देवा अब्रुवन् अयं वैनः सर्वेषां वसिष्ठ इति, तस्माद्वसिष्ठ इत्याचक्षते एतमेव सन्तम्" इत्यादिका। कर्मतोऽन्यानि गोत्राणि--'तस्येदं विश्वं मित्रमासीद् यदिदं किं च, तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तम्' इत्यादिश्रुतेः कर्मजान्येव सर्वाणि गोत्राणि, परमात्मनि कर्मजन्यैव वर्णाऽऽश्रम-गोत्रकल्पनेति प्रघट्टकार्थः।

दुष्टकर्मत्यागे जाति-कर्मणोर्द्वयोरन्यतरस्याऽपि च हेतुत्वमाह द्वाभ्याम्—जात्येति" इति नैलकण्ठीयम्।

जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतं, कर्म तद् दूषयत्येनं; तस्मात्कर्म न शोभनम् †"
आनुशासनिके चोक्ता कर्मणा वर्णसंस्थितिः; तथा ब्रह्मपुराणेऽपि किञ्चित्पाठप्रभेदतः—
"ज्ञान-विज्ञानसम्पन्नः संस्कृतो वेदपारगः वैश्यो भवति धर्मात्मा, क्षत्रियः स्वेन कर्मणा;
एतैः कर्मफलैर्देवि, न्यूनजातिकुलोद्भवः शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः।
ब्राह्मणो वाप्यसद्वृत्तः सर्वसङ्करभोजनः, स ब्राह्मण्यं समुत्सृज्य शूद्रो भवति तादृशः।
कर्मभिः शुचिभिर्देवि, शुद्धात्मा विजितेन्द्रियः, शूद्रोऽपि द्विजवत्सेव्यः, इति ब्रह्माऽब्रवीत्स्वयम्;
स्वभावः कर्म च शुभं यत्र शूद्रेऽपि तिष्ठति, विशिष्टः स द्विजातिभ्यो विज्ञेय, इति मे मतिः।
न योनिर्नाऽपि संस्कारो न श्रुतं न च सन्ततिः, कारणानि द्विजत्वस्य; वृत्तमेव तु कारणम्।
सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते; वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं च गच्छति।
ब्राह्मः स्वभावः सुश्रोणि, समः सर्वत्र मे मतः; निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति, स द्विजः*"
इत्थं तु कर्मणवोक्ता शास्त्र वर्णव्यवस्थितिः, वर्णान्तरत्वसम्प्राप्तिश्चैकस्मिन्नपि जन्मनि।
यत्तमेश्वरसंवादे, मतङ्गेन्द्रकथासु च, ब्राह्मण्यमन्यजातीयैर्दुष्प्राप्यमिति वर्णितम्;
तत्तु सत्त्व-शमादीनां स्वाभाव्यगुण-कर्मणां तमआद्यभिसंजातैर्दुष्प्राप्यत्वविवक्षया।
रजस्तमःस्वभावो हि मानवो योऽस्ति जन्मतः, न सत्त्वप्रकृतिः प्रायः स स्याज्जन्मान्तरं विना।
"प्रकृतिं यान्ति भूतानि" "स्वभावो मूर्ध्नि वर्तते" तमआद्यभिजातैर्न ब्राह्मण्यं सहजं भवेत्;
"जन्मनैव महाभागो ब्राह्मणो जायते" नरः सत्त्वप्रकृतिजैर्युक्तो ब्राह्मधर्मैः शमादिभिः
ब्राह्मणस्येदृशस्य स्यात्संभवः सर्वजातिषु; रजस्तमोऽभिजातैस्तु तद्ब्राह्मण्यं सुदुर्लभम्।
इत्येवमाशयस्तादृग्वाक्यानामिष्यते बुधैः 'कर्मणा वर्ण' इत्यर्थैर्वाक्यान्तरैः समन्वय.त्।
मतङ्गे भर्त्सनावाक्यं यच्चावोचत गर्दभी तेनाऽपि 'कर्मणा वर्ण' इत्येवार्थोऽभिव्यज्यते।
"ब्राह्मणे दारुणं नास्ति, मैत्रो ब्राह्मण उच्यते, आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति?
अयं तु पापप्रकृतिर्बाले न कुरुते दयां, स्वयोनिं मानयत्येष, भावो भावं नियच्छति†"
इत्येवं दारुणं कर्म, मैत्रत्वविरहादि च मतङ्गे ब्राह्मणत्वस्याऽभावहेतुः प्रदर्शितः।
पश्चात्तु तपसा सोऽपि ब्राह्मण्यं समुपागमत् जीवन्नेवेति वर्णत्वं कर्मणैव व्यवस्थितम्।
अत एवार्षशास्त्रेषु ब्राह्मणत्वं महर्षिभिः 'वृत्त' रूपं विनिर्दिष्टं; न तु वा जातिलक्षणम् —
"येन पूर्णमिवाऽऽकाशं भवेदेकेन सर्वदा, शून्यं येन समा(जना)कीर्णं, तं देवा ब्राह्मणं विदुः;
येन केन चिदा(च्छन्नो)गच्छन्येन केनचिदासितः, यत्र क्वचन शायी च, तं देवा ब्राह्मणं विदुः;
अहेरिवगणाद्भीतः, सौ-हृदा (हित्या) न्नरकादिव,
(कुणपादिव च स्त्रीभ्यः) कृपणादिव नारीभ्यः तं देवा ब्राह्मणं विदुः;
न क्रु-द्धो (च्येत्), न प्रहृष्ये(च्च)त, मानितोऽमानितः (च यः) स्वयं
सर्वभूतेष्वभयदः, तं देवा ब्राह्मणं विदुः;
नाऽभिनन्देत मरणं, नाऽभिनन्देत जीवितं,
कालमेव प्रतीक्षेत, (निदेशं भृतको यथा) तं देवा ब्राह्मणं विदुः;

---

† म० भा० शां० अ० २९६। यः जात्या, कर्मणा च दुष्टं कर्म न सेवते; यश्च जात्या दुष्टोऽपि पापं न करोति; स एव पुरुषः, प्रशस्यत इति शेषः। जात्या प्रधानमपि पुरुषं 'धिक्कृतं' कुत्सितं, कर्म कुर्वाणं, तत् कर्म दूषयति; तस्मात् 'कर्म' धिक्कृतं, कुत्सितं, लोकविक्रुष्टं वा कर्म, 'न शोभनं', प्रशस्तं न भवतीत्यर्थः। एतेन कर्मण एव वर्णव्यवस्थायां मुख्यं हेतुत्वं; जातेस्तु सन्मातृरूपाया अधिजननद्वारा तदुपकारकत्वमात्रमेवेति मन्तव्यम्।

* म० भा० अनु० अ० १४३ श्लो० ४५–५२; ब्रह्मपु० अ० २२३ श्लो० ५२–५९।

† म० भा० अनु० २७, १२–१३।

"विमुक्तः सर्वसङ्गेभ्यो मुनिराकाशवत्स्थितः
विष्णुमेधकरं (अस्वमेकचरं) शान्तं तं देवा ब्राह्मणं विदुः ;
जीवितं यस्य धर्मार्थे ( र्थं ), धर्मो रत्य-( हर्य )-र्थमेव च ,
अहो-रात्राश्च ( रात्राणि ) पुण्यार्थे तं देवा ब्राह्मणं विदुः ;
निराशिषमनारम्भं निर्नमस्कारमस्तुतिं
निर्मुक्तं बन्धनैः सर्वैः ( योगेन क्षीणकर्माणं ) तं देवा ब्राह्मणं विदुः*"

"क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम , यः क्रोधमोहौ त्यजति, तं देवा ब्राह्मणं विदुः ;
यो वदेदिह सत्यानि, गुरुं सन्तोषयेत च , हिंसितश्च न हिंसेत, तं देवा ब्राह्मणं विदुः ;
जितेन्द्रियो, धर्मपरः, स्वाध्यायनिरतः शुचिः , काम-क्रोधौ वशौ यस्य, तं देवा ब्राह्मणं विदुः ;
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः सर्वधर्मेषु चरतः, तं देवा ब्राह्मणं विदुः ;
योऽध्यापयेद्, अधीयीत, यजेद्वा, याजयीत वा , दद्याद्वाऽपि यथाशक्ति, तं देवा ब्राह्मणं विदुः ;
ब्रह्मचारी वदान्यो योऽप्यधीयाद् द्विजपुङ्गव , स्वाध्यायवानमत्तो वै, तं देवा ब्राह्मणं विदुः※"

"क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियं तमग्र्यं ब्राह्मणं मन्ये, शेषाः शूद्रा इति स्मृताः ।
अग्निहोत्रव्रतपरान् स्वाध्यायनिरताञ्शुचीन् उपवासरतान्दान्तांस्तान्देवा ब्राह्मणान् विदुः ;
न जात्या पूजितो राजन्, गुणाः कल्याणकारकाः , चण्डालमपि वृत्तस्थं, तं देवा ब्राह्मणं विदुः ।
अग्निहोत्र-परिभ्रष्टः, प्रसक्तः क्रय-विक्रयैः , वर्ण(वृत्ति)सङ्करकर्त्ता च ब्राह्मणो वृषलैः समः ।
यस्य वेदश्रुतिर्नष्टा, कर्षकश्चाऽपि यो द्विजः , विकर्मसेवी कौन्तेय, स वै वृषल उच्यते ;
वृषो हि धर्मो विज्ञेयः, तस्य यः कुरुते लयं , वृषलं तं विदुर्देवा, निकृष्टं श्वपचादपि †"

"अनुत्तरीयवसनमनुपस्तीर्णशायिनं , बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ;
द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः , परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ;
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या , गतिज्ञः सर्वभूतानां, तं देवा ब्राह्मणं विदुः ;
अभयं सर्वभूतेभ्यः, सर्वेषामभयं यतः , सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः‡"

धर्मराजः—"पण्डितो विश्रुतः पुत्रः स वै नाम्ना युधिष्ठिरः
वैशम्पायनमागत्य प्राञ्जलिः परिपृच्छति ;
के च ते ब्राह्मणाः प्रोक्ताः? किं वा ब्राह्मणलक्षणम् ? एतदिच्छामि भो ज्ञातुं, तद्भवान्व्याकरोतु मे ।

वैशम्पायनः—क्षान्त्यादिभिर्गुणैर्युक्तस्त्यक्तदण्डो निरामिषः ,
न हन्ति सर्वभूतानि, प्रथमं ब्रह्मलक्षणम् ;
यदा सर्वं परद्रव्यं पथि वा यदि वा गृहे अदत्तं नैव गृह्णाति, द्वितीयं ब्रह्मलक्षणम् ;
त्यक्त्वा क्रूरस्वभावं तु निर्ममो निष्परिग्रहः , मुक्तश्चरति यो नित्यं तृतीयं ब्रह्मलशणम् ;
देवमानुषनारीणां, तिर्यग्योनिगतेष्वपि मैथुनं हि सदा त्यक्तं, चतुर्थं ब्रह्मलक्षणम् ;
सत्यं शौचं, दया शौचं, शौचमिन्द्रियनिग्रहः , सर्वभूते दया शौचं, तपश्शौचं च पञ्चमम् ,
पञ्चलक्षणसम्पन्नः ईदृशो यो भवेद् द्विजः , तमहं ब्राह्मणं ब्रूयां, शेषाः शूद्रा युधिष्ठिर ।
न कुलेन, न जात्या वा, क्रियाभिर्ब्राह्मणो भवेत ; चण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर ।
एकवर्णमिदं विश्वं पूर्वमासीद्युधिष्ठिर , कर्मक्रियाविशेषेण चातुर्वर्ण्यं प्रतिष्ठितम् ।
सर्वे हि योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः एकेन्द्रियेन्द्रियार्थाश्च, तस्माच्छीलगुणो द्विजः ;
शूद्रोऽपि शीलसम्पन्नो गुणवान्ब्राह्मणो भवेत् , ब्राह्मणोऽपि क्रियाहीनः शूद्रादप्यवरो भवेत् ।

---

* पाद्मे सृष्टिखं० अ० १५ श्लो० ३६७—८०; म० भा० शां० अ० २४५ ।

※ म० भा० वन० अ० २०६ श्लो० ३२—३८ ।

† म० भा० अश्व० वैष्णवधर्मप० अ० ११६ कुं० सं० । ‡ म० भा० शां० २६९, ३०—३३ ।

पञ्चेन्द्रियार्णवं घोरं यदि शूद्रोऽपि तीर्णवान्, तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर।
न जातिर्दृश्यते राजन्, गुणाः कल्याणकारकाः; तस्माच्छूद्रप्रसूतोऽपि ब्राह्मणो गुणवान्नरः।
जीवितं यस्य धर्मार्थं, परार्थं यस्य जीवितं, अहोरात्रं चरेत्क्षान्तिं तं देवा ब्राह्मणं विदुः;
परित्यज्य गृहावासं ये स्थिता मोक्षकांक्षिणः, कामेष्वसक्ताः कौन्तेय, ब्राह्मणास्ते युधिष्ठिर।
अहिंसा निर्ममत्वं वा सतः कृत्यस्य वर्धनं, रागद्वेषनिवृत्तत्वमेतद्ब्राह्मणलक्षणम्;
क्षमा दया दमो दानं सत्यं शौचं स्मृतिर्घृणा विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्;
यदा न कुरुते पापं सर्वभूतेषु दारुणं,
कायेन मनसा वाचा, ब्रह्म सम्पद्यते तदा" [ महाभारते ]
"जन्मना यस्तु निर्विण्णो मरणेन तथैव च,
आधिभिर्व्याधिभिश्चैव, तं देवा ब्राह्मणं विदुः" [ शङ्खस्मृ० ७, १० ]
"यस्स कायेन वाचाय मनसा नत्थि दुक्कतं संवुतं तीहि ठानेहि तमहं ब्रूमि ब्राह्मणं।
न जटाहि न गोत्तेहि न जच्चा होति ब्राह्मणो; यम्हि सच्चं च धम्मो च, सो सुची सो च ब्राह्मणो।
न चाहं ब्राह्मणं ब्रूमि योनिजं मत्तिसम्भवं; अकिञ्चनं अनादानं तमहं ब्रूमि ब्राह्मणं"
इत्येवं भगवान्बुद्धः प्राह 'धम्मपदे'; तथा पाद्मे च ब्रह्मणो वाक्यं नारदं प्रति; तद्यथा—
"सच्छ्रोत्रियकुले जातोऽप्यक्रियो नैव पूजितः; असत्क्षेत्रकुले पूज्यो, व्यास-वैभाण्डकौ यथा।
क्षत्रियाणां कुले जातो विश्वामित्रोऽस्ति मत्समः; वेश्यापुत्रो वसिष्ठश्चा;ऽन्ये सिद्धा अन्त्यजातयः।
मन्त्रव्रतविहीनश्च वेदविद्यागुणैरपि, यज्ञदानादिभिर्मुक्तो ब्राह्मणश्चाऽधमाऽधमः;
यज्ञार्थका देवलका नाक्षत्रा ग्रामयाजकाः परदाररता नित्यं पञ्चैते ब्राह्मणाऽधमाः;
मन्त्रसंस्कारहीनाश्च शुचिसंयमवर्जिताः मोघाशिनो दुरात्मानो ब्राह्मणाश्चाऽधमाऽधमाः;
अपि स्तेयरता मूढाः सर्वधर्मविवर्जिताः उन्मार्गगामिनो नित्यं ब्राह्मणाश्चाऽधमाऽधमाः;
श्राद्धादिकर्मरहिता गुरुसेवाविवर्जिताः अमन्त्रा भिन्नमर्यादा एते सर्वेऽधमाऽधमाः;
असंभाष्या इमे दुष्टाः सर्वे निरयगामिनः अमेध्यास्ते दुराचारा अपूज्याश्च समन्ततः" 卐
गुण-कर्माऽनुसारेण तारतम्यमुपाश्रिताः अत्रिस्मृत्यादिषु प्रोक्ता ब्राह्मणा बहुजातयः
"जन्मना जायते शूद्रः[३०], संस्कारादू द्विज उच्यते, विद्यया याति विप्रत्वं, श्रोत्रियस्त्रिभिरेव च;

卐 पद्मपु० सृष्टिखं० अ० ४३—४४।

३०. यहाँ, आज काल छपी कुछ पुस्तकों मे "जन्मना ब्राह्मणो ज्ञेयः" ऐसा प्रक्षिप्त पाठ भी मिलता है; पर, यह स्पष्टतः स्वतोव्याहत, और प्रसङ्गसङ्गति के विरुद्ध भी है। स्वतोव्याहत इस लिये है कि इसी श्लोक के तृतीय चरण मे "विद्यया याति विप्रत्वं" कहा है; विप्र और ब्राह्मण, एक ही पदार्थ है; अतः व्यर्थ की पुनरुक्ति से स्वतोव्याहति, आपाततः, स्थूल दृष्टि से भी, प्रत्यक्ष ही प्रतीत होती है। स्यात् इस श्लोक के प्रथम पाद का पाठ बदलते समय, प्रक्षेपक महाशय, तृतीय पाद को भी बदल डालना वा निकाल डालना भूल गये। "जन्मना जायते शूद्रः" यह मूल पाठ इतना प्रसिद्ध ( अनेक प्रामाणिक निबन्धों में उद्धृत, और अगणित विद्वानों के कण्ठस्थ ) है कि इसकी मौलिकता में प्रमाण देने की आवश्यकता ही नहीं है। इसी पाठ का औचित्य और मूलत्व प्रमाणित होता है; क्योंकि विशेषरूप से केवल ब्राह्मण के विषय मे ही यह श्लोक नहीं पढ़ा गया है; किन्तु, सभी मनुष्यों के, जो स्वभावतः जन्म से शूद्र ( अनुद्बुद्धगुणधर्मवाले ) होते हैं, संस्कार और विद्यादिगुणयोग से क्रमशः विकसित होनेवाले आप्तत्व शिष्टत्व, वेदवित्त्व, श्रुतिप्रत्यक्षहेतुत्व, अध्यात्मवित्तमत्व को, और तज्जन्य उनकी धर्मप्रवक्तृत्व की योग्यता वा आर्हन्ती को बोधित करने के लिये ही यह प्रसङ्ग उठाया गया है। इस प्रसङ्ग मे पठित, अत्रिसंहिता के उपर्युक्त तीनों श्लोकों का पिण्डीकृत अक्षरार्थ यह है कि 'प्रत्येक मनुष्य, जन्म से 'शूद्र' उत्पन्न होता है, संस्कार से 'द्विज' कहा जाता है, विद्या से विप्रत्व ( ब्राह्मणत्व ) को प्राप्त करता है, और इन तीनों से

वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते, तदाऽसौ वेदवित्प्रोक्तो, वचनं तस्य पावनम्;
एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः, स ज्ञेयः परमो धर्मो, नाऽज्ञानामुदितोऽयुतैः‡"
"देवो, मुनिः, द्विजो, राजा, वैश्यः, शूद्रो, निषादकः, पशुः, म्लेच्छोऽपि, चाण्डालो, विप्रा दशविधाः स्मृता
संध्यां स्नानं जपं होमं देवतानित्यपूजनम् अतिथिं वैश्वदेवं च, देवब्राह्मण उच्यते;
शाके पत्रे फले मूले वनवासे सदा रतः, निरतोऽहरहः श्राद्धे, स विप्रो मुनिरुच्यते;
वेदान्तं पठते नित्यं, सर्वसङ्गं परित्यजेत्, सांख्ययोगविचारस्थः, स विप्रो द्विज उच्यते;
अस्त्राहताश्च धन्वानः सङ्ग्रामे सर्वसंमुखे, आरम्भे निर्जिता येन, स विप्रः क्षत्र उच्यते;
कृषिकर्मरतो यश्च, गवां च प्रतिपालकः, वाणिज्यव्यवसायश्च, स विप्रो वैश्य उच्यते;
लाक्षालवणसंमिश्रकुसुम्भ-क्षीर-सर्पिषां विक्रेता मधु-मांसानां, स विप्रः शूद्र उच्यते;
चौरश्च तस्करश्चैव सूचको दंशकस्तथा मत्स्य-मांसे सदा लुब्धो, विप्रो निषाद उच्यते;
ब्रह्मतत्त्वं न जानाति, ब्रह्मसूत्रेण गर्वितः, तेनैव स च पापेन विप्रः पशुरुदाहृतः;
वापीकूपतडागानामारामस्य सरःसु च निःशङ्कं रोधकश्चैव, स विप्रो म्लेच्छ उच्यते;
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः, निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते *"

"विद्यालक्षणसम्पन्नाः सर्वत्र(आम्नाय)समदर्शिनः
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः;
ऋग्यजुःसाम(ऋत्विगाचार्य)सम्पन्नाः स्वेषु कर्मस्ववस्थिताः
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत;

ऐश्वर्यकामा ये चाऽपि सामिषा वाऽपि भारत, निग्रहा-ऽनुग्रहरतांस्तान्द्विजान्क्षत्रियान्विदुः;
ऋत्विक् पुरोहितो मन्त्री दूतो वार्ताऽनुकर्षकः, एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत;
गो-ऽजा-ऽवि-महिषाणां च वडवानां च पोषकाः, वृत्त्यर्थं प्रतिपद्यन्ते, तान्वैश्यान्संप्रचक्षते;
अश्वारोहा गजारोहा रथिनोऽथ पदातयः एते वैश्यसमा राजन्, ब्राह्मणानां भवन्त्युत;
जन्म-कर्मविहीना ये कदर्या ब्रह्मबन्धवः, एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत;
अश्रोत्रियाः सर्व(एते)एव, सर्वे चानाहिताऽग्नयः, तान्सर्वान्धार्मिको राजा बलिं विष्टिं च कारयेत्;
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः, एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः§"

---

श्रोत्रिय बन जाता है। जो, वेद और शास्त्रों को, ( अथवा वेदशास्त्र, वेदान्तशास्त्र अध्यात्मविद्या को ) पढ़ता है, और 'शास्त्रार्थ' का शास्त्रोक्त धर्म का, अनुष्ठान करता है, तब वह 'वेदवित्' कहलाता है, उसका वचन पवित्र होता है। ऐसा वेदवित्, अध्यात्मवित्तम, पुरुष, एक भी, अकेला भी, जिस धर्म का आचरण वा उपदेश करे, उसे परम धर्म जानना चाहिये; हज़ारों अज्ञों का कहा हुआ नहीं।' यहाँ 'वेदवित्' शब्द से केवल ब्राह्मण का ग्रहण नहीं किया जा सकता, क्योंकि अब्राह्मण, अवरवर्ण, शूद्र, भी वेदान्तवित्, अध्यात्मवित्तम होता है, और उसे परम धर्म, मोक्षधर्मपर्यन्त, के उपदेश देने का अधिकार, शास्त्रानुसार ही प्राप्त है; "श्रद्दधानः शुभां विद्यामाददीताऽवरादपि, अन्त्यादपि परं धर्मम्" इत्यादि, मनुका धर्मशास्त्रीय वचन, इस विषय मे सुस्पष्टतर प्रमाण हैं; और सूत, विदुर, धर्मव्याध, शठकोपाचार्य-प्रभृति के परमधर्म-प्रवक्तृत्व का इतिहास भी इसका समर्थक है। अतः "जन्मना जायते शूद्रः" यही मूल पाठ है;

"तावच्छूद्रसमो ह्येष यावद्वेदे न जायते" [ मनौ, महाभारते च ]
"वृत्त्या शूद्रसमास्तावद् विज्ञेयास्ते विचक्षणैः यावद्वेदे न जायन्ते, द्विजा ज्ञेयास्ततः परम्"
[ शंखस्मृ० १, ८ ] इत्यादि समानार्थक वाक्यों से भी इसी पाठ की सूचना मिलती है।

‡ अत्रिसं० श्लो० १४१-४२।

* अत्रिसंहितायां श्लो० ३७३-८३ § म० भा० शां० अ० ७६।

"न विद्यया केवलया तपसा वाऽपि पात्रता ;
यत्र वृत्तमिमे चोभे, तद्धि पात्रं प्रकीर्तितम्" [ या० स्मृ० आचाराध्याये श्लो० २०० ]

"मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ; अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ,
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ; तेभ्यः परः परः श्रेष्ठो, विद्यावृत्तो विशेषतः,
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् अनपेतः क्रियाहीनो मात्र इत्यभिधीयते ;
एकोद्देशमतिक्रम्य वेदस्याऽऽदानवानृजुः स ब्राह्मण इति प्रोक्तो निभृतं सत्रवान्घृणी ,
एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च , षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ;
वेद-वेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः , शेषं श्रोत्रियवत्प्राप्तः, सोऽनूचान इति स्मृतः ;
अनूचानगुणोपेतो यज्ञ-स्वाध्याययन्त्रितः , भ्रूण इत्युच्यते प्राज्ञैः शेषभोजी जितेन्द्रियः ;
लौकिकं वैदिकं चैव सर्वं ज्ञानमवाप्य यः आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ;
ऊर्ध्वरेतास्तपस्युग्रो नियताशी त्वसंशयी शापा-ऽनुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ;
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः , ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ; ×
एवमन्वय-विद्याभ्यां वृत्तेन च समुच्छ्रिताः ,
त्रिशुक्ला¶ नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु" [ इति तत्राऽपरार्के देवलः ]

"यं न सन्तं न चाऽसन्तं नाऽश्रुतं न बहुश्रुतं, न सुवृत्तं न दुर्वृत्तं वेद कश्चित् , स ब्राह्मणः;
योगस्तपो दया दानं सत्यं शौचं श्रुतं घृणा, विद्या विज्ञानमास्तिक्यम् , एतद्ब्राह्मणलक्षणम्"
इति च तत्रैव ( याज्ञवल्क्यस्मृतौ अ० १ श्लो० २०० ) अपरार्के वसिष्ठः ।

एवं च भगवानाह भार्गवो राजशास्त्रकृत् 'शुक्रनीति'रिति ख्याते ग्रन्थे लोपाऽवशेषिते—
"न जात्या ब्राह्मणश्चाऽत्र,क्षत्रियो,वैश्य एव वा , न शूद्रो, न च वै म्लेच्छो; भेदिता गुणकर्मभिः;
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं नु ब्राह्मणाः ? न वर्णतो न जनकाद्, ब्राह्मं तेजः प्रपद्यते;
ज्ञानकर्मोपासनाभिर्देवताऽऽराधने रतः , शान्तो दान्तो दयालुश्च ब्राह्मणस्तु गुणैः कृतः;
लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी दुष्टनिग्रहशीलो यः, स वै क्षत्रिय उच्यते;
क्रय-विक्रयकुशला ये नित्यं पण्यजीविनः , पशुरक्षाः, कृषिकरास् , ते वैश्याः कीर्तिता भुवि;
द्विजसेवाऽर्चनरताः, शूराः, शान्ता, जितेन्द्रियाः , सीर-काष्ठ-तृणवहा,स्ते नीत्या शूद्रसंज्ञकाः;
त्यक्तस्वधर्माचरणा, निर्घृणाः, परपीडकाः , चण्डाश्च हिंसका नित्यं,म्लेच्छास्ते ह्यविवेकिनः※"

× "ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनात् 'जात' इत्यभिधीयते । उपनीतमात्रो व्रताऽनुचारी वेदानां किञ्चिदधीत्य 'ब्राह्मणः' । एकां शाखामधीत्य 'श्रोत्रियः' । अङ्गाध्यायी 'अनूचानः' । कल्पाध्यायी 'ऋषिकल्पः' । सूत्रप्रवचनाध्यायी 'भ्रूणः' । चतुर्वेदाद् 'ऋषिः' । अत ऊर्ध्वं 'देवः' । इति बौधायनगृह्यसूत्रे प्रथमप्रश्ने अ० ७ सू० १–८ ।

¶ "अन्वयादीनि त्रीणि 'शुक्लानि' शुद्धानि येषां ते त्रिशुक्लाः" इत्यपरार्कः । अत्र 'अन्वय'शब्दो न ज्ञातिवचनः, किन्तु सच्चरित्रमातापितृविशिष्टकुलमात्रबोधकः; तथा च प्राह "पुंयोगादाख्यायाम्" [ ४।१।४८ ] इति सूत्रे महाभाष्यकृद्भगवान्पतञ्जलिः—

"नैष वर्णवाची; किं तर्हि ? विशुद्धवाची; आतश्च विशुद्धवाच्येवं ह्याह—
'त्रीणि यस्याऽवदातानि विद्या योनिश्च कर्म च ,
एतच्छि( वे )वं विजानीहि ब्राह्मणाऽग्र्यस्य लक्षणम्' इति'

योनिः' इह न जातिः; किन्तु विशुद्धसन्तानाऽधिजननभूमिः सती माता; यत्रेदं वक्ष्यति—
"मातुरग्रेऽधिजननम्" इति ।

※ शुक्रनीतिसारे अ० १ श्लो० ३८–४४ ।

"कर्म-शील-गुणाः पूज्याः;तथाजाति-कुले न;हि , न जात्या, न कुलेनैव, श्रेष्ठत्वं प्रतिपद्यते †"
"चतुर्धाभेदिता जातिः(वर्णः)ब्रह्मणा कर्मभिः पुरा ; कर्मणोत्तम-नीचत्वं, कालतस्तु भवेद्गुणैः;
योऽधीतविद्यः सकलः, स सर्वेषां गुरुर्भवेत् ; न च जात्याऽनधीतस्तु गुरुर्भवितुमर्हति‡"
"विश्वामित्रो, वशिष्ठश्च, मतङ्गो, नारदादयः , तपोविशेषैः सम्प्राप्ता उत्तमत्वं; न जातितः §"
"जात्या न क्षत्रियः प्रोक्तः, क्षतत्राणं करोति यः , चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ×"
"शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवं ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ;
शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम्;
देवगुर्वार्यगोभक्तिस्त्रिवर्गपरिपोषणम् आस्तिक्यमुद्यमो नित्यं नैपुणं वैश्यलक्षणम् ;
शूद्रस्य संह(त)तिः शौचं, सेवा स्वामिन्यमायया, अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ।...
प्रायः स्वभावविहितो नृणां धर्मो युगे युगे वेददृग्भिः स्मृतो राजन्, प्रेत्य चेह च शर्मकृत् ;
वृत्त्या स्वभावकृतया वर्त्तमानः स्वकर्मकृत् ; हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ।...
यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाऽभिव्यञ्जकं , यद्यन्यत्राऽपि दृश्येत, तत्तेनैव विनिर्दिशेत्*"
एकपित्रोः प्रजातानामेकजातिमतां नृणां ज्योतिःशास्त्राऽनुसाराच्च श्रूयते भिन्नवर्णता ।

अन्नप्राशनसंस्कारे शिशोश्चेष्टापरीक्षया तद्वृत्तिनिर्णयः प्रोक्तः, तद्वर्णप्रतिपत्तये—
"कृतप्राशनमुत्सङ्गाद्धात्री बालं समुत्सृजेत् ; कार्यं तस्य परिज्ञानं जीविकाया अनन्तरम् ;
देवताऽग्रेऽथ विन्यस्य शिल्पभाण्डानि सर्वशः , शास्त्राणि चैव, शस्त्राणि, ततः पश्येत्तु लक्षणम्;
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा , जीविका तस्य बालस्य तेनैवेति भविष्यति ¶"

"तस्मिन्काले स्थापयेत्तत्पुरस्ताद् वस्त्रं, शस्त्रं, पुस्तकं, लेखनीं च,
स्वर्णं, रौप्यं; यच्च गृह्णाति बालः, तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ||"

इत्थमादौ भवेद् यत्तु शिशोर्वृत्तिपरीक्षणं , तत्तु सामान्यतो ज्ञेयं शिक्षाद्यर्थं; न चाऽन्तिमम् ;
शिशोः प्रवृत्तिमारम्भे ज्ञात्वा तादृक्परीक्षया , तद्वृत्त्योचितशिक्षार्थं शिक्षकेभ्यो निवेदयेत् ;
ततः संस्कार-शिक्षाद्यैरन्ततो वृत्तिनिश्चये स्थिरे जाते, तदर्हस्तु वर्णस्तस्य नियम्यते ।
ईदृग्वृत्तिपरीक्षाया उपयोगः, प्रयोजनं , 'कर्मणा वर्ण' इत्यस्मिन्पक्ष एवोपपद्यते;

---

† शु० नी० सा० २, ५५ । ‡ शु० नी० सा० अ० ४ प्र० ३ ।

§ शु० नी० सा० अ० ४ प्र० ४ श्लो० ३८ । × म० भा० शां० ७३, २३ कुं० सं० ।

* भा० स्कं० ७ अ० ११ । ¶ पारस्करगृह्यसूत्रस्य ( कां० १ कं १९ ) गदाधरभाष्ये धृताः कारिकाः; "बालं भूमावुपवेश्य तदग्रे पुस्तक-वस्त्र-शस्त्रादिशिल्पानि विन्यस्य जीविकापरीक्षां कुर्यात्; शिशुः स्वेच्छया यत्प्रथमं स्पृशेत्, साऽस्य जीविकेति विद्यात् ; तदुक्तं कारिकायाम्" इति हि तत्रत्या गदाधर भाष्याऽवतरणिका । वीरमित्रोदये अन्नप्राशनसंस्कारे ( पृ० २७९ ) तु इमे श्लोकाः मार्कण्डेयवचनत्वेन स्मृताः स्वल्पपाठभेदेन समुद्धृताश्च दृश्यन्ते ।

|| मुहूर्त्तचिन्तामणौ संस्कारप्रकरणे २२ तमं पद्यम् ।

"तस्मिन्काल इति; स्पष्टार्थं पद्यम् । 'आजीवैः' जीविकाभिः, 'आजीवो जीविका वार्ता' इत्यभिधानात् ; यदाह मार्कण्डेयः—

'अग्रतोऽथ प्रविन्यस्य शिला-( रत्न )-भाण्डानि सर्वशः,
शास्त्राणि चैव व-( शा )-स्त्राणि, ततः पश्येत्तु लक्षणम्;
प्रथमं यत्स्पृशेद्बालो रिङ्गमाणः स्वयं तदा,
जीविका तस्य बालस्य तेनैव तु भविष्यति' इति ।

बहुधा तु जीविकापरीक्षाम् अन्नप्राशनसमय एव कुर्वन्तीति शिष्टाचारः ।" इति तत्रत्या पीयूषधाराऽभिधा टीका ।

२४

ब्राह्मी शास्त्रस्पृशो वृत्तिः,क्षात्री शस्त्रस्पृशस्तथा,रत्नभाण्डस्पृशो वैश्या,शौद्री शिल्पस्पृशः शिशोः; इत्येव स्यादभिप्रायः शिशोर्वृत्तिपरीक्षणे ; जन्मना वर्णसत्त्वे तु तद्वैयर्थ्यं प्रसज्यते; तस्माच्च कर्मणैवाऽस्ति वर्णः सांसिद्धिको नृणां तत्तत्प्रकृतिसात्म्येन वृत्तिधर्मेण निष्ठितः।

वज्रसूच्युपनिषदि तु–अध्यात्मविदामेव ब्राह्मणत्वं समाम्नायते ; ततश्चापि गुणकर्मविभागश एव वर्णव्यवस्था सम्पद्यते ; तद्यथा—

"ब्रह्म-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णाः ; तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं, स्मृतिभिरप्युक्तम्। तत्र चोद्यमस्ति, को वा ब्राह्मणो नाम ? किं जीवः ? किं देहः ? किं जातिः ? किं ज्ञानम् ? किं कर्म ? किं धार्मिक ? इति। तत्र प्रथमो जीवो ब्राह्मण इति चेत्, तन्न; अतीतानागतानेकदेहानां जीवस्यैकरूपत्वात्, एकस्यापि कर्मवशादनेकदेह-संभवात्, सर्वशरीराणां जीवस्यैकरूपत्वाच्च; तस्मान्न जीवो ब्राह्मण इति। तर्हि देहो ब्राह्मण इति चेत्, तन्न; आचण्डालपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वात्, जराम-रणधर्माधर्मादिसाम्यदर्शनाद्, ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्णः इति नियमाभावात्, पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिकृदोषसंभवाच्च; तस्मान्न देहो ब्राह्मण इति। तर्हि जातिर्ब्राह्मण इति चेत्, तन्न; तत्र जात्यन्तरजन्तुषु अनेक-जातिसंभवा महर्षयो बहवः सन्तिः ऋष्यशृङ्गो मृग्याः, कौशिकः कुशात्, जाम्बूको जम्बूकात्, वाल्मीकिर्वल्मीकात्, व्यासः कैवर्तकन्यायाम्, शशपृष्ठाद् गौतमः, वसिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात इति श्रुतत्वात्; एतेषां जात्या विनापि अग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति; तस्मान्न जातिर्ब्राह्मणः। तर्हि ज्ञानं ब्राह्मण इति चेत्, तन्न; क्षत्रियादयोऽपि हि परमार्थदर्शिनो बहवः सन्ति; तस्मान्न, ज्ञानं ब्राह्मणः। तर्हि कर्म ब्राह्मण इति चेत्, तन्न; सर्वेषां प्राणिनां प्रारब्ध-सञ्चिता-ऽऽगामिकर्मसाधर्म्यदर्शनात्, कर्मभिः प्रेरिता जनाः क्रियाः कुर्वन्तीति; तस्मान्न कर्म ब्राह्मण इति। तर्हि धार्मिको ब्राह्मण इति चेत्, तन्न, क्षत्रियादयो हिरण्यदातारो बहवः सन्ति; तस्मान्न धार्मिको ब्राह्मण इति।

तर्हि को ब्राह्मणो नाम ? यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मि-षड्-भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्त-र्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्ष-तया भासमानं करतलामलकवत् साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो भयमात्सर्यतृष्णाशामोहादिरहितो दंभाऽहंकारादिभिरसंस्पृष्टचेता वर्तते, एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुति-स्मृति-पुराणेतिहासानामभिप्रायः। अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव इति।"

छान्दोग्योपनिषदि अज्ञातगोत्रस्य सत्यकाम-जाबालस्य सद्गुणयोगादेव ब्राह्मण्याधिगमः श्रूयते; तद् यथा—

"सत्यकामो ह जाबालो जबालां मातरमामंत्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि, किंगोत्रोऽन्वहमस्मीति ? सा हैनमुवाच, नाहमेतद्वेद तात, यद्गोत्रस्त्वमसि; बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साऽहमेतन्न वेद यद्गोत्रस्त्वमसि; जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसि, स सत्यकाम एव जाबालो ब्रवीथा इति। स ह हारिद्रुमतं गौतममेत्योवाच—ब्रह्मचर्यं भगवति विवत्स्यामि, उपेयां भगवन्तमिति। तं होवाच, किंगोत्रो नु सोम्यासीति ? स होवाच, नाहमेतद् वेद भो यद्गोत्रोऽहमस्मि, अपृच्छं मातरं, सा मा प्रत्यवदत्; बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साऽहमेतन्न वेद यद्गोत्र-स्त्वमसि; जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसीति। सोऽहं सत्यकामो जाबालो-

ऽस्मि भो इति। तं होवाच, नैतदब्राह्मणो विवक्तुमर्हति; समिधं सोम्याहरोप त्वा नेष्ये, न सत्यादगा इति" ( छा० उ० अ० ४ खं ४ )

अत एव "नञ्" सूत्रे ( २।२।६ ) "तेन तुल्यं क्रिया चेद्वतिः" ( ५।१।११५ ) इति सूत्रे च महाभाष्येऽपि तपःश्रुतादिगुणसमुदायनिबन्धनैव वर्णव्यवस्था प्रोक्ता; तद्यथा—

"अथ वा सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते, ब्राह्मणः, क्षत्रियो, वैश्यः, शूद्र³' इति; आतश्च गुणसमुदाय एवं ह्याह—

---

३१ "अस्ति त्रैवर्णिकवत् शूद्रस्याऽपि शास्त्रेऽधिकार इति प्रतिपादितं; सम्प्रति तत्रौपनिषदमुदाहरणं प्रदर्शयन् ब्राह्मणादिशब्दवत् 'शूद्र'शब्दस्य गुणशब्दत्वं प्रतिपादयति—

'शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि' ( ब्रह्मसू० १,३,३४ )

'तदनादरश्रवणात्' तस्माद् हंसाद् ब्रह्मविद्याऽभावप्रयुक्तः स्वात्माऽपकर्षोऽनादरः, तस्याकर्णनाद्, 'अस्य' जानश्रुतेः पौत्रायणस्य, 'शुक्' शोकः समजायत; 'तदाद्रवणात्' तया शुचा ब्रह्मविद्योपदेशार्थमागमनात्, रैक्वस्तं शूद्र इत्यामन्त्र्य ब्रह्मविद्यामुपदिदेश; 'हि' यतः, अतः 'सूच्यते' शूद्रशब्दो ब्राह्मणादिशब्दवद् गुणशब्दो विज्ञाप्यत इत्यर्थः।

छान्दोग्योपनिषदि हि—'जानश्रुतिर्ह पौत्रायणः, श्रद्धादेयो बहुदायी बहुपाक्य आस' ( छा० ४,१,१ ) इत्युपक्रम्य पठ्यते—

'तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे' ( छा० ४,२,१ ); 'तमु ह परः प्रत्युवाच—'अहहारे त्वा शूद्र! तवैव सह गोभिरस्त्विति'। तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे' ( छा० ४,२,३ ); 'तस्या ह मुखमुपोद्गृह्णन्नुवाच 'आजहारेमाः शूद्र! अनेनैव मुखेनालापयिष्यथा इति'। ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास; तस्मै होवाच' (छा० ४,२,५) इति।

तस्यैष संक्षिप्तोऽर्थः—जानश्रुतिः किल पौत्रायणः शूद्रकुलोत्पन्नः कश्चित्प्रजाऽधिपो बभूव; स च यथाविधि क्षात्रधर्मेण प्रजां पालयन् क्षत्रियत्वमुपलेभे। तस्य धर्मात्मनो दानशौण्डस्य राज्ञः सर्वगुणसम्पन्नत्वेऽपि कदाचिन्निशाथामतिपततो हंसाद् ब्रह्मविद्याऽभावप्रयुक्तं 'कं वर! एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' ( छा० ४,१,३ ) इत्यादिकं स्वात्मनोऽत्यन्तमपकर्षमुपश्रृण्वतो भूरि शोकः सञ्जज्ञे। तच्छोकाविष्टचेतस्कश्च स द्रागित्येव ब्रह्मविद्याग्रहणाय बहुदक्षिणया भगवन्तं सयुग्वानं रैक्वमापेदे। तमेष रैक्वः 'शूद्र' इत्यामन्त्र्य गृहीताऽखिलदक्षिणो ब्रह्मविद्यामनुशशासेति।

तत्र शूद्रकुलोत्पन्नाय जानश्रुतये पौत्रायणाय सयुग्वा रैक्वो ब्रह्मविद्यामुपदिदेशेति शूद्रस्य शास्त्राऽधिकारे तावदुदाहरणम्। यदि हि शास्त्रे शूद्रो नाध्यकरिष्यत्, सयुग्वा रैक्वस्तत्प्रतिपाद्यां ब्रह्मविद्यां न जातु तमुपादेक्ष्यत्; न हि तत्राऽधिकाराऽभावे तत्प्रतिपाद्या ब्रह्मविद्या कस्मैचिदुपदेष्टुं शक्यते। जानश्रुतिः पौत्रायणश्च शूद्रकुले सञ्जात इत्युत्तरसूत्रात्सुव्यक्तं प्रतिपद्यते; तद्वयं तत्रैव व्याकरिष्यामः।

यच्चैनं शोकेन ब्रह्मविद्याग्रहणाय समागतं खलु सयुग्वा रैक्वः 'शूद्र' इत्यामन्त्रयाञ्चक्रे, तेन शूद्रशब्दो ब्राह्मणादिशब्दवद् गुणशब्द इति सूच्यते। स्वस्य वा परस्य वा शोकनिवृत्त्यर्थं यो 'द्रवति' गच्छति, स शूद्र इति तद्व्युत्पत्तेः प्रदर्शनात्। सेवकस्य चैष धर्मः, सेवावृत्तिश्च शूद्रः; यत्रेदं श्रूयते—'तपसे शूद्रम्' ( यजुः ३०,५ ) इति। ब्रह्मक्षत्रियविशां सेवनं तपः ( तपः शूद्रस्य सेवनम् ); स्मर्यते च—

'एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् एतेषामेव वर्णानां शुश्रूषामनसूयया' ( मनु० १,९१ ) इति। 'शुश्रूषां' सेवाम्, 'एकमेव' इति तु प्राधान्यं प्रदर्श्यते; कर्मान्तरस्याऽपि विहितत्वात्। पाणिनीयास्तु 'शुचेर्दश्च' ( उ० १८६ ) इति शोचतेः 'र' प्रत्यये धातोर्दीर्घे चकारस्य दकारे च 'शूद्र' इति व्युत्पादयन्ते; 'योऽहर्निशं परेषां दुःखमसहमानस्तन्निवृत्तिं शोचति, चिन्तयति, स

'तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्;
तपःश्रुताभ्यां यो हीनो, जातिब्राह्मण एव सः'।

तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति। समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते; तद्यथा—पूर्वे पञ्चालाः, तैलं भुक्तं,

---

शूद्र इति तद्व्युत्पत्तिं चाचक्षते। न चैवमपि शूद्रशब्दो गुणशब्दतां विजहाति, यस्य प्राधान्येन सेवा-धर्मः स शूद्र इत्युभयत्राऽविशिष्टत्वात्।

ब्राह्मणप्रभृतिशब्दाश्च गुणशब्दा इति निर्विवादम्; अत एव च 'तेन तुल्यं क्रिया चेद् वतिः' (अष्टा० ५, १, ११५) इति सूत्रे भाष्ये ब्राह्मण्यं निर्ब्रुवाणो महाभाष्यकृद् भगवान् पतञ्जलिरभि-धत्ते—'सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्रः' इति। न हि तेषां गुणशब्दत्वाऽभावे भाष्यकृता तेनैवमभिधातुं शक्यते। जात्यन्तरे प्रयुज्यमानत्वाच्च; यदि ह्येते खलु जातिशब्दा विधेरन्, तदा न जातु जात्यन्तरे प्रयुज्येरन्, न ह्यश्वशब्दो गवि, गोशब्दश्चाऽश्वे कदाचित्प्रयुज्यते; प्रयुज्यन्ते चैते जात्यन्तरेऽपि—'ब्रह्म वा अजः' (शत० ६, ४, ४, १५), 'क्षत्रं वा अश्वः' (शत० १३, २, २, १७), 'वैश्यं च, शूद्रं चाऽनु रासभः' (शत० ६, ४, ४, १२), ब्रह्म वै पलाशः' (शत० १, ३, ६, १९), 'क्षत्रं वा एतदोषधीनां यद् दूर्वा' (ऐ० ८, २, ४) इति। तस्मान्नूनमेते गुणशब्दा इति विज्ञायते। तथा च गुणोत्कर्षा-ऽपकर्षाभ्यामिहैव तेषां परिवर्त्तनमपि युक्तमिति मनसि धर्तव्यम्"

"तदाद्रवणाच्छूद्रशब्दो गुणशब्द इत्युक्तं; तत्रैव हेत्वन्तरं समुच्चिनोति—

'क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' (ब्रह्मसू० १, ३, ३५)

हेत्वन्तरमेतदिति 'चा'ऽर्थः। 'उत्तरत्र' राज्यप्राप्तेरुत्तरत्र, 'क्षत्रियत्वगतेः' जानश्रुतेः क्षत्रिय-त्वप्रापणात्, प्रयुक्तस्तत्र शूद्रशब्दो गुणशब्दः प्रतिपत्तव्यः। कुतोऽस्य उत्तरत्र क्षत्रियत्वप्राप्तिरवगम्यते? 'चैत्ररथेन लिङ्गात्'; 'चित्रेण' मिश्रितेन वीर्येण जाताभ्यामश्वतरीभ्यां युक्तो रथः चित्ररथः, चित्ररथ एव चैत्ररथः, स्वार्थे तद्धितः, तेनागमनाल्लिङ्गाद् हेतोरित्यर्थः।

जानश्रुतिः पौत्रायणः खलु शूद्रकुलोत्पन्नश्चेन्न भवेत् तदा तस्योत्तरत्र क्षत्रियत्वप्राप्तिर्नाऽवगम्येत; नहि क्षत्रियत्वे भवति, कस्यचित्क्षत्रियत्वप्राप्तिरवकल्पते; यो हि पूर्वं क्षत्रियो न भवति, क्षात्रकर्म चाऽनुतिष्ठति. तद्गुणांश्च सम्पादयति, स नूनं क्षात्रेण गुणकर्मणा विभूषितः पश्चात्क्षत्रियत्वं प्राप्नोति। जानश्रुतिः पौत्रायणश्च तथा; स हि पूर्वं शूद्रकुले सञ्जातः पश्चाद्राज्येऽभिषिक्तः क्षात्रधर्मेण प्रजां समपीपलत्, ततश्च योग्यत्वात् क्षत्रियत्वमवापीपिसत्। अत एव स्मर्यते महाभारते—

'न विशेषोऽस्ति वर्णानां, सर्वं ब्राह्ममिदं जगत्, ब्रह्मणा पूर्वसृष्टं हि; कर्मभिर्वर्णतां गतम्'
(महा० शां० १८८।१०) इति

नन्वस्योत्तरत्र क्षत्रियत्वप्राप्तिः कुतोऽवगम्यते? चैत्ररथेनाऽऽगमनाल्लिङ्गादिति ब्रूमः; अश्वतरीरथो हि 'चित्ररथ' इति व्यपदिश्यते—'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इत्यभियुक्तोक्तेः; स्वार्थेऽणि च चित्ररथ एव 'चैत्ररथः' सम्पद्यते। स चाऽन्यत्र क्षत्रियेणाऽवगतसम्बन्ध इह जानश्रुतेः पौत्रायणस्य क्षत्रियत्व-प्राप्तिमवगमयति। महाभारते खलु वनपर्वणि क्षत्रियेणाऽश्वतरीरथस्य सम्बन्धोऽवगम्यते—

'चत्वारस्त्वां गर्दभाः संवहन्तु, श्रेष्ठाश्वतर्यौ हरयो वातरंहाः;
तैस्त्वं याहि, क्षत्रियस्यैष वाहो ममैव वाम्यौ तवैतौ हि विद्धि' (महा० वन० १२, ९३) इति।

तत्राऽवगतसम्बन्धेन च तेन जानश्रुतेः पौत्रायणस्य क्षत्रियत्वप्राप्तिः सुखेनाऽवगन्तुं शक्यते; न हि तत्प्राप्त्यभावे तस्याऽश्वतरीरथः सम्बोभूयते, परकीयस्य वा प्रदानमुपपद्यते। न च क्षत्रियत्वे तस्य 'शूद्र' इत्यामन्त्रणं गुणमनपेक्ष्य कथञ्चिद् युज्यते; तस्मादस्ति ब्राह्मणादिशब्दवदेष शूद्रशब्दोऽपि गुणशब्द इति सम्यगध्यवसीयते। तथा चोपपन्नः शास्त्रे शूद्रस्याऽप्यधिकारः" इति वेदान्तसूत्रवैदिकवृत्तौ।

घृतं भुक्तं, शुक्लो नीलः कपिलः कृष्ण इति । एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते, जातिहीने गुणहीने च । गुणहीने तावत्—'अब्राह्मणोऽयं, यस्तिष्ठन्मूत्रयति; अब्राह्मणोऽयं, यस्तिष्ठन्भक्षयति । जातिहीने संदेहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते; संदेहात्तावद् गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वा अध्यवस्यति 'ब्राह्मणोऽयमिति'; तत उपलभते 'नाऽयं ब्राह्मणः, अब्राह्मणोऽयमिति'; तत्र संदेहाद् ब्राह्मणशब्दो वर्तते, जातिकृता चाऽर्थस्य निवृत्तिः । दुरुपदेशाच्च; दुरुपदिष्टमस्य भवति 'अमुष्मिन्नवकाशे ब्राह्मणः, तमानयेति'; स तत्र गत्वा यं पश्यति तमध्यवस्यति 'ब्राह्मणोऽयमिति'; ततश्च पश्चादुपलभते 'नाऽयं ब्राह्मणः, अब्राह्मणोऽयमिति;' तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते, जातिकृता चाऽर्थस्य निवृत्तिः । आतश्च संदेहाद् दुरुपदेशाद्वा; न ह्ययं कालं माषराशिवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति—ब्राह्मणोऽयमिति" । वेद-स्मृति-पुराणेषु जात्युत्कर्षा-ऽपकर्षयोः सिद्धान्तः ऐकमत्येन स्वीकृतो दृश्यते; स च कर्मणा वर्णसंस्थायामेव संगच्छते;ऽन्यथा वर्णत्वे जन्मतः सिद्धे, न स्यात्तत्परिवर्त्तनं विना जातिपरावृत्तिं तदुत्कर्षो न सेत्स्यति , नाऽपकर्षश्च; तस्मात्सा वर्णरूपा न जन्मना; मनुष्यत्वादिरूपा तु गोत्वा-ऽश्वत्वादिवद्भवेत् जन्मनैवेति पार्थक्यं जाति-वर्णस्वरूपयोः[32] ।

---

३२ "यो यज्जातीयाद् यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति यथा गोर्गवि गौः, अश्वाद् वडवायामश्वः; ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मणः' इति भ्रमः,...यत्र प्रत्यक्षगम्या जातिर्भवति, तत्र तथा; ब्राह्मणादिजातिस्तु स्मृतिलक्षणा" इत्यादि ( या० स्मृ० १, ९० ) मिताक्षरायाम् ।

"अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता; न हि नाना स्त्री-पुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति, न हि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते । यदप्याहुः—'यद्यप्यापातसंजातया धिया ब्राह्मण्यं नाऽवसीयते, तथापि ब्राह्मणभूतमातापितृसम्बन्धाऽनुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति'; तदपि च स्वमानस विसंवादि; अनुसन्दधानोऽपि मातापितृसम्बन्धं, को जात्वेकमाकारमवबोद्धुं प्रभवति ?" इत्यादि प्रकरण पञ्चिकायां जातिनिर्णयाख्ये तृतीयप्रकरणे द्रष्टव्यम् ।

"यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृतिग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयः; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्य्याध्यात्माद्युन्नतिसिद्ध्यर्थाः पूर्वं गुण-कर्माऽनुसारतः पूर्वसामाजिकैः कल्पिताः; तदेतदिहाऽपि ( ऐतरेयब्राह्मणे ) श्रुतम्—'देवविशः कल्पयितव्या इत्याहुः, ताः कल्प्यमाना अनु मनुष्यविशः कल्प्यन्त इति' ( ऐ० ब्रा० पं० १ अ० २ श्रुतिः ३ ) इत्यादि । तथा च अध्ययनमध्यापनं यजनं शंसनं स्तवनमुद्गानं ब्राह्मण्यं मन्त्रणादानमुपदेशदानादिकं चेति मुख्यानि मुखकर्माणि च येषां समाजेषूपलभ्यन्ते, तेषामेव ब्राह्मणजातिः कल्पिता; क्षत्रियादीनामप्येवं बलादिप्रकाशकबाह्वादिभिरौपम्यं तत्तज्जातिकल्पनाबीजम् । तदेव श्रुतम् ऋक्संहितायाम्—'ब्राह्मणोऽस्य मुखमासीद् , बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत' ( १०, ९०, १२ ) इति । एवं च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते" इत्यादि ऐ० आ० पृ० ७६; तथा—

"तत्त्वतस्तु पुरा खलु अत्रार्यावर्ते ये नगरवासिनः सभ्याः तेषामार्यत्वं, ये त्विहाऽवीतरागा अपि अरण्याश्रिता गिरिकन्दरादिवासिनोऽसभ्यास्तेषामनार्यत्वमित्येव जातिद्वयं पार्थक्येन वर्णनीयमासीत् जन्मस्थानव्यवहारादिभेदतः । ... तदेवं तदानीं यथा ज्ञानालोचन-बलरक्षण-पणनव्यवहारहेतुभिरार्याणां ब्राह्मणादिजातिभेदाः प्रचलिताः, तथैवाऽनार्याणामपि आर्याऽनुगतत्वा-ऽननुगतत्वभेदाद् द्वैविध्यं सम्पन्नम् । ये त्वनार्या अप्यार्याणामानुगत्यमालम्बिरे, त एव 'दासाः' तद्विपरीतास्तु 'दस्यव' इति व्यपदिष्टाः; त एव च दासाः 'शूद्रा' इति, दस्यवस्तु 'म्लेच्छा' इति चाऽऽख्याताः । इत्थमिह पञ्च जातयो निष्पन्नाः; एताश्च पञ्च जातयो मनुष्याणामेवेति मनुष्यशब्दपर्यायत्वमाप्तं 'पञ्चजन' इति । तदेवमेषु पञ्चजनेषु कर्मादिभेदत एव

नरो 'जातिपरावृत्तौ वर्णमापद्यतेऽपरं, जीवन्नेवेति, सिद्धान्तः आपस्तम्बादिभिः स्मृतः—
"धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते, जातिपरिवृत्तौ; अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते, जातिपरिवृत्तौ" [ आ० ध० सू० प्र० २ कं० ११ सू० १०—११ ]

अत्र 'जन्मपरावृत्तौ' इत्यर्थः कैश्चिदिष्यते ; तत्त्वनेकार्षसद्वादैर्विरोधान्न प्रशस्यते ।
'वर्णमापद्यते' ह्येतद्वाक्याच्च जीवतां नृणाम् एव वर्णान्तरप्राप्तिर्वर्त्तमानक्रियेङ्गिता ।
किञ्च, 'जन्मपरावृत्तौ' इति स्पष्टं न किं व्यधाद् ऋषि,श्चेत्तस्य तात्पर्यं स्याज्जन्मपरिवर्त्तने ?
तस्मा'ज्जातिपरावृत्तौ धर्मेणा,ऽवरवर्णजः जीवन्नेवोच्चवर्णः स्याद्' इत्येवार्थं इहोचितः ।

"उत्कर्षार्थं प्रयतेत नरः पुण्येन कर्मणा, वर्णभ्यो हि परिभ्रष्टो न वै सम्मानमर्हति ;
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते । वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ;
दुर्लभं तमलब्ध्वा हि हन्यात्पापेन कर्मणा ।" [ म० भा० शां० अ० २९१ श्लो० ३–५ ]

ईदृग्वर्णान्तरापत्तौ नृणामेकशरीरतः धर्मशास्त्रप्रमाणानि सन्ति भूयांसि; तद्यथा–
"योऽनधीत्य द्विजो वेदम्, अन्यत्र कुरुते श्रमम्, स जीवन्नेव शूद्रत्वमाशु गच्छति साऽन्वयः ।
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः, कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ।
उत्तमानुत्तमान्गच्छन्हीनान्हीनांश्च वर्जयन् ब्राह्मणः श्रेष्ठतामेति, प्रत्यवायेन शूद्रताम् ।
शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चैति शूद्रतां, क्षत्रियाज्जातमेवं तु विद्याद्, वैश्यात्तथैव च ।
सद्यः पतति मांसेन लाक्षया लवणेन च, त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ।
इतरेषां तु पण्यानां विक्रयादिह कामतः ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ।
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्, तस्य व्यपैति ब्राह्मण्यं, शूद्रत्वं च स गच्छति" [मनौ]

"ब्राह्मणाः क्षत्रिया वैश्याः स्वाऽवधेरूर्ध्वमव्रतः
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः" [ परिशिष्टे ]

"सन्ध्या येन न विज्ञाता, ज्ञात्वा नैव ह्युपासिता, स जीवन्नेव शूद्रत्वमवगच्छति साऽन्वयः*"
"शूद्रो ब्राह्मणतामेति, ब्राह्मणश्चैव शूद्रतां, क्षत्रियो याति विप्रत्वं, वैश्यं विद्यात्तथैव च‡"
"शूद्रयोनौ प्रजातस्य सद्गुणानुपतिष्ठतः वैश्यत्वं भवति ब्रह्मन्, क्षत्रियत्वं तथैव च,
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते ।" [ म० भा० वनप० अ० २१२ ]
"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"(मनु०)

जन्मजातिपरावृत्त्या वर्णान्तरपरिग्रहे वेदशास्त्रेषु भूयांसि सन्त्युदाहरणान्यपि ।
तत्र स्वजातिगोत्रपरिवृत्तौ अन्यगोत्रप्राप्तिः शुनःशेपस्य† ऐतरेयब्राह्मणे ( अ० ३३ खं० ५ ) श्रूयते—

"स होवाच शुनःशेपः स वै यथा नो ज्ञपयाऽऽराजपुत्र, तथा वद; यथैवाऽऽङ्गिरसः सन्नुपेयां तव पुत्रतामिति । होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्या,स्तव श्रेष्ठा प्रजा स्यात्, उपेयां दैवं मे दायं तेन वै त्वोपमन्त्रय इति ⊙ ।

---

ब्राह्मणः क्षत्रियः वैश्य इति त्रय आर्याः; दासो दस्युश्चेति द्वावनार्याविति स्थिम्" इत्यादि च ऐतरेयालोचने ( पृ० १५ ) द्रष्टव्यम् ।

* बृहत्पराशरसं अ० २ । ‡ भ० पु० ब्राह्मप० अ० ४० ।

† 'शुनःशेपो' नाम भृगुवंशोत्पन्नस्य 'अजीगर्त' इत्यपरनामधेयस्य 'ऋचीक'ऋषेर्मध्यमः पुत्रः, यः पुरा हरिश्चन्द्रस्य यज्ञे पशुभूतो विश्वामित्रेण मोचितः, तद्गोत्रपरिवर्त्तनेन स्वपुत्रीकृतश्च । तस्योपाख्यानम्— ऐतरेयब्राह्मणस्य त्रयस्त्रिंशे शौनश्शेपाऽध्याये; वाल्मीकीयरामायणे बालकाण्डे एकषष्टितम-द्विषष्टितमयोः सर्गयोः; महाभारतेऽनुशासनपर्वणि तृतीयेऽध्याये; हरिवंशे प्रथमपर्वणि सप्तविंशेऽध्याये; श्रीमद्भागवते नवम-स्कन्धे सप्तमे षोडशे चाऽध्याये; देवीभागवते सप्तमस्कन्धे षोडश-सप्तदशाऽध्याययोश्च द्रष्टव्यम् ।

⊙ "विश्वामित्रेणैवं बोधितः शुनश्शेपः पुनरपि गाथया विश्वामित्रं प्रत्येवमुवाच । अयं विश्वा-

स होवाच शुनःशेपः संज्ञानानेषु वै ब्रूयात् सौहार्दाय मे श्रियै; यथाऽहं भरतऋषभोपेयां तव पुत्रतामिति । अथ ह विश्वामित्रः पुत्रानामन्त्रयामास, मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः; ये के च भ्रातरः स्थ नाऽस्मै ज्यैष्ठ्याय कल्पध्वमिति "[ ऐ० ब्रा० अ० ३३ खं० ५ ]

तत्रैवोत्तरत्र ब्राह्मण-क्षत्रिययोः शूद्रत्वलाभे

"तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः, तद् ये ज्यायांसो न ते कुशलं मेनिरे,ताननु व्याजहार, 'अन्तान्वः प्रजा भक्षीष्टेति' ; त एतेऽन्ध्राः, पुण्ड्राः, शबराः, पुलिन्दा, मूतिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः; इति" [ ऐ० ब्रा० अ० ३३, खं० ६ ]

---

मित्रो जन्मना क्षत्रियः सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवान् 卐 इत्येवं तद्वृत्तान्तं सूचयितुं 'हे राजपुत्र' इति संबोधितवान् । स वै 'तथाविधो' राजजातीय एव सन्, 'यथा' येन प्रकारेण, 'नो'–ऽस्माभिः, सर्वैः 'आ' समान्ता'ज्ज्ञपय' ब्राह्मणत्वेन ज्ञायसे, तथैवाऽस्मद्विषयेऽपि त्वं वद । कथं वदितव्यमिति, तदुच्यते; अहमिदानीमङ्गिरोगोत्रः संस्तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयां तथैवाऽनुगृहाणेति शेषः । एतद्वाक्याऽभिप्रायः पूर्वैः संक्षिप्य दर्शितः–

'पुराऽऽत्मानं नृपं, विप्रं तपसा कृतवानसि ; एवमाङ्गिरसं मा त्वं वैश्वामित्रमृषे कुरु' इति । ततो विश्वामित्रो गाथया प्रत्युत्तरमुक्तवान्; हे शुनश्शेप, त्वं मे पुत्राणां मध्ये 'ज्येष्ठः स्याः' ज्येष्ठो भव" इत्यादि तत्रत्यं सायणभाष्यम् ।

"विश्वामित्रात्मजानां तु शुनःशेपोऽग्रजः स्मृतः , भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः ;
विश्वामित्रस्य पुत्रस्तु शुनःशेपोऽभवत्किल हरिदश्वस्य यज्ञे यः पशुत्वे विनियोजितः "

[ हरिवंशे पर्व १ अ० २७ श्लो० ५४–५५ ]

---

卐 "अनृष्यानन्तर्ये" ( पाणिनिसू० ४।१।१०४ ) इत्युच्यते; तत्रेदं न सिध्यति 'कौशिको विश्वामित्र' इति । किं कारणम् ? विश्वामित्रस्तपस्तेपे, नाऽनृषिः स्यामिति, तत्रभवानृषिः सम्पन्नः; स पुनस्तपस्तेपे, नाऽनृषेः पुत्रः स्यामिति, तत्रभवान्गाधिरप्यृषिः सम्पन्नः; स पुनस्तपस्तेपे, नाऽनृषेः पौत्रः स्यामिति, तत्रभवान्कुशिकोऽपि ऋषिः सम्पन्नः" इति पातञ्जलमहाभाष्ये ।

"ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः , क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ;
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः , तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च"

[ म० भा० अनु० ४, ४८–४९ ]

"गाधेरभून्महातेजाः समिद्ध इव पावकः , तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ।
विश्वामित्रस्य चैवाऽऽसन्पुत्रा एकशतं नृप , मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ;
पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् आजीगर्तं, सुतानाह 'ज्येष्ठ एष प्रकल्प्यताम् ;
यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः स्तुत्वा देवान्प्रजेशादीन्मुमुचे पाशबन्धनात् ;
यो रातो देवयजने देवैर्गाधिसुताय, सः देवरात इति ख्यातः शुनश्शेपस्तु भार्गवः' ।
ये मधुच्छन्दसो ज्येष्ठाः, कुशलं मेनिरे न तत्; अशपत्तान्मुनिः क्रुद्धो 'म्लेच्छा भवत दुर्जनाः' ।
स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः 'यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ,
ज्येष्ठं मन्त्रदृशं चक्रुस्त्वा,मवञ्चो वयं स्म हि' । विश्वामित्रो सुतानाह 'वीरवन्तो भविष्यथ ,
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ; एष वः कौशिका, वीरो देवरात,स्तमन्वित ;
अन्ये चाष्टकहारीतजयक्रतुमदादयः ; एवं कौशिकगोत्रं तु वैश्वामित्रैः पृथग्विधं
प्रवरान्तरमापन्नं, तद्धि चैवं प्रकल्पितम् " [ भा० स्कं० ९ अ० १६ ]

एकस्मिन्नेव जन्मनि कर्मणा वर्णपरिवर्तने दृष्टान्तोऽपि दृश्यते तत्रैव ऐतरेयब्राह्मणे, यथा ब्राह्मणस्य शूद्रत्वलाभे—

"ऐतशप्रलापं शंसति ; ऐतशो ह वै मुनिरग्नेरायुर्ददर्श ; यज्ञस्यायातयाममिति हैक आहुः ; सोऽब्रवीत् पुत्रान्, पुत्रका,अग्नेरायुरदर्शम्, तदभिलपिष्यामि, यत् किञ्च वदामि तन्मे मा परिगातेति; स प्रत्यपद्यत—'एता अश्वा आप्लवन्ते, प्रतीपं प्रातिसत्वनम्'-इति ; तस्याभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णात्, 'अदृपन् नः पितेति' ; तं होवाच 'अपेह्यलसोऽभूर्यो मे वाचमवधीः, शतायुं गामकरिष्यं, सहस्रायुं पुरुषं, पापिष्ठां ते प्रजां करोमि, यो मेत्थमसक्था' इति; तस्मादाहुरभ्यग्नय ऐतशायना और्वाणां पापिष्ठा; इति" [ ऐ० ब्रा० अ० ३० खं० ७ ]

शूद्रस्य ब्राह्मणत्वलाभे—

"ऋषयो वै सरस्वत्यां सत्रमासत ; ते कवषमैलूषं सोमादनयन्—'दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति' ; तं बहिर्धन्वोदवहन्, अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति; स बहिर्धन्वोदूह्लः पिपासया वित्त एतदपोनप्त्रीयमपश्यत्, प्रदेवत्रा ब्रह्मणे गातुरेत्विति ; तेनापां प्रियं धामोपागच्छत्, तमापोऽनूदायंस्तं सरस्वती समन्तं पर्यधावत्; तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते; यदेनं सरस्वती समन्तं परिससार; ते वा ऋषयोऽब्रुवन् विदुर्वा इमं देवा उपेमं ह्वयामहा इति; तथेति तमुपाह्वयन्त, तमुपहूयैतदपोनप्त्रीयमकुर्वत;" इति । ऐ० ब्रा० अ० ८, खं० १ ।

पर-वृत्ति (जीविका) ग्रहणेनाऽपि पूर्व-जाति-परिवृत्तौ वर्णान्तरलाभः श्रूयते, तद्यथा—

"त्रयाणां भक्षाणामेकमाहरिष्यन्ति—सोमं वा, दधि वा, अपो वा। स यदि सोमं, ब्राह्मणानां स भक्षो, ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि, ब्राह्मणकल्पस्ते प्रजायामाजनिष्यते, आदाय्यापाय्यावसायी यथाकामप्रयाप्यः; यदा वै क्षत्रियाय पापं भवति, ब्राह्मणकल्पोऽस्य प्रजायामजायत, ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः, स ब्रह्मबन्धवेन जिज्यूषितः ।

अथ यदि दधि, वैश्यानां स भक्षो, वैश्यांस्तेन भक्षेण जिन्विष्यसि, वैश्यकल्पस्ते प्रजायामाजनिष्यते, अन्यस्य बलिकृद्, अन्यस्याऽऽद्यो, यथाकामज्येयः; यदा वै क्षत्रियाय पापं भवति, वैश्यकल्पोऽस्य प्रजायामजायत, ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः, स वैश्यतया जिज्यूषितः ।

अथ यद्यपः, शूद्राणां स भक्षः, शूद्रांस्तेन भक्षेण जिन्विष्यसि, शूद्रकल्पस्ते प्रजायामाजनिष्यते , अन्यस्य प्रेष्यः, कामोत्थाप्यो, यथाकामवध्यः, यदा वै क्षत्रियाय पापं भवति, शूद्रकल्पोऽस्य प्रजायामजायत, ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः, स शूद्रतया जिज्यूषितः"[33] [ ऐ० ब्रा० अ० ३५ खं० ३ ]

---

३३ "अथ तेषां ब्राह्मणादिचतुर्वर्णानां स्वभावादय इहैतरेये यथा वर्णिताः, ते चेह क्रमात्प्रदर्श्यन्ते । तत्र स्वभावाः—

ब्राह्मणानाम्—आदायित्वम्, आपायित्वम्, अवसायित्वं, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्मा विशेषतो लक्षिताः । 'आदायी' आदानं ग्रहणम्, प्रतिग्रहादिना जीविकादीनामादानकारी; 'आपायी' अपायस्त्यागः, दानादिना धनादीनां त्यागकारी; 'अवसायी' अवसायः सिद्धान्तः, विद्याबलेन

सर्वतत्त्वानां निश्चयकारी; 'यथाकामप्रयाप्यः' प्रयाणं युद्धाय प्रस्थानम्, तत्र राजादिभिः सेनानायकत्वादिना प्रेर्यः 'प्रयाप्यः', काममनतिक्रम्य यथाकामं, स्वकामाऽनुरूपमिति यावत्; तदेवं राज्यरक्षणाद्यर्थं युद्धाय प्रयाणमिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्यः'। तदेतदिह ( ऐतरेयब्राह्मणे ) पं० ७, अ० ५, खं० ३ द्रष्टव्यम्। क्षत्रियाणां तु--बलप्रतिष्ठा, आश्रितरक्षणं, सर्वोपकारित्वं, तेजस्वित्वं, यशस्वित्वं चाऽऽसीद्वर्णनीयम्। वैश्यानां खलु —अन्यस्य बलिकृत्त्वम्, अन्यस्य आद्यत्वं, यथाकामजेयत्वञ्चेति त्रीणि लिङ्गानि। शूद्राणां हि—अन्यस्य प्रेष्यत्वं, कामोत्थाप्यत्वं, यथाकामवध्यत्वं चेति च वर्णितं तत्रैव ( ऐतरेयके ) पं० ७ अ० ५ खं० ३-६।

अथ भक्ष्याः। ब्राह्मणानां बलकरो भक्ष्यः सोमो निर्णीतः क्षत्रियाणां न्यग्रोधोदुम्बराऽश्वत्थप्लक्ष-फलानि बलहेतुभक्ष्याणि निर्णीतानि; तथा वैश्यानां दध्येवैकं बलकरं भक्ष्यं सूचितम्, शूद्राणां त्वाप एव भक्षिताः सम्यग्बलकरा भवन्तीति च तत्र ( ऐतरेये ) पं० ७ अ० ५ खं० ३-६ ( द्रष्टव्यम् )" इति ऐतरेया-लोचने पृ० ७८-७९।

वयं तु—इह सोमो ब्राह्मणवृत्तिं, दधि वैश्यवृत्तिम्, आपश्च शूद्रवृत्तिमुपलक्षयन्ति। सोमस्य याजनप्राप्यत्वात्, दध्नः कृषिगोरक्षाधीनत्वात्, अपां च परिचरणलभ्यत्वात्। अद्भिर्विना ग्लायमानः प्राणीति अप्शब्देन जीवनौपयिकं शूद्रकर्म सूचितम्। एवं चानापदि वर्णानां जीविकावृत्तिव्यत्यये तदनुसारं वर्णपरिवर्त-नमपि भवत्येव; बहुशास्त्रप्रमाणात्, प्रत्यक्षव्यवहारदर्शनाच्च। तदेतदेवाऽत्र निरूपितमिति युक्तमुत्पश्यामः।

"क्षत्रियस्य हेया भक्षास्त्रिविधाः, उपादेयो भक्ष एकः; तत्र हेयान् भक्षान्दर्शयति। हेयानां त्रयाणां मध्ये भक्षमेकं क्षत्रियस्य तवाऽनभिज्ञा ऋत्विज आहरिष्यन्ति; कं भक्षमित्याशङ्क्य सोमं वा दधि वा जलं वेत्युक्तम्। तत्र सोमपक्षे दोषं दर्शयति—

'सः' अनभिज्ञ ऋत्विग्, 'यदि' ते विश्वन्तरस्य क्षत्रियस्य 'सोमं' भक्षमाहरेद् इति शेषः; 'स' सोमः, 'ब्राह्मणानां' योग्यो 'भक्षः' 'तेन' भक्षेण, 'ब्राह्मणान्' 'जिन्विष्यसि' प्रीणयिष्यसि; न तु क्षत्रियस्य तव प्रीतिः। तथा सति 'ते' तव राज्ञः 'प्रजायां' सन्ततौ 'ब्राह्मणकल्पः' ईषदसमाप्तो ब्राह्मणः, 'आजनिष्यते'; क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम्। स च पुत्रो ब्राह्मणवद् वक्ष्यमाणगुण-चतुष्टयोपेतो भवति। आदानं प्रतिग्रहः, तच्छील 'आदायी' प्रतिग्रहश्च ब्राह्मणगुणः; ऋत्विग्भूत्वा सोमम् आ समन्तात् पाययतीति 'आपायी' तदेतद् याजनमपि ब्राह्मणगुणः; अवसम् अन्नं, तस्य सम्बन्धि याचनम् आवसः, तम् आवसम् एति प्राप्नोतीति 'आवसायी' परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः; कामम् इच्छामननिक्रम्य 'यथाकामं', तदनुसारेण 'प्रयाप्यो' निर्वासयितुं शक्यः, क्षत्रिय-वैश्यादिवत् शौर्य-धनाद्य-भावाद् यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात् तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते ( ? ); एवमेते चत्वारो धर्मा ब्राह्मणगुणाः। सोमं भक्षयतो राज्ञ एतद्गुणकः पुत्रो जायते। किं च "यदा' प्रमादात्, 'क्षत्रियाय पापं' क्षत्रियस्य किञ्चिन्निषिद्धाचरणं, 'भवति', तदानीं तेन पापेन तस्य क्षत्रियस्य 'प्रजायां' सन्ततौ, ब्राह्मणकल्पः' शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र 'आजायते'; 'अस्मात्' पापिनः क्षत्रियात्, 'द्वितीयो वा तृतीयो वा' पुत्रो वा पौत्रो वा, 'ब्राह्मणता-मभ्युपैतोः' 'शौर्यादिगुणरहितं ब्राह्मण्यं प्राप्तुम् 'ईश्वरः' समर्थो, भवति। 'सः' ब्राह्मणसदृशः क्षत्रियपुत्रो 'ब्राह्मणबन्धवेन' ब्राह्मणानां क्रमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना, 'जिज्यूषितो' जीवितुमिष्टो नीचरूप-दैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थः।

सोमस्य भक्षत्वे दोषमुक्त्वा दध्नो भक्षत्वे दोषमाह—

यदि ते दधिरूपं भक्षमाहरेत्, तदा दध्नो वैश्यभक्षत्वात् तेन वैश्यान् प्रीणयिष्यसि; तव सन्ततौ वैश्यसमानः पुत्र आजनिष्यते। वैश्यश्च वाणिज्यं कुर्वन् 'अन्यस्य' राज्ञो 'बलिकृत्' बलिं पूजां करोति, करं प्रयच्छतीत्यर्थः; अत एव 'अन्यस्य' राज्ञः 'आद्यः' भक्ष्योऽधीनो भवतीत्यर्थः; तस्य राज्ञः काममिच्छा-मनतिक्रम्य 'ज्येयः' अभिभवनीयो भवति; 'ज्या अभिभव' इति धातुः; त एते करप्रदान-पराधीनत्व-

तिरस्कार्यत्वाख्या वैश्यगुणाः (?)। यदा क्षत्रियस्य किञ्चित्पापं संभवति, तदा तस्य संततौ वैश्यसदृशो जायते; अस्मात्क्षत्रियात्पापिनोऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति; स च 'वैश्यतया' वैश्यवृत्त्या कर-प्रदानादिना (?) जीवितुं प्रवृत्तो भवति।

दधिभक्षे दोषमुक्त्वा जलभक्षे दोषमाह—

यदि ते क्षत्रियस्य कश्चिद् ऋत्विग् 'अपो' जलं भक्षमारहेत्, तदानीं स जलात्मकः शूद्राणां भक्षः, तेन भक्षेण शूद्रान्प्रीणयिष्यसि; ततस्तव सन्ततौ शूद्रसदृशः पुत्रः उत्पद्यते। शूद्रश्चाऽन्यस्य उत्तम-वर्णत्रयस्य 'प्रेष्यः' प्रेषणीयो भृत्यो भवति; तथा 'कामोत्थाप्यः' मध्यरात्रादौ यदाकदाचिद्दिन इच्छा भवति, तदानीमयमुत्थाप्यते; तथा तदीयं काममिच्छामनतिक्रम्य 'वध्यः' कुपितेन स्वामिना ताड्यो (?) भवति; एते शूद्रगुणाः। क्षत्रियस्य कदाचित्पापे सति शूद्रसमानः पुत्रो जायते; तस्मात्क्षत्रियाद् 'अन्यः' पुत्रः पौत्रो वा शूद्रत्वं प्राप्तुं समर्थो भवति; स पुत्रः 'शूद्रतया' शूद्रवर्णतया दासत्ववृत्त्या जीवितुं प्रवृत्तो भवति" इति तत्रत्यं सायणभाष्यम्।

अत्र'ऽवसायि'पदभाष्यं सायणस्य न समीचीनमस्ति, सर्वधर्मशास्त्र-पुराणादिविहितब्राह्मणधर्म-विरुद्धार्थभापणात्; न हि "परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः" क्वाऽपि वेद-शास्त्रेषु श्रूयते स्मर्यते वा; प्रत्युत याचकब्राह्मणानां निहीनता निन्दैव च लोके शास्त्रे च दृश्यते श्रूयते च। अवश्यं "विशु-द्धाच्च प्रतिग्रहः" (मनु० १०, ७६) ब्राह्मणधर्मः स्मर्यते, स च तपो-मन्त्रबलादिभिर्लोकोपकारिणां ब्राह्मणानां कृते समाजेन ससम्मानमुपकल्पितो न्याय्यो 'वृत्ति'रूपः, न तु याच्ञोपनतो भैक्ष्यवन्निहीनः; स चेह ब्राह्मणानां "आदायित्व" धर्मेणैवोक्तः, सायणेनाऽपि तथैव व्याख्यातश्च।

तस्मादत्रा'ऽवसायित्वं' कार्याऽकार्यविनिश्चयः, तत्प्रचारश्च लोकेषु, ब्राह्मधर्मो विवक्षितः;
तद्वानेवा'ऽवसायी' स्यात्-श्रुतिप्रत्यक्षकृन्नरः, एतद्गुणविशिष्टत्वात् स एव ब्राह्मणो मतः।
योगक्षेमो हि लोकानां ब्राह्मणैर्मन्त्रदर्शनात्, तेषामज्ञानतो नाशः सर्वेषामिति दृश्यते—
"योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते, योगक्षेमो हि राज्ञस्तु समायत्तः पुरोहिते;
यत्राऽदृष्टं भयं, ब्रह्म, प्रजानां शमयत्युत, दृष्टं च राजा बाहुभ्यां, तद् राज्यं सुखमेधते।...
ब्रह्म–क्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा, पृथग्बलविधानं तन् न लोकं परिपालयेत्;
तपो–मन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम्, अस्त्र–बाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम्;
ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम्" (म० भा० शां० अ० ७४)
"ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद् ध्रुवम्, धर्मप्रणाशे भूतानामभावः स्यान्न संशयः"
(म० भा० अनु० ६१, २०)
स्मृताः शकादिरूपेण "तास्ताः क्षत्रियजातयः, वृषलत्वं परिगता ब्राह्मणानामदर्शनात्"
(मनौ, महाभारते च)
तस्मादध्यापन-ज्ञानप्रचारार्थो विनिश्चयः तत्त्वानाम्'अवसायः'; स ब्राह्मधर्मोऽत्र दर्शितः।

एवं ब्राह्मणसम्बन्धे 'यथाकामप्रयाप्य'पदभाष्यमपि सायणीयं न श्रद्धेयम्, आर्षशास्त्र-प्रत्यक्ष-प्रमाणयोरत्यन्तविरुद्धत्वात्; न हि "क्षत्रिय-वैश्यादिवत् शौर्य-धनाद्यभावाद् यः कोऽपि आगत्य दुर्बलं ब्राह्मणं तद्गृहात् तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते" इति सायणवाक्यं मूलाऽनुकूलं शास्त्रलोकदर्शनाऽनुसारि वाऽस्ति। क्षत्रिय–वैश्यादिवत् शौर्य-धनाद्यभावेऽपि ब्राह्मणेषु लोकोत्तरं तपोमन्त्रादिबलं सर्वबलप्रधानं भवतीति लोके प्रत्यक्षं महाजन-पुरोहितेषु तिलक-मालवीय-नेहरू-गान्धि-प्रभृतिषु महापुरुषेषु दृश्यते; को नाम 'यः कोऽपि वराकः चाणक्यसदृशं 'लेनिन'समं वा लोकोत्तरतपोमन्त्रमयब्रह्मबलसम्पन्नं साम्राज्यचक्रप्रवर्तकं ब्राह्मणं दुर्बलं मत्वा 'तद्गृहात्तदीयग्रामाद्वा' निष्कासयितुं प्रवर्तेत? प्रवृत्तो वाऽनात्मज्ञः उन्मत्तश्च कश्चित्तथाकर्तुं प्रभवेद्वा? इतिहास-पुराणादिषु च भृशं श्रूयते ब्रह्मबलमाहात्म्यम्—

'धिग्बलं क्षत्रियबलं, ब्रह्मतेजोबलं बलम्, एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे"
तदेतत्समवेक्ष्याऽहं प्रसन्नेन्द्रियमानसः, तपो महत्समास्थास्ये, यद्वै ब्रह्मत्वकारणम्"
( वा० रा० बालकां० ५६, २३-२४ )

"तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च, अमायया मायया च नियन्तव्यं तदा भवेत्;
क्षत्रियस्याऽतिवृत्तस्य, ब्राह्मणेषु विशेषतः, ब्रह्मैव संनियन्तृ स्यात्, क्षत्रं हि ब्रह्मसंभवम्;
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम्, अश्मनो लोहमुत्थितं, तेषां सर्वगतः तेजः स्वासु योनिषु शाम्यति;
यदा छिनत्त्ययोऽश्मानम्, अग्निश्चाऽपोऽभिगच्छति, क्षत्रं च ब्राह्मणं द्वेष्टि, तदा नश्यन्ति ते त्रयः;
तस्माद् ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर, समुदीर्णान्यजेयानि तेजांसि च बलानि च"
( म० भा० शां० अ० ७८ )

"ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता, कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ,
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते; तेष्वेव यात्रा लोकानां, भूतानामिव वासवे;
अभिचारैरुपायैश्च दहेयुरपि चेतसा, निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः;
नाऽन्तमेषां प्रपश्यामि, न दिशश्चाप्यपावृताः कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव;
बिभ्यत्येषां साहसिका, गुणास्तेषामतीव हि, कूपा इव तृणच्छन्ना, विशुद्धा द्यौरिवाऽपरे,
प्रसह्यकारिणः केचित्, कार्पासमृदवोऽपरे, सन्ति चैषामतिशठाः, तथैवाऽन्ये तपस्विनः;
कृषि-गोरक्ष्यमप्येके, भैक्ष्यमन्येऽप्यनुष्ठिताः, चौराश्चाऽन्येऽनृताश्चाऽन्ये, तथाऽन्ये नटनर्तकाः,
सर्वकर्मसहाश्चाऽन्ये पार्थिवेष्वितरेषु च, विविधाकारयुक्ताश्च ब्राह्मणा भरतर्षभ,
( म० भा० अनु० अ० ३३ )

"क्षत्रियाणां प्रतपतां तेजसा च बलेन च, ब्राह्मणेष्वेव शाम्यन्ति तेजांसि बलानि च।
भृगवस्तालजंघांश्च, नीपानाऽङ्गिरसोऽजयन्, भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ,
चित्रायुद्धांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः; अथ यो ब्राह्मणान्क्रुष्टः पराभवति सोऽचिरात्;
पश्य चन्द्रे कृतं लक्ष्म, समुद्रो लवणोदकः, तथा भगसहस्रेण महेन्द्रः परिचिह्नितः,
तेषामेव प्रभावेण सहस्रनयनो ह्यसौ, शतक्रतुः समभवत्, पश्य माधव यादृशम्"
( म० भा० अनु० अ० ३४ )

भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः, दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः,
सन्त्येषां सिंहसत्त्वाश्च, व्याघ्रसत्त्वास्तथापरे, वराह-मृगसत्त्वाश्च, जलसत्त्वास्तथाऽपरे,
सर्पस्पर्शसमाः केचित्, तथाऽन्ये मकरस्पृशः, विभाष्यघातिनः केचित्, तथा चक्षुर्हणोऽपरे,
सन्ति चाशीविषसमाः, सन्ति मन्दास्तथाऽपरे, विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर,
मेकला द्राविडा लाटाः पौण्ड्राः कान्वशिरस्तथा, शौण्डिका दरदा दार्वाश्चौराः शबर-बर्बराः,
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः वृषलत्वमनुप्राप्ता ब्राह्मणानाममर्षणात्;
ब्राह्मणानां परिभवादसुराः सलिलेशयाः, ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः;
अशक्यं स्प्रष्टुमाकाशम्, अचाल्यो हिमवान्गिरिः, अधार्या सेतुना गङ्गा, दुर्जया ब्राह्मणा भुवि"
( म० भा० अनु० अ० ३५ )

"ब्राह्मणानां परिभवः सादयेदपि देवताः, ब्राह्मणांस्तु नमस्कृत्य युधिष्ठिर न रिष्यते,
ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत्, ते हि लोकानिमान्सर्वान् धारयन्ति मनीषिणः;
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः, धनत्यागाऽभिरामाश्च वाक्संयमरताश्च ये;
रमणीयाश्च भूतानां निधानं च धृतव्रताः, प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः;
तपो येषां धनं नित्यं, वाक्चैव विपुलं बलं, प्रभवश्चैव धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः;
धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः, यान्समाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः,

पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः , पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ;
धुरि ये नाऽवसीदन्ति विषये सद्गवा इव ; दीपः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ;
सर्वशिक्षा-श्रुतिधना निपुणा मोक्षदर्शिनः , गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ;
आदिमध्याऽवसानानां ज्ञातारश्छिन्नसंशयाः , पराऽवरविशेषज्ञा गन्तारः परमां गतिम् ,
विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः , मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ;
चन्दने मलपंके च भोजनेऽभोजने समाः , समं येषां दुकूलं च तथा क्षौमाजिनानि च ;
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि , शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ;
अदैवं दैवतं कुर्युर्दैवतं चाऽप्यदैवतं , लोकानन्यान्सृजेयुस्ते लोकपालांश्च कोपिताः ;
अपेयः सागरो येषामपि शापान्महात्मनां , येषां कोपाग्निरद्याऽपि दण्डके नोपशाम्यति ,
देवानामपि ये देवाः, कारणं कारणस्य च , प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः ”

[ म० भा० अनु० अ० १५१; अतः परं अ० १५७ पर्यन्तमध्यायषट्कमपि पवना--ऽर्जुनसंवादात्मकं ब्रह्मबलमाहात्म्ये द्रष्टव्यम् ]

इत्थमद्भुतमाहात्म्ये ब्रह्मतेजोबलान्विते मनुष्ये, सायणेनोक्तं दुर्बलत्वं न युज्यते ;
तस्माद् यद् ऐतरेयेण प्रोक्तं ब्राह्मणलक्षणे 'यथाकामप्रयाप्यत्वं' तदर्थस्त्वयमिष्यते—
'यथाकामं' यथेष्टं, यो लोकनेतृत्वकर्मणि 'प्रयाप्यः' प्रार्थनानम्रैरायोक्तव्यो महाजनैः ,
'प्रयाप्यः' प्रापणीयो वा सद्गुरुत्वेन मन्त्रदः श्रेयोमन्त्रार्थिभिः पुंभिः शास्त्राऽभ्युदयसाधने ,
'प्रयाप्यः' उपगन्तव्यः, स्वाध्यायाऽध्ययनार्थिभिः समित्पाणिभिराचार्यः श्रोत्रियो ब्रह्मवित्तमः ,
'यथाकामप्रयाप्यः' स ब्राह्मणो गुणकर्मभिः युक्त, आयुक्त आत्मज्ञो नेतृकर्त्तव्यपालकः । इति ।
किंत्वेतद् युज्यते तस्मिन् "यं देवा ब्राह्मणं विदुः" , यतः सद्ब्राह्मणस्यैतल्लक्षणं गुणकर्मजम् ।
ब्राह्मणब्रुवजीवेषु, गतेषु त्वथ शूद्रतां, व्याख्यानं कलिकालेऽस्मिन् सायणीयं तु युज्यताम् ।

एवं वैश्यगुणव्याख्यानमपि सायणीयमार्षशास्त्रार्थविरुद्धत्वादुपेक्षणीयमेव प्रेक्षावतां परीक्षकाणाम्; न हि राज्ञ एव 'पूजाकरणाय', करप्रदानाय, तस्यैव च 'भक्ष्यो'ऽधीनः, 'ज्येयो'ऽभिभवनीयश्च चातुर्वर्ण्ये वैश्यसमाज उपकल्पितः स्यात्, येन "वैश्यश्च वाणिज्यं कुर्वन्, 'अन्यस्य' राज्ञो बलिकृत्, बलिं पूजां करोति, करं प्रयच्छतीत्यर्थः, अत एव 'अन्यस्य' राज्ञः 'आद्यः' भक्ष्योऽधीनो भवतीत्यर्थः; तस्य राज्ञः 'कामम्' इच्छामनतिक्रम्य 'ज्येयः' अभिभवनीयो भवति,...त एते करप्रदान-पराधीनत्व-तिरस्कार्यत्वाख्या वैश्यगुणाः" इति सायणभाष्यं सत्यार्थमुपपद्येत । मूलशब्दस्वारसिकार्थ-विरुद्धं चेदं सायणीयं भाष्यम्, तथा हि मूले "अन्यस्य बलिकृत्, अन्यस्य आद्यः, यथाकामज्येयः" इत्येव वैश्यगुणाः प्रोक्ताः; अत्र 'अन्यस्य' इति राज्ञ एव ग्रहणं कथं सायणेन कृतमिति न जानीमः ! किंच 'बलि-आद्य-ज्येय'शब्दानां 'करप्रदान-पराधीनत्व-तिरस्कार्यत्व' रूपोऽर्थः कथमिव कल्पितस्तेन सर्ववेदभाष्यकृतेति जिज्ञास्यो विषयः; किमु राज्ञे करप्रदानमात्रार्थं, तत्र पराधीनत्वार्थं, तस्य तिरस्कार्यत्वार्थमेव च चातुर्वर्ण्यसमाजे वैश्यवर्णकल्पनं तद्व्यूहनं च ससत्प्रयोजनमस्ति ? नाऽयमर्थोऽनुन्मत्तानां प्रत्यक्षदृशां लौकिकानां शास्त्रदृशां परीक्षकाणां वा चेतसि सन्तोषमाविष्करोति, सद्बुद्धावास्पदं दधाति वा । एवं "वैश्यतया, वैश्यवृत्त्या, करप्रदानादिना, जीवितुं प्रवृत्तो भवति" इति कथनमपि सायणीयं शास्त्र-लोकव्यवहारविरुद्धमेवाऽस्ति, 'वार्ता' नाम हि वैश्यवृत्तिः शास्त्रे लोके च प्रसिद्धा; न तु करप्रदानेन वैश्यः क्वाऽपि जीवितुमर्हति, प्रवृत्तो वा भवति; प्रत्युत करप्रदानेन धनक्षयात्तस्याऽजीवनमेवांशतः स्यात् । तस्मादयमत्र मूलार्थोऽनुसन्धेयः—

'अन्यस्य' स्वेतरस्य, वैश्यभिन्नस्य, ब्राह्मण-क्षत्रिय-शूद्ररूपवर्णत्रयस्याऽपि, 'बलिकृत्' वृत्तिकृत्, अर्थात् धनधान्यादिवित्तसम्पादनेन, सामाजिकराजकीयार्थिकनियमाऽनुसारतो यथायोग्यं ब्राह्मणादिवर्णान्तरेष्वपि तद्वितरणेन च द्वारा सर्वस्य जीविकाविधायकः; अत एव 'अन्यस्य' स्वेतरस्याऽपि सर्वस्य 'आद्यः'

अत एव यज्ञकाले त्रैवर्णिकानां सर्वेषां ब्राह्मणत्वमेवाम्नातम्, तद्यथा—

"अथाऽत्राद्धा जायते यो ब्राह्मणो, यो यज्ञाज्जायते; तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्; ब्रह्मणो हि जायते, यो यज्ञाज्जायते" इति श० प० ब्रा० ३, २, १, ४०।

"ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः" का० श्रौ० सू० ७, ४, १२।

"ब्रह्म वा एष प्रपद्यते, यो यज्ञं प्रपद्यते; ब्रह्म वै यज्ञो, यज्ञादु ह वा एष पुनर्जायते यो दीक्षते, तं ब्रह्म प्रपन्नं, क्षत्रं, न परिजिनाति"।

"क्षत्रं वा एष प्रपद्यते, यो राष्ट्रं प्रपद्यते; क्षत्रं हि राष्ट्रं, तं क्षत्रं प्रपन्नं, ब्रह्म न परिजिनाति"।

---

खाद्यसम्पादकः, उपजीव्य इत्यर्थः। "तस्मात्ते (वैश्याः) 'आद्याः,' अन्नधानाद् ह्यसृज्यन्त, तस्माद् भूयांसोऽन्येभ्यः" इति तैत्तिरीयसंहितावचने सहेतुकं वैश्यानाम् 'आद्यत्वं' सर्वोपजीव्यत्वं समाम्नातम्। व्याख्यातं तत्र स्वयमपि सायणाचार्येण तथैव—"मध्यतः उदरप्रदेशात्, यस्माद् 'अन्नाधाराद्' उदराद्, असृज्यन्त तस्माद् 'आद्याः' भोग्याः, वैश्या वाणिज्येन धनसम्पादकत्वाद् भोग्याः, गावश्च क्षीरादिसम्पादनेन भोग्याः" इति। भट्टभास्करेण च स्पष्टमेव व्याख्यातं यदुत "आद्या उपजीव्याः, कृष्यादीनां क्षीरादीनां च तदधीनत्वात्। तमेव हेतुमाह 'अन्नधानाद्' इत्यादि; 'अन्नानि' अशनानि धीयन्तेऽस्मिन्निति अन्नधानम्' उदरम्। तस्माद्भूयांसो बहुतरा अन्येभ्य उत्पन्नेभ्यः" इति। सर्वस्य चातुर्वर्ण्यसमाजस्य जीविकार्थं धनधान्यादिसम्पादनाय बहूनां वृत्तिकृतामावश्यकता भवतीति सर्वस्य 'आद्याः' सर्वोपजीव्या वैश्या 'अन्येभ्यः' ब्राह्मण-क्षत्रिय-शूद्रेभ्यः 'भूयांसः' अधिकसंख्यकाः सन्तीत्यर्थः।

"वार्तामूलो ह्ययं लोकः" सा च वैश्यप्रयोज्येति सर्ववर्णोपजीव्यत्वं तस्य स्थितम्। 'यथाकामज्येयः' यदान्यतया वृत्त्यर्थं सर्वैर्यथेष्टं 'ज्येयः' वशीकार्यो वशंवदः, यथाप्रयोजनं पोषणकर्मणि कृतात्मनिवेदनः सर्वेषामिष्टकृद्, इति।

"तथैव देवि वैश्याश्च लोकयात्राहिताः स्मृताः; अन्ये तानुपजीवन्ति, प्रत्यक्षफलदा हि ते।
यदि न स्युस्तथा वैश्या, न भवेयुस्तदाऽपरे; तेषामध्ययनं दानं यजनं धर्म उच्यते;
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा, वाणिज्यं सत्पथे स्थानमातिथेयत्वमेव च।
वणिक्पथमुपासद्भिर्वैश्यैर्वैश्यपथि स्थितैः, सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम्।
एवं ते विहिता देवि लोकयात्रा स्वयंभुवा" [म० भा० अनु० अ० २०८ कुं० सं०]

एवं शूद्रधर्मविषयकमपि सायणीयमत्रत्यं भाष्यं चिन्तनीयमेव; यतः 'कामोत्थाप्यः' तदीयेच्छामनुसृत्यैव शूद्रः कर्मसु 'उत्थाप्यः' प्रयोज्यस्त्रैवर्णिकैः, न तु बलान्नियोक्तव्यः' तथैव 'यथाकामवध्यः'; तदिच्छाऽनुसारमेव शूद्रः कर्मसु त्रैवर्णिकैः वध्यः' परिश्राम्यः" इत्येव ऐतरेयवाक्यार्थः सच्छास्त्रसम्मतो, न तु सायणोक्तविधः।

"अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते" व्यासेन; सायणेनाऽसौ ताडनीयोऽभिधीयते!

"यं च कंचिद् द्विजातीनां शूद्रः शुश्रूषुराव्रजेत्, कल्प्यां तेन तु ते प्राहुर्वृत्तिं धर्मविदो जनाः;
देयः पिण्डोऽनपत्याय (शूद्राय), भर्त्तव्यौ वृद्ध-दुर्बलौ (शूद्रौ)" [म० भा० शां० अ० ६०]

"तथैव शूद्रा विहिताः सर्वधर्मप्रसाधकाः, शूद्राश्च यदि ते न स्युः, कर्मकर्त्ता न विद्यते;
त्रयः पूर्वे शूद्रमूलाः सर्वे कर्मकराः स्मृताः; ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः,
वार्ता च कारुकर्माणि शिल्पं नाट्यं तथैव च, अहिंसकः शुभाचारो दैवतद्विजवन्दकः,
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणोपपद्यते; एवमादि तथाऽन्यच्च शूद्रधर्म इति स्मृतः;
तेऽप्येवं विहिता लोके कर्मयोग्याः शुभानने" [म० भा० अनु० अ० २०८ कुं० सं०]

अवश्यं कलिकालेऽस्मिन्कुराजबहुले परं, दुःस्थिते वर्णधर्मे तु, केवलं नामधारिणः
सर्वे वर्णा यदा जाताः, न स्वधर्माऽनुचारिणः, युक्तः स्यात्सायणीयार्थो वैश्यादिष्वपि विप्रवत्।

"स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति; यत्, कृष्णाजिनमध्यूहति, यद्दीक्षितव्रतं चरति, यदेनं ब्राह्मणा अभिसङ्गच्छन्ते*"

"अग्निं देवतामुपैमि, गायत्रीं छन्दस्त्रिवृतं स्तोमं सोमं राजानं, ब्रह्म प्रपद्ये, ब्राह्मणो भवामीति†"

"अथातो दीक्षाया आवेदनस्यैव (कश्चिन्निर्णय उच्यते), तदाहुर्यद् ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति; कथं क्षत्रियस्यावेदयेदिति ?"

यथैवैतद्ब्राह्मणस्य दीक्षितस्य 'ब्राह्मणोऽदीक्षिष्टेति' दीक्षामावेदयन्ति; एवमेवैतत्क्षत्रियस्याऽऽवेदयेत्, पुरोहितस्याऽऽर्षेयेणेति‡"

निधाय वा एष स्वान्यायुधानि, ब्रह्मण एवाऽऽयुधैर्ब्राह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत, तस्मात्तस्य पुरोहितस्याऽऽर्षेयेण दीक्षामावेदयेयुः पुरोहितस्याऽऽर्षेयेण प्रवरं प्रवृणीरन्" [ ऐ० ब्रा० अ० ३४ खं० ४-७ ]

"देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः। स शन्तनुः कनीयानभिषेचयाञ्चक्रे; देवापिस्तपः प्रतिपेदे। ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष। तमूचुर्ब्राह्मणा—'अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याऽभिषेचितं, तस्मात्ते देवो न वर्षतीति'। स शन्तनुर्देवापिं शिशिक्ष राज्येन; तमुवाच देवापिः 'पुरोहितस्तेऽसानि, याजयानि च त्वेति'। तस्यैतद्वर्षकामसूक्तं, तस्यैषा (ऋक्) भवति—

"आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान्;
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि।
यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्,
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्§"

"पूर्वे तु वितथे तस्मिन्कृते वै पुत्रजन्मनि, ततस्तु वितथो नाम भरद्वाजो नृपोऽभवत्;
तस्मादपि भरद्वाजाद् ब्राह्मणाः क्षत्रिया भुवि द्व्यामुष्यायणकौलीनाः स्मृतास्ते द्विविधेन च।...
गर्गस्य चैव दायादः शिविर्विद्वानजायत स्मृताः शैब्यास्ततो गर्गाः क्षत्रोपेता द्विजातयः
आहार्यतनयश्चैव धीमानासीदुरुक्षवः, तस्य भार्या विशाला तु सुषुवे पुत्रकत्रयं,
उरुक्षवाः स्मृता ह्येते सर्वे ब्राह्मणतां गताः, काव्यानां तु वरा ह्येते त्रयः प्रोक्ता महर्षयः;

---

* "स ह स खलु, क्षत्रियः, 'दीक्षमाण एव' दीक्षां स्वीकुर्वन्नेव, 'ब्राह्मणत्वजातिं प्राप्नोति' कथमिति चेद् ? उच्यते; ब्राह्मणयजमानवत् 'कृष्णाजिनमध्यूहति' आच्छादयतीति 'यद्' अस्ति, तथा "दीक्षितव्रतं' मुष्टिबन्धन-वाङ्नियमादिकं चरतीति यदस्ति, तथा 'ब्राह्मणा' ऋत्विजो भूत्वा 'एनं' क्षत्रियम् 'अभितः सङ्गच्छन्ते' सङ्गता भवन्तीति यदस्ति, तेन सर्वेण संस्कारेण क्षत्रियो ब्राह्मण्यं प्राप्नोति" [ सायणभाष्यम् ]

† "क्षत्रियोऽहम्......अग्निं देवतामुपैमि, तथा गायत्री-त्रिवृत्स्तोम-ब्राह्मणजातीः 'प्रपद्ये' प्राप्नोमि, तेषामग्न्यादीनामनुग्रहाद् ब्राह्मणो भवामि" [ सायणः ]

‡ अत्र शब्दो नोहितव्यः; अविकृत एव ब्राह्मणशब्दः क्षत्रियदीक्षावेदनेऽपि प्रयोक्तव्यः। यदि ब्राह्मणप्रवरोऽपेक्षितः, तदानीं पुरोहितस्य ब्राह्मणस्य सम्बन्धिनाऽऽर्षेयेण प्रयोगः कर्तव्यः। तथा चाऽऽपस्तम्बः क्षत्रिय-वैश्ययोरपि ब्राह्मणशब्देनैवाऽऽवेदनं दर्शयति—'अदीक्षिष्टाऽयं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति, ब्राह्मणो वा एष जायते यो दीक्षते, तस्माद्राजन्य-वैश्या अपि 'ब्राह्मण' इत्येवाऽऽवेदयति" इत्यादि सायणीयं भाष्यं तत्र द्रष्टव्यम्। § निरुक्ते अ० २ खं० ११-१२। "देवापिस्तपः प्रतिपेदे; स किल तीव्रेण तपसा ब्राह्मण्यमापेदे, विश्वामित्रवत्" इति तत्रत्या दौर्गी वृत्तिः।

गर्गाः संकृतयः काव्याः क्षत्रोपेता द्विजातयः ; संभृताऽङ्गिरसो दक्षा बृहत्क्षत्रस्य च क्षितिः।...
आजमीढस्य केशिन्यां कण्वः समभवत्किल ; मेधातिथिः सुतस्तस्य, तस्मात्काण्वायना द्विजाः।
मुद्गलस्याऽपि मौद्गल्याः क्षत्रोपेता द्विजातयः , एते ह्यङ्गिरसः पक्षं संश्रिताः काण्व-मुद्गलाः।...
ब्रह्म-क्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः , क्षेमकं प्राप्य राजानं संस्थास्यति कलौ युगे*"
"अम्बरीषस्तु नाभागिं,विरूपस्तस्य चात्मजः , पृषदश्वो विरूपस्य, तस्य पुत्रो रथीतरः ,
एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः रथीतराणां प्रवराः क्षात्रोपेता द्विजातयः†"
"श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः—विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः
कपेश्च पुरुकुत्सश्च सत्यश्चानूहवान्नृथुः आर्ष्टिषेणोऽजमीढश्च भागाऽन्योऽन्यस्तथैव च
कक्षीवश्चैव शिजयस्तथाऽन्ये च महारथाः रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः
क्षात्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः" ( वा० पु० ९१, १०५-१८ )
"पुत्रो गृत्समदस्याऽपि शुनको, यस्य शौनकः , ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ,
एतस्य वंशे संभूता विचित्रैः कर्मभिर्द्विजाः ; शलात्मजो ह्यार्ष्टिषेण,श्चरन्तस्तस्य चात्मजः ,
शौनकाश्चार्ष्टिषेणाश्च क्षात्रोपेता द्विजातयः" (वायौ अ० ९२ श्लो० ४-६ हरिवंशे च १,२९,७-८)
"यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः" ( भा० स्कं० ५ अ० ४ वाक्य० १३ )
"पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ; न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना।
करूषान्मानवादासान्कारूषाः क्षत्रजातयः ; धृष्टाद्धार्ष्टमभूत्क्षत्रं, ब्रह्मभूयं गतं क्षितौ।...
ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः , कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ;
ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप। नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः¶
शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ; यो वा अङ्गिरसां सत्रे द्वितीयमह ऊचिवान्‖
विरूपः केतुमाञ्छंभुरम्बरीषसुतास्त्रयः , विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ,
रथीतरस्याऽप्रजस्य भार्यायां तन्तवेऽर्थितः अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ;
एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः卐
"रंभस्य रभसः पुत्रो गम्भीरश्चाऽक्रियस्ततः , तस्य क्षेत्रे ब्रह्म जज्ञे; शृणु वंशमनेनसः+"
"पूरोर्वंशं प्रवक्ष्यामि, यत्र जातोऽसि भारत , यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे §"
"गर्गाच्छिनिस्ततो गार्ग्यः, क्षत्राद्ब्रह्म ह्यवर्तत ; दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः ,
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ; अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः।
मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितं , मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ,
अहल्या कन्यका, यस्यां शतानन्दस्तु गौतमात् ; तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ,
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल शरस्तम्बेऽपतद्रेतो, मिथुनं तदभूच्छुभम् ,
तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् , कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ×"
"क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः धृतराष्ट्रं च पाण्डुं च विदुरं चाऽप्यजीजनत् ÷"
"प्रियव्रतो नाम सुतो मनोः स्वायंभुवस्य यः , तस्याऽग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ;
तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया अवतीर्णं, सुनशतं तस्यासीद्ब्रह्मपारगम्।
तेषां वै भरतो ज्येष्ठो नारायणपरायणः , विख्यातं वर्षमेतद् यन्नाम्ना भारतमद्भुतम्।

---

*. मात्स्ये अ० ४९-५०। †. वायौ अ० ८८ श्लो० ६-७।

¶ भा० स्कं० ९ अ० २। ‖ भा० ९, ३, १। 卐 भा० ९, ६, १-३। + भा० ९, १७, ११। § भा० ९, २०, १।

× भा० स्कं० ९ अ० २१ ÷ भा० ९, २२, २५।

स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् उपासीन,स्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः।
तेषां नव नवद्वीपपतयोऽस्य समन्ततः कर्मतन्त्रप्रणेतारः, एकाशीतिर्द्विजातयः,
नवाऽभवन्महाभागा मुनयो ह्यर्थशंसिनः श्रमणा वातरशना आत्मविद्याविशारदाः §"
"नाभागधृष्णपुत्राश्च क्षत्रिया वैश्यतां गताः ; नाभागरिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ;
पृषध्रो हिंसयित्वा तु गुरोर्गां द्विजसत्तमाः, शापाच्छूद्रत्वमापन्नः¶" [ ब्रह्मपुराणे अ० ७ ]
"धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः, वेणुहोत्रसुतश्चाऽपि भार्गोनाम प्रजेश्वरः,
वत्सस्य वत्सभूतिस्तु, भार्गभूतिस्तु, भार्गजः, एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे,
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयः पुत्राः सहस्रः" [ ब्रह्मपुराणे अ० ११ ]
"महायोगी स तु वलिर्बभूव नृपतिः पुरा, पुत्रानुत्पादयामास पञ्च वंशकरान्भुवि ;
अङ्गः प्रथमतो जज्ञे, वङ्गः सुह्मस्तथैव च, पुण्ड्रः, कलिंगश्च तथा, बालेयं क्षत्रमुच्यते।
बालेया ब्राह्मणाश्चैव तस्य वंशसमुद्भवाः ; बलेश्च ब्रह्मणा दत्तो वरः प्रीतेन भो द्विजाः ;
चतुरो नियतान्वर्णांस्त्वं च स्थापयितेति च। इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ ;
तस्य ते तनयाः सर्वे क्षेत्रजा मुनिपुङ्गवाः, सम्भूता दीर्घत(म)पसो सुदेष्णायां महौजसः||"
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः।··· एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे,
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तमाः"
"विश्रुताः कौशिका विप्रा, स्तथाऽन्ये सैन्धवायनाः, ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः ;
पौरवस्य मुनिश्रेष्ठा, ब्रह्मर्षेः कौशिकस्य च, सम्बन्धोऽस्याऽथ वंशेऽस्मिन्ब्रह्म-क्षत्रस्य विश्रुतः"।
"पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः, तस्य सत्यधृतेरेतो दृष्ट्वाऽप्सरसमग्रतः
अवस्कन्नं शरस्तम्बे, मिथुनं समपद्यत ; कृपया तच्च जगृहे शन्तनुर्मृगयां गतः,
कृपः स्मृतः स वै तस्माद्, गौतमी च कृपी स्मृता
एते शारद्वताः प्रोक्ता एते ते गौतमाः स्मृताः" [ ब्र० पु० अ० १३ ]
"विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः जनयामास पुत्रं तु तपोविद्याशमात्मकम् :
प्राप्यब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः, विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्धनः। विश्वामित्रस्य तु सुता देवरातादयः स्मृताः,
प्रख्यातास्त्रिषु लोकेषु, तेषां नामानि मे शृणु—
देवश्रवाः कतिश्चैव, यस्मात्कात्यायनाः स्मृताः ; शालावत्यां हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुमान्,
सांकृतिर्गालवश्चैव मुद्गलश्चेति विश्रुताः, मधुच्छन्दो जयश्चैव देवलश्च तथाऽष्टकः,
कच्छपो हारितश्चैव विश्वामित्रस्य वै सुताः,
तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम्।
पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च, पार्थिवा देवराताश्च शालङ्कायन-बाष्कलाः,
लोहिता यामदूताश्च तथा कारीषवः स्मृताः, सौश्रुताः कौशिका राजंस्तथाऽन्ये सैन्धवायनाः
देवला रेणवश्चैव याज्ञवल्क्या-ऽघमर्षणाः, औदुम्बरा ह्यभिष्णातास्तारकायन-चुञ्चुलाः,
शालावत्या हिरण्याक्षाः सांकृत्या गालवास्तथा, बादरायणिनश्चाऽन्ये विश्वामित्रस्य धीमतः,
ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः। पौरवस्य महाराज, ब्रह्मर्षेः कौशिकस्य च,
सम्बन्धोऽप्यस्य वंशेऽस्मिन्ब्रह्म-क्षत्रस्य विश्रुतः" [ हरिवंशे पर्व १ अ० २७ तथा ३२ ]

---

§ भा० स्कं० ११ अ० २ श्लो० १५–२०।

¶ इमे श्लोका हरिवंशेऽपि ( पर्व १ अ० १० श्लो० ३० ; तथा अ० ११ श्लो० ९–१० ) समुपलभ्यन्ते।

|| ब्रह्म पु० अ० १३ ; तथा हरिवंशे पर्व १ अ० ३१।

"पुत्रः प्रतिरथस्याऽपि कण्वः, समभवन्नृपः मेधातिथिः सुतस्तस्य, यस्मात्काण्वायना द्विजाः"
"ततोऽभवन्महातेजा राजा परमधार्मिकः वत्सस्य वत्सभूमिस्तु, भार्गभूमिस्तु भार्गवात्;
एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च भरतर्षभ"
"मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः, सर्वे एते महात्मानः क्षत्रोपेता द्विजातयः;
एते ह्यङ्गिरसः पक्षं संश्रिताः काण्व-मौद्गलाः, मौद्गलस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः"
मैत्रायणस्ततः सोमो मैत्रेयास्तु ततः स्मृताः, एते हि संश्रिताः पक्षं क्षत्रोपेतास्तु भार्गवाः"
[ हरिवंशे प० १ अ० ३२ ]

"ब्रह्मादिर्मानवो वंशः" ( वि० पु० ४, १, ३ )।

"पृषध्रस्तु मनुपुत्रो गुरुगोवधाच्छूद्रत्वमगमत्; दिष्टपुत्रस्तु नाभागो वैश्यतामगमत्" ( वि० पु० ४, १, १७—१९ )।

"एते क्षत्रप्रसूता वै, पुनश्चाऽऽङ्गिरसः स्मृताः, रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः" ( वि० पु० ४, २, १० )।

"ततश्चाऽसौ विकुक्षिर्गुरुणैवमुक्तः 'शशाद' संज्ञामवाप, पित्रा च परित्यक्तः" ( वि० पु० ४, २, १८ )।

"त्रय्यारुणेः सत्यव्रतः योऽसौ 'त्रिशङ्कु'संज्ञामवाप, स चाण्डालतामुपगतश्च" ( वि० पु० ४, ३, २१-२२ )।

"ततश्च ( सगरः ) पितृराज्याऽपहरणादमर्षितो हैहयतालजङ्घादिवधाय प्रतिज्ञामकरोत्; प्रायशश्च हैहयतालजङ्घाञ्जघान। शक-यवन-काम्बोज-पारद-पह्लवा हन्यमानास्तत्कुलगुरुं वसिष्ठं शरणं जग्मुः; अथैनान् वसिष्ठो जीवन्मृतकान्कृत्वा सगरमाह—'वत्स, अलमेभिर्जीवन्मृतकैरनुसृतैः; एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्म-द्विजसङ्गपरित्यागं कारिताः'। तथेति तद्गुरुवचनमभिनन्द्य तेषां वेषाऽन्यत्वमकारयत्; यवनान्मुण्डितशिरसो,ऽर्धमुण्डिताञ्छकान्, प्रलम्बकेशान्पारदान्, पह्लवाञ्श्मश्रुधरान्, निःस्वाध्याय-वषट्कारानेतानन्यांश्च क्षत्रियांश्चकार; एते चाऽऽत्मधर्मपरित्यागाद् ब्राह्मणैः परित्यक्ता म्लेच्छतां ययुः[३४]" ( वि० पु० ४, ३, ४०-४८' )

३४. बाहोर्व्यसनिनस्तात, हृतं राज्यमभूत्किल हैहयैस्तालजङ्घैश्च शकैः सार्धं विशाम्पते;
यवनाः, पारदाश्चैव, काम्बोजाः, पह्लवाः, खसाः, एते ह्यपि गणाः पञ्च हैहयार्थे पराक्रमन्।
हृतराज्यस्तदा राजा स वै बाहुर्वनं ययौ, पत्न्या चाऽनुगतो दुःखी वने प्राणानवाऽसृजत्।
पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात्; सपत्न्या तु गरस्तस्यै दत्तः पूर्वमभूत्किल।
सा तु भर्त्तुश्चितां कृत्वा वने तामध्यरोहत; और्वस्तां भार्गवस्तात कारुण्यात्समवारयत्।
तस्याश्रमे च तं गर्भं गरेणैव सहाऽच्युतं व्यजायत महाबाहुं सगरं नाम पार्थिवम्।
और्वस्तु जातकर्मादि तस्य कृत्वा महात्मनः, अध्याप्य वेदशास्त्राणि, ततोऽस्त्रं प्रत्यपादयत्
आग्नेयं तु महाघोरममरैरपि दुःसहम्। स तेनाऽस्त्रबलेनाजौ बलेन च समन्वितः
हैहयान्निजघानाशु क्रुद्धो रुद्रः पशूनिव; आजहार च लोकेषु कीर्त्तिं कीर्त्तिमतां वरः।
ततः शकान्सयवनान्काम्बोजान्पारदांस्तथा पह्लवांश्चैव निःशेषान् कर्त्तुं व्यवसितस्तदा।
ते वध्यमाना वीरेण सगरेण महात्मना वसिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम्।
वसिष्ठस्त्वथ तान्दृष्ट्वा समयेन महाद्युतिः सगरं वारयामास, तेषां दत्त्वाऽभयं तदा।
सगरः स्वां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च, धर्मं जघान तेषां वै वेषाऽन्यत्वं चकार ह;
अर्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयत्, यवनानां शिरः सर्वं, काम्बोजानां तथैव च,
पारदा मुक्तकेशाश्च, पह्लवाः श्मश्रुधारिणः, निःस्वाध्याय-वषट्काराः कृतास्तेन महात्मना;

"गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्तयिताऽभूत्" ( वि० पु० ४, ८, ६ )।

"ततश्च वीतिहोत्रः, तस्माद्भार्गः, भार्गस्य भार्गभूमिः, ततश्चातुर्वर्ण्यप्रवृत्तिरिति" ( वि० पु० ४, ८, २० )।

"तस्याऽपि हेमो, हेमस्याऽपि सुतपाः, सुतपसश्च बलिः, यस्य क्षेत्रे दीर्घतमसा अङ्ग–वङ्ग–कलिङ्ग–सुह्म–पौंड्रा( औड्रा )ख्यं बालेयं क्षत्रमजन्यत; तन्नामसन्ततिसंज्ञाश्च पञ्च विषया बभूवुः" ( वि० पु० ४, १८, १२–१४ )।

"जयद्रथो ब्रह्म-क्षत्रान्तरालसंभूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत् ( वि० पु० ४, १८, २३ )।

"अप्रतिरथस्य ( क्षत्रियस्य ) कण्वः पुत्रोऽभूत्, तस्यापि मेधातिथिः, यतः काण्वायना द्विजा ( ब्राह्मणाः ) बभूवुः" ( वि० पु० ४, १९, ५–७ )।

---

शका यवन-काम्बोजाः पारदाश्च विशाम्पते , कोलिसर्पाः समहिषा दार्वाश्चोलाः सकेरलाः

सर्वे ते क्षत्रियास्तात, धर्मस्तेषां निराकृतः वसिष्ठवचनाद्राजन् सगरेण महात्मना "

[ हरिवं० प० १ अ० १४; ब्रह्मपु० अ० ८; वायुपु० अ० ८८; भा० स्कं० ९ अ० ८ ]

यहां भाष्य मे उद्धृत 'विष्णुपुराण' के वाक्यों से, तथा टिप्पण मे उल्लिखित 'हरिवंश' के श्लोकों से, जो किञ्चित्पाठभेद के साथ 'ब्रह्म' 'वायु' और 'भागवत' आदि पुराणों मे भी पाये जाते हैं, यह स्पष्ट प्रतीत होता है कि शक यवन काम्बोज पारद और पह्लव-प्रभृति अनेक 'वृषल' जातियां स्ववर्ण-धर्मसे बहिष्कृत क्षत्रियों से बन गईं। 'बाहु' नामक सूर्यवंशीय राजा अत्यन्त व्यसनी हो गया था; उसके व्यसनशीलस्वभाव से सुलभ दौर्बल्य के कारण, हैहय तालजंघ और शक गणों ने उसका राज्य छीन लिया; हैहय आदि की ओर से यवन पारद काम्बोज पह्लव और खस लोगों ने भी राजा 'बाहु' पर आक्रमण किया था। राज्य का अपहरण हो जाने पर दुःखी होकर, राजा 'बाहु' अपनी गर्भवती पत्नी के साथ वन को चला गया और कुछ दिनों के बाद वहीं मर गया। अनन्तर, 'और्व' ऋषिके आश्रम मे उसकी पत्नी के 'सगर' नामक पुत्र हुआ; बड़े होने पर उसने अपनी माता से स्वपैतृक राज्य के अपहरण की बात सुनकर, हैहयों को शीघ्र ही मार डाला और अपना अपहृत राज्य वापस लौटा लिया। जब वह हैहयों के सहायक 'शक' आदि गणों को भी निःशेष कर डालने पर तुल गया, तब वे लोग 'सगर' के कुलगुरु महर्षि वसिष्ठ की शरण मे गये। वसिष्ठ ने सगर को उन्हें मारने से रोक दिया; पर उसकी प्रतिज्ञा की रक्षा के लिये उनका धर्म और ब्राह्मणों से सम्बन्ध छुड़ाकर उनको जातिच्युत कर दिया; अगत्या वे स्वधर्म से वञ्चित ( बहिष्कृत ) और ब्राह्मणों से परित्यक्त होकर 'म्लेच्छ' जातियों मे परिणत ( वृषल ) हो गये। इसी बात को लक्ष्य करके मनुस्मृति और महाभारत में लिखा है कि "क्षत्रिय जाति के लोग ही ब्राह्मणों के 'अदर्शन' ( सम्बन्धपरित्याग ) से शकादि गणों के रूप में 'वृषल' वा म्लेच्छ हो गये"; "तास्ताः क्षत्रियजातयः, वृषलत्वमनुप्राप्ता ब्राह्मणानाम् ( अमर्षणात् ) अदर्शनात्"। यद्यपि इस वाक्य के, 'ब्राह्मणों का अदर्शन, ब्राह्मणों का अज्ञान, कार्याकार्यविषयक दर्शन का, अनुभव का, अभाव; अथ च उनका दर्शन न होना, गुरुत्व नेतृत्व पौरोहित्य के उपयुक्त सुयोग्य, सत्पात्र, ब्राह्मणों का न मिलना; ऐसे अर्थ भी समीचीन और सुसङ्गत माने गये हैं ( मा० आ० भा० १ पृ० १४५–४६ ); तथापि इतिहास-पुराणों में वर्णित सगरोपाख्यान से इसका मिलान करने पर इस अर्थ का भी स्पष्ट भान होता है कि 'ब्राह्मणों के अदर्शन से, सामाजिक बहिष्कार के कारण, पौरोहित्य आदि ( अध्यापन-याजनादि ) कर्म के लिये ब्राह्मणों के न मिलने से, क्षत्रिय लोग ही 'शक' आदि जातियों के रूप में 'वृषल' हो गये'। सगरोपाख्यान में यह स्पष्ट ही लिखा है कि वसिष्ठ' ने अपने यजमान राजा सगर के विरोधी क्षत्रियों से स्वधर्म का त्याग करा दिया और ब्राह्मणों से उनका सामाजिक, विद्या-सम्बन्ध, छुड़ा दिया; जिससे, सन्मार्गोपदेशक सद्ब्राहाण के 'अदर्शन' अभाव, से वे 'वृषल' म्लेच्छ, हो गये। कहीं कहीं "ब्राह्मणानाममर्षणात्" ऐसा भी पाठ है; अर्थात् ब्राह्मणों के

"गर्गाच्छिनिः, ततश्च गार्ग्याः शैन्याः, क्षत्रोपेता द्विजातयो बभूवुः" ( वि० पु० ४, १९, २३ )।

"अजमीढात्कण्वः, कण्वान्मेधातिथिः, यतः काण्वायना द्विजाः" ( वि० पु० ४, १९, २९-३२ )।

"मुद्गलाच्च मौद्गल्याः क्षत्रोपेता द्विजातयो बभूवुः" ( वि० पु० ४, १९, ६१ )।

"मुद्गलाद् बृहदश्वः बृहदश्वाद् दिवोदासः अहल्या च मिथुनमभूत्; शरद्वतश्चाऽहल्यायां शतानन्दोऽभवत्, शतानन्दात्सत्यधृतिर्धनुर्वेदान्तगो जज्ञे, सत्यधृतेर्वराऽप्सरस्समुर्वशीं दृष्ट्वा रेतः स्कन्नं शरस्तम्बे पपात, तच्च द्विधागतमपत्यद्वयं—कुमारः कन्या चाऽभवत्; तौ च मृगयामुपयातः शान्तनुः दृष्ट्वा कृपया जग्राह; ततः कुमारः कृपः; कन्या चाऽश्वत्थाम्नो जननी कृपी द्रोणाचार्यस्य पत्न्यभवत्" ( वि० पु० ४, १९, ६२-६८ )।

"सत्यवतीनियोगाच्च मत्पुत्रः कृष्णद्वैपायनो मातुर्वचनमनतिक्रमणीयमिति कृत्वा

'अमर्ष' अक्षमा असहिष्णुता कोप वा विद्वेष से, कतिपय क्षत्रिय-जातियां वृषलत्व को पहुँच गईं ।

इन बातों की पुष्टि, हिन्दूसमाज के, ऐसे वर्त्तमान व्यवहारों से भी होती है, जो सामाजिक दण्डप्रणयन की अनुच्छिन्न संस्कृति के पारम्पर्यक्रम से आज भी प्रचलित और प्रायः अक्षुण्ण हैं। ऐसी बातें हिन्दुओं की प्रायः सभी बिरादरियों मे होती हैं, कि जब किसी व्यक्ति वा कुटुम्ब-परिवार का जातीय बहिष्कार करना होता है, तब उससे उसका धर्म, सामाजिक कर्म, छुड़ा दिया जाता है; अर्थात् उसकी बिरादरी के लोग उसके साथ भोजन विवाह श्राद्ध यज्ञ और देवपूजा आदि लौकिक वा पारलौकिक धर्मकृत्य नहीं करते; कुछ बिरादरियों मे हुक्का-पानी तक बन्द किया जाता है। साथ ही जाति से बहिष्कृत व्यक्ति वा कुटुम्ब का 'ब्राह्मसम्बन्ध' भी छुड़वा दिया जाता है; कोई भी ब्राह्मण उसके यहाँ अध्यापन याजन विवाह श्राद्ध आदि कर्मकाण्ड नहीं कराता और न भोजन करता, नहीं दक्षिणा लेता है। यह काम, ब्राह्मण लोग, अमर्ष के कारण, कहीं स्वतः करते हैं; और कहीं कहीं बहिष्कृत परिवार के बिरादरीवाले यजमानों के दबाव से; क्योंकि यदि वे बहिष्कृत व्यक्ति वा परिवार से ब्राह्मसम्बन्ध करें तो उसकी सारी बिरादरी की यजमनिका से स्वयं बहिष्कृत हो सकते हैं। कहीं कहीं तो ब्राह्मणों वा पुरोहितों के साथ ही नाई, धोबी आदि सामाजिक 'कर्मकरों' कमकरों को भी, बहिष्कृत परिवार का काम करने से, उसके बिरादरीवाले यावच्छक्य रोक देते हैं। स्वयं भगवन् मनु ने भी सामाजिक अपराधियों को दण्ड देने के लिये, उनके साथ 'ब्राह्म' और 'यौन' सम्बन्ध के त्याग का प्रयोग बतलाया है ( मनु० २, ४० )। ऐसे जातीय बहिष्कारों का विषम परिणाम हमारे सामने प्रत्यक्ष है; भारतवर्ष की अधिक ईसाई और मुस्लिम जातियाँ, ब्राह्म और यौन सम्बन्ध से बहिष्कृत हिन्दू-सन्तानों से ही बनी और बढ़ी हैं। वैसे बहिष्कृत हिन्दूसन्तानों मे भी अवश्य ही उन्हीं की संख्या अधिक होगी जो ज़रा ज़रासी बात मे अपनी बिरादरियों द्वारा ब्राह्म और यौन सम्बन्ध से विच्छिन्न होकर विधर्मी वा वृषल हो जाने पर बाध्य हुए होंगे; जैसा कि वर्तमान समय के वैसे कार्यों से अनुमान किया जा सकता है।

अस्तु, हमे तो क्षत्रियों के वृषल हो जाने के उपर्युक्त इतिहास से, तथा हिन्दुओं के ईसाई और मुसलान आदि बन जाने के प्रत्यक्ष दृष्टान्त से, यहाँ केवल इस निष्कर्ष की सूचना देनी है कि इन बातों से भी 'कर्मणा वर्णः' का ही सिद्धान्त निष्पन्न होता है। यदि 'जन्मना वर्णव्यवस्था', शास्त्र वा समाज को अभीष्ट होती, तो जन्मपरिवर्तन के बिना, वर्ण वा जाति का परिवर्त्तन असंभव होता; कोटिशः बहिष्कार से भी जन्म-जाति नहीं बदली जा सकती, मनुष्य से पशु, वा गौ से घोड़ा नहीं बनाया जा सकता है। पर, क्षत्रिय से वृषल वा म्लेच्छ हो जाना, तथैव अन्य वर्णों का वर्णान्तर मे बदल जाना, इतिहास-पुराणों से और वैदिक आख्यानोपाख्यानों से भी अच्छी तरह ज्ञात होता है, और अगणित जातियों का जात्यन्तर मे मिल जाना तथा विजातीय हो जाना भी प्रत्यक्षतः प्रसिद्ध ही है।

विचित्रवीर्यक्षेत्रे, धृतराष्ट्र-पाण्डू, तत्प्रहितभुजिष्यायां विदुरं चोत्पादयामास" ( वि० पु० ४, २०, ३८ )।

"पाण्डोरप्यरण्ये मृगयायामृषिशापोपहतप्रजाजननसामर्थ्यस्य धर्म-वायु-शक्रैर्युधिष्ठिर-भीमसेना-ऽर्जुनाः कुन्त्यां, नकुल-सहदेवौ चाऽश्विभ्यः माद्र्यां, पञ्च पुत्राः समुत्पादिताः" ( वि० पु० ४, २०, ४० )।

"महानन्दिनस्ततः शूद्रागर्भोद्भवोऽतिलुब्धोऽतिबलो महापद्मनामा नन्दः परशुराम इवाऽपरोऽखिलक्षत्रान्तकारी भविष्यति" ( वि० पु० ४, २४, २० )।

"महात्मानो यदूनां च ये जाता विपुले कुले ब्राह्मणाः क्षत्रिया वैश्यास्ते मया परिकीर्तिताः*"

"अभूच्छूद्रो गोवधात्तु पृषध्रस्तु मनोः सुतः। दिष्टपुत्रस्तु नाभागो वैश्यतामगमत्स च।
धृष्टस्य धार्ष्टकं क्षत्रं, वैश्यकं तद्बभूव ह। इक्ष्वाकुजो विकुक्षिस्तु 'शशादः' शशभक्षणात्।
गाधिः कुशाश्वात्संजज्ञे, विश्वामित्रस्तदात्मजः, कन्या सत्यवती, दत्ता ऋचीकाय द्विजाय सा ;
ऋचीकाज्जमदग्निश्च, रामस्तस्याऽभवत्सुतः।" ( अत्र क्षत्रियकन्यायां ब्रह्मवंशसमुद्भवः )

"हस्तिनः पुरुमीढश्च, कण्वोऽभूदजमीढतः, कण्वान्मेधातिथिर्जज्ञे, यतः काण्वायना द्विजाः†"

"नरिष्यतः शकाः पुत्राः, नाभागस्य च वैष्णवाः ; नाभागस्य च पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ।
करूषस्य तु कारूषाः क्षत्रिया युद्धदुर्मदाः ; शूद्रत्वं च पृषध्रोऽगाद् हिंसयित्वा गुरोश्च गाम्।...
भरतस्य विनष्टेषु तनयेषु महीपतेः मातृणां तु प्रकोपेण, मया तत्कथितं पुरा ;
बृहस्पतेरङ्गिरसः पुत्रो विप्रो महामुनिः अयाजयद्भरद्वाजो, महद्भिः क्रतुभिर्विभुः।
( ततो मरुद्भिरानीय पुत्रः स तु बृहस्पतेः संक्रामितो भरद्वाजः क्रतुभिर्वितथोऽभवत्[35] )

* म० भा० आदि० ६७, ६३। † गरुडपु० पूर्वखं० अ० १४२-४४।

३५. "भरतस्य विनष्टेषु तनयेषु पुरा किल, पुत्राणां मातृकात्कोपात्सुमहान्संक्षयः कृतः।
ततो मरुद्भिरानीय पुत्रः स तु बृहस्पतेः संक्रामितो भरद्वाजो मरुद्भिर्भरतस्य तु।
ऋषयः—भरतस्य भरद्वाजः पुत्रार्थं मारुतैः कथं, संक्रामितो महातेजाः ? तन्नो ब्रूहि यथातथम्।
सूतः—पत्न्यामापन्नसत्त्वायामुशिजः स स्थितो भुवि। भ्रातुर्भार्यां स दृष्ट्वा तु बृहस्पतिरुवाच ह—
'उपतिष्ठस्व स्वलंकृत्य मैथुनाय च मां शुभे' ; एवमुक्ताऽब्रवीदेनं स्वयमेव बृहस्पतिम्—
'गर्भः परिणतश्चाऽयं, ब्रह्म व्याहरते गिरा, अमोघरेतास्त्वं चाऽपि, धर्मश्चैवं विगर्हितः' ;
एवमुक्तोऽब्रवीदेनां स्वयमेव बृहस्पतिः—'नोपदेष्टव्यो विनयस्त्वया मे वरवर्णिनि' ;
धर्षमाणः प्रसह्यैनां मैथुनायोपचक्रमे। ततो बृहस्पतिं गर्भो धर्षमाणमुवाच ह—
'संनिविष्टो ह्यहं पूर्वमिह नाम बृहस्पते, अमोघरेताश्च भवान्, नाऽवकाश इह द्वयोः' ;
एवमुक्तः स गर्भेण, कुपितः प्रत्युवाच ह—'यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति
अभिषेधसि, तस्मात्त्वं तमो दीर्घं प्रवेक्ष्यसि'। ततः कामं संनिवर्त्य तस्याऽऽनन्दाद्बृहस्पतेः
तद्रेतस्त्वपतद्भूमौ, निवृत्तं शिशुकोऽभवत्। सद्योजातं कुमारं तु दृष्ट्वा तं ममताऽब्रवीत्—
'गमिष्यामि गृहं स्वं वै, भरस्वैनं बृहस्पते' ; एवमुक्त्वा गता सा तु; गतायां सोऽपि तं त्यजत्।
मातापितृभ्यां त्यक्तं तु दृष्ट्वा तं मरुतः शिशुं, जगृहुस्तं भरद्वाजं मरुतः कृपया स्थिताः।
तस्मिन्काले तु भरतो बहुभिः क्रतुभिर्विभुः काम्य-नैमित्तिकैर्यज्ञैरयजत्पुत्रलिप्सया।
यदा स यजमानस्तु पुत्रं नाऽऽसादयत्प्रभुः, ततः क्रतुं मरुत्सोमं पुत्रार्थे समुपाऽहरत्।
तेन ते मरुतस्तस्य मरुत्सोमेन तुष्टुवुः, उपनिन्युर्भरद्वाजं पुत्रार्थं भरताय वै।
दायादोऽङ्गिरसः सूनोरौरसस्तु बृहस्पतेः, संक्रामितो भरद्वाजो मरुद्भिर्भरतं प्रति।
भरतस्तु भरद्वाजं पुत्रं प्राप्य विभुर्ब्रवीत्—आदावात्महिताय त्वं, कृतार्थोऽहं त्वया विभो"

[ मात्स्ये अ० ४९ श्लो० १४-३१ ]

पूर्वे तु वितथे तस्य कृते वै पुत्र जन्मनि ततोऽथ वितथो नाम भरद्वाजात्सुतोऽभवत् ।
ततोऽथ वितथे जाते भरतस्तु दिवं ययौ ; वितथं चाऽभिषिच्याऽथ भरद्वाजो वनं ययौ ।
स चाऽपि वितथः पुत्राञ्जनयामास पञ्च वै—सुहोत्रं च, सुहोतारं, गयं, गर्गं तथैव च ,
कपिलं च महात्मानं; सुहोत्र(स्य)श्च सुतद्वयं—काशिकं च महासत्त्वं, तथा गृत्समतिं नृपम् ;
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया, विशः" [अग्निपु० अ० २७३ तथा अ० २७८; ब्रह्मपु०अ०१३]
"ब्राह्मणस्याऽपि चेद्राजन् क्षत्रधर्मेण जीवतः प्रशस्तं जीवितं लोके, क्षत्रं हि ब्रह्मसंभवम् ।
इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् , ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ;
तच्चाऽस्य कर्म पूज्यं च प्रशस्यं च विशाम्पते , तेनेन्द्रत्वं समापेदे देवानामिति नः श्रुतम्ꣳ"
"पञ्च पुत्रा ययातेश्च, त्रयो म्लेच्छत्वमागताः ; द्वौ तथाऽऽर्यत्वमापन्नौ यदुर्ज्येष्ठः पुरुर्लघुः§"

एवमेकशरीरेण गुण-कर्मप्रभावतः जन्मजातिपरावृत्तावन्यजातिग्रहः स्मृतः—
"विक्रमादित्यराज्ये तु द्विजः कश्चिदभूद्भुवि व्याधकर्मेति विख्यातो ब्राह्मण्यां शूद्रतोऽभवत् ।
त्रिपाठिनो द्विजस्यैव भार्या नाम्ना हि कामिनी मैथुनेच्छावती नित्यं मदाघूर्णितलोचना ।
द्विजः सप्तशतीपाठे वृत्त्यर्थी कर्हिचिद्गतः ग्रामे देवलके रम्ये बहुवैश्यनिषेविते ।
तत्र मासो गतः कालो नाययौ स स्वमन्दिरे ; तदा तु कामिनी दुष्टा रूपयौवनसंयुता
दृष्ट्वा निषादं सबलं काष्ठभारोपजीवनं , तस्मै दत्त्वा पञ्च मुद्रा बुभुजे कामपीडिता ।
तदा गर्भं दधौ सा च व्याधवीर्येण सञ्चितं ; पुत्रोऽभूद्दशमासान्ते; जातकर्म पिताऽकरोत् ।
द्वादशाब्दे गते काले स धूर्त्तो वेदवर्जितः व्याधकर्मकरो नित्यं, व्याधकर्मा ह्यतोऽभवत् ।
निष्कासितौ द्विजेनैव मातृ-पुत्रौ द्विजाऽधमौ ; निषादस्य गृहे चोभौ वने गत्वोषतुर्मुदा ।
प्रत्यहं जारभावेन बहुद्रव्यमुपार्जितं ; व्याधकर्मा तु चौर्येण पितृमातृप्रियङ्करः ।
एकदा दैवयोगेन शिवामन्दिरमाययौ , चौरवृत्तिपरो धूर्त्तः स्त्रिया भूषणमाहरत् ।
कैश्चिज्ज्ञातः स नो धूर्त्तो बहुमायाविशारदः । कदाचित्प्राप्तवांस्तत्र द्विजवक्त्रसमुद्गतं
श्रुतमादिचरित्रं हि, तेन शब्दप्रियेण वै पाठपुण्यप्रभावेण धर्मबुद्धिस्ततोऽभवत् ।
दत्त्वा चौर्यधनं सर्वं तस्मै विप्राय पाठिने , शिष्यत्वमगमत्तत्राऽक्षरमैशं जजाप ह ।
बीजमन्त्रप्रभावेण तदङ्गात्पापमुल्वणं निःसृतं कृमिरूपेण बहुवर्णेन तापितम् ।
त्रिवर्षान्ते च निष्पापो बभूव द्विजसत्तमः ; पठित्वाऽक्षरमालां च जजापादिचरित्रकम् ।
द्वादशाब्दमिते काले काश्यां गत्वा तु स द्विजः अन्नपूर्णां महादेवीं तुष्टाव परया मुदा ।
सुष्वाप तत्र मुदितः, स्वप्ने प्रादुरभूच्छिवा , दत्त्वा तस्मै हि ऋग्विद्यां पुनरन्तरधीयत ।
उत्थाय स द्विजो धीमाँल्लब्ध्वा विद्यामनुत्तमां , विक्रमादित्यभूपस्य यज्ञाचार्यो बभूव ह¶"
असच्छूद्रकुलोत्पन्नो जात्या व्याधोऽपि, कर्मणा जीवन्नेवाऽभवद्विप्रस्तज्जातेः परिवर्त्तनात्—
"अत्राऽपि श्रूयते चाऽन्यदृषिरुग्रतपाः पुरा , ब्रह्मपुत्रः, पुराकल्पे आरुणिर्नाम नामतः ;
सोऽरण्यमगमत्किञ्चित्तपोऽर्थी द्विजसत्तमः ; तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ,
देविकायास्तटे रम्ये सोऽवसद् ब्राह्मणः किल ; कदाचिदभिषेकाय स जगाम महानदीम् ।
तत्र स्नात्वा जपन्विप्रो ददर्शायान्तमग्रतः, व्याधं महाधनुःपाणिमुग्रनेत्रं विभीषणम् ।
तं द्विजं हन्तुमायात्स वल्कलानां जिघृक्षया; तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मघ्नस्य भयादिति ।
ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ; तं दृष्ट्वाऽन्तर्गतहरिं व्याधो भीत इवाग्रतः
विहाय सशरं चापं, ततो वचनमब्रवीत्—

ꣳ म० भा० शां० अ० २२ । § भविष्यपु० प्रतिसर्गपर्व खं० १ अ० २ श्लो० ४९ ।
¶ भविष्यपु० प्रतिसर्गपर्व खं० २ अ० ३३ ।

व्याधः—हन्तुमिच्छन्नहं ब्रह्मन् भवन्तं प्रागिहागतः ;
इदानीं दर्शनात्तुभ्यं सा मतिः क्वाऽपि मे गता ।

ब्राह्मणानां सहस्राणि, सत्स्त्रीणामयुतानि च, निहतानि मया ब्रह्मन् सततं पापकारिणा ।
कां गतिं प्रतिपत्स्यामि ब्रह्मघ्नोऽहं द्विजोत्तम ? इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ;
उपदेशप्रदानेन प्रसादं कर्त्तुमर्हसि ।
एवमुक्तोऽप्यसौ विप्रो नोत्तरं प्रत्यपद्यत , ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुङ्गवः ।
अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान् ; स्नात्वा नद्यां द्विजः सोऽपि वृक्षमूलमुपाश्रितः ।
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल व्याघ्रो बुभुक्षितः, शान्तं तं विप्रं हन्तुमुद्यतः ।
अन्तर्जल-गतं विप्रं यावद्व्याघ्रो जिघृक्षति , तावद्व्याधेन व्याघ्रोऽसौ सद्यः प्राणैर्वियोजितः ।...

ऋषिः—जिघृक्षोर्मृगराजस्य यत्त्वया रक्षितो ह्यहम् ,
तत्पुत्र, तुष्टस्ते दद्मि वरं; वरय सुव्रत ।
व्याधः—एष एव वरो मह्यं यत्त्वं मां भाषसे द्विज ,
अतः परं वरेणाऽहं किं करोमि ? प्रशाधि माम् ।
ऋषिः—"अहं त्वया पुरा व्याध, प्रार्थितोऽस्मि तपोऽर्थिना
बहुपातकयुक्तेन घोररूपेण चाऽनघ ;

इदानीं तव पापानि, देविकाऽभिषवेण च , मद्दर्शनेन च, चिरं विष्णुनामश्रुतेन च ,
नष्टानि; शुद्धदेहोऽसि साम्प्रतं, नाऽत्र संशयः । इदानीं वरमेकं त्वं गृहाण मम सन्निधौ ;
तपः कुरुष्व साधो, त्वं चिरकालं यदिच्छसि" इत्येवमृषिणाऽऽदिष्टो व्याधोऽतप्यत संयतः ।
तपःसिद्धिप्रभावोत्थस्वन्नदानादिसेवया ऋषिं दुर्वाससं सोऽयं कदाचित्समतोषयत् ;
"प्रक्षाल्य हस्तपादौ च, तदन्नं श्रद्धयाऽन्वितं बुभुजे परमप्रीतः; तथाऽऽचम्य विचक्षणः
तमस्थिशेषं व्याधं तु क्षुधा दुर्बलतां गतम् उवाच—'वेदाः साऽङ्गास्ते सरहस्य-पद-क्रमाः ,
ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते' । एवं प्राऽदाद्वरं, तस्य दुर्वासा, नाम चाऽकरोत्-
'भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति' । एवं दत्तवरो व्याधस्तमाह मुनिसत्तमं—
'व्याधो भूत्वा कथं ब्रह्मन्, वेदानध्यापयास्यहम्' ?

दुर्वासा ऋषिः—प्राक्शरीरं गतं तेऽद्य निराहारस्य सत्तम ,
तपोमयं शरीरं ते पृथग्भूतं, न संशयः ;
प्राग्विज्ञानं गतं नाशम्, इदानीं शुद्धमक्षरम्
उत्पन्नं, शुद्धकायोऽसि, सत्यमेतद् ब्रवीमि ते ;
तेन वेदाश्च शास्त्राणि प्रतिभास्यन्ति ते मुने ।
व्याधः—भगवन्, 'द्वे शरीरे तु' इति यत्परिकीर्तितं ,
तन्मे कथय भेदं वै, केन ब्रह्मविदां वर !
दुर्वासाः—न द्वे, त्रीणि शरीराणि; वाच्यं, तद्विपरीतकं ,
विभोगायतनं त्रैव, शरीराणीति देहिनाम् ।

प्रागवस्थमधर्माख्यं परिज्ञानविवर्जितम् , अपरं सव्रतं तद्धि ज्ञेयमत्यन्तधार्मिकम् ,
धर्मा-ऽधर्मोपभोगाय यत्, तृतीयमतीन्द्रियं , तत्, त्रिभेदं विनिर्दिष्टं ब्रह्मविद्भिर्विचक्षणैः ;
यावता भोग-धर्मौ च, मुक्तिश्चेति त्रिभेदकम् ।
यस्तु भावः पुरा ह्यासीत्प्राणिनो निघ्नतस्तव , तत्पापाख्यं शरीरं ते पापसंज्ञमतोऽभवत ।
इदानीं शुभवृत्तिं तु कुर्वतस्तप आर्जवम् अपरं धर्मरूपं तु शरीरं ते व्यवस्थितम् ;
तेन वेद-पुराणानि ज्ञातुमर्हस्यसंशयम् ।

यदाऽष्टके सम्परिवर्तते पुमान्, तदाऽन्यवृत्तो भवतीह निश्चितं ;
गताष्टवर्षस्तु पुमान्यदा भवेत्, तदाऽन्यचेष्टो भवतीह मानवः।
एकं शरीरं हि पृथङ्निर्दिष्टं ब्रह्मवादिभिः अवस्थाभेदतश्चैवं; तदेतत्कथितं त्रिधा।
अन्तरन्नास्ति चैतस्य यथा मृद्धटयोरिव, कर्मकाण्डं चतुर्भेदं ब्राह्मणादिषु कीर्तितं।
तत्र वेदोक्तकर्माणि त्रयः कुर्वन्ति नित्यशः, त्रिशुश्रूषामथैकस्तु, एता वेदोदिताः क्रियाः।
एतान्धर्मांस्तु विज्ञाय ब्राह्मणो यस्तपस्यति, तस्य मुक्तिर्भवेन्नूनं वेदवादरतस्य च†"
"तस्यां काक्षीवदादींस्तु शूद्रयोनावृषिर्वशी जनयामास धर्मात्मा शूद्रानित्येवमादिकान्।...
काक्षीवांस्तु ततो गत्वा सह पित्रा गिरिव्रजं, दृष्ट्वा स्पृष्ट्वा पितुर्वै स ह्युपविष्टश्चिरं तपः।
ततः कालेन महता तपसा भावितस्तु सः, विधूय मातृजं कायं ब्राह्मण्यं प्राप्तवान्विभुः।
ततोऽब्रवीत्पिता तं वै 'पुत्रवानस्म्यहं त्वया सत्पुत्रेण तु धर्मज्ञ, कृतार्थोऽहं यशस्विना'।
ब्राह्मण्यं प्राप्य काक्षीवान्सहस्रमसृजत्सुतान्; कौष्माण्डा गौतमाश्चैव स्मृताः काक्षीवतः सुताः"*
अस्वजातिष्वपि स्त्रीषु पुंभिरन्यकुलोद्भवैः सन्तानोत्पादनं, शास्त्रे 'नियोगाद्' विहितं स्फुटम्;
लोकाचारोऽपि शिष्टानां प्रत्यक्षव्यवहारतः तथैव स्मर्यते; तस्माच्चाऽपि वर्णो न जन्मना।
अन्यथा त्वसवर्णासु विजातीयैर्नियोगतः जातानां महतां चापि वर्णसङ्करता भवेत्।
ये प्रातःस्मरणीयास्तु पुण्यश्लोकाः प्रकीर्तिताः, तेषां च बहवो जाता महात्मानो नियोगतः
पुंयोगैरन्यजातीयैरन्यजातिषु मातृषु[३६]; तेऽपि नूनं चतुर्ष्वेव वर्णेष्वभ्यर्हिता मताः;

---

† वराहपुराणे (अ० ३७-३९) सत्यतपउपाख्यानम्। * मात्स्ये अ० ४८।

३६. "कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः क्षेत्रे विचित्रवीर्यस्य, पाण्डुश्चैव महाबलः;
धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि।"
पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् द्वयोः स्त्रियोः, गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः।
धर्माद्युधिष्ठिरो जज्ञे, मारुताच्च वृकोदरः, इन्द्राद्धनञ्जयः श्रीमान्सर्वशस्त्रभृतां वरः;
जज्ञाते रूपसम्पन्नावश्विभ्यां च यमावपि—नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ"
[ म० भा० आदि० ६३, १३-१७ ]

"कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो नप्तारः किल पञ्च गोलकसुताः कुण्डाः स्वयं पाण्डवाः;
ते पञ्चाऽपि समानजानय, इदं दुःस्वप्नविध्वंसनं तेषां कीर्त्तनमामनन्ति मुनयो धर्मस्य सूक्ष्मा गतिः!"
"रहस्यं खल्विदं राजन्, देवानामिति नः श्रुतम्; तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे।
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे।
तदा निःक्षत्रिये लोके भार्गवेण कृते सति, ब्राह्मणान् क्षत्रिया राजन् सुतार्थिन्योऽभिचक्रमुः;
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ऋतावृतौ नरव्याघ्र, न कामान्, नाऽनृतौ तथा।
तेभ्यश्च लेभिरे गर्भं क्षत्रियास्ताः सहस्रशः; ततः सुषुविरे राजन् क्षत्रियान्वीर्यवत्तरान्;
कुमारांश्च कुमारीश्च पुनः क्षत्राऽभिवृद्धये। एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः
जातं, वृद्धं च धर्मेण, सुदीर्घेणायुषाऽन्वितम्; चत्वारोऽपि ततो वर्णा बभूवुर्ब्राह्मणोत्तराः"
[ म० भा० आदि० ६४, ३-९ ]

"एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा।
एवं निःक्षत्रिये लोके कृते तेन महर्षिणा, ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः
उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः। 'पाणिग्राहस्य तनयः' इति वेदेषु निश्चितं
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः। लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः;
ततः पुनः समुदितं क्षत्रं समभवत्तदा। इमं चैवात्र वक्ष्येऽहमितिहासं पुरातनम्—

**तेषु मातृसजातीयाः, पितृवर्णाश्च केचन , गुणकर्मानुसाराच्च केचिद्वर्णान्तरं गताः ;**
**न त्ववर्णाः, चतुर्भ्यो वा वर्णेभ्यो भिन्नवर्णकाः , नो वर्णसङ्करा वाऽपि ते कथ्यन्ते महात्मभिः ।**

अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा ; ममता नाम तस्यासीद्भार्या परमसंमता ।
उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसां बृहस्पतिर्बृहत्तेजा ममतामन्वपद्यत ।
उवाच ममता तं तु देवरं वदतां वरम्— 'अन्तर्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति ;
अयं च मे महाभाग, कुक्षावेव बृहस्पते , औतथ्यो वेदमत्राऽपि षडङ्गं प्रत्यधीयत ;
अमोघरेतास्त्वं चाऽपि, द्वयोर्नास्त्यत्र संभवः , तस्मादेवं गते त्वद्य उपारमितुमर्हसि' ।
एवमुक्तस्तदा सम्यग्बृहस्पतिरुदारधीः कामात्मानं तदात्मानं न शशाक नियच्छितुम् ।
स बभूव ततः कामी तया सार्धमकामया ; उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत—
'भोस्तात, मा गमः कामं, द्वयोर्नास्तीह संभवः , अल्पावकाशो भगवन्, पूर्वं चाऽहमिहागतः ,
अमोघरेताश्च भवान् , न पीडां कर्त्तुमर्हति' ।
अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः जगाम मैथुनायैव ममतां चारुलोचनाम् ।
शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पतेः ।
स्थानमप्राप्तमथ तच्छुक्रं प्रतिहतं तदा पपात सहसा भूमौ; ततः क्रुद्धो बृहस्पतिः
तं दृष्ट्वा पतितं शुक्रं, शशाप स रुषान्वितः उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भागवानृषिः—
'यन्मां त्वमीदृशे काले सर्वभूतेप्सिते सति एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि' ।
स वै दीर्घतमा नाम, शापादृषिरजायत बृहस्पतेर्बृहत्कीर्तेः, बृहस्पतिरिवौजसा ;
जात्यन्धो वेदविद्प्राज्ञः पत्नीं लेभे स विद्यया तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीम् ।
स पुत्राञ्जनयामास गौतमादीन्महायशाः ऋषेरुतथ्यस्य तदा सन्तानकुलवृद्धये ।
धर्मात्मा च महात्मा च वेदवेदाङ्गपारगः , गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः ,
प्रावर्तत तदा कर्त्तुं श्रद्धावांस्तमशङ्कया । ततो वितथमर्यादं तं दृष्ट्वा मुनिसत्तमाः
क्रुद्धा मोहाभिभूतास्ते सर्वे तत्राश्रमौकसः 'अहोऽयं भिन्नमर्यादो नाश्रमे वस्तुमर्हति ,
तस्मादेनं वयं सर्वे पापात्मानं त्यजामहे' ; इत्यन्योऽन्यं समाभाष्य ते दीर्घतमसं मुनिं ,
पुत्रलाभा (लब्धपुत्रा) च सा पत्नी न तुतोष पतिं तदा । प्रद्विषन्तीं पतिर्भार्यां, 'किं मां द्वेक्षीति' चाऽब्रवीत्

प्रद्वेषी—भार्याया भरणाद्भर्ता, पालनाच्च पतिः स्मृतः ,
अहं त्वद्भरणाशक्ता, जात्यन्धं ससुतं तदा
नित्यकालं श्रमेणार्ता न भरेयं महातपः ।

भीष्मः—तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा
नियतां क्षत्रियकुले, 'धनार्थश्च भविष्यति' ।
( धनम्, अर्थश्च उपभोगादिः; धनसहितोऽर्थ इति समासः )

प्रद्वेषी—त्वया दत्तं धनं विप्र, नेच्छेयं दुःखकारणं ;
यथेष्टं कुरु विप्रेन्द्र, न भरेयं पुरा यथा ।
( न भरेयं पुरा यथा; भर्त्रन्तरं करिष्यामीत्याशयः । नी० कं० )

दीर्घतमाः—अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता—
'एक एव पतिर्नार्या यावज्जीवं परायणम् ; ※

※ "एक एवेति; ननु 'यद् , एकस्मिन् यूपे द्वे रशने परिव्ययति, तस्माद् , एको द्वे जाये विन्दते; यद्, नैकां रशनां द्वयोर्यूपयोः परिव्ययति, तस्माद्, नैका द्वौ पती विन्दते'

**तस्माच्च 'कर्मणा वर्णः'; न कुलेन, न जन्मना ; इत्येव शास्त्रमर्यादा शिष्टाचाराऽनुमोदिता ।**

मृते, जीवति वा तस्मिन् , नाऽपरं प्राप्नुयान्नरम् ; अभिगम्य परं नारी पतिष्यति न संशयः ;
अपतीनां तु नारीणामद्यप्रभृति पातकम् ; यद्यस्ति चेद्धनं, स(र्वाः)र्वै वृथाभोगा भवन्तु ताः ;
अकीर्तिः परिवादाश्च नित्यं तासां भवन्तु वै' ।
इति तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता 'गङ्गायां नीयतामेष पुत्रा' इत्येवमब्रवीत् ।
लोभमोहाऽभिभूतास्ते पुत्रास्तं गौतमादयः , बद्ध्वोडुपे परिक्षिप्य, गङ्गायां समवाऽसृजन् ;
कस्मादन्धश्च वृद्धश्च भर्त्तव्योऽयमिति स्म ते चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ।
सोऽनुस्रोतस्तदा विप्रः प्लवमानो यदृच्छया जगाम सुबहून्देशानन्धस्तेनोडुपेन ह ।
तं तु राजा बलिर्नाम सर्वधर्मविदां वरः अपश्यन्मज्जनगतः स्रोतसाभ्याशमागतम् ;
जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः , ज्ञात्वा चैवं स वव्रेऽथ पुत्रार्थे भरतर्षभ ;
'सन्तानार्थं महाभाग, भार्यासु मम मानद , पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि' ।
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ; तस्मै स राजा स्वां भार्यां 'सुदेष्णां' प्राहिणोत्तदा ।
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ; स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ।
तस्यां काक्षीवदादीन् स शूद्रयोनावृषिस्तदा जनयामास धर्मात्मा पुत्रानेकादशैव तु ।
काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः उवाच तमृषिं राजा 'ममेम इति' भारत ।
नेत्युवाच महर्षिस्तं, ममेम इति चाऽब्रवीत् , शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ।
अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम ।
ततः प्रसादयामास पुनस्तमृषिसत्तमं बलिः सुदेष्णां स्वां भार्यां तस्मै स प्राहिणोत्पुनः ।
तां स दीर्घतमा,ऽङ्गेषु स्पृष्ट्वा देवीमथाऽब्रवीद् , भविष्यन्ति कुमारास्ते तेजसाऽऽदित्यवर्चसः ।
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ; तेषां देशाः समाख्याताः स्वनामकथिता भुवि—
अङ्गस्याऽङ्गोऽभवद्देशो, वंगो वंगस्य च स्मृतः ; कलिंगविषयश्चैव कलिंगस्य च स स्मृतः ,
पुण्ड्रस्य पुण्ड्राः प्रख्याताः, सुह्माः सुह्मस्य च स्मृताः ; एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ।
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः''

[म० भा० आदि० अ० १०४; मात्स्ये अ० ४८ ]

''इमे वै बन्धुदायादाः षट् पुत्रा धर्मदर्शने , षडेवाबन्धुदायादाः पुत्रा,स्ताञ्छृणु मे पृथे ।
स्वयंजातः, प्रणीतश्च, परिक्रीतश्च यः सुतः , पौनर्भवश्च, कानीनः, स्वैरिण्यां यश्च जायते ,
दत्तः, क्रीतः, कृत्रिमश्च उपगच्छेत्स्वयं च यः , सहोढो, ज्ञातिरेताश्च, हीनयोनिधृतश्च यः ,
पूर्वपूर्वतमाऽभावं मत्वा लिप्सेत वै सुतम् । उत्तमाद्, देवरात्पुंसः, कांक्षन्ते पुत्रमापदि ;
अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति मानवाः आत्मशुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् ।
तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयं , सदृशात्, श्रेयसो वा, त्वं विद्ध्यपत्यं यशस्विनि ।

इत्यार्थवादिकनिषेधविधेः, एकस्याः पतिद्वयस्याऽप्राप्तत्वात् , कथमियं दीर्घतमसा मर्यादा क्रियते ? इति चेत् ; तत्राह—मृते इति । 'तस्मादेकस्य बह्व्यो जाया भवन्ति; नैकस्यै बहवः सह पतयः' इति श्रुत्यन्तरे 'सह' शब्दात् , पर्यायेण अनेकपतित्वप्रसञ्जनात् , रागतः प्राप्तत्वाच्च, तन्निषेधोपपत्तिः । 'सह' शब्दोऽपि रागतः प्राप्तस्याऽनुवाद एव, न विधायकः; अन्यथा विहित-प्रतिषिद्धत्वात् अनेकपतित्वे विकल्पः स्यात् । कथं तर्हि द्रौपद्याः पञ्च पाण्डवा, मारिषायाश्च दशप्राचेतसः, इदानीन्तनानां नीचानां च द्वित्रादयः पतयो दृश्यन्त ? इति चेद् ; न, 'न देवचरितं चरेत्' इति न्यायेन, देवताकल्पेषु पर्यनुयोगाऽयोगात् ; नीचानां पशुप्रायाणां चाऽऽचारस्याऽप्रामाण्याच्च; अधिकारिविषयत्वाच्च नियोगस्येति किञ्च''

[ नी० कं० टी० ]

यद्, महाजनपर्षद्भिः, धर्मचक्रप्रवर्तकैः आचार्यैं, राजभिश्चाऽपि, प्राग्जातिं परिवर्त्य तुः
अन्यः सम्पाद्यते वर्णः, संयोज्य गुणकर्मभिः , प्रतिज्ञां कारयित्वा वा तद्धर्मस्थितिसङ्गताम् ;
तेनाऽपि 'कर्मणा वर्णः' इत्येव सिध्यति ध्रुवम् । जन्मना तु व्यवस्थायां न स्यात्तत्परिवर्तनम् ।
"प्रजा ब्राह्मणसंस्काराः, स्वकर्मकृतनिश्चयाः , ऋषिभिः स्वेन तपसा सृज्यन्ते चाऽप(राः)रे परैः§"

( ११ ) पहले, अनेक आर्ष प्रमाणों, सत्तर्कों, और प्रत्यक्ष दृष्टान्तों से, यह प्रमाणित किया गया है कि प्राचीन काल में वर्णव्यवस्था सामान्यतः गुण-कर्मों के अनुसार होती थी; अर्थात् बालक की सत्त्वादिप्रकृतिजन्यशमादिगुणमयी प्रवृत्तियों से, उसके स्वाभाविक भावी वर्ण का आरंभिक अनुमान करके, उसे तदुपयुक्त संस्कार आचार और शिक्षा दीक्षा से तदर्ह ( उस वर्ण के योग्य ) बनाते थे; पश्चात्, यथायोग्य तत्तद्वर्ण के अधिकार कर्त्तव्य और वृत्तिकर्म के योग से स्थिर 'वर्ण' प्रदान करते थे । वर्ण की प्राप्ति और व्यवस्था का यही साधारण नियम तथा क्रम है । प्राचीन काल में सामान्यतः इसी के अनुसार वर्णव्यवस्था होती थी; और सदैव होनी चाहिये ।

पर, इतिहास-पुराणों से यह भी विदित होता है कि विशेष परिस्थितियों में, जनसभाओं, संस्कारक-सुधारक संस्थाओं, धर्मचक्रप्रवर्त्तक आचार्यों और राजाओं के द्वारा भी मनुष्य की पहली जाति बदल दी जाती थी, और उसे, गुण-कर्म से युक्त कर के दूसरा उपयुक्त 'वर्ण' दे दिया जाता था; कभी कभी तो, जो मनुष्य जिस वर्ण में प्रविष्ट होना चाहता था, उस से उस वर्ण के नियमों के पालन की प्रतिज्ञा करा लेना, तदर्थ शपथ ले लेना ही, पूर्व वर्ण वा जाति के परिवर्त्तन की और नये वर्ण के प्रापण की पर्याप्त शर्त्त होती थी । इस से भी 'कर्मणा वर्णः' का ही सिद्धान्त प्रमाणित होता है; क्यों कि 'जन्मना वर्णः' यदि पूर्वाचार्यों को मान्य होता तो, वे संघशः, विभिन्न जातियों के दल के दल को, वर्णान्तर मे परिवर्तित नहीं करते । ऊपर संस्कृत भाष्य मे उद्धृत महाभारत ( शान्तिप० १८८, १९ ) के श्लोक से यह स्पष्ट विदित होता है कि 'जो मनुष्य प्रजा, ब्राह्मण वर्ण के 'संस्कार' ( स्वरूपयोग्यता, वा सत्त्वादिप्रकृतिजन्यशमादिकर्मबीज ) से युक्त होती, और ब्राह्मणोचित कर्म करने का निश्चय करती थी ( तदर्थ शपथ वा प्रतिज्ञा लेती थी ) उसे ऋषि लोग अपने तपःप्रभाव से ब्राह्मण बना देते थे'; फिर चाहे वह किसी भी कुल, जाति, सम्प्रदाय वा देश का क्यों न हो । ऐसे ही, संस्कार, गुण-वृत्त, और तत्तत्कर्मविषयक

शृणु कुन्ति, कथामेतां शारदण्डायिनीं प्रति ; सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि ,
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे वरयित्वा द्विजं सिद्धं, हुत्वा पुंसवनेऽनलं ,
कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ; तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् ।
तथा त्वमपि कल्याणि, ब्राह्मणात्तपसाऽधिकात् मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति ।...
सौदासेन च रम्भोरु, नियुक्ता पुत्रजन्मनि मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ।
तस्माल्लेभे च सा पुत्रमश्मकं नाम भाविनी ; एवं कृतवती साऽपि भर्त्तुः प्रियचिकीर्षया ।
अस्माकमपि ते जन्म विदितं कमलेक्षणे , कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये ।
अत एतानि सर्वाणि कारणानि समीक्ष्य वै ममैतद्वचनं धर्म्यं कर्त्तुमर्हस्यनिन्दिते ।
मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाऽधिकात् पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि"
कुन्तीं प्रति पाण्डोरुक्तिरियं ( म० भा० आदि० अ० १२० तथा अ० १२२ ) ।

§ म० भा० शां० अ० १८८ श्लो० १९;

व्रात्यस्तोमादिभिः, तत्तत्सम्प्रदायाऽनुसारिभिः शुद्धिकर्मप्रयोगैश्च, संस्कारैश्च विशोध्य नृन् अनार्यान्म्लेच्छसंज्ञान्वा विजातीयान्विधर्मिणः अप्यार्यान्वर्णधर्मिष्ठान्पूर्वाचार्या अकुर्वत ।

"तेषां मध्ये काश्यपश्च सर्वज्ञानसमन्वितः... मिश्रदेशे मुनिर्गतः ।
सर्वान्म्लेच्छान्मोहयित्वा कृत्वाऽथ तान्द्विजन्मनः ;
संख्या दशसहस्रं च नरवृन्दं द्विजन्मनां , द्विसहस्रं स्मृता वैश्याः, शेषाः शूद्रा इति स्मृताः"*
"मिश्रदेशोद्भवा म्लेच्छाः काश्यपेनैव शासिताः , संस्कृताः शूद्र(र्णात्ते)र्णेन ब्रह्मवर्णमुपागताः ;
शिखासूत्रं समाधाय, पठित्वा वेदमुत्तमं , यज्ञैश्च पूजयामासुर्देवदेवं शचीपतिम्" †
"सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ , म्लेच्छान्संस्कृतमाभाष्य तदा दशसहस्रकान्
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्ते महोत्तमे । सपत्नीकांश्च तान्म्लेच्छाञ्छूद्रवर्णाय चाऽकरोत् ;
कार(रु)वृत्तिकराः सर्वे बभूवुर्बहुपुत्रकाः । द्विसहस्रास्तदा तेषां मध्ये वैश्या बभूविरे"‡
"दशकोट्यः स्मृता आर्या बभूवुर्बौद्धपन्थिनः ; पञ्चलक्षास्तदा शेषाः प्रययुर्गिरिमूर्धनि ।
चतुर्वेदप्रभावेण राजन्या वह्निवंशजाः चत्वारिंशभवा योधाः, तैश्च बौद्धाः समुज्झिताः ।
आर्यांस्तांस्ते तु संस्कृत्य विन्ध्याद्रेर्दक्षिणे कृतान् , तत्रैव स्थापयामासुर्वर्णरूपान्समन्ततः ।...
तदा कालान्विता म्लेच्छाः कलाविद्याविशारदाः यन्त्राणि कारयामासुः सप्तस्वेव पुरीषु च ;
तदधो ये गता लोकास्ते सर्वे म्लेच्छतां गताः । महत्कोलाहलं जातमार्याणां शोककारिणां ;
श्रुत्वा ते वैष्णवाः सर्वे कृष्णचैतन्यसेवकाः दिव्यमन्त्रं गुरोश्चैव पठित्वा प्रययुः पुरीः ।
रामानन्दस्य शिष्यो वै चाऽयोध्यायामुपागतः; कृत्वा विलोमं तं मन्त्रं वैष्णवांस्तानकारयत् ;
भाले त्रिशूलचिह्नं च श्वेतरक्तं तदाऽभवत् , कण्ठे च तुलसीमाला, जिह्वा राममयी कृता ।
म्लेच्छास्ते वैष्णवाश्चाऽऽसन्रामानन्दप्रभावतः ; संयोगिनश्च ते ज्ञेया रामानन्दमते स्थिताः ;
आर्याश्च वैष्णवा मुख्या अयोध्यायां बभूविरे" ¶

निश्चय ( प्रतिज्ञा ) के अनुसार, सभी कुल-जातियों की प्रजा मे से क्षत्रिय आदि वर्णों का भी निर्माण और वर्गीकरण होता था । यद्यपि ऐसे वर्गीकरण मे भी गुणवृत्त का तथा कर्मयोग्यता का साधारणतः खयाल रखा जाता था, तथापि विषम परिस्थितियों मे बाह्य संस्कार ( मन्त्र दीक्षा आदि ले लेना और शिखा-सूत्रादि चिह्नों का धारण करना ), और नियम पालन की प्रतिज्ञा ही, वर्णप्राप्ति की मुख्य शर्त्त होती थी । वर्णधर्म के पालन का निश्चय करने और उस की प्रतिज्ञा वा शपथ लेने पर, विदेशी तथा विधर्मी लोग भी भारतीय धर्माचार्यों द्वारा, व्रात्यस्तोमादिविधि से शुद्ध कर के, यथायोग्य गुणकर्म के अनुसार चातुर्वर्ण्यव्यूह मे संगठित कर लिये जाते थे । भविष्यपुराण मे यह इतिहास है कि कण्व ऋषि ने, मिश्रदेश ( इजिप्ट ) निवासी 'म्लेच्छ' लोगों को भारतीय आर्यधर्म और संस्कृत भाषा सिखा कर चातुर्वर्ण्य मे संघटित किया था । चातुर्वर्ण्य-वत् भारतीय सनातनधर्मी सम्प्रदायों मे भी, विदेशी विजातीय तथा विधर्मी लोग दीक्षित और सम्मिलित कर लिये जाते थे; एवं म्लेच्छ और विधर्मी हुए आर्यसन्तान, पुनः प्रायश्चित्तादि द्वारा शुद्ध कर के, सनातन धर्म मे मिला लिये जाते थे । भविष्यपुराण ( प्रतिसर्गपर्व चतुर्थ खण्ड के २१ वें अध्याय ) मे लिखा है कि श्रीवैष्णवाचार्य रामानन्द के एक शिष्य ने बहुत से म्लेच्छ ( मुसलमान ) हुए हिन्दुओं को सनातनधर्मी वैष्णव बना कर आर्य चातुर्वर्ण्य मे दाखिल कर दिया था; ऐसे ही अन्य सम्प्रदायों के वैष्णवों और सन्तपन्थियों ने भी म्लेच्छों को सनातनधर्मी

* भविष्य पु० प्रतिसर्गपर्व खं० १ अ० ६ । † भ० पु० प्रति० प० खं० ४ अ० २० श्लो० ७५-७६ । ‡ भ० पु० प्रति० प० खं० ४ अ० २१ । ¶ भ० पु० प्रति० प० खं० ४ अ० २१ ।

"विश्वस्फूर्जिर्नृपश्चाऽऽसीन्महाबुद्धो महाबलः, क्षुद्रभूपान्वशीकृत्य सर्ववर्णान्नरांस्तदा स्थापयामास वै ब्राह्मे वर्णे ब्रह्मपरायणे ; क्षत्र-विट्-शूद्रका वर्णाः पिशाचा वर्णसङ्कराः गुरुण्डाद्यास्तथा म्लेच्छा ब्राह्मणास्ते बभूविरे। सन्ध्यातर्पणदेवानां पूजादिविविधाः क्रियाः चक्रुस्ते वेदविधिना तुल्यभोजनशीलिनः" ||

"ब्राह्मणाः, क्षत्रिया, वैश्यास्त्रिवर्णास्तेन सत्कृताः ; बलान्म्लेच्छान्वर्णमयान्कृत्वा वात्यो महाबलः शतार्धाब्दं मण्डलीकं पदं भुवि गृहीतवान्" ¥

हिन्दूसम्प्रदायों मे दीक्षित सम्मिलित किया था। यह परम्परागत प्रत्यक्षश्रुत वातों से तथा इतिहास से भी अपरोक्षवत् सर्वविदित है, कि एक जमाने मे प्रायः अधिकांश सनातन वर्णाश्रमी हिन्दू लोग, बौद्ध, और फिर धीरे धीरे निहीन होकर घोर वाममार्गी बन गये थे; उस समय चातुर्वर्ण्य नष्ट-भ्रष्ट हो गया था। तत्कालीन सनातनधर्मी हिन्दू आचार्यों ने, प्रायः उन सब को, पुनरपि अधर्मीभूत ध्वस्तप्राय बौद्धधर्म और वामाचार से परावर्तित कर के, वर्णाश्रमी बनाया[३७]।

३७. बुद्धदेव ने जिसका उपदेश किया वह बौद्धधर्म तो प्राचीन भारतीय आर्यधर्म वा सनातन विराट् मानव धर्म का ही (जो बुद्धदेव के समय मे, बहुत से कापालिक आदि भ्रष्टाचार सम्प्रदायों और पन्थों के कारण, तथा जात्यभिमान और परस्पर द्वेष, तिरस्कार, ईर्ष्या आदि के कारण, अस्त-व्यस्त और अपभ्रष्ट हो रहा था, जैसा कि आज काल हो रहा है), पुनः संशोधित संस्कृत परिमार्जित रूप था। हम स्वयं जहाँ तक बौद्धधर्मशास्त्रों को अपनी तुच्छ बुद्धि से समझ सके हैं, वहाँ तक उन में वर्णाश्रम का प्रतिषेध वा विरोध हमे नहीं ज्ञात हुआ है। हाँ, अवश्य ही बौद्ध 'त्रिपिटक' मे तथा अन्यान्य बौद्ध धर्मग्रन्थों मे प्रायः पदे पदे 'जन्मना वर्णः' का तीव्र प्रतिवाद हुआ है; जिससे 'कर्मणा वर्णः' के आर्ष सत्सिद्धान्त का खण्डन नहीं, प्रत्युत प्रबल मण्डन ही हुआ है। बौद्धधर्म के क्रियात्मक इतिहास मे भी, 'कर्मणा वर्णः' का भरपूर सञ्चार है। भगवान् बुद्ध और उन के अनुयायियों ने, जन्मजातिवाद और जातीय अस्पृश्यता का, जो औपदेशिक विरोध और व्यावहारिक बहिष्कार, अपने धर्म तथा सम्प्रदाय मे किया है, वह तो प्राचीनतम आर्ष मन्तव्य और सत्य सनातनधर्म के सर्वथा अनुकूल और पुरुषार्थसाधन के लिये परम अभीष्ट ही है। इस प्रकार, यह सिद्ध है कि बौद्धधर्म के साथ सनातन आर्ष वर्णाश्रम धर्म का कोई तात्त्विक मौलिक वा सांस्कृतिक विरोध नहीं था। मोक्ष प्रस्थान का भेद तो वैदिक दर्शनों मे भी परस्पर बहुत है; सुतरां उस के कारण भी सर्वोच्च दार्शनिक विचारों का प्रवर्तक बौद्धधर्म, वर्णाश्रम विरोधी नहीं कहा जा सकता; प्रत्युत, इस अंश मे भी, एक असूक्ष्मदर्शी वर्ग ने यह किंवदन्ती (पद्मपुराण मे प्रक्षेप द्वारा) फैला रखी है, कि 'मायावाद-मसच्छास्त्रं प्रच्छन्नं बौद्धमेव च', इस से भी यही सिद्ध होता है कि वेदों उपनिषदों का अद्वैतवाद ही बुद्धदेव को अभीष्ट था।

फिर भी उस से विरोध विद्वेष करने का क्या कारण हुआ? बौद्धों को पुनः वर्णाश्रमी बनाने की, अन्यथा बहिष्कृत कर देने की, क्यों आवश्यकता हुई? यदि वह काम तत्कालीन, नये बने, जातिवादी ब्राह्मणब्रुवों और जन्मना द्विजम्मन्यों ने अविद्या मोह और स्वार्थवश किया, तो उस से विशाल भारतवर्ष और बृहत्तर हिन्दूसमाज को कुछ लाभ हुआ, वा इस का जीवन्मृत्युकारक घोर ह्रास हुआ? इत्यादि प्रश्न विचारणीय हैं। पर, यहाँ इन पर विचार करना अप्रासङ्गिक होगा। यहाँ तो हमे केवल इतना ही दिखलाना है कि एक समय भारतीय आर्यसन्तान चातुर्वर्ण्य से बदल कर, बौद्ध बने, फिर वाममार्गी आदि बने; फिर दूसरे समय उन से परावृत्त होकर पुनः सनातन वर्णाश्रमी बने; सम्प्रदाय और वर्ण के ऐसे परिवर्त्तन और निवर्त्तन मे बहुत आन्तरालिक काल लगे; अतः इन सब घटनाओं से भी 'कर्मणा वर्णः' की ही सिद्धि होती है; अन्यथा वैसा परिवर्त्तन-निवर्त्तन संभव नहीं हो सकता था।

|| भ० पु० प्रति० प० खं० ४ अ० २३ श्लो० ९०-९२। ¥ भ० पु० प्रति० प० खं० ४ अ० २४ श्लो० १०-११।

श्री शङ्कराचार्य के सम्बन्ध की भी ऐसी कथा लोक मे प्रथित है § कि, उन्होंने, प्रतिज्ञा के आधार पर ही, बौद्धों और मुसलमानों का पुनः वर्णीकरण और वर्णव्यूह मे यथायोग्य संग्रह किया; अर्थात् आचार्य शंकर के उपदेश से प्रभावित होकर बौद्धों और यवनों के दल के दल जब पुनः वर्णधर्म मे दीक्षित और प्रविष्ट होना चाहते थे, तब उनसे यह पूछा जाता था कि 'आप किस वर्ण मे प्रविष्ट होना चाहते हैं ?' उत्तर मे जो जिस वर्ण का नाम लेता था, उससे उस वर्ण के कर्त्तव्यों और सामाजिक नियमों के पालन की प्रतिज्ञा ( शपथ ) लेकर, तदुपयुक्त संस्कार से विशुद्ध करके, उसे उसी वर्ण का घोषित कर दिया जाता था; इस प्रकार, आचार्य के संकल्प और वरदान मात्र से अगणित यवन और बौद्ध लोग, सङ्घशः, पुनः सनातनधर्मी वर्णाश्रमी बनाये गये ।

---

§ श्री शङ्कराचार्य और उनके सम्प्रदाय के सामाजिक कार्यों के सम्बन्ध मे जो विवरण इस प्रघट्ट मे दिया गया है, वह दन्तकथाओं वा किम्वदन्तियों के आधार पर नहीं; अपि तु शाङ्कर सम्प्रदाय के प्रामाणिक ग्रन्थों के अनुसार, उन के उद्धरणों के आधार पर है । आचार्य शङ्कर का अद्वैत वाद और मोक्षप्रस्थान तो उनके प्रस्थानत्रयीभाष्य तथा अन्यान्य ग्रन्थों के द्वारा जगत् मे खूब प्रख्यात है; पर, उनके सामाजिक कार्यों की चर्चा बहुत ही कम सुनी जाती है । सर्वशास्त्रनिष्णात आचार्य वाचस्पति मिश्र प्रभृति महापण्डितों ने भी अपने विद्वन्मान्य 'भामती' आदि ग्रन्थों के द्वारा, शाङ्कर वेदान्त का ही प्रबल और प्रचुर प्रचार किया; उन के सामाजिक कार्यों का सम्पूर्ण इतिहास किसी ने नहीं लिखा । 'शङ्कर-दिग्विजय' ऐसे कुछ ग्रन्थ निकले; पर, उन मे आचार्य शङ्कर की माहात्म्यगाथा को ही मुख्य विषय बनाया गया और कल्पना तथा अतिशयोक्ति से अधिक काम लिया गया है; उनके सामाजिक कार्यों का सच्चा और पूर्ण विवरण, इन ग्रंथों मे नहीं के बराबर है ।

यह बात, आँख मूद कर मान लेने के योग्य नहीं है कि, देशव्यापी और सुसंघटित शाङ्कर 'मिशन' सिर्फ़ मायावाद वा अद्वैत ज्ञान के प्रचार के लिये ही क़ायम हुआ था । आज भी, शाङ्कर सम्प्रदाय के जो चार मठ, चार सम्प्रदाय, सात अखाड़े, और बावन मढ़ियाँ, देश के चतुर्दिक् प्रस्थापित हैं; तथा उन के 'नागा' लोगों का जो फ़ौजी 'बाना' अस्त्र-शस्त्र, निशान ( सैनिक झण्डा ) और लड़ाकू स्वभाव, अब भी संस्कारशेषरूप से देखा जा रहा है, इन सब से भी यही ज्ञात होता है कि, शाङ्कर सम्प्रदाय का वह व्यूह अवश्य ही किसी विशेष सामाजिक प्रयोजन से रचा गया था । वह प्रयोजन था वाममार्गीभूत नकली बौद्धों से तथा विदेशी एवं विधर्मी तुर्कों से भारतीय चातुर्वर्ण्य-धर्म, समाज और देश की रक्षा करना; जिस के लिये सुधार और संहार, दोनों की आवश्यकता थी । सुतरां परिस्थिति के अनुसार, शङ्कर और शाङ्करों को ब्राह्म-क्षात्रसंपृक्त समाजधर्म को अपनाना पड़ा, और यथाप्रयोजन शास्त्र तथा शस्त्र ( शापादपि, शरादपि, शापेन, चापेन वा ) दोनों ही से काम लेना पड़ा, तात्पर्य यह कि, शाङ्कर सम्प्रदाय, मुख्यतः धर्मसैनिक और समाजनिर्मापक संघटन था; पर, न जाने क्यों उसका तद्विषयक इतिहास, उपेक्षित रहा है ?

इधर कुछ वर्षों से अन्य ऐतिहासिक क्षेत्रों की तरह इस क्षेत्र मे भी अनुसन्धान–अन्वेषण हो रहा है । इस विषय मे सर्वप्रथम और प्रायः सर्वाङ्गपूर्ण अनुसन्धान, अष्टादश वर्षों के सतत परिश्रम से महाराष्ट्र 'यवतमाल' के **'गोस्वामी श्रीपृथ्वी गीर (गिरि) हरि गीर उर्फ़ 'पापा साहेब'** ने किया है; और उसे **'गोसावी व त्यांचा सम्प्रदाय'**नामक मराठीवाङ्मय महाग्रंथ के रूप मे प्रकाशित कर दिया है । यह, अपने विषय का अभूतपूर्व ग्रन्थरत्न, मोटे मोटे दो भागों मे, हरिकिशोर प्रेस यवतमाल, महाराष्ट्र से, सन् १९२६ तथा सन् १९३१ ईस्वी मे, क्रमशः, प्रकाशित हुआ है । इसकी प्रामाणिकता और उपादेयता के विषय मे इतना ही कहना पर्याप्त होगा कि, **दे० भ० विद्वद्वर्य श्रीयुत माधव**

श्री शंकराचार्य को, अपने उद्देश्य की सिद्धि के लिये, दो वेर, दो प्रकारों से, वर्ण और आश्रम का परिवर्त्तन करना पड़ा था। पहले तो बौद्धों और मुसलमानों से वर्णाश्रमधर्म की रक्षा करने के लिये, और विशेषतः मुसलमानों के विध्वंसक आक्रमणों से तत्कालीन हिन्दू मठ-मन्दिरों को बचाने के लिये, उन्होंने चातुर्वर्ण्य के अपने अनुयायी युवकों का एक विराट्, धर्म-युद्धक्षम सैन्य संघटित किया। उसे सुव्यूढ निश्चिन्त निर्भय और निर्द्वन्द्व सैन्य बनाने के लिये, श्रीशंकराचार्य ने 'गोस्वामीकरण' की प्रक्रिया निकाली; जिसका संक्षिप्त परिचय यों है—

"जब श्री शंकर भगवान् ने देखा कि इस प्रकार से (बौद्धों तथा यवनों का) उपद्रव होने लगा, तो आप वहाँ से तत्काल चल कर प्रयाग मे आये। वहीं पर उन्होंने अपने मुख्य अनुयायियों को निमन्त्रित किया; जिससे चारो वर्णों के लोग बड़े हर्ष और उत्साह के साथ,

---

श्रीहरि उर्फ बापू जी अणे ने इस की महती और बृहती प्रस्तावना लिखी है; और इस पर १. गीतावाचस्पति वे० शा० सं० सदाशिव शास्त्री भिडे, पूना, २. पण्डित रामपाल तिवारी, रामपुर कोटवा, जिला प्रताप गढ़, ३. श्रीयुत दिवाकर मोरेश्वर दामले, बी० ए० एल्-एल्० बी०, ४. इतिहाससंशोधक श्री. रा० रा० य० खु० (यशवन्त खुशाल) देश पांडे, एम्० ए० एल्-एल् बी०, ५. मीमांसा भूषण पण्डित वामन रामचन्द्र शास्त्री, किंजवडेकर, पूना, ६. श्रीमन्त नामदार गणेश श्रीकृष्ण, उर्फ़ दादा साहेब, खापरडे, अमरावती, ७. सुप्रसिद्ध इतिहासकार श्रीयुत गोविन्द सखाराम सरदेसाई, मुंबई, ८ महाराष्ट्र के सुप्रसिद्ध विद्वान्, ग्रन्थकार, प्रो० चिन्तामणि गङ्गाधर भानू बी० ए० पूना, ९. श्रीमन्त सरदार डा० माधव राव विनायक राव किबे, एम० ए० पी० एच्० डी० एफ्० आर० ए० एस्०, इंदूर, १० सुप्रसिद्ध पुढारी श्रीयुत नरसिंह चिन्तामणि केलकर, पूना, ११. सनातन वैदिकधर्म मण्डल के संस्थापक, व सुप्रसिद्ध विद्वान्, ग्रन्थकार, आहिताग्नि, श्री शङ्कर रामचन्द्र राजवाडे, बी० ए० पूना, १२. श्रीगणेश विष्णु काले, चिटनीस, १३. विद्याभूषण वे० शा० सं० कृष्ण शास्त्री धुले, नागपुर, १४. महाराष्ट्र के प्रख्यात विद्वान्, प्राज्ञपाठशाला वाई के संस्थापक व आचार्य वे० शा० सं० नारायण शास्त्री मराठे, इन देशविश्रुत विद्वानों के योग्य अभिप्राय- (संम्मति)–सूचक प्रशस्त वक्तव्य हैं।

हम ने इस प्रकरण के प्रतिपाद्य विषय मे अपेक्षित उद्धरण, मुख्यतः इसी ग्रन्थ से लिये हैं। इन की प्रामाणिकता और ऐतिहासिकता का अन्तिम निर्णय तो पुरातत्त्ववित्तम विद्वान् सज्जन ही करेंगे; हम ने भी कहीं-कहीं यथामति इन की समीक्षा की है। यों तो प्रायः सभी भारतीय पुरातत्त्व और ऐतिहासिक विषय, अभी तक विवादास्पद, मतभेदबहुल, और विमर्शकों पुरातत्त्वविदों तथा इतिहासशोधकों के वाङ्-महाभारत (वाग्युद्ध) के 'कुरुक्षेत्र' बने हुए हैं; फिर भी 'गोसावी व त्यांचा सम्प्रदाय' यावदुपलब्ध प्रचुर ऐतिहासिक सामग्री के आधार पर, सत्तर्कानुप्राणित सुपुष्ट प्रमाणों से समर्थित होने के कारण, प्रेक्षावान् परीक्षकों के अवधान के योग्य है; अत एव हम ने यहाँ इस का यथाप्रयोजन उपयोग-प्रयोग किया है।

इस विषय के दूसरे ग्रन्थ जो हमारे सामने हैं, उन मे 'वैदिकधर्मोद्धार' और 'दशनाम-धर्म' भी उपयोगी प्रतीत होते हैं। 'गोसावी व त्यांचा सम्प्रदाय' मे भी 'दशनामधर्म' के बहुत से उद्धरण दिये गये हैं। ये लीथो के छपे कुछ प्राचीन ग्रन्थ ज्ञात होते हैं। हमारे पास इन की जो पोथियाँ हैं, इन मे ग्रन्थकार और मुद्रणकाल आदि का कहीं भी निर्देश नहीं है। इन पुस्तकों की हमारी प्रतियों मे मुखपृष्ठ और अन्तिम पत्र नहीं हैं; वे उड़ गये हो सकते हैं। स्यात्, इस कारण से भी उपर्युक्त बातों का पता न चलता हो। अस्तु, इन ग्रन्थों की उपादेयता और उपयोगिता, यदि विद्वानों की दृष्टि में, कुछ हो, तो ग्रन्थकर्त्ता का नाम अज्ञात होने से बहुत हानि नहीं होगी—

"ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः"

## वर्णधर्माः

सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः, मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् । ८७ ।
अध्यापनमध्ययनं यजनं याजनं तथा दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् । ८८ ।
प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः । ८९ ।
पशूनां रक्षणं दानमिज्याऽध्ययनमेव च वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च । ९० ।
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्, एतेषामेव वर्णानां शुश्रूषामनसूयया । ९१ ।

## ब्राह्मणप्रशंसा

ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः, तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा । ९२ ।

---

मुखबाहूरुपज्जत्वं ब्राह्मणादेरिह क्रमात् तत्तद्गुणादिसाधर्म्यात्तद्रूपत्वेन रूपितम् ।
एतस्मिन्विषये पूर्वं सत्तर्क-प्रमितार्थकैः आप्तोक्तैरार्षवाक्यैश्च मन्वाशयः प्रदर्शितः
एकत्रिंशत्तमे श्लोके वर्णोत्पत्तिनिरूपके; तत एवावगन्तव्यं तत्त्वमेतस्य पाठकैः । ८७ ।
वर्णकर्माणि संक्षेपादत्रोक्तानि, महाजनैः अन्यस्मृति-पुराणादौ द्रष्टव्यानि विशेषतः* ।
अत्रापि दशमाऽध्याये यथास्थानं पृथक्पृथक् आपद्धर्मप्रसङ्गेन प्रवक्ष्यन्ते विवेकतः । ८८-९१ ।
उत्तमाङ्गोद्भवत्वं च ज्येष्ठत्वं चाऽत्र रूपितं तद्गुण-कर्म-साधर्म्याद् ब्राह्मणे, न तु वास्तवम् ।
जायमानस्य वै जन्तोः शिरो ह्यग्रे प्रजायते सर्वाङ्गापेक्षया, तस्मात्प्रत्यक्षमग्रजं शिरः;
त्रिगुणेषूत्तमं सत्त्वं, तच्च ज्ञानमिति स्मृतं, ज्ञानस्थानं तु मस्तिष्कं, तस्याधिकरणं शिरः;
ज्ञानेन्द्रियसमूहस्य चाधिष्ठानं शिरो मतं, तस्मात्तस्योत्तमाङ्गत्वं ज्येष्ठत्वं चोचितं स्मृतम् ।

---

* वर्णधर्मा अधस्तन-ग्रन्थ-स्थलेषु द्रष्टव्याः—मनौ अ० १० श्लो० ७४-१३० [ आपद्धर्माः ]; याज्ञ० स्मृ० अ० १ श्लो० ११८-१२०, तथा तत्रैव अ० ३ श्लो० ३५-४४ [ आपद्धर्माः ]; अत्रिसं० श्लो० १२-२०; लघुविष्णुस्मृ० अ० ५; लघ्वाश्वलायनस्मृतौ वर्णधर्मप्रकरणं २२; वसिष्ठधर्मशास्त्रे अ० २; वृद्धहारीतस्मृतौ अ० ७ श्लो० १४९-२२९; वेदव्यासस्मृतौ अ० १ श्लो० ५-६; शंखस्मृतौ अ० १; बौधायनधर्मसूत्रे प्र० १ अ० १०, तथा तत्रैव प्र० २ अ० २ सूत्राणि ७७-८१ [ आपद्धर्माः ]; हारीतसं० अ० १-२; गौतमधर्मसूत्रे अ० ७ तथा १०; म० भा० वन० अ० १५० ( कुं० सं० अ० १५२ ); म० भा० उद्यो० अ० ४० श्लो० २५-२९; म० भा० शां० अ० ६० ( कुं० सं० अ० ५९ ); तत्रैव अ० ६५ ( सङ्करधर्माः ), तत्रैव अ० ७२, तत्रैव अ० १८८-८९, तथा अ० २९३-९४; म० भा० शां० अ० २९६ ( वर्णानां विशेष-सामान्य-धर्माः ); म० भा० अनु० अ० ४७-४९, तथा तत्रैव अ० १४१; म० भा० अनु० अ० २०८ ( कुं० सं० ); म० भा० अश्व० अ० ४५ ( कुं० सं० अ० ९७ ); भा० स्कं० ७ अ० ११, तथा तत्रैव स्कं० ११ अ० १७; शिवपु० सनत्कुमारसं० अ० ५४ तथा तत्रैव धर्मसं० ४१ ( संग्राम-माहात्म्यमप्यत्र द्रष्टव्यम् ); अग्निपु० अ० १५१; ब्रह्मपु० अ० २२२-२२३ ( पुण्यपत्तन-आनन्दाश्रमसं० ); गारुडे अ० ४९; मार्कण्डेयपु० अ० २८-२९; नारदपु० पूर्व० अ० २४, ४३, ५९, ७०; स्कन्दपु० खं० ६ अ० २४२; विष्णुपु० अं० ३ अ० ८; ब्रह्मवैवर्त्तपु० ब्रह्मखं० अ० १० ( सङ्करधर्माः ); भगवद्गीता—अ० ४ श्लो० १३ तथा तत्रैव अ० १८ श्लो० ४१-४४; कौ० अर्थशास्त्रे १. प्रक० विद्यासमुद्देशे अ० ३ तथा ४; शुक्रनीतौ अ० १ श्लो० ३८-४४, तत्रैव अ० ४ प्रक० ३ श्लो० १-२३, तथा अ० ४ प्रक० ४; महा-भारतमीमांसा-वर्णव्यवस्थाप्रकरणे पृ० १८८-१९४; एवमन्यत्रापि इतिहास-पुराणोपपुराण-तन्त्रागम-धर्म-शास्त्र-निबन्धग्रन्थेषु च वर्णधर्मा भूयसा निर्दिष्टा द्रष्टव्याः ।

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ,सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ।९३।
तं हि स्वयंभूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत् , हव्य-कव्याभिवाह्याय सर्वस्यास्य च गुप्तये ।
यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः, कव्यानि चैव पितरः, किं भूतमधिकं ततः ? ।
भूतानां प्राणिनः श्रेष्ठाः, प्राणिनां बुद्धिजीविनः, बुद्धिमत्सु नराः श्रेष्ठा, नरेषु ब्राह्मणाः स्मृताः ।
ब्राह्मणेषु च विद्वांसो, विद्वत्सु कृतबुद्धयः, कृतबुद्धिषु कर्त्तारः, कर्तृषु ब्रह्मवेदिनः ।

---

ब्रह्मणो वेदसंज्ञस्य मस्तिष्केण विधारणाद् , ब्रह्मरन्ध्राश्रयत्वाच्च शिरो ब्राह्मण उच्यते,
तद्रूपारोपतो ज्ञानप्रधानेषु नरेष्वपि ब्राह्मण्यमग्रजत्वं च शास्त्रोक्तमुपचर्यते ।
एतस्मिन्विषये सर्वं विज्ञातव्यं सविस्तरम् एकत्रिंशत्तमश्लोक-भाष्ये द्रश्यं महाजनैः ।
"ब्राह्मणश्च मुखोत्पन्नो ब्रह्मणः, क्षत्रिया विशः बाहुभ्यामूरुतोत्पन्नाः,पद्भ्यां शूद्र इति श्रुतिः" ⬭
"पुलहस्य सुतो वात्स्यः, शाण्डिल्यश्च रुचेः सुतः, सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः,
काश्यपः कश्यपाज्जातो, भरद्वाजो बृहस्पतेः, (स्वयं वात्स्यश्च पुलहात् , सावर्णिर्गौतमात्तथा,
शाण्डिल्यश्च रुचेः पुत्रो मुनिस्तेजस्विनां वरः ); बभूवुः पञ्चगोत्राश्च एतेषां प्रवरा भवे ।
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मण-जातयः; ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक ।
चन्द्रादित्यमनूनां च प्रवराः क्षत्रियाः स्मृताः; ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः ।
ऊरुदेशाच्च वैश्याश्च; पादतः शूद्रजातयः; तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः" ▭
"कल्किनो वदनाज्जातो ब्राह्मणो वर्ण एव हि, बाह्वोः क्षत्रं, विशो जान्वोः, शूद्रो वर्णस्तदङ्घ्र्योः;
गौरो रक्तस्तथा पीतः श्यामस्ते ब्राह्मणादयः" ❁
"वामदेवस्तु भगवानसृजन्मुखतो द्विजान् , राजन्यानसृजद्बाह्वोः, विट्-शूद्रानूरु-पादयोः" ÷
एवं शिवपुराणेऽपि देवदेवः शिवः स्वयं साक्षादुमामुवाचेत्थं वर्णसृष्टिः स्वतः कृता—
"मदीयायां पुरा सृष्टौ प्रथमः प्रवभौ ह्यहम् ; रुद्रा द्विजातयः पूर्वं मया सृष्टा महौजसः ।
मदीयां सृष्टिमादाय ब्रह्मणोऽपि सिसृक्षया, ब्रह्मणा मूर्द्धतः सृष्टाः पूर्वमेव महाव्रताः;
अग्रिमो ह्यहमेतेषां द्विजाः श्रेष्ठास्ततोऽभवन् , ततस्ते मन्मनाः सर्वे बभूवुर्द्विज सत्तमाः‡"
शम्भोर्वरप्रसादेन ब्रह्मणो रेतसः कणैः अन्तर्वेदीयविप्राणामुत्पत्तिः स्मर्यते; यथा—
"यावन्त्यः सिकता रेतसाप्लुताश्चतुरानन, तावन्त एव मुनयो भवन्तु तव तेजसा" ❁
चित्तपावनविप्राणामुत्पत्तौ चेदृशी कथा श्रूयते स्कान्द-सह्याद्रिखण्डादौ शङ्करोदिता—
"एवं निवासं कुर्वत्सु अकस्माद्दैवयोगतः नीत्वा सागरमध्यस्थैर्म्लेच्छैर्वैर्वरकादिभिः
बहून्यब्दान्यतीतानि; तेभ्यो जाताश्च सन्ततिः । चितास्थाने तु सहसा ह्यागतांश्च ददर्श सः
का जातिः, कश्च धर्मश्च, क्व स्थाने चैव वासनम् ?" एवं रामेण ते पृष्टा ऊचुः कैवर्तका इदम्—
जातिं पृच्छसि हे राम, जाति-कैवर्तकः स्मृतः; सिन्धुतीरे कृतो वासो व्याधकर्मविशारदः;
चतुर्दशगोत्रकुलं स्थापितं चातुरङ्गके ।...
सर्वे च गौरवर्णास्ते सुनेत्राश्च सुदर्शनाः; तेषां षष्टिकुलं श्रुत्वा पवित्रमकरोत्तदा;
ब्राह्मण्यं च ततो दत्त्वा सर्वविद्या-सुलक्षम् ; चितास्थाने पवित्रत्वाच्चित्तपावनसंज्ञकाः§"
एवं शक-मगादीनां ब्राह्मण-क्षत्रियात्मनाम् उत्पत्तिः श्रूयते, साक्षाद्दृश्यते च यतस्ततः ।

---

⬭ शिवपु० धर्मसं० अ० ४१ श्लो० २ । ▭ ब्र० वै० ब्रह्मखं० अ० १० श्लो० ११-१६ ।
❁ भविष्ये प्रतिसर्गप० खं० ४ अ० २६ श्लो० ७-८ ÷ मात्स्ये अ० ४ श्लो० २८ ।
‡ शिव पु० सन०-सं० अ० ५४ एतद्विषये प्राग्द्रष्टव्यं—मा० आ० भा० १ पृ० ९०-९४ तथा अत्रैव पृ० १५३—५६ । ❁ब्राह्मणोत्पत्तिसारसंग्रहे धृतम् । § स्कं०पु० सह्याद्रिखं०; अत्र द्रष्टव्यं—चै० सं०पृ० ४६३-७०।

[ तेषां न पूजनीयोऽन्यस्त्रिषु लोकेषु विद्यते; तपो-विद्याविशेषेण पूजयन्ति परस्परम् ।
ब्रह्मविद्भ्यः परं भूतं न किञ्चिदिह विद्यते ]
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती; स हि धर्मार्थमुत्पन्नो, ब्रह्मभूयाय कल्पते ।

---

तस्मात् "स्वयंभूः स्वादास्याद्" इत्यादि वचनं भृगोः, एकत्रिंशत्तमश्लोकव्याख्यातार्थेन सङ्गतम् ।
"भूतानां प्राणिनः श्रेष्ठा" इत्यादिवचनैः स्फुटं, गुण-कर्मानुसारेण तारतम्यं निरूपितं;
तस्माच्च कर्मणैवेष्टं ब्राह्मण्यं, न तु जन्मना; एवञ्चेदग्वचो नेयं रूपकत्वेन धीमता ।९२-९७।
(१)यः सत्त्वाधिगुणः कश्चित् शमादिप्रकृतिः पुमान् जायते, तस्य जन्मैव धर्मरूपं महात्मनः ।
जायमानो हि यः कश्चित्पृथिव्यामधिजायते, अर्थाद् , यस्याधिजननं मातुरग्रे भवेद्भुवि,
स एवानन्तरं विद्या-संस्कारादिक्रमाग्रतः, वृत्ति-कर्मादिसंयोगाद् ब्राह्मणो भवति ध्रुवम् ।
जन्मतो = जायमानः सन्नेव यस्त्वभिजायते ब्रह्मसम्पदमादाय स्वभावजगुणात्मिकां,
स एवाग्रे भवेद्विप्रः स्वभावप्रभवैर्गुणैः कर्मणां प्रविभक्तानां क्रमयोगानुवन्धतः;
सारार्थाज् , जन्मतस्त्वेव ब्राह्मणादिः प्रजायते युक्तस्तद्वर्णवीजैः सन् स्वभावप्रभवैर्गुणैः ।
यस्मिंस्तु जन्मतो नास्ति ब्राह्मणत्वादियोग्यता, न स तत्कर्मसामर्थ्यं पूर्णतः प्राप्तुमर्हति ।
तस्माद्यः सम्पदं ब्राह्मीं जायमानोऽधिजायते, तत्प्रशंसार्थमेवैतत्सर्वं प्रकरणं स्मृतम् ।
अन्यत्रापीदृशं वाक्यं दृश्यते भारतादिषु; तत्रापि चाऽयमेवार्थो; न तु जाति-प्रशंसनम् ।
"ब्राह्मणो जायमानो हि पृथिव्यामनुजायते ईश्वरः सर्वभूतानां; धर्मकोशस्य गुप्तये ।...
विप्रस्य सर्वमेवैतद् यत्किञ्चिज्जगतीगतं, ज्येष्ठेनाभिजननेनेह तद्धर्मकुशला विदुः ।
स्वमेव ब्राह्मणो भुङ्क्ते, स्वं वस्ते, स्वं ददाति च, गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः" +
"जन्मनैव महाभागो ब्राह्मणो नाम जायते नमस्यः सर्वभूतानामतिथिः प्रसृताग्रभुक्"†
एवमादिवचोभिश्च प्रागुक्तार्थः प्रमीयते; नैव जन्मनिमित्तस्य ब्राह्मण्यस्य निरूपणम् ।
वर्द्धिष्णु-वीरुधः पत्रं चिक्कणं भवतीतिवत् ब्राह्मणादिभविष्णुर्ना जन्मनैव प्रजायते ।
[ "होनहार विरवान के होत चीकने पात"; इसी अर्थ मे 'जन्मना ब्राह्मणत्व' की बात । ]
"ब्राह्मणत्वं हि दुष्प्रापं, निसर्गाद् ब्राह्मणो भवेत्, क्षत्रियो, वैश्य-शूद्रौ वा निसर्गादिति मे मतिः"‡
एवमाद्यार्षवाक्यैश्चाऽयमेवार्थः समर्थ्यते; मनोरन्यत्यवाक्यानां चाऽभिप्रायोऽयमेव हि ।
अन्यथा जन्मनैवेष्टं ब्राह्मण्यं चेद्भवेन्मनोः, तदा तत्कर्मनिर्देशः प्रसज्येत निरर्थकः ।
सम्पूर्णे मानवे शास्त्रे भूयसाऽत्र निरूपिता ब्रह्मकर्म-विकर्मादिव्यवस्थाऽपि न युज्यते ।
कर्मत्यागेन पातित्यं ब्राह्मणस्य स्वजातितः, जात्युत्कर्षश्च शूद्रादेः कर्मणैवेति, यन्मतं,
तच्चापि जन्ममात्रेण ब्राह्मण्येऽनुमते सति, सर्वथा व्यर्थमेव स्यात् ; तस्मोद्वर्णो न जन्मना ।
स्वरूपं, लक्षणं, कृत्यं यच्च शास्त्रेषु वर्णितं ब्राह्मणादेः, ततश्चापि नेष्यते जन्मवर्णता ।
"ब्रह्मजन्म" न कस्यापि मातुरेवादितो भवेत् ; संस्कारादिभिराचार्यस्तत्करोतीति वक्ष्यति—
"आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः उत्पादयति सावित्र्या, सा सत्या साऽजराऽमरा"
ब्राह्मणत्वादिरूपैव जातिरत्र विवक्षिता, सा नैव जन्मतः सिद्धा; किन्त्वाचार्येण जन्यते ।
"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" (मनु०)
न त्वेव जन्ममात्रेण ब्राह्मी जातिर्भवेन्नृणां, न क्षात्री, न च वा वैश्या, नैव शौद्रीति निर्णयः ।
ब्राह्मणत्वादिरूपा हि या जातिः कल्पिता नृषु , कर्मैव कारणं तस्यां, न जन्मेति सती स्थितिः; ।
किन्तु किञ्चिन्निमित्तं स्याज्जन्म-सिद्ध-गुणोदयः ब्राह्मण्यादावतः पुंसां योनिशुद्धिः प्रशस्यते ।

---

+ म० भा० शां० अ० ७२ श्लो० ६ तथा १०—११ । † म० भा० अनु० अ० ३५ श्लो० १ ।
‡ म० भा० अनु० अ० १४३ श्लो० ६; ब्रह्मपु० अ० २२३ श्लो० १२; शिवपु० धर्मसं० अ० ४१ श्लो० १ ।

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते, ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये।
सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतं; श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति।

---

यदा सत्पितरौ स्यातां सत्त्वादिगुणशालिनौ, तदा तत्सन्ततिः प्रायः स्यात्सत्त्वादिगुणाधिका।
"मातुरग्रेऽधिजननं" द्विजत्वस्य प्रयोजकम् इष्यते; न तु जन्मैव, तन्मात्रं वर्णकारणम्।
अत्रा'ऽधिजननं' नाम, सन्मातरि सतः पितुः 'अधिकं जन्म' सत्त्वादि-संस्कारैरनुवासितम्;
न तु जाति-विशेषेषु जन्माऽधिजननं मतं; तस्माद्वर्णव्यवस्थायां जातिनाम न कारणम्।
अतः शास्त्रेषु ये प्रोक्ता जातिवादा इहैव, ते जन्मतो वर्णसम्पत्तिमभिजातस्य सूचकाः।
(२)अभ्यासादपि वर्णत्वं स्यात् तत्तद्गुणकर्मणां, यथायोग्यं नृणां नूनमेकस्मिन्नपि जन्मनि।
पूर्वकर्मज-संस्कारैरेव जन्मान्तरे नरः प्राप्नोति जन्मतस्तत्तद्वर्णत्वगुणसम्पदम्।
इत्थं च जन्मनश्चापि कर्मैवास्त्यादिकारणं, अतश्च कर्मणा वर्णो जातिवादेऽपि सिध्यति।
मातुरग्रेऽधिजायन्ते केचित्सत्त्वगुणाधिकाः, केचिद्रजःप्रधानाश्च, केचिदुग्रतमोमयाः;
एतत्स्वभाववैचित्र्यं जन्मतो दृश्यते नृणां, जन्मान्तरीयकर्मैव ननूमत्रास्ति कारणम्।
अन्यथा सर्वलोकाः स्युः समशीलस्वभावकाः, प्रत्यक्षं दृश्यते नृणां वैभिन्यं गुण-कर्मसु।
तस्मादौचित्यमाश्रित्य सर्वथैव सदैव च मान्यं वर्णव्यवस्थायां कर्मैवैकं प्रयोजकम्।
(३)"अविद्वान् ब्राह्मणो देवः, पात्रं वै पावनं महत्, विद्वान्भूयस्तरो देवः पूर्णसागरसन्निभः।
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्, प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्।
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति, हविर्यज्ञे च विधिवद् गृह एवातिशोभते;
एवं यद्यप्यनिष्टेषु वर्तते सर्व-कर्मसु, सर्वथा ब्राह्मणो मान्यो, दैवतं विद्धि तत्परम्।†"
एवमाद्यर्थवादानामक्षरार्थं यथाश्रुतं गृहीत्वा, जन्मना वर्णं केचिदिच्छन्ति सज्जनाः।
किन्त्वेभिः शास्त्रकाराणामाशयोऽन्यः प्रतीयते; न जात्या ब्राह्मणम्मन्य-ब्राह्मणब्रुव-शंसने।
'अविद्वान्' इति नाऽज्ञानी, किन्तु ग्रन्थविवर्जितः मानवो ब्राह्मवृत्तस्थो ब्राह्मणोऽत्र विवक्षितः।
ग्रन्थाधीतिमकृत्वापि ब्राह्मधर्मस्थितः पुमान्, विप्रो भवति देवश्च पात्रं च पावनं महत्।
बभूवुर्ऋषयः पूर्वं ग्रन्थाऽध्ययनवर्जिताः वेदादेस्तत्प्रणीतत्वात्, ततः प्राक् तदभावतः।
अर्वाक्कालेऽप्यविद्वांसः शास्त्राध्ययनदूषिताः, अभूवन्बहवः सन्तो लोकधर्मप्रचारकाः।
अद्यत्वेऽपि च दृश्यन्ते ग्रन्थज्ञानबहिष्कृताः वृत्तैः सद्ब्राह्मणाः कार्यैर्लोकसंग्रहतत्पराः।
कः संदेहोऽस्ति देवत्वे तादृशानां महात्मनाम्, अविद्वत्त्वेऽपि विप्रत्वे, पात्रत्वे वा महत्तमे?
ग्रन्थपाण्डित्यमात्रेण न विद्वत्त्वं, न विप्रता, न देवत्वं, न पात्रत्वं; वृत्तं सर्वत्र कारणम्।
"न जातिर्न कुलं राजन्, न स्वाध्यायः श्रुतं न च, कारणानि द्विजत्वस्य, वृत्तमेव हि कारणम्।
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः? कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु?
नैकमेकान्ततो ग्राह्यं पठनं हि विशाम्पते, वृत्तमन्विष्यतां तात, रक्षोभिः किं न पठ्यते?
बहुना किमधीतेन नटस्येव दुरात्मनः? तेनाऽधीतं श्रुतं वाऽपि यः क्रियामनुतिष्ठति।
कपालस्थं यथा तोयं, श्वदृतौ च यथा पयः, दूष्यं स्यात्स्थानदोषेण, वृत्तहीनं तथा श्रुतम्।
चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः; तस्माद्विद्धि महाराज, वृत्तं ब्राह्मण-लक्षणम्॥‡"
विद्वान्भवत्वविद्वान्वा ब्राह्मे वृत्ते तु यः स्थितः, स एव 'ब्राह्मणो देवः पात्रं वै पावनं महत्।'
इत्थं वृत्तप्रशंसार्था एवोद्धृतविधोक्तयः; ब्राह्मणब्रुवमूर्खाणां महत्त्वस्य न दर्शिकाः।
अत एवाग्नि-दृष्टान्तो दत्तः संगच्छते त्विह; अग्निवद् ब्राह्मणे प्रोक्तं तेजस्वित्वं च युज्यते।

---

† म० भा० अनु० अ० १५१ श्लो० २०-२३।

‡ दु० मु० भं० च० ( पृ० ५९ ) धृतं वह्निपुराण-वचनम्।

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते, स्वं ददाति च ,
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः । ९४-१०१

अप्रणीतेऽपि तेजोऽस्ति प्रकृत्यैव यथाऽनले , नाऽग्नित्वार्थं प्रणीतत्वं तत्राऽवश्यमपेक्ष्यते,
तथा यस्मिन्नरे ब्राह्मस्वभावप्रभवागुणाः सन्ति, तस्मिन्न विद्वत्त्वं ब्राह्मण्यार्थमपेक्ष्यते ।
वृत्तमात्रेण विप्रत्वं पूर्णं सम्पद्यते नृणां ; वृत्त्याद्यर्थं तु विद्वत्त्वं ग्रन्थानां समपेक्ष्यते ।
तस्मात्पुस्तकपाण्डित्याभावेऽपि ब्राह्मणस्तु यः सद्वृत्तेन, स मानार्हः इत्येवार्थोऽत्र सम्मतः ।
(४) यदि वृत्तेन विद्वत्त्वं सहैकत्र भवेत्, तदा 'विद्वान्भूयस्तरो देवः' वृत्त-विद्यासमन्वितः ।
"तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ; तपः-श्रुताभ्यां यो हीनो, जातिब्राह्मण एव सः"
"त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च , एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्"
एवमाद्यार्षवाक्यैश्च प्रागुक्तार्थः प्रमीयते ; तपः-श्रुतादिभिः स्पष्टं तारतम्यमिहोच्यते ।
तपः-श्रुतादियोगेन ब्राह्मणाग्र्यत्वमिष्यते , एकैकेनांशतोऽपूर्णं ब्राह्मण्यमिह मन्यते ।
योनिरत्र सती माता, न तु तज्जातिसंज्ञिताः ; सत्त्वादिप्रकृतिश्चापि योनिरित्यभिधीयते ।
सन्मातुरभिजातो यः सत्त्वाधिप्रकृतिः पुमान् , स जातिब्राह्मणो ज्ञेयः, न तु तन्नामधारकः ।
'जाति-ब्राह्मण'शब्दस्तु ब्राह्मणब्रुवशब्दवत् निन्द्यार्थो, न तु तन्नाम-जन्म-जातिविधायकः ;
तस्मान्नैतत्प्रयोगेण जातिब्राह्मण्यमिष्यते ; प्रत्युत निन्द्यते त्वेतत्तपो-विद्याविवर्जितम् ।
"सच्छ्रोत्रियकुले जातो अक्रियो नैव पूजितः , असत्क्षेत्रकुले पूज्यो व्यास-वैभाण्डकौ यथा ।
क्षत्रियाणां कुले जातो विश्वामित्रोऽस्ति मत्समः, वेश्यापुत्रो वसिष्ठश्च, अन्ये सिद्धा द्विजायतः ।
तस्मात्सच्छ्रोत्रियादीनां शृणु पुत्रक लक्षणं धरायां तीर्थभूतानां, सर्वपापहराय च ।
जन्मना ब्राह्मणो ज्ञेयः, संस्कारैर्द्विज उच्यते , विद्यया याति विप्रत्वं, त्रिभिः श्रोत्रियलक्षणम् ।
विद्यापूतो मन्त्रपूतो वेदपूतस्तथैव च तीर्थस्नानादिभिर्मेध्यो विप्रः पूज्यतमः स्मृतः꙰ "
"जन्मना ब्राह्मणो ज्ञेयः, संस्कारैर्द्विज उच्यते , विद्यया याति विप्रत्वं, श्रोत्रियस्त्रिभिरेव च;
वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते , तदाऽसौ वेदवित्प्रोक्तो, वचनं तस्य पावनम्¶"
(५) "जन्मना ब्राह्मणो ज्ञेयः" इत्यादिस्मृतिवाक्यतः , 'जन्मना वर्ण' इत्यर्थं साधयन्तीह केचन ।
नैतन्मतं तु सच्छास्त्राऽभिप्रायानुगुणं; यतः सुस्पष्टं तादृशैर्वाक्यैः साध्यते कर्मवर्णता ।
उपक्रमोपसंहाराक्षरस्वारस्यसूचनैः व्यासा-ऽत्रिभ्यां स एवार्थो दृष्टान्तेन च दर्शितः ।
व्यास-वैभाण्डकादीनां दृष्टान्तादिह कण्ठतः घुष्यते कर्मणा वर्णः; जन्मना च निषिध्यते ।
ब्राह्मणत्वे, द्विजत्वे च, विप्रत्वे च क्रमादिह जन्म-संस्कार-विद्यानां कारणत्वं निगद्यते ।
किन्तु ब्राह्मण्य-विप्रत्वे न भिन्ने इति दृश्यते , द्विजत्वं च क्वचिद्वक्ति ब्राह्मण्यमपि केवलम् ।
यद्येतत्त्रयमेकं स्यात्, तदा जन्मादिभिस्त्रिभिः जन्यं समुदितैरेव ब्राह्मण्यं स्यादिति स्थितम्;
त्रयाणामिह भिन्नत्वे त्विष्टे जन्मादिभिः कृतं, एकस्मिन्नपि वैभिन्न्यं ब्राह्मण्ये स्वीकृतं भवेत्;
एवं चोभयथा जन्म नैकं वर्णप्रयोजकं, तस्मात्कर्मैव वर्णत्वे सर्वत्रार्थैकमिष्यते ।
'जन्म'शब्देन सर्वत्र वर्णप्रकरणे स्मृतं गुणाधिजननं ह्येव, न तु तन्नामजातिजम् ।
तस्मादापाततो वर्णं जन्मना वदतामिव नूनमाभासमानानां वाक्यानामाशयस्त्वयम्—
कन्येव पितृजातीया पुत्रोऽपि व्यवहारतः पितृजातीय एवादौ सामान्यादभिधीयते ।
विवाहानन्तरं कन्या पतिवर्णा भवेद्यथा, संस्काराद्यैस्तथा पुत्रो भिन्न-वर्णोऽपि जायते ।
ब्राह्मण-व्यक्तितो जातस्त्वादौ सामान्यतः पुमान् जन्मना ब्राह्मणो वाच्यः पितृजातीयनामतः ।
स एवानन्तरं स्वीय-स्वभावप्रभवान्गुणान् आश्रित्य कृतसंस्कारो यथायोग्यं भवेद् 'द्विजः'

꙰. पाद्मे सृष्टिखं० अ० ४३ श्लो० १३१—३५ । ¶. अत्रिसं० श्लो० १४१—४२ ।

"संस्कारैर्द्विज" इत्यत्र 'द्विजः' त्रैवर्णिको मतः, तथा चात्रोद्धृतस्याऽत्रेः श्लोकस्यार्थोऽयमीदृशः
ब्राह्मणव्यक्ति-जन्यत्वाज्जन्मना ब्राह्मणस्तु यः, सोऽपि संस्कारतः पश्चात्स्वप्रवृत्त्यनुसारतः
'द्विजः' त्रैवर्णिकेष्वन्यतमो, भवति; तत्र च "विद्यया याति विप्रत्वं" तेजः-शौर्यादितोऽथवा
क्षत्रत्वं, कृषिदाक्ष्याद्यैर्वैश्यत्वं; तदनर्हणः शूद्रत्वमपि यातीति सुस्पष्टमवगम्यते।
एष एवास्ति सन्न्यायः क्षत्रादिव्यक्तिजे नरे जातिवर्णव्यवस्थायां, तस्माद्वर्णोऽस्ति कर्मणा।
द्विजत्वे त्वनवक्लृप्तः शूद्रत्वं च द्विजातिजः याति, ब्राह्मण्यमप्येवं शूद्रजातः सुकर्मभिः।
वृत्ततो वृत्तितो यस्तु पितृवर्त्मानुवर्तते, तस्मिंस्तज्जन्मवर्णः स्यात्प्रकृत्यैव, न संशयः।
किन्तु वंश-क्रमान्नास्ति सदा वृत्ताऽनुवर्तनं, न वा सर्वेषु वंश्येषु; तस्माद्वर्णो न जन्मना।
वंशानुक्रमवर्णेऽपि कर्मैवास्ति प्रयोजकं, तस्माच्च कर्मणैवेष्टा नृणां वर्णव्यवस्थितिः।
"कर्मणा प्राप्यते गोत्रं, गोत्राद्वर्णोऽभिजायते, वर्णाद्धर्मश्च वृत्तिश्च, एष धर्मः सनातनः"
ब्राह्मणव्यक्तिजातेऽपि ब्रह्मकर्म न चेद्भवेत्, ब्राह्मणो न स सल्लोकैः शास्त्रैर्वा मन्यते नरः।
इत्थं च जातिवादेऽपि वर्णत्वस्य नियामकं कर्मैवेति तु मन्तव्यं समाजाऽभ्युदयार्थिभिः।
एवमाशयको नानाधर्मशास्त्रप्रमाणतः अस्ति व्यासाऽत्रि-वाक्यार्थो दृष्टपाठानुसारतः।
"जन्मना जायते शूद्रः" एष पाठस्तु सन्मतः; पक्षद्वयेऽपि वर्णत्वं कर्मणैव प्रसिध्यति।
(६) केचित्तु जन्मनेत्यादि व्यासाऽत्रिवचनं विदुः ब्राह्मणत्वस्य संप्राप्तौ नानाहेतुप्रदर्शकम्;
अर्थाद्धि, जन्मना कश्चिद्ब्राह्मणो, ब्रह्म-पुत्रवत्; मतङ्गादिवदन्यश्च संस्कारैर्भवति द्विजः;
कश्चित्तु विद्यया विप्रः, श्रोत्रियस्त्रिभिरेव वा; अर्थाद्, व्यस्तैः समस्तैश्च जन्माद्यैर्ब्राह्मणो भवेत्।
ब्राह्मण-द्विज-विप्रादि-शब्दाश्चैकार्थवाचिनः भिन्नहेतु-प्रसङ्गेन प्रोक्ता अत्र पृथक्पृथक्।
जन्म-संस्कार-विद्याभिः, एभिस्तु कारणैस्त्रिभिः व्यस्तैः समुदितैर्वापि ब्राह्मण्यं याति मानवः,
इत्येवार्थ इहाऽस्तीष्टः; तच्चैतदुपलक्षणं वर्णकारकहेतूनां बहूनां विधि-कर्मणाम्।
तथा हि, जन्मतः प्राप्तसत्त्वादिगुणसम्पदा, संस्कारेण, तपो-विद्या-वृत्तैः, शपथपूर्वकं
वर्णत्वग्रहणेनापि, तत्तद्वृत्त्यर्थकर्मणां स्वयं हि वरणेनापि, धर्माचार्यवरेण वा,
लोकसंस्थानुमत्या च, राजाज्ञादिव्यवस्थया, व्रात्यस्तोमादिभिः शुध्या, जातिसंमिश्रणेन च,
लोकसंग्रहभावोत्थक्रान्त्या, राष्ट्रविधित्सया, चातुर्वर्ण्यं यथायोग्यं क्रियते लोकवासिभिः।
ब्रह्मणो मानसाः पुत्रा जन्मतो ब्राह्मणा मताः; संस्कारेण भरद्वाज-जाबालाद्या द्विजीकृताः;
विश्वामित्रादयः केचिद्ब्राह्मण्यं तपसा गताः,❀ विद्यया चैतरापत्य-काक्षीवत्-कवषादयः,
वृत्तैर्ऋषभपुत्राद्याः; शकाद्यास्तु प्रतिज्ञया जन्मजातिपरावृत्तौ चातुर्वर्ण्यमुपागताः;
वालेयाः शौनकाद्याश्च भिन्नवृत्तिव्यपाश्रयात् ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति चतुर्विधाः;

---

❀ "यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार
परो रजोभिः स्वगुणैरगाधः, स गाधिपुत्रोऽपि गृहानुपैति" [ अनर्घराघवे १, २२ ]

"इह हि मानव-धर्मेऽभिहितम्—
'अरणीगर्भसम्भूतः कठो नाम महामुनिः, तपसा ब्राह्मणो जातः, तस्माज्जातिरकारणम्" इति।
[ In the Vajrasuci of Asvaghosa ( ed. by Weber ); History of Dharma-Shastra, P: 147 ]

अयं श्लोको मानवधर्मशास्त्रीय इति वज्रसूच्यामश्वघोषेण समुद्धृतः। एवमेव बहवः श्लोका इतिहास-पुराण-धर्मशास्त्र-निबन्धादिग्रन्थेषु मनुवचनत्वेन निर्दिश्य समुद्धृतास्तत्र तत्र दृश्यन्ते; किन्तु हन्त! तेषु भूयांसः साम्प्रतमुपलभ्यमाने मनुस्मृतीत्यपरनामधेये मानवधर्मशास्त्रे नैव समुपलभ्यन्त इति महदिदम-सन्तोषस्थानम्! एवंविधैः खलु निबन्धादिषूपलभ्यमानैर्मनुश्लोकैः वर्त्तमानमनुस्मृतिगता बहवो विवादास्पद-विषया निःसंशयं निर्विरोधं च सम्यङ्निर्णेतुं शक्यन्त इति प्रत्यक्षं भवेत् प्रेक्षावतां परीक्षकाणाम्।

भृग्वादिवरदानेन वीतहव्यादयस्तथा, लोकसंस्थानुमत्या तु शाकद्वीपादिवासिनः,
अत्यर्वाक्कालिकाः केचित् 'सवालक्खी'ति विश्रुताः, 'चित्तपावन'संज्ञाद्या राजाज्ञादिव्यवस्थया
ब्राह्मणब्रुवतां यातास्तथाऽऽन्ध्र-द्राविड़ादयः;
व्रात्यस्तोमादिभिः शुद्ध्या बौद्धीभूता जनाः पुनः संगृह्य शङ्कराचार्यैश्चातुर्वर्ण्ये प्रवेशिताः;
रामानन्दादिभिर्म्लेच्छाः संस्कृत्य हैन्दवीकृताः, तन्मिश्रं चार्यसन्तानं चातुर्वर्ण्यमिहांशतः;
लोकसंग्रहभावोग्रक्रान्तिमद्भिर्महाजनैः आपत्कालविपन्नैश्च राजभिः संघशो नृणां
जन्म-कर्मादि-नैर्पेक्ष्यं चातुर्वर्ण्यं वितन्यते; इत्थं वर्णव्यवस्थायां दृश्यतेऽनेकधा विधा।
जन्म-संस्कार-विद्यादेरेकैकस्य तु हेतुता वैशेष्यादिष्यते वर्णे, यथाकाल-प्रयोजनम्;
सामान्यनियमस्त्वस्ति, स्वभावप्रभवैर्गुणैः प्रविभक्तैर्यथायोग्यं वृत्ति-कर्मभिरेकशः
संयोज्य मानवांस्तत्तद्वर्णत्वापादनं, तथा तत्कर्त्तव्या-ऽधिकारादावसङ्कीर्णं प्रवर्त्तनम्।
एतत्, शिवपुराणादौ सर्वमेवोपलक्षणात् वर्णकारकहेतूनां नानात्वं दर्शितं स्फुटम्।
"ब्राह्मणस्तु भवेज्जात्या, संस्काराद् द्विज उच्यते, विद्यया विप्रतां याति, ब्राह्मणस्त्रिविधः स्मृतः।
संस्काराद् यो भवेद्विप्रो, यश्च स्याद्वेदपारगः, तयोस्त्राणे वधे चाऽपि पुण्य-पापौ समौ स्मृतौ।
जात्या च यो भवेद्विप्रः सर्वागमविशारदः, तपःशौचसमायुक्तस्त्वयो नाम्ना स उच्यते।...
वेदविद् यो भवेद्विप्रो वह्निहोमपरायणः, सोऽपि श्रेष्ठः स्मृतो देवि, पूजितस्तारयेत्समम्*"
जाति-संस्कार-विद्याभिर्विधाभिस्तिसृभिः कृतः ब्राह्मणस्त्रिविधस्त्वत्र स्पष्टमेवाह कण्ठतः।
अग्रेऽपि तद्विशेषोक्तौ विप्रस्यैवानुवर्त्तनात्, तस्य त्रैविध्यमेवेष्टं भिन्नैस्तद्धेतुभिस्त्रिभिः।
जातिरत्रापि सत्त्वादि-गुणाधिप्रकृतिर्मता, जातिविप्रेऽपि विद्वत्त्व-तपः-शौचविशेषणात्।
अत्र ब्राह्मण्य-तद्धेतोस्त्रित्वोक्तिस्तूपलक्षणं प्रागुक्ताऽनेकहेतूनां, क्षत्रादेश्चाऽवगम्यताम्,
अर्थाद्, बहुप्रकारैस्तु वर्णीकरणमिष्यते सङ्करोऽपि नृणां तत्तद्देश-कालाद्यपेक्षया।
तस्मान्न जन्मना वर्णः कदाप्यासीन्न विद्यते, न भविष्यति, भूत्वा वा नैव स्थास्यति भूतिमान्।
एतर्हि भारते वर्षे हिन्दूजातिषु वाचिकः दृश्यते जन्मना वर्णः सर्वाऽनर्थप्रवर्त्तकः।
नैवं पूर्वयुगेष्वासीत्सत्यधर्ममयेषु; यत्, कर्मणा वर्णमर्यादा लोकेऽभूदार्षधर्मजा।
तस्मादत्र मनूक्तानामापाताज्जातिवादिनां वाक्यानामाशयः पुंसां स्वाभाव्यगुणकीर्त्तने;
न त्वाधुनिक-वाङ्मात्र-ब्राह्मणब्रुवजातिजं जीवं स्तोतुं प्रवर्तेत वर्णतत्त्वार्थविन्मनुः।
(७) यत्त्वनिष्टेष्वपि प्राह प्रवृत्तं सर्वकर्मसु मानार्हं सर्वथा विप्रं कृष्णद्वैपायनो मुनिः,
तत्र चाऽनिष्टकर्त्तव्यं लोकसंग्रहधर्मकं परार्थसाधनं बोध्यं; न तु स्वार्थप्रवर्तिम्।
विष्णुस्तदवताराश्च ब्रह्मा रुद्रो बृहस्पतिः, शुक्रश्चन्द्रो भरद्वाजो बुधो दीर्घतमा ऋषिः,
जबालिश्च वसिष्ठश्च विश्वामित्रः पराशरः, दुर्वासा जामदग्न्यश्च कृपो द्रोणश्च, तत्सुतः,
चाणक्यश्चरकाचार्यो महामात्यश्च राक्षसः, बौद्धध्वंस-महानिष्टकर्त्ता भट्टकुमारिलः,
मण्डनः शङ्कराचार्यस्तच्छिष्यास्तोटकादयः, सायणो माधवाचार्यादयो विप्रा महत्तमाः
अप्यनिष्टेष्ववर्तन्त लोकसंग्रहकर्मसु; तथाप्यद्यापि मानार्हाः सन्ति ते लोकवासिनाम्।
नैकेनैकपदे नैकं किञ्चित्कर्माऽखिलेष्टकृत् प्रयोक्तुं शक्यते पुंसा, साक्षाद्वा परमेष्ठिना;
"न हि सर्वहितः कश्चिदाचारः सम्प्रवर्तते, येनैवान्यः प्रभवति, सोऽपरं बाधते पुनः"
"एकं हत्वा यदि कुले शिष्टानां स्यादनामयं, कुलं हत्वा च राष्ट्रे च, न तद्वृत्तोपघातकम्"
एतत्सन्न्यायतः कश्चित्परार्थैकपरायणः ब्राह्मणोऽनिष्टमातिष्ठेच्चेत्कैषाञ्चिदपेक्षया,
एवम्भूतोऽपि मान्योऽसौ सर्वथेत्यर्थ इष्यते।
येषामप्यनिष्टानि कुर्याद्भूयोजनार्थतः, तेषामपि स मानार्हो ब्राह्मणः परमार्थवित्।

*. शिव पु० सन० सं० अ० ५४ श्लो० १३—१७।

## अस्य शास्त्रस्य प्रयोजन-मुत्पत्तिश्च

**तस्य कर्मविवेकार्थं शेषाणामनुपूर्वशः, स्वायंभुवो मनुर्धीमानिदं शास्त्रमकल्पयत् ।१०२।**

"न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्" अत्रापि 'सर्वपापेषु' भूयोलोकोपकारिषु
षाड्यन्त्रिकाभिचारेषु दुष्टराजविरोधिषु कर्त्तव्येषु कठोरेषु चाणक्यमिव संस्थितम्
अनिवार्यतयाऽनिष्टं कुर्वन्तमपि केचुचित्, न जातु ब्राह्मणं हन्यादित्येवार्थो विवक्षितः ।
स्वार्थं भूयोजनाऽनिष्टं कुर्वाणं त्वाततायिनं ब्राह्मणं वा गुरुं वापि हन्यादेवाविचारयन् ।
"प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे. जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ।...
अपेतं ब्राह्मणं वृत्ताद् यो हन्यादाततायिनं, न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति†"
इत्थं च जातिवादानां सर्वेषामाशयो बुधैः, जन्मसिद्धगुणोत्कर्षप्रशंसार्थोऽवगम्यताम् ।
अन्यद् यदिह वक्तव्यं, तत्प्रागेव प्रपञ्चितम् एकत्रिंशत्तमश्लोक-भाष्यावतरणे स्फुटम् । ९८–१०१ ।
'तस्य' पूर्वमुपात्तस्य ब्राह्मणस्याग्रयायिनः, 'शेषाणां' क्षत्रियादीनामाश्रमाणां च 'कर्मणः'
यथायोग्यं विवेकेन विधानार्थमनुक्रमात्, धर्मशास्त्रमिदं चक्रे ब्रह्मपुत्रः स्वयं मनुः ।
पुराणेष्वितिहासेषु धर्मशास्त्रेषु च स्मृतं नानारूपं मनोः शास्त्रम्, अनेके मनवस्तथा* ।
तत्, किम्भूतमिदं शास्त्रं, केन वा मनुना कृतम् ? इत्याकांक्षानिवृत्त्यर्थं 'स्वायंभुव' पदं धृतम् ।
एतेनाऽऽदिमनोः साक्षाद्ब्रह्मपुत्रस्य 'धीमतः' सर्वज्ञानमयस्येदं शास्त्रमस्तीति दर्शितम् ।

---

† म० भा० शां० अ० ३४ ।

* "मानवे च सर्वा प्रवृत्तिः कामहेतुक्येवेति" [ बृ० आ० उ० १, ४, १७ शां० भा० ] मनु० अ० २ श्लो० ४ । "स्मरन्ति च" ( ब्र० सू० ३, १, १४ ) अत्र "मनु-व्यासप्रभृतयः शिष्टाः" इति शाङ्करभाष्यम् ।

"अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्, राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह"
[ मृच्छकटिके अं० ९ श्लो० ३९ ] एतन्मूलं मनौ ( अ० ८ श्लो० ३८० ) द्रष्टव्यम् ।

"उपदिष्टवन्तश्च मन्वादयः" इति धर्मलक्षणसूत्रे ( मी० द० १, १, २ ) शाबरभाष्यम् ।

"तदुक्तं बृहन्मनुना—
"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते; समानोदकभावस्तु निवर्तेताचतुर्दशात्,
जन्मनामस्मृतेरेके; तत्परं गोत्रमुच्यते" [ पराशर-माधवीये पुस्त० ३ भा० २ पृ० ५२८ ।

"मनुनाऽभिहितं शास्त्रं यच्चापि कुरुनन्दन;
तत्राऽप्येष महाराज, दृष्टो धर्मः सनातनः" [ म० भा० अनु० ४६, ३५ ]

"अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति" [ म० भा० अनु० १९, ६ ]

"सूत्रकारो, धर्मप्रवक्ता इति नीलकण्ठः; स च मानवधर्मसूत्रकारः स्वायंभुवमनुरेवविवक्षित इति केचन; "निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः" ( मनु० ९, १८ ) इति मनुस्मरणात् ।
"मनुना चैव राजेन्द्र; गीतौ श्लोकौ महात्मना..." [ म० भ० शां० अ० ५६ श्लो० २३—२५ ] ।

"प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ
राजधर्मेषु राजेन्द्र, ताविहैकमनाः शृणु..."[ म० भा० शां० अ० ५७ श्लो० ४३—४५] ।

"प्राचेतसस्य वचनं कीर्त्तयन्ति पुराविदः" [ म० भा० अनु० अ० ४६ श्लो० १ ] ।

"अविशेषेण पुत्राणां दायो भवति धर्मतः;
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत्" [ निरुक्ते, ३, ४, २ ] ।

"ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः, कृतं सतसहस्रं हि श्लोकानामिदमुत्तमम्;
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ; तस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ।...

ऋग्वेदोपि स्मरत्येकं मानवं धर्मशासनम्–"मानः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः †"
स्वायंभुवमनूपज्ञं शास्त्रं वैवस्वतो मनुः श्रद्धत्ते पित्र्यमित्येवं तद्वंश्यत्वादिहात्मनः।
न स्वशास्त्रं स्वयं 'पित्र्यं' वदेद्वैवस्वतो मनुः, अतः स्वायंभुवस्यैव मनोः शास्त्रं तदादृतम्।
यद्धर्म मनुना क्षुण्णं, स्मृतं वैवस्वतेन, तत्, स्यादवश्यं ततः प्राच्यं नूनं स्वायंभुवोदितम्।
आसीदृक्संहिताकाले शास्त्रं किमपि मानवं, यत् पश्चादुपजीवेयुः पित्र्यं वैवस्वतादयः।
प्रतिमन्वन्तरं तच्च तत्तन्मनुनवीकृतं भवेद् व्यास-समासाभ्यां युगरूपं प्रवर्तितम्।
"यज्ञेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा" "प्रतिमन्वन्तरं चैषा स्मृतिरन्या विधीयते"
"कृते कृते स्मृतेर्विप्र, प्रणेता जायते मनुः" एवं वायौ च विष्णौ च मात्स्यादौ चाभिधीयते।
मन्त्रद्रष्टृमनुप्रोक्तं वेदसूक्तसहोदरं मूलभूतमभूदादौ शास्त्रं किमपि मानवम्।
ततस्तत्प्रतिसंस्कारं तद्वंश्या मानवोऽपरे युगधर्मानुसारेण स्वस्वकालेष्वकुर्वत।
अत एवास्य कर्त्तृत्वे शास्त्रदृष्टो मिथोऽन्यथा नानापत्यमनोर्नामनिर्देशो न विरुध्यते।
अतः सङ्गच्छते तत्तत्सम्प्रदानस्य भिन्नता; स्वान्तरे मनुभेदेन शिष्यभेदोऽपि युज्यते।
प्रतिमन्वन्तरं भिन्न-भिन्नेन मनुना कृतम् अप्येकं मानवं शास्त्रं मनुत्वात्तदभेदतः।
वस्तुतो मूलकर्त्तास्य प्रोक्तः स्वायंभुवो मनुः, अन्ये तु प्रतिसंस्कारैरकुर्वन्नुपबृंहणम्।
प्रतिसंस्कर्त्तृनाम्नाऽपि क्वचित्प्राचेतसादिना निर्देशो युज्यते ह्यस्य, प्रवक्तृभृगुनामवत्।
मानवं धर्मसूत्रं च स्मर्यते सर्वतोमुखं, भाष्यं कौमारिलं तस्य श्रूयते, नोपलभ्यते।

---

स्वायंभुवेषु धर्मेषु शास्त्रे चौशनसे कृते, बृहस्पतिमते चैव लोकेषु प्रतिचारिते..."
[ म० भा० शां० अ० ३३५ श्लो० ३८—४६ ]

"अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत्" [ म० भा० वन० ३५, २१ ]

"वेदं षडङ्गं वेदाऽहमर्थविद्यां च मानवीम्।" [ म० भा० द्रो० ७, १ ]

"इह हि भगवान्मनुः प्रथमं सर्वभूताऽनुग्रहार्थमाचारस्थितिहेतुभूतं शास्त्रं चकार"
इत्यादि नारदस्मृतौ प्रारम्भे द्रष्टव्यम्।

"इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः,
विधिवद् ग्राहयामास, मरीच्यादींस्त्वहं मुनीन्" [ मनु० १, ५८ ]

"तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिः मनवे, मनु प्रजाभ्यः"
इत्यादि छा० उ० प्र० ८ खं० १५।

"इमं विवस्वते योगं प्रोक्तवानहमव्ययं, विवस्वान्मनवे प्राह, मनुरिक्ष्वाकवेऽब्रवीत्,
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः" [ भ० गी० ४, १ ]

"यदाह वैवस्वतो मनुः" [ नीतिवा० ७, २४ ]

अस्मिन्विषये मा० आ० भा० उपक्रमे २५शं टिप्पणमपि द्रष्टव्यम्।

† ऋ० सं० मं० ८ सू० ३० ऋचा ३। अत्र सायणभाष्यम्—

"हे देवाः, मानवात् 'पित्र्यात्' मनुः सर्वेषां पिता तत आगतात्, 'परावतः' पिता मनुर्दूरं मार्गं चक्रे, तस्मात्, 'पथो' मार्गात्, 'नो'ऽस्मान्, 'मा नैष्ट' मा नयत, अपनयनं मा कुरुत इत्यर्थः; किन्तु 'दूरं' य एतद्व्यतिरिक्तो विप्रकृष्टमार्गोऽस्ति, तस्माद् 'अधि' अधिकमित्यर्थः, अस्मान्नय, नयत" इति।

"हे देव-गण, पिता मनु हइते आगत पथ हइते आमादिगके भ्रष्ट करिओ ना; दूरवर्त्ती मार्ग हइतेओ भ्रष्ट करिओ ना।"

पूर्वोद्धृत ऋङ्मन्त्र का उपर्युक्त बङ्गाऽनुवाद करने के बाद, नीचे टिप्पणी में, श्रीरमेशचन्द्रदत्त ने यह आशङ्का प्रकट की है कि—

वर्त्तमानस्वरूपं तु नूनमस्या मनुस्मृतेः स्यादर्वाक्कालिकैः कैश्चिद्विद्वद्भिः प्रतिसंस्कृतम्।।
"विस्तारयति लेशोक्तं, संक्षिपत्यतिविस्तरं, संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ॥"
एवं मनुस्मृतेरस्या भूयोऽभूत्परिवर्तनं, तत्तत्समयधर्माणां प्रक्षेपाच्चोपबृंहणम्।
तस्मादाधुनिकं त्वेतन्मनोः शास्त्रं न सर्वशः मूलभूतं, तथापीह प्रायः मूलमपि स्थितम्।

---

"स्वयं वैवस्वत मनु एइ सूक्तेर वक्ता हइले ए कथा किरूपे वलिवेन" [ ऋ० सं० ८, ३०, ३ र० द० अनु० पृ० ८८४ ]

आश्चर्य है कि यह आशङ्का, श्रीरमेशचन्द्रदत्त ऐसे प्रौढ़ विद्वान् तथा बहु-अनुसन्धानसमर्थ मनीषी के मन मे उठी, और इसका समाधान भी उन्हें नहीं सूझा! उपर्युक्त मन्त्र के द्रष्टा वैवस्वत मनु हैं; उन्होंने अपने से बहुपूर्वभव स्वायंभुव मनु द्वारा उपदिष्ट 'परावतः पथः' वा मानवधर्म-सन्मार्ग का स्मरण, उक्त ऋचा मे किया; ऐसा अर्थ करने मे क्या अनुपपत्ति है? हमने संस्कृतभाष्य मे इस अर्थ का निरूपण सप्रमाण और सोपपत्तिक किया है।

ऋग्वेद के अतिरिक्त तैत्तिरीयसंहिता, ताण्ड्यमहाब्राह्मण, ऐतरेयब्राह्मण आदि मे भी मानवधर्मशास्त्र का सगौरव उल्लेख और महत्त्व-प्रतिपादन है। ( देखिये मा० आ० भा० उपक्रम, पृ० १, २, तथा ५ के टिप्पण )।

१. "मनुसंहिता तु या खलु सूत्रनिबद्धा, सैवातिप्राचीना, मानवकल्पसूत्रादिभिः समानवयस्का, समानमाना च। महाभाष्ये ( अ० १ पा० १ आ० ७ ) यदुक्तं—'नैव ईश्वर आज्ञापयति, नाऽपि धर्मसूत्रकाराः पठन्ति' इति, तत्तादृश-मन्वाद्यभिप्रायेणैव। इदानीं प्रचलितो मनुसंहितेति प्रसिद्धो ग्रन्थस्तु भृगुप्रोक्त इति भृगुसंहितेत्येव व्यवहार्यः; परं ज्योतिषशास्त्रे भृगुसंहितेति ग्रन्थ विशेषस्य, इतोऽपि प्राचीनस्य दृष्टचरत्वात्, न तथा व्यवहृतोऽयं लोकैः। एतस्य ह्युपक्रमे, प्रत्यध्यायावसाने चाऽस्य भृगुप्रोक्तत्वं स्पष्टमेवेति न च तत्राऽस्ति प्रमाणप्रदर्शनापेक्षेति। तदुक्तं साङ्ख्यीयकौमुदीप्रभायां स्वप्नेश्वरेणैतत्—
'पञ्चशिखः सूत्रकारः आसुरि-शिष्यः; कापिलमिति प्रसिद्धिस्तु सम्प्रदायप्रवृत्तेः; भृगुप्रोक्त-संहितायामिव मनु-समाख्या' इति।

तस्यैतस्य मनुसंहितेतीदानीं प्रसिद्धस्य भृगुसंहिताग्रन्थस्य विशेषतः प्रणयनकाल-निर्णयोऽपि दुष्कर एव; सामान्यतस्त्वेष संहिताकारः, बौद्धधर्मप्रचारकात् शाक्यमुनेः, रामायणप्रणेतुरादि-कवेर्वाल्मीकाच्च, प्राचीनतमः; वार्तिककार-कात्यायनात्त प्राचीन इत्येव वक्तुं शक्यते। यतश्चाऽत्र संहितायां महाभारते इव अहिंसाधर्मो विशेषतो नोपदिष्टः, न च बौद्धधर्मप्रकाशित-निर्वाणमुक्तिप्रसङ्गश्च; अत एवास्या बौद्धधर्मप्रचारात्प्राचीनत्वमवगम्यते।...अपि नाम रामायणलिपिस्तु शाक्यमुनेर्जन्मतः पुरैवेति अध्यापक-लासेनादीनामपि सम्मतम्। तत्र मनुवचनोद्धृतिदर्शनान्मनुसंहितायाश्चास्यास्तत्पूर्वकालिकत्वञ्च सुव्यक्तम्। तद्यथा तत्र किष्किन्धाकाण्डे ( स० १८, श्लो० ३१—३३ )
'श्रूयते, मनुना गीतौ श्लोकौ चारित्रवत्सलौ गृहीतौ धर्मकुशलैस्तत्तथा चरितं मया।
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः, निर्मलाः स्वर्गमायान्ति, सन्तः सुकृतिनो यथा।
शासनाद्वापि मोक्षाद्वा स्तेनः ( पापात्प्रमुच्यते ), स्तेयाद्विमुच्यते;
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम्' इति।

राजभिर्धृतदण्डाश्चेत्यादी श्लोकौ तु मनुसंहिताया अष्टमाध्याये ( श्लो० ३१६—३१८ ) दृश्येते एव। तदेवमपि प्रतीयते, मनुसंहितायाः समुत्पत्तिर्नूनं शाक्यबुद्ध-जन्मतो बहुपूर्वमेवेति" इत्यादि निरुक्तालोचने ( पृ० ८८—९५ ) द्रष्टव्यम्।

केचित्तु पुष्यमित्रस्य समये, तन्नियुक्तैर्विद्वद्भिः प्रतिसंस्कृत्य साम्प्रतमुपलभ्यमानरूपमामादितं मानवधर्मशास्त्रमिति वदन्ति। ‖ चरकसं० सिद्धि० अ० १२ श्लो० ७४।

## अस्य शास्त्रस्याधिकारी, माहात्म्यं च

विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः, शिष्येभ्यश्च प्रवक्तव्यं सम्यङ्, नान्येन केनचित् ।
इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः, मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते ।
पुनाति पंक्तिं वंश्यांश्च सप्त सप्त परावरान्, पृथिवीमपि चैवेमां कृत्स्नामेकोऽपि सोऽर्हति ।
[ यथा त्रिवेदाध्ययनं, धर्मशास्त्रमिदं तथा अध्येतव्यं ब्राह्मणेन नियतं स्वर्गमिच्छता ]
इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्द्धनम्, इदं यशस्यमायुष्यमिदं निःश्रेयसं परम् । १०३-१०६।

## अस्य शास्त्रस्य विषयाः; तत्राऽऽचारः

अस्मिन्धर्मोऽखिलेनोक्तो, गुण-दोषौ च कर्मणां, चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ।

---

अतश्चैव चिरादेतत्प्रमाणीक्रियते बुधैः, लोकैः श्रद्धीयते, भूयः शिष्टैश्च परिगृह्यते ।
तद्, अर्वाक्कालिकानार्षैर्भावैर्मिश्रमपि क्वचित्, सम्यग्विविच्य सद्बुद्ध्या धार्यमेतन्महाजनैः ।१०२।
सत्वाऽधिकनरो विद्वानेव ब्राह्मण उच्यते, तेनैतन्मानवं शास्त्रमध्येतव्यं सुनिष्ठया,
चातुर्वर्णिकशिष्येभ्यः प्रवक्तव्यं च तत्त्वतः; चातुर्वर्ण्येन सामान्यादध्येयं ज्ञानहेतवे;
वृत्त्यर्थं ब्राह्मणेनैवाऽध्याप्यं, नान्येन केनचित्; इत्थं सम्यग्व्यवस्थार्थमेतत्प्रकरणं स्मृतम् ।
एतत्, 'शूद्रनिवृत्त्यर्थं' केचिदाहुर्यतो मनुः—"अधीयीरंस्त्रयो वर्णाः" इत्यग्रे वक्ष्यति स्वयम्;
"इदं शास्त्रमधीयानो ब्राह्मणः, क्षत्रियोऽपि, विट्", ईदृग्यमादिवाक्याच्च शूद्र एव निवर्त्यते ।
किन्तु नैतन्मतं सत्यं, ज्ञाने सर्वाधिकारतः, तत्साधनाच्च वेदादेर्न शूद्रोऽपि निषिध्यते ।
प्रत्युताऽध्ययने शूद्राऽधिकारोऽपि विधीयते वेदानां, वैदिके यज्ञे चाऽपि व्यासेन धीमता—
"इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः; धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते,
इत्येते चतुरो वर्णा येषां ब्राह्मी§ सरस्वती विहिता ब्रह्मणा पूर्वं; लोभात्त्वज्ञानतां गताः*"
"श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः वेदस्याऽध्ययनं हीदं, तच्च कार्यं महत्स्मृतम् †"
इत्थं शूद्राऽधिकारश्चेद्वेदेष्वपि विधीयते, का कथा स्मृतिपाठादौ तदर्हत्वस्य शिष्यते ?
तस्मादत्र मनोः शास्त्रे वैश्य-क्षत्रिययोरिव शूद्रस्याप्यधिकारोऽस्ति सामान्यादिति निश्चितम् ।
'शिष्येभ्य' इति सर्वेभ्यो वर्णेभ्यो निर्विशेषतः वक्तव्यत्वविधेः, शूद्रो नैतच्छास्त्रान्निवार्यते ।
प्रवक्तृत्वं तु वृत्त्यर्थं ब्राह्मणस्य नियम्यते, अन्येषां वृत्ति-साङ्कर्य-वारणाय निषिध्यते;
अध्येतृत्वं तु सर्वेषां वर्णानामभिधीयते; इत्येवाऽत्रत्य-वाक्यानां तात्पर्यं मनुसम्मतम् ।
क्वचित्स्वाध्याय-यज्ञादेः शूद्रो यद्विनिवार्यते, तत्तु प्रकृतिभावत्वादशक्त्यादिनिबन्धनम्;
तमोनिष्ठो हि वैशेष्यान्नरः शूद्र इति स्मृतः, स च ज्ञानेऽनवक्लृप्तो बुद्धिमान्द्यादिकारणात् ।
विद्वानर्थी समर्थश्च यज्ञेऽधिक्रियते नरः, "शूद्रो यज्ञेऽनवक्लृप्त" स्तत्सामर्थ्याद्यभावतः ।
अत एवा'ऽनवक्लृप्तः' इत्येवाह श्रुतिः, ततः 'अशक्तोऽनुपयुक्तो' वेत्यर्थ एव विवक्षितः ।
स्याच्चेच्छूद्राऽधिकारस्य यज्ञादिष्टं निवारणं, तदा'ऽनधिकृतो यज्ञे शूद्र' इत्यभ्यधाच्छ्रुतिः ।
अतोऽशक्त्यैव शूद्राणां प्रवृत्तिः प्रतिषिध्यते
क्वचिद्यज्ञादितः; तेषामार्हन्ती न तु बाध्यते । १०३-१०६ ।

---

§ 'ब्राह्मी' वेदमयी, 'सरस्वती' वाणी, चतुर्णामपि वर्णानां समानाऽधिकारेत्यर्थः ।

* म० भा० शा० अ० १८८ श्लो० १४—१५ । अयं श्लोकः—

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः—
ब्रह्म-राजन्याभ्यां, शूद्राय चा,ऽर्याय च, स्वाय चा,ऽरणाय च"
इति यजुः ( अ० २६ मं० २ ) श्रुतिमनुगच्छति ।

† म० भा० शां० अ० ३२७ श्लो० ४९ ।

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च,
तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः।
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते,
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्।

---

सद्वृत्तं, स्वस्थवृत्तं च दिनचर्यादि, नैतिकं यच्चागरिक-कर्त्तव्यं, गृहस्थाचरणं च यत्,
यद्वा साधु-चरित्रं च, शिष्टाचारोऽथवा नृणां, धर्मप्रयोगरूपं तत्सर्वमाचार उच्यते।
"आचाराल्लभते ह्यायुः, आचाराल्लभते श्रियम्, आचारात्कीर्त्तिमाप्नोति पुरुषः प्रेत्य चेह च।
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्; त्रसन्ति यस्माद्भूतानि तथा परिभवन्ति च,
तस्मात्कुर्यादिहाचारं यदिच्छेद्भूतिमात्मनः। अपि पापशरीरस्य आचारो ह्यन्तलक्षणम्;
आचारलक्षणो धर्मः, सन्तश्चारित्रलक्षणाः, साधूनां च यथावृत्तमेतदाचारलक्षणम्⊙"
"साधवः क्षीणदोषास्तु, सच्छब्दः साधुवाचकः, तेषामाचरणं यत्तु सदाचारः स उच्यते।
सप्तर्षयोऽथ मनवः प्रजानां पतयस्तथा, सदाचारस्य वक्तारः कर्त्तारश्च महीपते⁘"
"आचारसंभवो धर्मो, धर्मे वेदाः प्रतिष्ठिताः; वेदैर्यज्ञाः समुत्पन्नाः, यज्ञैर्देवाः प्रतिष्ठिताः,
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः; बृहस्पत्युशनःप्रोक्तैर्नयैर्धार्यन्ति मानवाः¶"
"आचारप्रभावो धर्मो, धर्मस्य प्रभुरच्युतः, सर्वागमानामाचारः प्रथमः परिकल्प्यते" (व्यासः)।
"यदेव प्राकृतं शास्त्रमविशेषेण वर्तते,...आचारमेव मन्यन्ते गरीयो धर्मलक्षणम्§"
"सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम्⁷" "सदाचारो मतो धर्मः, सन्तस्त्वाचारलक्षणाः➧"
"सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः, सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत्।
भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः; हिंसा-स्तेयाऽन्यथाकामं पैशुन्यं परुषा-ऽनृते,
संभिन्नालाप-व्यापादमभिध्या-दृग्विपर्ययं, पापं कर्मेति दशधा काय-वाङ्-मानसैस्त्यजेत्।
अवृत्ति-व्याधि-शोकार्त्ताननुवर्तेत शक्तितः; आत्मवत्सततं पश्येदपि कीट-पिपीलिकम्।
अर्चयेद्देव-गो-विप्र-वृद्ध-वैद्य-नृपा-ऽतिथीन्, विमुखान्नाऽर्थिनः कुर्यान्नाऽवमन्येत नाक्षिपेत्।
उपकारप्रधानः स्यादपकारपरेऽप्यरौ; सम्पद्विपत्स्वेकमना, हेतावीर्ष्येत्, फले न तु।
काले हितं मितं ब्रूयादविसंवादि पेशलम्; पूर्वाऽभिभाषी सुमुखः सुशीलः करुणामृदुः,
नैकः सुखी, न सर्वत्र विश्रब्धो, न च शङ्कितः। न कश्चिदात्मनः शत्रुं, नात्मानं कस्यचिद्रिपुं,
प्रकाशयेन्; नाऽपमानं, न च निःस्नेहतां प्रभोः। जनस्याशयमालक्ष्य यो यथा परितुष्यति,
तं तथैवानुवर्तेत पराराधन-पण्डितः। न पीडयेदिन्द्रियाणि, न चैतान्यतिलालयेत्;
त्रिवर्गशून्यं नारम्भं भजेत्, तं चाऽविरोधयन्। अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम्।
[अतिरूपाद्धृता सीता,ऽतिगर्वाद्रावणो हतः, अतिदानाद्बलिर्बद्धः, अति सर्वत्र वर्जयेत्]
आचार्यः सर्वचेष्टासु लोक एव हि धीमतः, अनुकुर्यात्तमेवाऽतो लौकिकेऽर्थे परीक्षकः।
आर्द्रसन्तानता, त्यागः, काय-वाक्-चेतसां दमः, स्वार्थबुद्धिः परार्थेषु, पर्याप्तमिति सद्व्रतम्।
नक्तं-दिनानि मे यान्ति कथंभूतस्य सम्प्रति, दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः।

---

⊙ म० भा० अनु० अ० १०४। ⁘ विष्णुपु० अं० ३ अ० ११ श्लो० ३—४।

¶ म० भा० वन० अ० १५० श्लो० २८—२९।

§ म० भा० शां० अ० १३२। ⁷ म० भा० शां० अ० २५९ श्लो० ३।

➧ म० भा० शां० अ० २६० श्लो० ५: [अत्राध्याये युधिष्ठिरेण भीष्मं प्रति कृतः सदाचार-प्रामाण्याक्षेपो द्रष्टव्यः]। धर्मे सदाचारस्य प्रामाण्यं सर्वेषु धर्मशास्त्रेषु स्वीकृतं; तन्निरूपणं तु मीमांसा-तन्त्रवार्तिके (अ० १ पा० ३ अधि० ३) विशेषतो द्रष्टव्यम्।

एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिं,
सर्वस्य तपसो मूलमाचारं जगृहुः परम् । १०७-११० ।

**एतच्छास्त्रप्रतिपाद्या विषयाः**

( १ ) जगतश्च समुत्पत्तिं ( २ ) संस्कारविधिमेव च,
व्रतचर्योपचारं च ( ३ ) स्नानस्य च परं विधिं,
दाराधिगमनं चैव, विवाहानां च लक्षणं,
महायज्ञविधानं च, श्राद्धकल्पं च शाश्वतम्,
( ४ ) वृत्तीनां लक्षणं चैव, स्नातकस्य व्रतानि च,
( ५ ) भक्ष्याऽभक्ष्यं च, शौचं च, द्रव्याणां शुद्धिमेव च,
स्त्रीधर्मयोगं ( ६ ) तापस्यं, मोक्षं, संन्यासमेव च,
( ७ ) राज्ञश्च धर्ममखिलं ( ८ ) कार्याणां च विनिर्णयं,
साक्षिप्रश्नविधानं च ( ९ ) धर्मं स्त्रीपुंसयोरपि,
विभागधर्मं, द्यूतं च, कण्टकानां च शोधनं,
वैश्य-शूद्रोपचारं च ( १० ) सङ्कीर्णानां च संभवम् ,
आपद्धर्मं च वर्णानां ( ११ ) प्रायश्चित्तविधिं तथा,
( १२ ) संसारगमनं चैव, त्रिविधं कर्मसंभवं,
निःश्रेयसं, कर्मणां च गुण-दोषपरीक्षणम्;

---

इत्याचारः समासेन, यं प्राप्नोति समाचरन्
आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ×' ।१०७-११०।
शास्त्रस्य कोष्ठकाङ्कानुसारेण प्रत्यध्यायमिह क्रमात् ,
विषया ज्ञेयाः; श्लोकाः स्पष्टार्थकास्त्विमे । १११-११७ ।

"अदत्तस्याऽनुपादानं, दान,मध्ययनं, तपः, अहिंसा, सत्यमक्रोधः, इज्या, धर्मस्य लक्षणम । स एव धर्मः, सोऽधर्मो, देशे काले प्रतिष्ठितः, आदानमनृतं हिंसा; धर्मो ह्यावस्थिकः स्मृतः*" एवमावस्थिको धर्मः, स्वरूपाच्च न निश्चितः, अतो देशादिभेदेन धर्मोऽपि प्रविभिद्यते । "युगेष्वावर्त्तमानेषु धर्मो व्यावर्तते पुनः, धर्मे व्यावर्त्तमाने तु लोको व्यावर्वते पुनः;

---

× अष्टाङ्गहृदये सूत्र० अ० २; आचार-विषये निम्न-निर्दिष्टान्यन्यान्यपि ग्रन्थस्थलानि द्रष्टव्यानि—चरकसं० सूत्र० अ० ५-८ स्वस्थवृत्तं; तत्रैव अ० ८ सूत्राणि १८-३५ सद्वृत्तम् । अष्टाङ्गसंग्रहे सूत्र० अ० ३ । महाभारते—शां० अ० १९१ ( कुं० सं० ); तत्रैव अनु० अ० ९३ श्लो० १७-३७ (पूना-चि० सं० ); तत्रैव अश्व० अ० ४५-४६ । कौर्मे उत्तरवि० अ० १२-१५ । गारुडे अ० ५० । कालिकापुराणे अ० ८८ । ब्रह्मपु० अ० २२१ ( पू० आ० सं० ) । लिङ्गपु० पूर्वार्धे अ० ८९ । मार्क० पु० अ० २९ । नारद० पु० पूर्वार्धे अ० २६ । पाद्मे आदिखं० अ० ५२-५६; तत्रैव पातालखं० अ० ९; सृष्टिखण्डे च अ० ४६ । स्कान्दे ( कौमारिका ४१ ) ३; ( धर्मारण्ये ९ ) ४; १ ( पूर्वार्धे ३८, ४० ) । शिवपु० कैलाससं० अ० ११-१२ । वायुपु० अ० १६ । विष्णुपु० अं० ३ अं० ११-१२ । महाभारतमीमांसा ( हिन्दीसं० ) पृ० ४६३-४६६ इत्यादि ।१०७-११०। * म० भा० शां० अ० ३६ श्लो० ११-१२ ।

देशधर्माञ्जातिधर्मान्कुलधर्मांश्च शाश्वतान्,
पाषण्डगणधर्मांश्च, शास्त्रेऽस्मिन्नुक्तवान्मनुः । १११–११८ ।
यथेदमुक्तवाञ्छास्त्रं पुरा पृष्टो मनुर्मया,
तथेदं यूयमप्यद्य मत्सकाशान्निबोधत । ११९ ।

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां प्रथमोऽध्यायः । १ ।

---

लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः; युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते†"
"मा तात, साहसं कार्षीः, स्वधर्मं परिपालय, स्वधर्मस्थः परं धर्मं बुध्यस्व, गमयस्व च;
न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च, धर्मा-ऽर्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ।
अधर्मो यत्र धर्माख्यो, धर्मश्चाऽधर्मसंज्ञितः, स विज्ञेयो विभागेन; यत्र मुह्यन्त्यबुद्धयः‡"
"वर्णाश्रमाचारवता पूज्यते हरिरव्ययः, तस्माद्वक्ष्यामि विप्रेन्द्रा, मन्वाद्यैश्चोदितं च यत् ।...
एतैर्वर्णैः सर्वधर्माः कार्या वर्णाऽनुरूपतः; स्ववर्णधर्मत्यागेन पाषण्डः प्रोच्यते बुधैः ।
स्वगृह्यचोदितं कर्म द्विजः कुर्वन्कृती भवेत् ; अन्यथा पतितं विद्यात्सर्वधर्मबहिष्कृतम् ।
युगधर्माः परिग्राह्या वर्णैरेतैर्यथोचितं, ग्रामाचारस्तथा ग्राह्यः स्मृतिमार्गाऽविरोधतः ।
कर्मणा मनसा वाचा यत्नाद्धर्मान्समाचरेत् ; अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।...
देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः; अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः ×"
"जाति-श्रेण्यधिवासानां कुलधर्मांश्च सर्वतः वर्जयन्ति च ये धर्मं, तेषां धर्मो न विद्यते ।
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः यद्ब्रूयुः कार्य उत्पन्ने, स धर्मो धर्म-संशये +"
"देशधर्मा, जातिधर्माः, कुलधर्माः सनातनाः, मुनिप्रोक्ताश्च ये धर्माः, प्राचीना नूतनाश्च ये,
ते राष्ट्रगुप्त्यै सन्धार्या ज्ञात्वा यत्नेन सन्नृपैः; धर्मसंस्थापनाद्राजा श्रियं कीर्त्तिं च विन्दति ="
इत्यादि-शास्त्रतो धर्माः पृथक्त्वेन व्यवस्थिताः देश-जाति-कुलादीनामाश्रयाद्विहिताः; अतः
मनुस्तदनु तच्छिष्यो भृगुश्चाऽत्र मनुस्मृतौ सर्वधर्मानुवाचर्षीन्प्रतिदेशाद्यपेक्षितान् ।११८।

साक्षान्मनोरधीतस्य शास्त्रस्यैव यथाश्रुतं
भृगुणाऽप्यनुशिष्टत्वाद्, अक्षुण्णाऽस्य समूलता । ११९ ।
एतदार्षऋणशोधनं, मनोरेव सन्ततिषु सम्प्रवर्त्यते,
आर्षभाष्यमिहमानवार्थिकं पूर्वपित्र्यधनवत्प्रजास्विव ।
ब्रह्मपुत्रमनु-मन्त्रयोगिनि , ज्ञानयज्ञ ऋषिवाङ्मये शुचौ ,
इन्दिरारमण-ऋत्विजोद्धृतेऽध्याय आद्य इह पूर्त्तिमाप्यते ॥

इति श्रीमानवार्षभाष्ये प्रथमोऽध्यायः

ॐ तत्सत्

---

एष साक्षान्मनुप्रोक्तो मूलाऽध्यायो मनुस्मृतेः; उपव्याख्यानमस्यैव द्वितीयाध्यायतो भृगोः;
मानवे धर्मसाराख्ये ग्रन्थे संस्कृतवाङ्मये, श्रद्धेयो भगवान्दासः सारादेतदवोचत;
तदेवाऽग्रेऽत्र सत्तर्कैरार्षवाक्योपपत्तिभिः भृग्वनूक्तिमुपाश्रित्य भाष्यते स्तोकविस्तरात् ।

---

† म० भा० वन० अ० १४९ श्लो० ३६–३७ । ‡ म० भा० वन० अ० १५० श्लो० २५-२७ ।
× बृहन्नारदीयपुराणे अ० २२ । + म० भा० शां० अ० ३६ श्लो० १९–२० । = शुक्रनीतौ अ० ४ प्रक० ३ श्लो० १०–११ ।

## अथ मानवधर्मशास्त्रे द्वितीयोऽध्यायः

**विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः, हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ।१।**

---

स्वरूपं स्वात्मकं तत्त्वं, ज्ञेयं स्वपदयोगतः, तेन धर्मपदार्थोऽपि तद्व्युत्पत्तेः प्रतीयते ।
धारणार्थाद् धृञो धातोः कर्त्तरि प्रत्यये मनि, विश्वं धरति यत्कर्म तद्धर्ममिति सिध्यति ।
इत्थं धर्मस्वरूपं तु सुबोधमिव लक्ष्यते; परन्तु धारणं पुंसां दुराचाराच्च संभवेत्;
दुराचारस्य धर्मत्वे सर्वे स्युस्तदुपासकाः; अन्योन्यस्य दुराचारान्मारणं, न तु धारणम् ।
तस्माद्विशिष्ट आचारो धर्मः स्यादिति निर्णयं कर्त्तुं विद्वद्भिरित्यादि प्राह धर्मस्य लक्षणम् ।
'विद्वांस' इह गृह्यन्ते नरा अध्यात्मवित्तमाः; 'सन्तो' विवक्षिताः शिष्टाः, "श्रुतिप्रत्यक्षहेतवः",
'अद्वेषरागिणो'ऽलूक्षा अनासक्ता अहेतुकाः, कृपया कर्मकर्तारो लोकसंग्रहकारणात् ।
योऽभ्यनुज्ञायते स्वस्मिन्नन्याचारो हृदात्मनः, स हृदयाऽभ्यनुज्ञातशब्दार्थोऽत्र विवक्षितः;
हृदयस्याऽभ्यनुज्ञानं, स्वस्य च प्रियमात्मनः, आत्मतुष्टिश्च, तुल्यार्थे मनोः शास्त्रे प्रयुज्यते ।
'विद्वद्भिः सेवितो'ऽनेन शिष्टाचारः प्रदर्शितः; रागद्वेषनिषेधाच्च तदसद्धेतु-खण्डनम् ।
'हृदयेनाऽभ्यनुज्ञात' इत्यात्मप्रियता स्मृता; एवं सम्पद्यते श्लोकस्याक्षरार्थस्त्वधस्तनः—
विद्वद्भिरिति = वेदान्तविद्भिरध्यात्मवित्तमैः, रागद्वेषादिशून्यैश्च, सद्भिः = शिष्टैरनुष्ठितः,
हृदयेनाऽभ्यनुज्ञातः = स्वस्य स्यादात्मनः प्रियः य आचारः, स धर्म,स्तं विदांकुर्वन्तु विद्यया ।
न शिष्टाचारमात्रस्य धर्मत्वमुच्यते, यतः धर्मव्यतिक्रमो दृष्टः शिष्टानामपि साहसम्;
तस्मादद्वेषरागित्वं प्रोक्तं शिष्टविशेषणम्; शिष्टाचारोऽपि नैव स्याद्धर्मो द्वेषादिमूलकः ।
शिष्टाचारस्य सद्धेतुमूलकत्व-परीष्टये आत्मतुष्टिः प्रमा प्रोक्ता, स्वहृदयाऽभ्यनुज्ञया ।
अन्येषां कर्मणा येन स्वस्मिंस्तुष्टिः प्रजायते, तदेवान्येषु कर्त्तव्यं स्वयं चाऽपीति या प्रमा,
सा हृदयाऽभ्यनुज्ञेति, स्वात्मतुष्टिश्च कथ्यते, सैवात्मौपम्यबुद्धिश्च, यया धर्मः प्रमीयते ।
न सर्वसुगमं शास्त्रं, नैकमत्यं च शास्त्रिणाम्, तस्माद्धर्मे परं मानं नृणां हृदयमिष्यते ।
"शास्त्रं यदि भवेदेकं, श्रेयो व्यक्तं भवेत्तदा; शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम्"*
"धार्मिका-ऽधार्मिकत्वाभ्यां पीडा-ऽनुग्रहकारिणौ प्रसिद्धौ; हि तथा चाह पाराशर्योऽत्र वस्तुनि—
इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये, आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम्" । †
"अष्टादश-पुराणेषु व्यासस्य वचनद्वयम्—धर्मः परोपकारः स्याद्, अधर्मः परपीडनम्" । ‡
"मनः प्रसृजते भावं, बुद्धिरध्यवसायिनी, हृदयं प्रियाप्रिये वेद, त्रिविधा कर्मवेदना" । §
"प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये, आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति" ¶ .
अन्यैराचरितं कर्म यदिच्छेदात्मनः प्रियम्, स्वधर्ममपि तद्विद्यादात्मौपम्येन निश्चितम् ।
"यथैवात्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता; सुखदुःखानि तुल्यानि यथात्मनि तथा परे" ‖ ।
"नाश्रमः कारणं धर्मे, क्रियमाणो भवेद्धि सः; अतो यदात्मनोऽपथ्यं, परेषां न तदाचरेत्" **
भीष्माचार्योऽपि शास्तीदं धर्मराजं युधिष्ठिरं हृदयेनाऽभ्यनुज्ञातं मनूक्तं धर्मलक्षणम्—
"श्रूयतां धर्मसर्वस्वं, श्रुत्वा चाप्यवधार्यताम्, आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः, न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ।
जीवितुं यः स्वयं येच्छेत्कथं सोऽन्यं प्रघातयेत्? यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ।

---

* म० भा० शां० २८७,१० । † वाक्यपदीये ब्रह्मकां० श्लो० ४०; श्लोकवार्तिके च औत्पत्तिक-( मी० द० १, १, ५ )-सूत्रे कारिका २-३ धृतं वेदव्यासवचनम् । ‡ बहुत्र प्रयुक्तम् । § म० भा० शां० २५४-१ (कुं० सं०; पू० चि० संस्करणे तु २४८,१) ¶ म० भा० अनु० ११३-९ । ‖ इति दक्षः । ** या० स्मृ ३-६५ ।

सर्वं प्रियाऽभ्युपगतं पुण्यमाहुर्मनीषिणः ; पश्य त्वं लक्षणोद्देशं धर्मा-ऽधर्मं युधिष्ठिर।
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा, सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम्" ४
"मनसः प्रतिकूलानि प्रेत्य चेह न चेच्छसि ; भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः"❀
"न तत्परस्य सन्दध्यात्प्रतिकूलं यदात्मनः ; एष सांग्राहिको धर्मः, कामादन्यः प्रवर्तते"।†
"यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः, तत्प्रयत्नेन कुर्वीत; विपरीतं तु वर्जयेत्"‡
तस्माद्द्वेषरागादिमूलकं हृदयङ्गमं शिष्टाचरणमेवात्र धर्मस्वरूपमिष्यते।
न सतां साहसं, नापि कामाद्धर्मव्यतिक्रमः, न वा तत्कर्म धर्मः स्यादात्मने यन्न रोचते।
सुचरितान्युपास्यानि, नेतराणि त्वया सदा, अस्माकमिति सुस्फुटं मन्त्रद्रष्ट्रा महर्षिणा ÷।
"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ; तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको नरः।"*
कर्त्तव्यविचिकित्सायामथवा धर्मसंशये, अनाम्नाते च धर्मेऽस्ति शिष्टाचार-प्रमाणता४।
शिष्टाचारेषु सन्देहे, विरोधे वा मिथः सति, आत्मतुष्टिः प्रमाणं स्याद् धर्माधर्मविनिर्णये।

"तर्कोऽप्रतिष्ठः, श्रुतयो विभिन्ना, नैको मुनिर्यस्य मतं न भिन्नम् ;
धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः" ❀
"जने" महत्त्वं न बहुत्वमात्रं, पूज्यत्वमात्रं न विशेषणं वा,
तत्राद्विधत्ते महतां जनानामेकं, समूहं च, महाजनाख्या।
न वाच्यमेकेन हि संशयेषु बहुश्रुतेनापि जनेन धर्मम् ; ×
अतो जनानां विदुषां समूहे 'महाजनाख्ये' परिषत्त्वमिष्टम्।
एकोऽपि वाऽध्यात्मविदाश्रयेत, ब्रूयाच्च यं, सोऽपि परोऽस्ति धर्मः +।

४ म० भा० शां० अ० २६५ कुं० सं० ( पू० चि० सं० तु० २५९ )। ❀ म० भा० शां० अ० ३१४ श्लो० ५। ( कुं० सं० ) † म० भा० अनु० १७५-८ (कुं० सं०)। ‡ मनु० ४-१६१।

÷ "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि ;
यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि" (तैत्ति० उ० अनु ११)

* आप०, गौ० ध० सू०।

"दृष्टो धर्मव्यतिक्रमः, साहसं च पूर्वेषाम् ; तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ;
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः" ( आप० धर्मसू० प्र० २ कं० १३ सू० ७-९ )
"दृष्टो धर्मव्यतिक्रमः, साहसं च महताम्। अवर-दौर्बल्यात्"। ( गौ० ध० सू० ३-४ )

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ; तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा।
नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ; विनश्यत्याचरन्मौढ्याद्यथाऽरुद्रोऽब्धिजं विषम्।
ईश्वराणां वचः सत्यं, तथैवाचरितं क्वचित् ; तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत्"
( भा० स्कं० १० अ० ३३ श्लो० ३०-३२ )

४ "अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः ( अध्यात्मविदः ) संमर्शिनः, युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। अथाऽनाभ्याख्यातेषु ( अथाभ्याख्यातेषु ) ये तत्र" इत्यादि पूर्ववत्। ( तै उ० अनु० ११ )

❀ म० भा० वन० अ० ३१४ श्लो० ११९ ( कुं० सं० )। † त० वा० १-३-३।

× "बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः,
तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये" ( बौधा० स्मृ० अ० १ सू० १३ )

+ "चत्वारो वेदधर्मज्ञाः पर्षत्, त्रैविद्यमेव वा,
सा ब्रूते यं, स धर्मः स्याद्, एको वाऽध्यात्मवित्तमः" ( या० स्मृ० अ० १ श्लो० ९ )

विद्यातिरेकेण महत्त्वयोगादेकस्य पुंसोऽपि महाजनत्वम् ।
बहुत्वरूपं च महत्त्वमिष्टं वैदुष्ययुक्तं, न तु केवलं सत्;
परःसहस्रेष्वपि सङ्गतेषु पर्षत्त्वमज्ञेषु न विद्यते, यत्*।
महाजनानामपि+ नैकमत्यं यदा च, कर्मापि विभिन्नरूपम्,
तदा तु सन्देहपदे स्वधर्मे प्रमाणमन्यात्मविदात्मतुष्टिः।
"एवं च विद्वद्वचनाद्विनिर्गतं, प्रसिद्धरूपं कविभिर्निरूपितं,
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" (तन्त्रवार्त्तिके)।

तस्माद् हृदाऽभ्यनुज्ञाते रागद्वेषादिवर्जिते, सदाचारेऽस्ति धर्मत्वम् इत्येव मानवं मतम्।
यदुपक्रम्यते तत्त्वम्, उपसंह्रियतेऽपि तत्, इत्येव शास्त्रकाराणामर्थनिर्णयपद्धतिः।
अत्रापि यदुपक्रान्तं धर्मस्वरूपमादितः शिष्टानुष्ठान-हृद्वेद्यम्, अन्ते तदुपसंहृतम्।
"अनाम्नातेषु धर्मेषु कथं स्याद्? इति चेद्भवेत्, यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः"।
शिष्टाचारोपदेशाभ्यामुक्त्वा धर्मविनिर्णयम्, आत्मतुष्टिं प्रमामाह शिष्टाचारविशुद्धये—
"सर्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः, सर्वमात्मनि संपश्यन् नाऽधर्मे कुरुते मनः"।
"आत्मैव देवताः सर्वाः, सर्वमात्मन्यवस्थितम्, आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्"।
शिष्टाचरणमप्यात्मतुष्ट्याध्यात्मदृशा स्वयं सदसद्वेति वीक्ष्यैव ग्राह्यं धर्मस्वरूपतः।
इत्थं हि दृश्यते धर्मस्वरूपविषये मनोः उपक्रमोपसंहारशास्त्रयोरेकवाक्यता।
तस्माद्धर्मस्वरूपं स्यात्तदेवाचरणं सतां, यदध्यात्मविदादिष्टं स्वीकृतं च हृदात्मनः।
इत्येव मानवं धर्मस्वरूपमपरे जगुः आपस्तम्बादयो धर्मशास्त्रकाराः श्रुतर्षयः।
'आवां स्व' इति घोषन्तौ धर्माधर्मौ तु नाऽटतः, नाऽपि देवादयः किञ्चित्तयो रूपं प्रचक्षते।
क्रियमाणं यमाचारं प्रशंसन्ति महाजनाः, स धर्मो; यं विगर्हन्ति, स चाऽधर्मः प्रकीर्त्तितः†।
"न च देवा न पितरो मुनयो न च मानवाः, अयं धर्मो, ह्ययं नेति ब्रुवते भिन्नदर्शनाः।
धर्माऽधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ, कुशलाकुशलं कर्म धर्माऽधर्माविति स्मृतौ।
धारणा धृतिरित्यर्थाद्धातोर्धर्मः प्रकीर्तितः, अधारणेऽमहत्त्वे च अधर्म इति चोच्यते।

---

* "एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः, स विज्ञेयः परो धर्मो; नाज्ञानामुदितोऽयुतैः।
अव्रतानाममन्त्राणां जातिमात्रोपजीविनां सहस्रशः समवेतानां परिषत्त्वं न विद्यते" (मनौ)
"दश वा वेद-शास्त्रज्ञास्त्रयो वा धर्मपाठकाः, यद्ब्रूयुः कार्य उत्पन्ने, स धर्मो धर्मसंशये" (म. भा.)।

+ महाजनशब्दो जनतावचनोऽपि श्रूयते, यथा—

"एकः पापानि कुरुते, फलं भुङ्क्ते महाजनः"
"देशाचारान्समयाञ्जातिधर्मान्बुभुत्सते यः स परावरज्ञः;
स यत्र तत्राऽभिगतः सदैव महाजनस्याधिपत्यं करोति"।
"महाजनः स्मेरमुखो भविष्यति" इत्यादिवाक्येषु।

† न धर्मा-ऽधर्मौ चरत 'आवां स्व' इति, न देवगन्धर्वा न पितरः इत्याचक्षते—'अयं धर्मोऽयमधर्म' इति। यं त्वार्याः क्रिया माणं प्रशंसन्ति स धर्मो; यं गर्हन्ते सोऽधर्मः। सर्वजनपदेषु एकान्तसमाहित-मार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत"।
इत्यापस्तम्बधर्मसूत्रे (प्र० १, प० ७, कं० २०)

"यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः,
स धर्मो; यं विगर्हन्ति, तमधर्मं प्रचक्षते" इति विश्वामित्रवचनं वीरमि० धृतम्।

अत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते, अनिष्टप्रापकोऽधर्मो नाऽऽचार्यैरुपदिश्यते" ।※
यस्मादभ्युदयः पुंसां निःश्रेयसं च सिध्यति, स धर्म इति काणादं निर्दोषं धर्मलक्षणम् + ।
अत्राऽभ्युदयशब्दार्थस्त्रिवर्गोऽस्ति समीहितः, निःश्रेयसपदार्थश्च मोक्षोऽत्यन्तसुखात्मकः ।
तत्सिद्धिः कर्मयोगात्मज्ञानोपासनतः स्मृता, तस्मात्तेष्वेव धर्मत्वं युक्तं वैशेषिके मते ।
चोदनालक्षणस्त्वर्थो धर्म इत्याह जैमिनिः† अत्रत्यं शावरं भाष्यं वैशेषिकमतानुगम् ।
क्रिया-प्रवर्त्तकं वाक्यं चोदनेति निगद्यते; आचार्य-चोदितः कर्म करोमीति हि दृश्यते;
तया यो लक्ष्यते सोऽर्थो नरं निःश्रेयसेन वै संयुनक्तीति, धर्मत्वं तस्याह शवरो मुनिः‡
"धर्म इत्युपसंहार्यं यच्छ्रेयस्करभाषणं, तद्धर्मपदवाच्यार्थ-निरूपणविवक्षया;
श्रेयो हि पुरुषप्रीतिः, सा द्रव्यगुणकर्मभिः चोदनालक्षणैः साध्या, तस्मात्तेष्वेव धर्मता"§
चोदनालक्षणोऽप्यर्थः पुंसां श्रेयस्करस्तु यः सैव धर्मो, न चाऽन्यः स्याद्, एवं शवर-निर्णयः ।
तद्, वेदविहितोऽप्यर्थो यो न श्रेयस्करो नृणां, न स धर्म, इति स्पष्टं दृश्यते शावरं मतम् ।
न स्वरूपेण धर्मत्वमिष्टं कस्यापि कर्मणः, किन्तु, श्रेयस्करत्वेन; प्रवृत्तिस्तत्र नान्यथा ।
किं वाऽनिष्टफले लोकप्रवृत्तिर्निष्फलेऽपि च, स्यात्, सिता-विषसंपृक्तभोजने, जलताड़ने ।
ज्ञात्वेष्टसाधनं कर्म श्रेयस्कामोऽनुतिष्ठति, अतोऽस्ति कर्मणां श्रेयःसाधनत्वेन धर्मता ।
नाश्रेयःसाधनं कर्म, धर्मः शास्त्रोक्तमात्रतः; अत्रैवार्थेऽनुकूलं च महाभारतकृद्वचः--
"लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम्; अहिंसाऽसाधुहिंसेति श्रेयान् धर्मपरिग्रहः ।
नात्यन्तं गुणवत्किञ्चिन्न चाप्यत्यन्तनिर्गुणम्, उभयं सर्वकार्येषु दृश्यते साध्वसाधु च"※
"प्रभवार्थाय भूतानां धर्मप्रवचनं कृतं, यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ।
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः, यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ।
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतं, यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ।"†
"लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः, उभयत्र सुखोदर्क इह चैव परत्र च ।"‡
"अकारणो हि नैवास्ति धर्मः सूक्ष्मोऽपि जाजले, भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ।"४
"कारणाद्धर्ममन्विच्छेन्न लोकं विरसं चरेत् ।" ( म० भा० शां० अ० २६२ कुं० सं० )
"बहून् यो बाधते धर्मो, न स धर्मः, कुवर्त्म तत्; अविरोधी तु यो धर्मः, स धर्मः सत्यविक्रम"*
इत्यादि पञ्चमे वेदे भगवान्बादरायणः, विधत्ते कर्मणां श्रेयःफलत्वेनैव धर्मताम् ।
एतेन निष्फलो लोके, विपरीतफलोऽथवा, शास्त्रार्थमात्रतो न स्याद्धर्मो वैयासिके नये ।
तस्मादश्रेयसः कर्म शास्त्रदृष्टमपि त्यजेत्, इति व्यासमतेनात्र मतं मिलति मानवम् ।
"परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ, धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ।"ঙ

---

※. वा० पु० अ० ५९ श्लो० २६-२९; किञ्चित्पाठभेदेन मात्स्येऽपि अ० १४५ ।

+ "यतोऽभ्युदय-निःश्रेयससिद्धिः, स धर्मः" ( वै० द० १-१-२ ) ।

†. ( मी० द० १-१-२ );

‡ "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः; आचार्यचोदितः करोमीति हि दृश्यते; लक्ष्यते येन तल्लक्षणम्; तया ( चोदनया ) यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे" इति; "तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया ? उच्यते । य एव श्रेयस्करः स एव धर्मशब्देनोच्यते" इति च शाबरभाष्यम् ( १-१-२ ) । §. इति तत्र कुमारिलः ।

※. म० भा० शां० अ० १५ श्लो० ४९-५० (कुं० सं०) । †. म० भा० शां० अ० १०९ (कुं० सं०) ।

‡. म० भा० शां० अ० २६५ (कुं० सं०) । ४. म० भा० शां० अ० २६० श्लो० ३६ (कुं० सं०) ।

*. म० भा० वन० अ० १३३ श्लो० ११ (कुं० सं०) । ঙ. मनु० ४-१७६

"कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्, असुखं (अस्वर्ग्यं) लोकविद्विष्टं धर्ममप्याचरेन्न तु।" ×
यत्र लोकस्य विक्रोशो दृष्टाऽनिष्ट-निमित्तकः, स शास्त्रविहितोऽप्यर्थों न धर्मः पुरुषार्थिनाम्।
शास्त्रश्रद्धाजडत्वेन, मूढग्राहेण वा नृणां, यदश्रेयस्करं कर्म, तन्न धर्मत्वमर्हति।
जन्मना वर्णमर्यादा, जात्याऽस्पृश्यत्वकल्पना, जातावेव विवाहादिः, कन्यादानं च प्रागृतोः।
ईदृशा विषयाः सर्वे शास्त्राभासेषु वर्णिताः, सद्धर्मत्वेन गृह्यन्ते शास्त्रनामविमोहितैः।
वस्तुतस्तु न ते धर्मा, अश्रेयःपरिणामतः, अधारणादधर्मत्वं तेषां साक्षात्तु दृश्यते।
असच्छास्त्राणि सन्तीह हेतु-मूलानि भूरिशः, सच्छास्त्रेष्वपि वाक्यानि प्रक्षिप्तानि बहूनि च।
कर्त्तॄणां मतभेदेन शास्त्रसंख्या च भूयसी; तत्रापि देशकालादिधर्माः प्रोक्ताः पृथग्विधाः।
रूपकेण बहुत्रास्ति विषयाणां च वर्णनं, यथा समाज-मुख्यत्वाद् ब्राह्मणा मुखजाः स्मृताः।
तत्सर्वमनुसन्धाय सम्यगध्यात्मचक्षुषा, धर्मतत्त्वं विजानन्ति केचिदेव महाजनाः।
तद्रहस्यमविज्ञाय शास्त्रनाम रटन्ति ये, संस्कृतश्लोकमात्रस्य भक्त्याऽनर्थं भजन्ति ते।
"वेदाहं तात, शास्त्राणि अपराणि पराणि च, उभयं वेदवचनं कुरु कर्म, त्यजेति च।
अमूलानि च शास्त्राणि, हेतुभिश्चित्रितानि च, निश्चयश्चैव यो मन्त्रे वेदाहं तं यथाविधि;
त्वं तु केवल-शास्त्रज्ञो वीरव्रतसमन्वितः, शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथञ्चन;
युद्धशास्त्रविदेव त्वं, न वृद्धाः सेवितास्त्वया, समास-विस्तरविदां न तेषां वेत्सि निश्चयम्;
अनुस्मृत्य तु शास्त्राणि कवयः समवस्थिताः अपीह स्यादपीह स्यात्सारासारदिदृक्षया;
वेदवादानतिक्रम्य,शास्त्राण्यारण्यकानि च, विपाट्य कदलीस्तंभं सारं ददृशिरे न ते।
तपसा महदाप्नोति, बुद्ध्या वै विन्दते महत्, त्यागेन महदाप्नोति, सदा कौन्तेय, धर्मवित्" ÷
इत्येवमर्जुनं प्राज्ञं वासुदेवसखं युधि श्रुतशास्त्रार्थमप्याह धर्मपुत्रो युधिष्ठिरः।
यदीश्वरविभूतिः सा शास्त्रं वेत्ति न तत्त्वतः, कथं तज्जनता विद्यात्प्रायःपांशुलपादुका?
तस्मात्त्यागेन, बुद्ध्या च, तपसा, वृद्धसेवया, धर्मतत्त्वं विजानीयान्न, शास्त्रार्थदुराग्रहात्।
"तद्विद्धि प्रणिपातेन, परिप्रश्नेन, सेवया, उपदेक्ष्यन्ति ते ज्ञानं, ज्ञानिनस्तत्त्वदर्शिनः" *
इत्थं महर्षिभिः प्रोक्तं धर्मत्वं ज्ञान-कर्मणोः; तत्र ज्ञानस्य मुख्यत्वं याज्ञवल्क्येन भाषितम्—
"इज्याचारदमाऽहिंसादानस्वाध्यायकर्मणाम् अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्"। †
श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप, सर्वं कर्माखिलं पार्थ, ज्ञाने परिसमाप्यते;
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते, तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" ‡
इति ज्ञानस्तुतिं प्राह कृष्णो योगेश्वरः स्वयम्। अत्रापि वक्ष्यति ज्ञानप्राधान्यं भगवान्मनुः—
"वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः अहिंसा गुरुसेवा च निःश्रेयसकरं परं,
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतं; तद्ध्यग्र्यं सर्वविद्यानां, प्राप्यते ह्यमृतं ततः" §
"वरिष्ठं सर्वधर्मेभ्यो ज्ञानं मोक्षैककारणं; ज्ञानान्नास्ति परो धर्म इति वेदान्तनिर्णयः" ‖
तस्माच्छ्रेयस्करं कर्म, ज्ञानं च, धर्मसंज्ञकम्; योगोपासनयोरन्तर्भावस्तत्रैव चेष्यते।
"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह, बुद्धिश्च न विचेष्टते, तामाहुः परमां गतिम्;
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्, अप्रमत्तस्तदा भवति; योगो हि प्रभवाप्ययौ" ¶
"योगं संयोगमित्याहुर्जीवात्मपरमात्मनोः" Y। पुंप्रकृत्योर्वियोगो वा, "योगः कर्मसु कौशलम्" <
चित्तवृत्तिनिरोधो वा, योगः समाधिरेव वा, + सर्वथाऽन्तर्भवेत्कर्म-ज्ञानयोस्तु यथायथम्।
लोकाराधनसद्बुद्ध्या सर्वात्मार्पणतः कृतं कर्मैवोपासनं विश्वरूपस्य परमात्मनः।

× या० स्मृ० १–१५६ बृहन्नारदीयपुराणेऽपि। ÷ म० भा० शां० अ० १९ (कुं० सं०)। * भ० गी० ४–३४। † या० स्मृ० १–८। ‡ भ० गी० अ० ४। § मनु० अ० १२ ‖. सूतसंहितायां यज्ञवैभवखण्डे अ० २० श्लो० २७। ¶ कठ० २–६–११। Y योगवाचस्पत्ये धृतम्। < गीता। + यो०द०।

लोकात्मकः पुमांश्चाऽपि विराड्रूपोऽस्ति कल्पितः, सहस्रशीर्षकत्वादि, पुंस्त्वं च, तत्र रूपितम्।
सहस्रशीर्षको लोकः सहस्राक्षः सहस्रपात् सर्वात्मा, रूपणादुक्तो विश्वरूपो विराडयम्।
अतो निष्कामकर्मैव लोकसंग्रसमूलकम् ईश्वरोपासनं ज्ञेयं, विश्वरूपे समर्पणात्;
तस्माद्विद्वद्भिरद्वेषरागिभिः सद्भिरादृतं, हृदयेनाऽभ्यनुज्ञातं ज्ञानं, कर्म च, यद्भवेत्
निःश्रेयसकरं पुंसां, किञ्चाऽभ्युदयसाधनम्, तदेव मानवो धर्मो, नाऽन्यथेति मतं स्थितम्।
वस्तुतः श्रेय एवास्ति धर्मः पुमर्थलक्षणम्; तत्साधने तु कर्मादौ गौणं धर्मत्वमिष्यते।
"धर्मः श्रेयः समुद्दिष्टं, श्रेयोऽभ्युदयलक्षणम्"§ इति व्यासेन सुष्ठूक्तं तात्त्विकं धर्मलक्षणम्।
अत्राऽभ्युदयशब्देन निःश्रेयसं च लक्ष्यते, तद्द्वयं च चतुर्वर्गरूपमेवेति दर्शितम्।
धारणाद्धर्म इत्युक्तं यौगिकं धर्मलक्षणम्, धारणं च सुखेनाव-स्थापनं नाम गीयते।
प्रत्यक्षमर्थकामौ नृनवस्थापयतः सुखम्, मोक्षस्तु परमानन्दस्वरूपावस्थितिः स्वतः।
अतोऽर्थकाममोक्षाणां धर्मत्वमुचितं धृतेः, प्रथमः पुरुषार्थस्तु साक्षाद्धर्मोऽभिधीयते;
अर्थादिसाधनत्वेन महोपकारकत्वतः अत्युपादेयरूपत्वाद्धर्मस्य पुरुषार्थता।
साध्यं पुमर्थरूपेण, कर्त्तव्यत्वविवक्षया साधनं चेति, धर्मस्य स्वरूपद्वयमिष्यते।
अतः पुमर्थरूपस्य श्रेयसो मुख्यधर्मता; एवमेव च विज्ञेयं मानवं धर्मलक्षणम्।
विद्वद्भिः सेवितं, स्वस्य प्रियं चात्मन इष्यते श्रेय एवेति, तस्यैव मुख्यं धर्मत्वमुच्यते;
अद्वेषरागिभिः सद्भिर्विद्वद्भिरेव सेवितः त्रिवर्गोऽर्हति धर्मत्वं, स्वस्य चाऽन्यस्य धारणात्।
सतामर्थः परार्थत्वाद्, धर्मः सर्वस्य धारणात्, कामो निष्कामहेतुत्वाद्, धर्म एवास्ति तत्त्वतः।
मोक्षोऽपि सच्चिदानन्दरूपेणात्मविधारणात् धर्म एवेति साधूनां पुरुषार्थस्य धर्मता।
यं त्रिवर्गमविद्वांसो दुर्जना द्वेषरागिणः सेवन्ते, तदधर्मत्वं प्रत्यक्षमिह दृश्यते।
तैरर्थः सेवितोऽनर्थं स्वस्य चान्यस्य सूयते, धर्मश्चाऽधारणं, कामः कुरुते परपीडनम्।
अविद्वत्त्वादसाधुत्वाद् द्वेषरागादिकारणात्, न तेषां जायते मोक्षः, सुतरां तदधर्मता।
"ऋते ज्ञानान्न मुक्तिः स्यात्" तस्मादविदुषां न सा, एवं सिद्धा त्वसाधूनां पुरुषार्थेष्वधर्मता;
तस्मादध्यात्मवित्त्वादियुक्तैः सद्भिर्निषेवितः पुमर्थो मुख्यतो धर्मो, गौणस्तत्साधनात्मकः।
एष एव मनूक्तार्थः सम्यक् सिध्यति जैमिनेः धर्मलक्षणसूत्रस्य मूलशब्दार्थदर्शनात्।
"चोदनालक्षणो ह्यर्थो धर्म" इत्यत्र तन्त्रतः चोदनेत्याह शिष्टाज्ञामात्मतुष्टिं च मानवीम्।
चोदनाऽध्यात्मविद्वाक्यं कर्मप्रवर्त्तकं; विधिः, शिष्टाज्ञा, शासनं, शास्त्रम्, उपदेशश्च कथ्यते;
अन्यार्थे चोदना बुद्धिः, प्रेरणा-ऽऽत्मप्रवर्त्तना हृदयस्याऽभ्यनुज्ञातमतुष्टिश्चेति निगद्यते।
"चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"*। "प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः,
सा चोदनेति सामन्यं लक्षणं हृदये स्थितम्"†। "प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते,
स चोदनोच्यते, यद्वा प्रवर्त्तनफला मतिः"‡। इत्थं शब्दे च बुद्धौ च चोदनेति पदं स्मृतम्।
अर्थशब्देन सूत्रेऽस्ति जैमिनीये विवक्षितं, धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयम्।
इत्थमाप्तोपदेशेन, स्वात्मप्रेरणया च यः, पुमर्थो लक्ष्यते सोऽयं चोदनालक्षणः स्मृतः।
एवं चोदनयाऽध्यात्मविदामद्वेषरागिणाम्, आत्मबुद्ध्या च लक्ष्येत, योऽर्थ,स्तस्यैव धर्मता।
तस्मादस्ति चतुर्वर्गो मुख्यो धर्मस्तु धारणात्; तत्साधनेऽपि धर्मत्वं गौणमुक्तं महर्षिभिः।
एवं च धर्ममीमांसाशास्त्रकारस्य जैमिनेः, वेदव्यासस्य चाऽपीष्टं मानवं धर्मलक्षणम्।

---

§ भविष्य-पु० ब्राह्मखं०-अ० १८१ श्लो० ७।

* श्लो० वा० ११ सू० ५। † श्लो० वा० २११ सू० २। ‡ न्यायर० धृतं पूर्वाचार्यवचनम्, सू० २ वा० १२।

एतद्धि स्पष्टतो व्यासः प्रोक्तवान्भारते स्वयं अन्यत्राऽपि पुराणादौ; तद्दिङ्मात्रं प्रदर्श्यते—
"आचारमेव मन्यन्ते गरीयोधर्मलक्षणम्; अपरे नैवमिच्छन्ति, ये शङ्ख-लिखितप्रियाः।
मात्सर्याद् अथवा लोभान्न ब्रूयुर्वाक्यमीदृशम्; आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य पातनम्।...
सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः, हृदयेनाऽभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति।
यश्चतुर्गुण-सम्पन्नं धर्मं ब्रूयात्, स धर्मवित्, अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम्।
यथा मृगस्य विद्धस्य पदमेकपदं नयेत्, लक्षेद्रुधिरलेपेन, तथा धर्मपदं नयेत्।
यथा सद्भिर्विनीतेन, यथा गन्तव्यमित्युत, राजर्षीणां वृत्तमेतद् एवं गच्छ युधिष्ठिर≍"
स्वरूपं लक्षणं चैवं धर्मस्य बहुधा स्मृतं वेद-शास्त्र-पुराणादौ; किञ्चिद्दिग्दर्श्यते ततः।
"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्"❀
"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" (भागवते)।
"तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः; अधर्मांशैस्त्रयो भग्नाः स्मय-सङ्ग-मदैस्तव†"
"चातुर्होत्रं कर्मतन्त्रमुपवेद-नयैः सह धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः‡"
"विद्या दानं तपः सत्यं धर्मस्येति पदानि च, आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः §"
"अहिंसा-लक्षणो धर्मः, हिंसा चाऽधर्मलक्षणा" (इत्यादि ननाधर्मलक्षणादिकं महाभारते द्रष्टव्यम्)
"धर्मः स यो नयत्येव मानवं शिव-सन्निधिम्; अधर्मो यो नयत्येव दूरं दूरतरं शिवात् ¶"
(१) "अन्तःकरणवृत्तौ वा, (२) वासनायां च चेतसः,

---

≍ म० भा० शां० अ० १३२ श्लो० १५—२२।

"सर्वतः = सर्वात्मना, सत्कृतः = श्रौतो धर्म आदृतः; सद्भिः = मन्वादिभिः सत्कृतः स्मार्त्तधर्मः; भूतिप्रवरकारणैः = भूतिप्रवराः = ईश्वराः, कारणानि = पारम्पर्यागतानि कुल-देश-ग्रामादि-परिगृहीतानि, तैरपि निमित्तैः सत्कृतः, मन्वादिभिरनुक्तोऽपि शिष्टैरादृत इत्यर्थः। हेतुत्रयाभावेऽपि स्वयं च यो धर्मत्वेन निश्चितः; एवं चतुर्भिः कारणैर्धर्मः सिध्यति...। चत्वारो गुणाः = आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्चेति, य एषामविरुद्धः चतुर्गुण-सम्पन्नः। पदं = भूमौ निहितं पदं स्थानं, लक्षेत् = लक्षयेत्, नयेत् = अन्यान्प्रापयेत्, युक्त्येति शेषः" इति नैलकण्ठीयम्।

❀ ऋक्संहिता, १, १६४, ५०; तथा तत्रैव १०, ९०, १६; चतुर्ष्वपि वेदेषु पुरुषसूक्ते मन्त्रोऽयं दृश्यते। एतद्विषये—

"अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते;...
तस्मात्तेष्वेव धर्मत्वं, 'धर्माणीति' च दर्शनात्; लिङ्ग-संख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम्"

इति मीमांसा-श्लोकवार्तिके (सू० २ श्लो० १९२–९४) कुमारिलभट्टविचारो द्रष्टव्यः।

† भा० १, १७, २४। ‡ भा० ३, १२, ३५।

§. भा० ३, १२, ४१ [ अत्र "तपः, शौचं, दया, सत्यम्" इति पाठान्तरम्। ¶. पूर्णज्योतिः १, २, १३।

(१) यागादि-कर्मानुष्ठानजन्योऽन्तःकरणस्य वृत्तिविशेषो धर्मः, ब्रह्मवधादिजन्यश्चाऽधर्म इति साङ्ख्यमतम्।

(२) क्षणिकविज्ञानसन्तानघटकस्य ज्ञानस्य पूर्वविज्ञानान्तरजन्ये शुभा-ऽशुभे वासने एव धर्मा-ऽधर्मौ इति बौद्धमतम्।

( ३ ) पुद्गलेषु च पुण्येषु, ( ४ ) नृ-गुणे, ( ५ ) अपूर्व-जन्मनि +"

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियविग्रहः, धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।
दशकं शाश्वतं धर्मं वर्णयन्ति विपश्चितः; देश-कालादिनियता आचारा न सनातनाः।
अनर्थहेतूनाचारान्वर्जयित्वा स्वके स्वके, अशाश्वतेऽपि धर्मे तु प्रवृत्तिर्नैव दुष्यति।
धर्मा-ऽधर्मावनुस्यूतौ गुणौ सर्वेषु कर्मसु; न पृथक्कोऽपि धर्मोऽस्ति, नाऽधर्मो वा तथा पृथक्;
परस्वहरणैर्दैवपूजनं धर्मविप्लवः, विण्मूत्रादिविसर्गोऽपि धर्मः पीडादिवर्जने꙳"

"सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवं, ज्ञानं शमो दया ध्यानमेवं धर्मः सनातनः†"

"देशे काले उपायेन द्रव्यं श्रद्धासमन्वितं पात्रे प्रदीयते यत्, तत्सकलं धर्मलक्षणम्‡"

"धर्मे पृष्टे मनुर्ब्रह्म जगतः कारणं ब्रुवन्, आत्मज्ञानं परं धर्मं वित्तेति व्यक्तमुक्तवान्;
प्राधान्यात्प्रथमाध्याये साधु तस्यैव कीर्त्तनम्, धर्मोऽन्यस्तु तदङ्गत्वाद् युक्तो वक्तुमनन्तरम्ⅴ"

"वेदविद्भिर्ज्ञात इति प्रयुञ्जानो विशेषणं, वेदादेव परिज्ञातो धर्म इत्युक्तवान्मनुः;
हृदयेनाभिमुख्येन ज्ञात इत्यपि निर्दिशन्, श्रेयःसाधनमित्याह, तत्र ह्यभिमुखं मनः,
वेदप्रमाणकः, श्रेयःसाधनं धर्म, इत्यतः, मनूक्तमेव मुनयः प्रणिन्युर्धर्मलक्षणम्*"

"अथातो धर्मं व्याख्यास्यामः; श्रुतिप्रमाणको धर्मः; श्रुतिश्च द्विविधा, वैदिकी तान्त्रिकी च" [ मन्वर्थमु० २,१ धृतं हारीतवचनम् ]

"अलौकिकत्वाद् अदृष्टार्थत्वाद् अप्रवृत्तानां यज्ञादीनां शास्त्रात्प्रवर्त्तनं, लौकिकत्वाद् दृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च मांसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः; तं श्रुतेः, धर्मज्ञसमवायाच्च प्रतिपद्येत" [ कामसूत्रे अ० २ ]

"सत्येन विधृतं सर्वमसत्यं विप्लवावहं, धारणात्सत्यमेवोक्तं धर्मशब्देन कोविदैः।
'आत्मनः प्रतिकूलानि न परेषां समाचरेत्' इति प्राचीनवचनं सुव्यक्तं सत्यमूलकम्;
अनुकूलं वदंश्चौर्यं कर्त्तव्यं च विमूढधीः ताडयंश्चोरमायान्तमसत्यं वदति स्फुटम्×।
विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः, हृदयेनाभ्यनुज्ञात एष धर्मः सनातनः⁕"

---

( ३ ) शुभा-ऽशुभकर्मवासनावासिताः कायारम्भनिमित्तभूताः पुद्गलाख्याः परमाणव एव धर्मा-ऽधर्मौ इति जैनमतम्।

( ४ ) विहितकर्मजन्य आत्मनो विशेषगुणो धर्मः, निषिद्धकर्मजन्यश्च अधर्म इति नैयायिक-सिद्धान्तः; तदुक्तम्—

"विहित-क्रियया साध्यो धर्मः पुंसो गुणो मतः, प्रतिषेध्यक्रियासाध्यः पुंगुणोऽधर्म उच्यते" इति।

( ५ ) शुभमपूर्वं धर्मः, अशुभं च अधर्म इति मीमांसकैकदेशिनः।

+ मी० श्लो० वा० २, १९५। ꙳ शतश्लोकीये धर्मशास्त्रे १–१०। † महाभारते।

‡ या० स्मृ० १,६। ⅴ मन्वर्थमु० १,५। * मन्वर्थमु० २,१।

×. "योऽन्यस्य स्यादुपपतिः, स कं किं वक्तुमर्हति?
यदन्यस्य ततः कुर्यान्न मृष्येदिति मे मतिः॥"

[ म० भा० शां० अ० २५९ श्लो० २१ ] "य इति; 'अन्यस्य' भार्यायामिति शेषः, 'उपपतिः' जारः, (स्यात्, सः) कं (अन्यपुरुषं) किं वक्तुमर्हति? (न किमपीत्यर्थः) स्वस्यैव दुष्टत्वात्। 'यत्' यदि, 'अन्यस्य' अन्यं (पुरुषं), 'ततः' तस्मिन्नेव औपपत्ये विषये (स्वभार्यायां) 'कुर्याद्' दृग्गोचरीकुर्यात्, तदा न मृष्येदिति योजना। 'अन्यस्य' इति द्वितीयार्थे षष्ठी" इति तत्रत्यं नैलकण्ठीयम्।

⁕ शतश्लोकीयधर्मशास्त्रे।

"धर्मः क्रियात्मा निर्दिष्टः श्रेयोऽभ्युदयलक्षणः†, स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः।
अस्य सम्यगनुष्ठानात्स्वर्गो, मोक्षश्च, जायते; इह लोके सुखैश्वर्यमतुलं च खगाधिप।
वर्णधर्मः स्मृतस्त्वेकः, आश्रमाणामतः परं, वर्णाश्रमस्तृतीयस्तु, गौणो नैमित्तिकस्तथा।
वर्णत्वमेकमाश्रित्य यो धर्मः सम्प्रवर्तते, वर्णधर्मः स उक्तस्तु, यथोपनयनं नृप।
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते, स खल्वाश्रमधर्मस्तु, भिक्षादण्डादिको यथा।
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते, स वर्णाश्रमधर्मस्तु, मौञ्जीया मेखला यथा।
यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते, यथा मूर्धाऽभिषिक्तस्य प्रजानां परिपालनम्।
निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्तते, नैमित्तिकः स विज्ञेयः, प्रायश्चित्तविधिर्यथा।
स चतुर्धा निरूप्यस्तु स्वरूप-फल-साधनैः, प्रमाणतश्च, प्रत्येकं समस्तैश्च यथाक्रमम् +"
साधारणो, विशेषश्च धर्मभेदद्वयं स्मृतं; साधारणं तु सर्वेषां, प्रतिवर्णं विशेषतः।
सत्यं दया तपः शौचं तितिक्षेक्षा शमोदमः, अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवं,
सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः, नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्,
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः, तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव,
श्रवणं कीर्त्तनं चाऽस्य स्मरणं महतां गतेः, सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणं,
नृणामयं परो धर्मः सर्वेषां समुदाहृतः, त्रिंशल्लक्षणवान् राजन्सर्वात्मा येन तुष्यति⊙"
"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः, एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः"(१०,६३)
"सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः, संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः +"
"आनृशंस्यमहिंसा चाऽप्रमादः संविभागिता, श्राद्धकर्माऽतिथेयं च सत्यमक्रोध एव च,
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता, आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ×"
"शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया, विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः⁘"
एवं साधारणो धर्मो नृणां शास्त्रेषु दर्शितः; वक्ष्यामो दशमाध्याये धर्मं वैशेषिकं नृणाम्।१।

---

†. "प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः, निवृत्तिलक्षणे धर्मे फलं निःश्रेयसं मतम्"
"धर्मात्सुखं च ज्ञानं च यस्मादुभयमाप्नुयात्, तस्मात्सर्वं परित्यज्य विद्वान्धर्मं समाचरेत्"
[ स्कान्दे ]
"धर्मोऽभ्युदय-निश्रेयसहेतुः; तत्र याग-दानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुः,
अष्टांगयोगाऽनुष्ठानजनितश्च निश्रेयसहेतुः।" [ सां॰ तत्त्वकौ॰ का॰ २३ ]
"यतोऽभ्युदय-निःश्रेयससिद्धिः, स धर्मः" इति काणादसूत्रमनुसृत्य धर्मस्य लक्षणमाह- 'धर्म' इति; तत्र स्वाराज्यसाम्राज्याद्यैश्वर्यविशेषोऽभ्युदयः, निश्चितं श्रेयः = कल्याणं च 'निःश्रेयसं' कैवल्यम्। 'जनितश्च' यम-नियमादिजनितोऽशुक्लाऽकृष्णाख्यो धर्मविशेषश्चेत्यर्थः (पा॰ ४ सू॰ ७ इति योगसूत्रं निरीक्ष्यम्)" इति तत्रत्या विद्वत्तोषिणी।
"धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण, ज्ञानेन चाऽपवर्गो, विपर्ययादिष्यते बन्धः"
[ सां॰ का॰ ४४ ]

+ भविष्यपु॰ ब्राह्मपर्व, अ॰ १८१, श्लो॰ ७—१६।
"अत्र च धर्मशब्दः षड्विधस्मार्त्तधर्मविषयः; तद्यथा—वर्णधर्म, आश्रमधर्मो, वर्णाश्रमधर्मो, गुणधर्मो, निमित्तधर्मः, साधारणधर्मश्चेति। तत्र वर्णधर्मो—'ब्राह्मणो नित्यं मद्यं वर्जयेद्' इत्यादिः। आश्रमधर्मः—अग्नीन्धन-भैक्षचर्यादिः। वर्णाश्रमधर्मः—'पलाशो दण्डो ब्राह्मणस्य' इत्येवमादिः। गुणधर्मः—शास्त्रीयाऽभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनादिः। निमित्तधर्मो—विहिताऽकरण-प्रतिषिद्धसेवन-निमित्तं प्रायश्चित्तम्। साधारणधर्मः—अहिंसादिः, "न हिंस्यात्सर्वाभूतानि' इत्याचाण्डालं साधारणो धर्मः"
[ या॰ स्मृ॰ अ॰ १ श्लो॰ १ मिताक्षरा ]
⊙. भा॰ स्कं॰ ७ अ॰ ११ श्लो॰ ८—१२। + या॰ स्मृ॰ प्रायश्चित्त॰ श्लो॰ ६६।
×. महाभारते बहुत्र द्रष्टव्यम्। ⁘ वीरमित्रोदयधृतं देवलवचनम्।

### कामा-ऽकामात्मता-निषेधः, कर्मसु सम्यग्वृत्तिविधानञ्च

कामात्मता न प्रशस्ता, न चैवेहास्त्यकामता, काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः २
संकल्पमूलः कामो वै, यज्ञाः संकल्प-संभवाः, व्रतानि यमधर्माश्च, सर्वे संकल्पजाः स्मृताः ३
अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्, यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ४
तेषु सम्यग्वर्त्तमानो गच्छत्यमरलोकताम्, यथासङ्कल्पितांश्चेह सर्वान् कामान् समश्नुते ५

---

स्वहृदयाभ्यनुज्ञाख्या यात्मतुष्टिः परा प्रमा धर्मे प्रोक्ता, तया स्याद्धि कामात्मताग्रहभ्रमः ;
"हृदयेनाभ्यनुज्ञात" इतीच्छाविषयोऽस्ति यः, स धर्मः स्यादिति व्याख्याविकल्पे भ्रमसंभवः ;
ततः कामात्मता स्वेच्छाचारिताख्या प्रसज्यते, तया परार्थबाधेति न सा लोके प्रशस्यते ;
स्वार्थाभिरुचयो लोका निम्नगाश्चित्तवृत्तयः, स्वभावतः प्रवर्त्तन्ते परहान्यात्मतुष्टये।
अथ धर्मस्वरूपं चेत् स्वेच्छाचरणमिष्यते, तर्हि भूयाननर्थोऽत्र प्रसज्येतानपेक्षितः ;
यत्र तुष्यति यस्यात्मा स तत्कर्म करिष्यति, एवं कामात्मता लोके प्रचरेदव्यवस्थिता ;
व्रीहियवं पृथिव्यां यद् हिरण्यं पशवः स्त्रियः, तदेकस्यापि पर्याप्तं नास्ति कामात्मनः सतः ;
एवमेकस्य पुंसोऽपि कामात्मताऽवरोत्स्यते, लोकवृत्तिं हि सम्पूर्णामतः सा प्रतिषिध्यते।
यथा कामात्मता हेया तथैवाकामता नृभिः, लोकार्थबाधिका ह्याद्या, कर्मण्यन्त्याऽप्रयोजिका ;
न कर्मणि प्रवृत्तिः स्यादकामस्य कदापि नुः, तस्मादकामता चापि नृणामत्र निषिध्यते।
"यदा ते स्युः सुमनसो लोके धर्मार्थनिश्चये कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा।
धर्ममूलः सदैवार्थः, कामोऽर्थफलमुच्यते, सङ्कल्पमूलास्ते सर्वे, सङ्कल्पो विषयात्मकः;
विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये, मूलमेतत् त्रिवर्गस्य; निवृत्तिर्मोक्ष उच्यते +"
"नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्, कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ;
नियतं कुरु कर्मत्वं कर्म ज्यायो ह्यकर्मणः, शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ;
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः, कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ;
संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ, तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते" (गीता)
इत्यादिभगवद्वाक्यैः स एवार्थः प्रमीयते, तस्मादकामतापीह लोके नैव प्रशस्यते।
किन्तु सर्वा क्रिया लोके दृश्यते कामहेतुकी तस्मात्कर्मसु सिद्ध्यर्थं सम्यग्वृत्तिर्विधीयते।२-४।
कामात्मताऽतिगा ह्यादावन्ते चाकामताऽतिगा, अतोऽत्र मध्यमा वृत्तिरतिवर्जे विधीयते।
कर्मयोगेषु यस्यास्ति सम्यग्वृत्तिः, स मानवः, इहावाप्तत्रिवर्गः स्यादमुत्रामृतमश्नुते।
या परार्थाऽविरोधेन स्वार्थिके कर्मणि स्थितिः, कामाकामात्मता-भिन्ना सा सम्यग्वृत्तिरुच्यते।
आत्मौपम्येन भूतानां विषये यः प्रवर्त्तते कर्मयोगेषु, तस्यैव सम्यग्वृत्तिः प्रसिध्यति ;
अतः स्वार्थं परार्थेन विनियम्यैव साधयेत्, ना स्वधर्मानुसारेण परधर्मानपीडयन्।
"असद्वृत्तस्तु कामेषु कामोपहतचेतनः, नरकं समवाप्नोति तत्फलं न समश्नुते;
तस्माच्छ्रुतिस्मृतिप्रोक्तं यथाविध्युपपादितम्, काम्यं कर्मेह भवति श्रेयसे, न विपर्ययः" §
"निवर्त्तकं हि पुरुषं निवर्तयति जन्मतः, प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् ;
संसारभीरुभिस्तस्मान्न युक्तं कामवर्जनम्, विधिवत्कर्म कर्तव्यं ज्ञानेन सह सर्वदा ;
न देहिनां यतः शक्यं कर्तुं कर्माण्यशेषतः, तस्मादामरणाद्वैधं कर्तव्यं योगिना सदा ;
हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः, अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः"*
"कर्मणैव हि संसिद्धिमास्थिता जनकादयः, लोक-संग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ;

---

+ म० भा० शां० अ० १२३, श्लो० ३—५। § मनौ मूले प्रक्षिप्तमेतत् श्लोकद्वयम्। * मनौ परिशिष्टे।

वेदोऽखिलो धर्ममूलं, स्मृति-शीले卐 च तद्विदाम्, आचारश्चैव साधूनाम् आत्मनस्तुष्टिरेव च ६

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्;
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च, कर्त्तव्यानीति मे पार्थ, निश्चितं मतमुत्तमम्;
नियतस्य तु संन्यासः कर्मणो नोपपद्यते, मोहात्तस्य परित्यागस्तामसः परिकीर्तितः;
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः, यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते;
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्", एवमादि भगवद्गीतासु दृश्यम्।
"'वर्णाश्रमाचारवता पुरुषेण परः पुमान् विष्णुराराध्यते, पन्था नान्यस्तत्तोषकारकः।
वर्णाश्रमेषु ये धर्माः शास्त्रोक्ता नृपसत्तम, तेषु तिष्ठन्नरो विष्णुमाराधयति; नान्यथा" ×
"कर्म-योगं च वक्ष्यामि यथाविष्णुविभाषितम्, ज्ञानयोगसहस्राद्धि कर्मयोगः प्रशस्यते;
कर्मयोगोद्भवं ज्ञानं तस्मात्तत्परमं पदम्; कर्मज्ञानोद्भवं ब्रह्म, न च ज्ञानमकर्मणः;
तस्मात्कर्मणि युक्तात्मा तत्त्वमाप्नोति शाश्वतम् +" इत्यादिशास्त्रतात्पर्यमपि चात्रैव विद्यते।
तस्मादकामतां हित्वा कामात्मतां च कर्मसु, आत्मधर्मानुसारेण नरः सम्यक् प्रवर्तताम्।
"ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्; तेन त्यक्तेन भुञ्जीथा; मा गृधः कस्य स्विद्धनम्।
कुर्वन्नेवेह कर्माणि, जिजीविषेच्छतं समाः, एवं त्वयि नान्यथेतोऽस्ति, न कर्म लिप्यते नरे"‡।५।

धर्ममूलं, तत्प्रमाणं च

"श्रुतिः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः, सम्यक् सङ्कल्पजः कामो, धर्ममूलमिदं स्मृतम्※'
"अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः, ब्रह्मचर्यं ततः सत्यमनुक्रोशः क्षमा धृतिः,
सनातनस्य धर्मस्य मूलमेतद्दुरासदम्" इति पूर्णज्योतिर्धृतं मत्स्यपुराणवचनम्।
"आन्तरश्चैव बाह्यश्च धर्मो द्वेधा प्रकीर्तितः; आन्तरो मूलरूपस्तु, बाह्यस्तस्य फलात्मकः।
परमार्थानुसरणमनर्थस्य च वर्जनं, सत्यप्रियत्वं सर्वस्य मूलं धर्मस्य कीर्तितम् §"
"वेदो धर्ममूलम्, तद्विदां च स्मृतिशीले" इति गौतमधर्मसूत्रे।
धर्ममूलं वेदमाहुः ग्रन्थराशिमकृत्रिमं, तद्विदां स्मृतिशीले च, साध्वाचारं, मनःप्रियम् ✝"
धर्ममूलपदेनाऽत्र धर्महेतु-प्रमाणयोः उभयोर्ग्रहणं, तच्च द्वयमेव निरूप्यते।
यदेव कारणं धर्मे तत्प्रमाणमपीष्यते; वेदादिभिः कृतो धर्मस्तैरेव च प्रमीयते।
वेदपाठादितः, शीलाचाराभ्याम्, आत्मतुष्टितः, धर्म उत्पद्यते; तस्मादस्ति वेदादिमूलकः।
वेद-स्मृती, सतां शीलाचारौ, दृष्टास्ति धर्मधीः, आत्मतुष्टेश्च, तस्मात्तत्सर्वं तन्मानमिष्यते।
वेदो = ज्ञानं च, शास्त्रं च मन्त्र-ब्राह्मणसंज्ञकम्; धर्मशास्त्रं च, ध्यानं च, स्मृतिरित्यभिधीयते।
ब्रह्मण्यतादिकं शीलं त्रयोदशविधं स्मृतम्, सदाचारश्च = शिष्टानां कर्माऽभ्युदयसाधनम्;
आत्मतुष्टिः = स्वकर्त्तव्यनिर्णये कृतकृत्यता, सर्वमेतद्धवेद्धर्मे मूलं मानं च मानवे।
अत्र वेदोऽखिलो विद्याधर्मस्थानात्मकः स्मृतः, यथाह भगवान्व्यासो याज्ञवल्क्यश्च वेदकृत्-
"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां, धर्मस्य च चतुर्दश" ×

---

卐 "ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यं, मैत्रता, प्रियवादित्वं, कृतज्ञता, शरण्यता, कारुण्यं, प्रशान्तिश्चेति त्रयोदशविधं शीलं" [मन्वर्थमु० २, ६ धृतं हारीतवचनम्।

× विष्णुपु० अं० ३, अ० ८। + इति मात्स्ये अ० ५२। ‡ इति यजुर्वेदे।

※ या० स्मृ० अ० १ श्लो० ७। § शतश्लो० धर्मशा०। ✝ स्मृतिचन्द्रिकाधृतं व्याससवचनम्।

× या० स्मृ० १–३।

"अङ्गानि, वेदाश्चत्वारो मीमांसा, न्यायविस्तरः, पुराणं, धर्मशास्त्रं च, विद्या ह्येताश्चतुर्दश ;
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः, अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः" +
"दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च ये खिलाः, तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः ÷
"तानेव वैदिकान्मन्त्रान् भारतादि-निवेशितान्, स्वाध्याय नियमं हित्वा लोकबुद्ध्या प्रयुञ्जते" ∀
"इतिहासः पुराणं च कृत्रिमत्वेन निश्चिते, तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम्" ¶
"इतिहास-पुराणाभ्यां वेदार्थमुपबृंहयेत्, ( वेदं समुपबृंहयेत् )
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ( प्रतरिष्यति ) ||
"विषयो वेदवाक्यानां पदार्थैः प्रतिपाद्यते, ते च जात्यादिभेदेन सङ्कीर्णा लोकवर्त्मनि ;
स्वलक्षणविविक्तैस्तैः प्रत्यक्षादिभिरञ्जसा परीक्षकार्पितैः शक्याः प्रविवेक्तुं, न तु स्वतः ।
वेदोऽपि विप्रकीर्णात्मा प्रत्यक्षाद्यवधारितः, स्वार्थं साधयतीत्येवं ज्ञेयास्ते न्यायविस्तरात्";*
"प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्, आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता"; †
"धर्मे प्रमीयमाणे हि वेदेन करणात्मना, इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति"; ‡
"आन्वीक्षिकी, त्रयी, वार्त्ता, दण्डनीतिश्च शाश्वती, विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ;
आन्वीक्षिक्यात्मविज्ञानं, धर्माधर्मौ त्रयीस्थितौ, अर्थानर्थौ च वार्त्तायां, दण्डनीतौ नयानयौ"§
एवं रूपोऽखिलो वेदो धर्ममूलं स एव, यः सद्धेतुमूलको, जीवल्लोकाऽनुष्ठानलक्षणः ।
सद्धेतुमूलकं नूनं सल्लोकमतवाङ्मयम्, सच्छास्त्रमुच्यते; त्वन्यदसच्छास्त्रमिति स्थितिः ।
यः पुरुषार्थहेतुः स्याल्लोकसंग्रहकारकः, सद्धेतुः स हि विज्ञेयः, कामादन्यः प्रवर्तते ;
तस्मादस्ति द्विधा शास्त्रं सदसद्धेतुमूलकम्, सच्छास्त्रं सेवते धीमानसच्छास्त्रमुपेक्षते ।
शपथेनाभिशापेन स्तुत्याऽऽचिख्यासया तथा, परिदेवनया निन्दा-प्रशंसाभ्यामितीदृशैः
उच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयः, भवन्तीत्याह यास्कोऽपि वेदाङ्गकृदृषिः स्वयम् ; ¶
"अथर्वऋग्यजुःसाम्नां वेदेष्विह पृथक् पृथक्, ऋषीणां तप्यतां तेषां तपः परमदुश्चरम् ;
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह, असन्तोषाद्भयाद्दुःखान्मोहाच्छोकाच्च पञ्चधा";∀
"अमूलानि च शास्त्राणि हेतुभिश्चित्रितानि च × 'कामादन्ये भयादन्ये कारणैरपरैस्तथा'' ÷
असन्तोऽपि च कुर्वन्ति शास्त्रमित्याह धर्मज्ञः ।
कामात्क्रोधादनुक्रोशाल्लोभान्मोहाद्भयाद्ध्रियः दैन्यान्मानादिहेतोश्च कृतं शास्त्रमसन्मतम्,
तन्न धर्मे प्रमाणं स्यादित्याह जैमिनिः स्वयम् ; तस्माद्धेयमसच्छास्त्रं विदुषा "हेतुदर्शनात्"+
रागद्वेषाऽनृतभ्रान्तिव्याघातादिविवर्जितम्, पुमर्थसाधनं लोकहितमात्रनिमित्तकम्,
शिष्टपरिषदाऽध्यात्मविदा वा कृपया कृतम्, सच्छास्त्रमनुसन्धेयं सुधियाऽध्यात्मचेतसा ।
सच्छास्त्रमिष्यते पुंसां कार्याकार्यव्यवस्थितौ प्रमाणं परमं; नान्यदसच्छास्त्रमपीति दिक् ।
बुद्धिरेव परं मानं सदसच्छास्त्रनिर्णये, सा चाध्यात्मविदामेव गृह्यते तत्त्वदर्शिका ।
यद्विधानानुसारं च जनता नानुतिष्ठति, तत्राप्रामाण्यमायाति ह्यननुष्ठानलक्षणम् ;
अदूष्यमपि नो मानं धर्मे शास्त्रं तु तादृशम्, परिस्थितिविशेषार्थं कृतं कालान्तरेऽक्षमम् ।
पर्षदा विदुषा वा यो धर्मः काले विधीयते, सोऽपि कालान्तरे श्रेयोऽनुसारं परिवर्त्यते ;

---

÷ वि० पु० अं० ३, अ० ६ श्लो० २८–२९; महा० भा० शां० अ० १२२। + स्मृ० च० धृतं मरीचिवचनम् । ∀ शाण्डिल्यसूत्रभाष्यधृतम् । ¶ तन्त्रवार्तिके । || महाभारते आदि० अ० १ श्लो० २९३ ।
* तन्त्रवार्तिके । † कौटलीयार्थशास्त्रे, न्यायभाष्ये च । ‡ श्लोकवार्तिके । § कामन्दके ।
¶ नि० अ० ७ खं० ३ वा० २–८ ∀ मात्स्ये अ० १४५ श्लो० ६२–६३; वायुपु० च अ० ५९ श्लो० ६०–६१ ।
× म० भा० शां० १९–२ । ÷ म० भा० शां० २६६–१५ । + मी० द० १-३-४ ।

"अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे, अन्ये कलियुगे धर्मा यथाशक्ति कृता इव" ×
"वेदवादाश्चानुयुगं ह्रसन्तीति नः श्रुतम्" + "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" ÷
मत्वा = शुद्धधिया ध्यात्वा कर्त्तुं शास्त्रं नवं पुनः, अन्यः कालो य आयाति तन्मन्वन्तरमुच्यते।
मनवस्तत्त्वमन्तारस्तत्कालीनमहर्षयः, आवश्यकं प्रकुर्वन्ति पुरुषार्थानुशासनम्।

सदाचार-( शिष्टाचार )-निरूपणम्

तत्र शिष्टलक्षणम्

धर्मे वेदादिशास्त्राणां प्रामाण्यमुपपादितम्; प्रामाण्यमिह साधूनामाचारस्य निरूप्यते।
साध्नोति परकार्यं यः स साधुः=सज्जनः स्मृतः, शिष्टश्चेति; सदाचारः शिष्टाचारश्च कथ्यते।
"अतः शिष्टान् प्रवक्ष्यामि सतः साधूंस्तथैव च—
सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत * सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्षते(?)
विद्यायाः साधनात्साधुर्ब्रह्मचारी गुरोर्हितः; क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते;
साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः; यतमानो यतिः साधुः स्मृतो योगस्य साधनात्।
एवमाश्रमधर्माणां साधनात्साधवः स्मृताः, गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः" ⁂
"न प्रहृष्यति सम्माने, नावमाने च कुप्यति, न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्"‖
"सत्यं तपस्तथा यज्ञो दया क्षान्तिरलोभता, ब्रह्मचर्यं दमोऽक्रोधो दानं शिष्टस्य लक्षणम् §"
"न पाणिपादचपलो न नेत्रचपलो भवेत्, न चाङ्गचपलो विप्र इति शिष्टस्य लक्षणम् ¶
पारम्पर्यागतो येषां वेदः सपरिबृंहणः, ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः;
यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्, न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः"ɣ
"धर्मेणाऽधिगतो येषां वेदः सपरिबृंहणः, शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः" °
"धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः, ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः" >
"शिषेर्धातोश्च निष्ठान्ताच्छिष्ट-शब्दं प्रचक्षते; मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः,
मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः, तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान्सम्प्रचक्षते' ⁙

"ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः
किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गताः तत्रभवन्तः शिष्टाः" 卐

( अथ शिष्टाचार-लक्षणम् )

"तैः शिष्टैश्चरितो धर्मः स्थाप्यते वै युगे युगे, त्रयी, वार्ता, दण्डनीतिः प्रजावर्णाश्रमेप्सया;
शिष्टैराचर्यते यस्मात्पुनश्चैव मनुक्षये, पूर्वैः पूर्वमतत्वाच्च शिष्टाचारः स शाश्वतः।
दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः, अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम्।
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह, मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः।

× म० भा० शां० अ० २६६ श्लो० ८। + म० भा० शां० २६६-७। ÷ वायु० ५९-५६।
* "संयुज्य ब्रह्मणा ह्यन्तः" इति मात्स्ये पाठः। (?) "प्रचक्ष्यते"—पाठ०। ⁂ वायुपु० अ० ५९; मत्स्यपु० अ० १४५। ‖ वाच० साधुशब्दे। § मत्स्य० १४५-४१। ¶ "गोचर", इति पाठ०। ɣ वसि० स्मृ० अ० ६, श्लो० ३८-४०। "श्रुतिस्मृतिविहितो धर्मः; तदलाभे शिष्टाचारः प्रमाणम्; शिष्टः पुनरकामात्मा। अगृह्यमाणकारणो धर्मः" इति—वसिष्ठधर्मसूत्राणि अ० १ सू० ३—६।
° बौधा० प्र० १ अ० १ सू० ६। "उपदिष्टो धर्मः प्रतिवेदम्; तस्यानुव्याख्यास्यामः। स्मार्तो द्वितीयः; तृतीयः शिष्टागमः। शिष्टाः खलु विगतमत्सरा, निरहंकाराः, कुम्भीधान्या, अलोलुपा, दम्भदर्पलोभमोहक्रोधविवर्जिताः" इति बौधायनधर्मसूत्रे प्र० १ अ० १ सू० १-५।
> मनु० १२, १०९। ⁙ मात्स्ये अ० १४५। 卐 पृषोदरादीनीति ( ६।३।१०९ ) सूत्रे महाभाष्यम्।

विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त्त उच्यते , इज्यावेदात्मकः श्रौतः, स्मार्तो वर्णाश्रमात्मकः।
श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः , शिष्टाचार-प्रवृद्धश्च धर्मोऽयं साधुसम्मतः।
धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विजातिभिः , दाराग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम्।
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः। पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ;
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः। मन्वन्तरस्यातीतस्य स्मृत्वा यन्मनुरब्रवीत् ,
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागजः। एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते" ÷
"यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम , पञ्चैतानि पवित्राणि शिष्टाचारेषु सर्वदा।
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवं , धर्ममित्येव सन्तुष्टास्ते शिष्टाः शिष्टसम्मताः।
न तेषां विद्यते वृत्तं*यज्ञ-स्वाध्यायशीलिनाम् ; आचारपालनं चैव द्वितीयं शिष्टलक्षणम्।
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च , एतच्चतुष्टयं ब्रह्मन् , शिष्टाचारेषु नित्यदा।
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः यामयं लभते वृत्तिं, सा न शक्या ह्यतोऽन्यथा।
वेदस्योपनिषत्सत्यं, सत्यस्योपनिषद्दमः , दमस्योपनिषत्त्यागः, शिष्टाचारेषु नित्यदा।
ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नराः , अपथा गच्छतां तेषामनुयाता च पीड्यते।
ये तु शिष्टाः सुनियताः श्रुति-त्यागपरायणाः , धर्मपन्थानमारूढाः सत्यधर्मपरायणाः ,
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः , उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः।
नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् त्यज तान् ज्ञानमाश्रित्य, धार्मिकानुपसेव्य च।
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीं नावं धृतिमयीं कृत्वा, जन्मदुर्गाणि सन्तर।
क्रमेण सञ्चितो धर्मो बुद्धियोगमयो महान् शिष्टाचारे भवेत्साधू रागः शुक्लेव†वाससि।
अहिंसा सत्यवचनं सर्वभूतहितं परम् , अहिंसा परमो धर्मः, स च सत्ये प्रतिष्ठितः ;
सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम्।
आचारश्च सतां धर्मः, सन्तश्चाचारलक्षणाः ; यो यथा प्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ;
पापात्मा क्रोध-कामादीन्दोषानाप्नोत्यनात्मवान्।
आरंभो न्याययुक्तो यः स हि धर्म इति स्मृतः ; अनाचारस्त्वधर्मेति, एतच्छिष्टानुशासनम्।
अक्रुध्यन्तोऽनसूयन्तो निरहङ्कार-मत्सराः ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते ;
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत।
तेषामहीनसत्त्वानां दुष्कराचारकर्मणां स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति।
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवं धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः।
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः श्रुतवृत्तोपसम्पन्नाः सन्तः स्वर्गनिवासिनः।
वेदोक्तः परमो धर्मो, धर्मशास्त्रेषु चाऽपरः , शिष्टाचारश्च शिष्टानां, त्रिविधं धर्मलक्षणं ‡
पारणं चाऽपि विद्यानां, तीर्थानामवगाहनं , क्षमा सत्यार्जवं शौचं सतामाचारदर्शनम्।
सर्वभूतदयावन्तो अहिंसानिरताः सदा , परुषं च न भाषन्ते सदा सन्तो द्विजप्रियाः ;
शुभानामशुभानां च कर्मणां फलसञ्चये विपाकमभिजानन्ति, ते शिष्टाः शिष्टसम्मताः।
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः , सन्तः स्वर्गजिताः शुक्लाः संनिविष्टाश्च सत्पथे ,

÷ मात्स्ये अ० १४५; वायुपु० च अ० ५९। * 'वृत्तं' वृतं, स्वेच्छोपातमिति यावत् ; 'वृत्तोऽधीतेऽप्यतीतेऽतिवर्त्तुलेऽपि मृते वृते' इति मेदिनी" ( नीलकं० टी०। † "शुक्लेव; 'व' इति इवार्थे; 'व वा यथा तथेवैवम्' इत्यमरः" ( नी० कं० टी० )।

‡ "वेदोक्तः अग्निहोत्रादिः, धर्मशास्त्रोक्तः अष्टकाश्राद्धादिः, शिष्टाचारः होलकादिः, 'शिष्टानां' तुष्टिरिति शेषः; तदुक्तमभियुक्तैः 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति; अस्या अपि शिष्टाचार एवान्तर्भावात् 'त्रिविधम्' इत्युक्तम्। 'पारणं' समापनम्" [नैलकण्ठीयम्]।

दातारः संविभक्तारो दीनाऽनुग्रहकारिणः, सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः,
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसम्मताः। दीनशिष्टाः सुखाँल्लोकानाप्नुवन्तीह च श्रियम्।
पीडया च कलत्रस्य, भृत्यानां च, समाहिताः, अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः,
लोकयात्रां च पश्यन्तो धर्ममात्महितानि च; एवं सन्तो वर्तमानास्त्वेधन्ते शाश्वतीः समाः।
अहिंसा सत्यवचनमानृशंस्यमथार्जवम्, अद्रोहो नाऽभिमानश्च ह्रीस्तितिक्षा दमः शमः;
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः, अकाम-द्वेषसंयुक्तास्ते सन्तो लोकसाक्षिणः।
त्रीण्येव तु सतामाहुः सन्तः पदमनुत्तमं—न चैव द्रुह्येद्, दद्याच्च, सत्यं चैव सदा वदेत्।
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः, गच्छन्तीह सुसन्तुष्टा धर्मपन्थानमुत्तमम्।
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः—अनसूया क्षमा शान्तिः सन्तोषः प्रियवादिता,
काम-क्रोधपरित्यागः, शिष्टाचारनिषेवणं, कर्म च श्रुतसम्पन्नं सतां मार्गमनुत्तमम्।
शिष्टाचारं निषेवन्ते नित्यं धर्ममनुव्रताः, प्रज्ञाप्रासादमारुह्य मुच्यन्ते महतो भयात्,
प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम, अतिपुण्यानि, पापानि, तानि द्विजवरोत्तम।
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतं, शिष्टाचारगुणं ब्रह्मन्, पुरस्कृत्य द्विजर्षभ" §
'अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्, यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः" ‖
"त्रैविद्यवृद्धा यं ब्रूयुर्धर्मं धर्मविदो जनाः, पवने पावने चैव स धर्मो नात्र संशयः" ⁂
"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः, स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" †
"ते धर्म-विचिकित्सा" चेदित्यादौ तैत्तिरीयके, शिष्टाचारस्य प्रामाण्यं साक्षादुक्तं महर्षिणा ‡

शिष्टाचार-प्रामाण्याक्षेपः

"सदाचारो मतो धर्मः, सन्तस्त्वाचारलक्षणाः, साध्यासाध्यं कथं शक्यं, सदाचारो ह्यलक्षणः।
दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन्, धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्;
कामादन्येच्छया चाऽन्ये कारणैरपरैस्तथा असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे;
धर्मो भवति स क्षिप्रं, प्रलापस्त्वेव साधुषु, अथैतानाहुरुन्मत्तानपि चाऽवहसन्त्युत।
महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः; न हि सर्वहितः कश्चिदाचारः सम्प्रवर्तते;
तेनैवान्यः प्रभवति, सोऽपरं बाधते पुनः, दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया;
येनैवान्यः प्रभवति, सोऽपरानपि बाधते, आचाराणामनैकाग्र्यं सर्वेषामेव लक्ष्यते।
चिराऽभिपन्नः कविभिः पूर्वं धर्म उदाहृतः, तेनाचारेण पूर्वेण संस्था भवति शाश्वती ¶"
'भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः, इदं श्रेय इदं श्रेय इति सर्वे प्रबोधिताः;
तांस्तु विप्रस्थितान् दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः, स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे'()
"के शिष्टा? ये सदाचाराः; सदाचाराश्च तत्कृताः, इतीतरेतराधीननिर्णयत्वादनिर्णयः;
स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम्, वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः;
न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते; यदि च स्यात्परोक्षाऽपि स्मर्येतैव ह्यसौ ध्रुवम् +"
अन्योन्याश्रय आनन्त्यमव्यवस्थाऽनवस्थितिः, मिथोविभिन्नरूपत्वं विरुद्धत्वं च साहसम् §

---

§ म० भा० वन० अ० २०७। ‖ मनु० १२-१०८।

⁂ वसि० स्मृ० अ० १ श्लो० १५। † भ० गीता० ३-२१। ‡ तै० उ० अनु० ११।

¶ म० भा० शां० अ० २६६ (पू० चि० सं० अ० २६०) "एवं श्रुति-स्मृति-सदाचाराणामप्रामाण्यमुक्त्वा स्वमतमाह—चिराभिपन्न इति। अनाद्यविगानप्रवृत्तेन स्वभावेनैव सुख-दुःखकार्या-ऽकार्यव्यवस्था; न श्रुत्यादि-प्रमाणकेन धर्मेणेत्यर्थः। 'संस्था' मर्यादा" इति नैलकण्ठीयम्। () म० भा० शां० अ० २९३। + तं० वा०।

§ "सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः, तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते।" (ना० स्मृ० १४-१)

धर्मव्यतिक्रमश्चापि शिष्टाचारेषु दृश्यते, तस्मान्न युज्यते तेषां धर्मज्ञाने प्रमाणता ;
इत्याक्षिप्य सदाचार-प्रामाण्यं यत्समाहितम्, शास्त्रेषु, तदपीहाधः संक्षेपादभिधीयते ।

शिष्टाचारप्रामाण्यसाधनम्

"दृष्टकारणहीनानि यानि कर्माणि साधुभिः प्रयुक्तानि प्रतीयेरन्, धर्मत्वेनेह तान्यपि ।
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते, अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ।
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित्, वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते" *
तंत्रवार्तिककारस्य मतमेतत्तु केवलम्, पारलौकिकधर्माणां सम्बन्ध उपपद्यते ।
धर्मस्तु लौकिकोऽप्यस्ति सर्वसिद्धान्तसम्मतः ; सुखाऽभ्युदयिकाचारो दृष्टकारणकः स्मृतः ।
शरीरस्थितये चापि सुखार्थं वाऽऽचरन्ति यत् शिष्टा, स्तदपि धर्मत्वं न्यायादर्हति, धारणात् ।
शरीरस्थितिरेवास्ति वस्तुतस्त्वात्मधारणम्, तत्साधनस्य धर्मत्वं सुतरामेव सिध्यति ।
सुखं तु सर्वसिद्धान्ते धर्मस्य परमं फलम्, सर्वेषां प्राणिनां सन्ति सुखार्था हि प्रवृत्तयः ;
तत्साधनस्य धर्मत्वं साक्षादुक्तं महर्षिभिः, धर्मः श्रेयस्करं कर्म, श्रेयश्च सुखमेव हि ।
"धर्मादर्थश्च कामश्च" इत्यादिशास्त्रतः स्फुटम्, धर्मत्वमपि शिष्टानामर्थसाधनकर्मणः ।
एवञ्चात्रैकदेशीयं ज्ञेयं कौमारिलं मतं, नैतेन धर्मशब्दस्य सम्पूर्णार्थोऽभिव्यज्यते ।
तस्मात्, शावरभाष्यादिप्रोक्तन्यायानुसारतः शिष्टाचारप्रमाणत्वं साध्यं तत्त्वार्थचिन्तकैः ।
एवं तत्त्वार्थतः शास्त्राल्लोकाच्चात्राऽवगम्यते असत्कारणहीनस्य शिष्टाचारस्य धर्मता ।
न शिष्टानामनाचारः कामलोभादिमूलकः धर्मः स्या, न्नापि तन्मानं भवेदित्येव निर्णयः ।
सतां सुचरितान्येव सेव्यानि पुरुषार्थिभिः, न तद्दुश्चरितानीति तैत्तिरीयाऽनुशासनम् ।
"ननु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा, शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ?
नैव तेषां सदाचारनिमित्ता शिष्टता मता, साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः" ‡
यत्तूक्तं साहसं किञ्च सतां धर्मव्यतिक्रमः, "श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ;
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा, यथा वा न विरुद्धत्वं तथा तद्गमयिष्यति" []
"धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्, तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ;
नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः, विनश्यत्याचरन्मौढ्याद्यथाऽरुद्रोऽब्धिजं विषम् ।
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्, तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत्" ४
स्वमातुलसुतोद्वाहो दाक्षिणात्येषु दृश्यते, ब्राह्मणानां सुरापानमन्यत्र श्रूयते तथा ;
"सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया, आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ।
येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः, त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः" ()
"येनास्य पितरो याता येन याताः पितामहाः, तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" ||
"शिष्टं तावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते, तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ।
यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता, तदकोपात्तु नाचारप्रमाणत्वं विरुध्यते" 卐
वस्तुतस्तु सदाचार-प्रामाण्यं ह्यात्मतुष्टितः, अन्वीक्ष्यैव ग्रहीतव्यं धर्मतत्त्वबुभुत्सुभिः ;
अन्ततो धर्मसन्देहे प्रमाणं त्वात्मनः प्रियम्, एतदेवाह वाराहे पाराशर्यः पुराणकृत्—
"पुनरन्यत्प्रवक्ष्यामि, तच्छृणुष्व वसुन्धरे, पुरुषाणां प्रसन्नानां यश्च धर्मः सनातनः ।
मनुनाऽप्यन्यथा दृष्टो, ह्यन्यथाऽऽङ्गिरसेन च, शुक्रेण चाऽन्यथा दृष्टो, गौतमेनाऽपि चान्यथा,

"मनुष्यमारणं स्तेयं परदाराऽभिमर्षणं पारुष्यमनृतं चैव साहसं पञ्चधा स्मृतम्" (ना० स्मृ०)

* तं० वा० १–३–३ ‡ तं० वा० १–३–३ [] तं० वा० १, ३, ३ ४ भा० स्कं० १० अ० ३३ () तं० वा० १–३–३ । || मनुः । 卐 तं० वा० १–३–३ ।

सोमेन चाऽन्यथा दृष्टो, रुद्रेणाऽप्यन्यथा पुनः, शंखेन चाऽन्यथा दृष्टो, लिखितेनाऽपि चाऽन्यथा,
कश्यपेनाऽन्यथा दृष्टो, धर्मेणाऽप्यन्यथा धरे, अग्निना, वायुना चैव, दृष्टो धर्मोऽन्यथा धरे,
यमेन चाऽन्यथा दृष्ट, इन्द्रेण, वरुणेन च, कुवेरेणाऽन्यथा दृष्टः, शाण्डिल्येनाऽपि चाऽन्यथा,
पुलस्त्येनाऽन्यथा दृष्ट, आदित्येनाऽपि चाऽन्यथा,
पितृभिश्चाऽन्यथा दृष्टो, ह्यन्यथाऽपि स्वयंभुवा।
आत्मनाऽऽत्मनि धर्मेण यो नरो निश्चितव्रतः, स्वकं पालयते धर्मं, स्वमतेनैव भासितम्;
परवादं न कुर्वीत सर्वधर्मेषु निश्चितं; न निन्देत् (पर) धर्मकार्याणि, आत्मधर्मपथे स्थितः ×"
अत्र, मन्वादिभिः शिष्टैर्दृष्टो धर्मोऽन्यथा-ऽन्यथा, स्वयं चाऽनुष्ठितस्तद्वल्लोकेष्वपि प्रवर्तितः;
अतस्तद्दृष्टधर्माणां तत्तत्कालादिदृष्टितः, नैकत्वं नाऽपि सर्वांशैः सदावर्तित्वमिष्यते।
आचार-व्यवहारादिस्तत्तत्कालाद्यपेक्षया कालिको भवति प्रायः, नैव सर्वः सनातनः;
अतः शिष्टस्मृतेः शिष्टाचाराच्चापि न तत्त्वतः विज्ञातुं शक्यते धर्मोऽध्यात्मज्ञानादृते नृभिः।
तस्मादात्मनि धर्मेण ह्यात्मनैव महाजनैः स्वको धर्मो विनिश्चेयः स्वमतेनैव भासितः,
संसेव्यश्च स्वधर्मस्थैः परधर्माऽविरोधतः, इति स्पष्टतरं प्राह कृष्णद्वैपायनो मुनिः।
आत्मैव हि प्रमाता स्याद्वेदादेरपि चान्ततः, तस्मात्सर्वप्रमाणानामात्मज्ञानं परं मतम्।

( आत्मतुष्टि-प्रामाण्यवादः )

'साधूनामात्मनः तुष्टिर्'इत्येवं योजयन्ति ये, प्रेक्षावद्भिरुपेक्ष्यं तन्मतं मूलविरोधतः।
आत्मनस्तुष्टिरित्यर्थे 'स्वस्य च प्रियमात्मनः, इत्युक्तम्, 'आत्मनः' 'स्वस्य' चेति स्वार्थे पदद्वयम्;
तुष्टिपदार्थसम्बन्धः स्वात्मनैव प्रदर्शितः, अतस्तदन्वयः 'साधूनाम्' इत्यत्र न युज्यते।
अविशेषात् स्वशब्देन प्रत्येकं गृह्यते नृणाम्, तस्माद्धर्मे प्रमाणं स्यात्सर्वेषामात्मनः प्रियम्।
ननु सर्वात्मतुष्टेश्चेदिष्यते धर्ममानता, तर्हि कामात्मनस्तुष्टेरपि प्रामाण्यमापतेत्;
तथा सति प्रसज्येताधर्मो धर्मस्वरूपतः, दृश्यते हि नृणामात्मतुष्टिः प्रायेण निम्नगा।
"सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतं; 'आत्मतुष्टिः' स्मृताऽन्या तैर्धर्मे; सा चाऽनवस्थिता।
कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि, शाक्यस्येव कुहेतूक्ति-वेदब्राह्मणदूषणे;
पशुहिंसादिसम्बन्धे यज्ञे तुष्यन्ति हि द्विजाः, तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः।
शूद्रान्नभोजनेनाऽपि तुष्यन्त्यन्ये द्विजातयः, स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति;
अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते" ( मी० तं० वा० अ० १ पा० ३ अधि० ३ )
"दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन्, धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्" *
दुःखेन सीदतः पुंसः सकाशाच्च कुसीदिकः, मूलादष्टगुणं द्रव्यं बलादाहृत्य तुष्यति;
परस्वहरणे चोराः, परदारेषु कामुकाः, नित्यं नवेषु तुष्यन्ति पुंसु चासंयताः स्त्रियः;
श्रमिकार्जित-सर्वस्व-ग्रहात्तुष्यन्ति पौञ्जिकाः, ददते प्राणरक्षार्थं तेभ्यो व्रीहियवं न वा;
भूस्वामिनः करव्याजात् प्रजाशोणितशोषणात्, तुष्यन्ति कृषकाः स्वार्थे पशूनामतिपीडनात्;
"पशूनां वृषणं छित्वा, ततो भिन्दन्ति नस्तु तान्, वहन्ति बहवो भारान्, बध्नन्ति, दमयन्ति च" †
खादयित्वा क्षुधा वत्सानाशोणितं दुहन्ति गाम्, "हत्वा सत्त्वानि खादन्ति" मानवा आत्मतुष्टये।
"मानुषा मानुषानेव दासभावेन भुञ्जते, वध-बन्ध-निरोधेन कारयन्ति दिवानिशम्" ‡
गोहत्ययाऽपि केषांचिदिष्टदेवः प्रसीदति, अपरे तां स्वधर्मेण न क्षमन्तेऽतिदुःखिताः;
गोमांसैर्यवनादीनामात्मतुष्टिः प्रजायते, तद्दर्शनेऽपि हिन्दूनां धर्महानिः प्रसज्यते;

× वराहपु० अ० १२१ श्लो० १३-२०। * म० भा० शां० २६६, ६ † म० भा शां० अ० १५ श्लो० ५१। ‡ म० भा० शां० अ० २६८ श्लो० ३९।

सम्राजः परराष्ट्राणां वशीकारार्थमासुराः, नरनाशेन तुष्यन्ति च्छलादपि बलादपि ;
अन्ये सामाजिकाः क्रान्तेः,शान्तेस्तुष्यन्ति चापरे, स्वेच्छाचारोऽस्ति सर्वोऽयं नैव धर्मत्वमर्हति
साधूनामात्मतुष्टिस्तु नैवोन्मार्गे प्रवर्तते, सैव धर्मे प्रमाणं स्यात्, नैव मानवमात्रगा।
"एतेन वैदिकानन्तधर्मधी-संस्कृतात्मनाम्, आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ;
यथा रुमायां, लवणाकरेषु, मेरौ यथा वोज्ज्वलरुक्मभूमौ,
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ||"
तस्मादस्तु सतामात्मतुष्टेर्धर्मप्रमाणता, नान्येषामिति चेद्? अत्र ब्रूमः शास्त्रसदुत्तरम्।
आत्मतुष्टिपदस्यार्थो नास्तीहेन्द्रिय-तर्पणम्, येन कामात्मतृप्तेः स्यादधर्मेऽपि च धर्मता ;
किन्तु मानवधर्मेषु यात्मतुष्टिः प्रमा स्मृता, सा हृदयाऽभ्यनुज्ञाख्या बुद्धिरात्मोपमानजा।
तस्मात्सर्वमनुष्याणामात्मतुष्टिः स्वके स्वके कार्ये धर्मतुला न्याय्या, स्वात्मौपम्येन पश्यताम् ;
कार्ये सार्वजनीने तु भूयोजनमतानुगा आत्मतुष्टिः प्रमाणं स्यान्माहाजनिकपर्षदः।
आत्मनोऽन्यकृताऽनिष्टं यथा स्वस्मै न रोचते, तथा नैव पराऽनिष्टं स्वयं कार्यमितीदृशी
स्व-सद्धर्मतुला लोके सर्वेषां हृदये स्थिता, तद्रूपैवात्मनस्तुष्टिः प्रमाणत्वेन सम्मता ;
न त्वनात्मज्ञलोकानां स्वार्थान्ध्योन्मार्गगामिनाम् आत्मतुष्टिः प्रमाणं स्यादात्मौपम्यैरपश्यताम्।
तस्माद्, अयमधर्मो,ऽयं धर्म इत्यर्थनिर्णये, सद्धृदयाभ्यनुज्ञैव दृढा धर्मतुला नृणाम्।
एतामेव तुलाधारो धर्मतत्त्वार्थविद्वणिक् प्राह धर्मतुलां गुर्वीं, शिष्टाचारं प्रमाणयन्—
"वेदाऽहं जाजले, धर्मं सरहस्यं सनातनं, सर्वभूतहितं मैत्रं पुराणं यं जना विदुः।
अद्रोहेणैव भूतानाम्, अल्पद्रोहेण वा पुनः,* या वृत्तिः, स परो धर्मः, तेन जीवामि जाजले।
सर्वेषां यः सुहृन्नित्यं, सर्वेषां च हिते रतः, कर्मणा मनसा वाचा, स धर्मं वेद जाजले। †
नाऽनुरुध्ये, विरुध्ये वा, न द्वेष्मि, न च कामये, समोऽहं सर्वभूतेषु, पश्य मे जाजले व्रतम् ;
तुला मे सर्वभूतेषु समा तिष्ठति जाजले।
नाऽहं परेषां कृत्यानि प्रशंसामि, न गर्हये, आकाशस्येव विप्रेन्द्र, पश्यन्लोकस्य चित्रताम्।
इति मां त्वं विजानीहि सर्वलोकस्य जाजले, समं मतिमतां श्रेष्ठ, समलोष्टाश्मकाञ्चनम्।
यदा चाऽयं न बिभेति, यदा चास्मान्न बिभ्यति, यदा नेच्छति, न द्वेष्टि, ब्रह्म सम्पद्यते तदा।
यदा न कुरुते भावं सर्वभूतेषु पापकं कर्मणा मनसा वाचा, ब्रह्म सम्पद्यते तदा।
न भूतो, न भविष्योऽस्ति, न च धर्मोऽस्ति कश्चन, योऽभयः सर्वभूतानां, स प्राप्नोत्यभयं पदम्।
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव वाक्क्रूराद्दण्डपरुषात्, स प्राप्नोति महद्भयम्।
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम्। ‡

|| मी० तं० वा० १,३,३। * 'अल्पद्रोहेण'—आपदि वा, 'नाऽनुपहत्य भूतानि भोगः संभवति' इति न्यायेनाऽद्रोहेण वृत्त्यसंभवाद्वा।

† सर्वेषामिति; अयमर्थः—लोके हि उपकारिणं प्रत्युपकुर्वन्ति, अद्रोहिणे न द्रुह्यन्ति च, इत्युत्सर्गः; तत्सामान्यादैहिकौ उपकारा-ऽपकारौ जन्मान्तरेऽपि सुख-दुःखप्रदानाय प्रभवतः, न त्वाकस्मिकं कस्यचित्सुखं दुःखं वाऽस्ति जन्मान्तरीयं कारणं विनेत्यनुमीयते; अतः स्वभाववादस्तावदयुक्त एव; श्रुत्यादीनां धर्मे प्रामाण्यमपि वक्ष्यमाणरीत्या युज्यत एवेति।

‡ "मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः" इति मन्त्रलिङ्गात्कुलाचारस्य प्रामाण्यं गम्यते, तदप्यस्मास्वस्तीत्याह—यथावदिति। 'अहिंस्राणाम्' इति हिंसामयः कुलाचारोऽपि अप्रमाणमित्युक्तम्। मन्त्रार्थस्तु—

'पित्र्यात्' पित्रादिसंसेवितात्, 'मानवात्' मनुर्मन्त्रः तत्प्रकाशिताद् वेदाऽविरुद्धादित्यर्थः, 'पथो' मार्गात्, 'नः' अस्मान्, 'दूरं मा नैष्ट' नयत, 'परावतः' बह्वायुष्मतोऽस्मानिति" (नैलकण्ठीयम्)।

प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः, तेन वैद्यस्तपस्वी वा बलवान्वा विमुह्यते ।
आचाराज्जाजले; प्राज्ञः क्षिप्रं धर्ममवाप्नुयात्, एवं यः साधुभिश्चीर्णं चरेदद्रोहचेतसा । §
एवमेवायमाचारः प्रादुर्भूतो यतस्ततः सहायवान्द्रव्यवान्यः सुभगोऽथ परस्तथा ।
अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले, भूत-भव्यार्थमेवेह धर्मप्रवचनं कृतम्;
सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः; उपलभ्यान्तरा चाऽन्यानाचारानवबुध्यते ¶
ये च च्छिन्दन्ति वृषणान्, ये च भिन्दन्ति नस्तकान्,
वहन्ति महतो भारान्, बध्नन्ति, दमयन्ति च,
हत्वा सत्त्वानि खादन्ति, तान्कथं न विगर्हसे ? मानुषा मानुषानेव दासभावेन भुञ्जते,
वध-बन्ध-निरोधेन कारयन्ति दिवानिशम्; आत्मनश्चापि जानन्ति यद्दुःखं वध-बन्धने !
अदंश-मशके देशे सुखसंवर्धितान्पशून्, तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः,
बहुदंशाकुलान्देशान्नयन्ति बहुकर्दमान्; वाहसम्पीडिता धुर्याः सीदन्त्यविधिना परे ।
न मन्ये भ्रूणहत्यापि विशिष्टा तेन कर्मणा; कृषिं साध्विति मन्यन्ते, सा च वृत्तिः सुदारुणा ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखं; तथैवानडुहो युक्तान्समवेक्षस्व जाजले !
'अघ्न्या' इति गवां नाम, क एता हन्तुमर्हति ? महच्चकाराऽकुशलं वृषं गां वाऽऽलभेत्तु यः । +

---

§ शिष्टाचारं प्रमाणयति—प्रनष्ट इति द्वाभ्याम् । 'शाश्वतः' शश्वद्भवः परम्परया वेदमूलकत्वादनादिर्धर्मः शिष्टाचारः, स 'प्रनष्टः;' यतः 'सदाचारेण' क्वचिदंशे विरुद्धेन, 'मोहितः' मोहं प्रापितः, यथा—'अवर्त्या शुन आन्त्राणि पेचे' 'यः पूजयितुं पितृदेवमनुष्यान्पेच आन्त्राणि शुनः' इति श्रुतिस्मृतिभ्यां वामदेवस्य श्रेष्ठतमस्यापि बीभत्स आचार आपदि श्वमांसभक्षणरूपः प्रदर्शितः; पुराणे वा ऋषभादीनां महायोगिनामाचारं दृष्ट्वा आर्हतादयो मोहिताः पाषण्डमार्गमनुगता इत्युक्तम्; 'तेन' मोहरूपेण कारणेन, 'वैद्यो' विद्वान्, 'तपस्वी' जितेन्द्रियः, 'बलवान्' जितकामक्रोधः, सोऽपि 'विमुह्यते' । 'विमुच्यत' इति पाठे 'तेन' सदाचारेणेत्यर्थः । अयं भावः—

'सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः; अर्धनाशे समुत्पन्ने सर्वं त्यजति दुर्मतिः'

इति न्यायेन मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादं चाऽनुरुध्यन्ते; बुद्धास्तु श्रुत्यन्तरविरुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैव सदाचारेण मुच्यन्त इति ।

एतदेवाह—आचारादिति । 'धर्मं' मोक्षोपयोगिनमधिकारम् । उपसंहरति—'एवमिति । साधुभिश्चीर्णं धर्मं यश्चरेत्, स धर्ममाप्नुयादित्यन्वयः'' [ नैलकण्ठीयम् ] ।

¶ "अकारणः, 'कारणम्' अनुष्ठानप्रयोजकं फलं, तद्धीनः 'सूक्ष्मः' अभयदानात्मकः, 'भूतं' ब्रह्म, 'भव्यं' स्वर्गादि, उभयार्थमेव 'धर्माणां' शमादीनां यज्ञादीनां च 'प्रवचनम्' अध्ययनं, वेदे कृतम्; अतः स्थूलधर्माद् यज्ञादेरन्यः सूक्ष्मधर्मोऽस्तीति भावः ।

कुतः सूक्ष्मधर्मो दुर्ज्ञेयः ? यतो 'बहुनिह्नवः'—'सप्तदश प्राजापत्यान्पशूनालभते, सप्तदशः प्रजापतिः प्रजापतेराप्त्या' इत्यादिविधयः श्रेयःसाधनत्वेन हिंसामुपदिशन्तोऽहिंसाशास्त्रमुपमृद्नन्तीत्यर्थः । तर्हि तदप्रमाणमेवेत्याशङ्क्याह—उपलभ्येति । 'उक्षाणं वा वेहतं वा क्षदन्ते' 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति श्रुति-स्मृतिविहितो मधुपर्के गवालम्भ एक आचारः, 'मा गामनागामदितिं वधिष्ट' इति मन्त्रलिङ्गाऽवगतो गवोत्सर्गविधिस्तद्विरुद्धोऽन्य आचारः; तत्र 'अनागाम्' इति विशेषणात् क्रत्वर्थहिंसाविधेरहिंसाविधिर्ज्यायानिति गम्यते, अनागस्त्वस्य प्राजापत्यपशुष्वपि तुल्यत्वादिति'' [ नैलकण्ठीयम् ]

+ "आप्यायध्वमघ्न्यादेवभागम्' इति श्रुतिप्रसिद्धम् 'अघ्न्या' इति गवां नाम, न हन्तुं शक्या 'अघ्न्या' इति योगाद्; गवामवध्यत्वं श्रौतमित्यर्थः 'चकार' कृतवाम् 'आलभेत्' हिंस्यात्''

[ नैलकण्ठीयम् ]

ईदृशानशिवान्घोरानाचारानिह जाजले, केवलाचरितत्वात्तु निपुणो नाऽवबुध्यसे;
कारणाद्धर्ममन्विच्छेन्, न लोकचरितं चरेत् 卐 यो हन्याद्, यश्च मां स्तौति, तत्रापि शृणु जाजले,
समौ तावपि मे स्यातां, न हि मेऽस्ति प्रिया-ऽप्रियम्; एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः।
उपपत्त्या हि सम्पन्नो, यतिभिश्चैव सेव्यते, सततं धर्मशीलैश्च निपुणेनोपलक्षितः ||"
आचारस्याऽऽत्मतुष्टेश्च भट्टपाद-कुमारिलः, प्रामाण्यमन्यथाऽप्याह मीमांसा-तन्त्रवार्तिके।
"यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता, पुण्यकृद्ध्यानवत् तस्मादाचारेष्वपि सा मता।
यथा वा वरदानादौ देवताराधनोद्भवे, 'यद्वक्ष्यसि स मन्त्रस्ते विषघ्न' इति मन्त्रिते,
लोकः स्मरति तं मन्त्रं विषापहरणादिषु; यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिं
दन्तैर्गृह्णाति, तामाहुः समस्तविषहारिणीं;
यथा वा यां भुवं कश्चिदध्यावसति पुण्यकृत्, तत्सम्पर्कपवित्रत्वात्सेष्यते पुण्यकारणं;
तथाऽऽचारात्मतुष्ट्यादिधर्म्यं धर्ममयात्मनां वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः" इति। § §

---

卐 "केवलेति; मधुपर्कादौ गवाद्यालम्भः पूर्वैः कृत इत्यन्धपरम्परामात्रात्करोषि; न तु तद्बुद्ध्या। 'कारणाद्' हेतुतः, येन भूतानामभयं स धर्म इति जानीयात्, न गतानुगतिकः स्यादित्यर्थः' [ नैलकण्ठीयम् ]

|| म० भा० शां० अ० २६२। "प्रियाऽप्रियं" हर्ष-विषादौ, तौ हि हिंसायां प्रवर्तयतः, तथा चाऽऽपस्तम्बः—हृष्टो दृप्यति, दृप्तो धर्ममतिक्रामति, धर्माऽतिक्रमात्रश्यति; इति; क्रुद्धो हन्यात् पितॄनपि' इति; तस्मात्, सर्वभूताऽभयप्रदानमेव महान् धर्म इत्याशयः" [नैलकण्ठीयं म० भा० शां० अ० २६२ ]।

§. "वेदो धर्ममूलं;...वेद-शब्देन ऋग्यजुःसामानि ब्राह्मणसहितान्युच्यन्ते। तानि च अध्येतॄणां वाक्यान्तरेभ्यः प्रसिद्धभेदानि। उपदेशपरम्परासंस्कृता अध्येतारः श्रुत्वैव वेदोऽयमिति प्रतिपद्यन्ते, यथा ब्राह्मणोऽयमिति। तत्र वाक्यसमूहेऽपि 'अग्निमीळे' 'अग्निर्वै देवानामवम' इत्यादौ 'संसमिद्युवसे' 'अथ महाव्रतमि'त्यन्ते, वेदशब्दः प्रयुज्यते; तदवयवभूतेषु केवलेषु वाक्येष्वपि।...

व्युत्पाद्यते च वेदशब्दः—विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थमस्मादिति 'वेदः'। तच्च वेदनमेकैकस्माद्वाक्याद्भवति, न यावानृग्वेदादिशब्दवाच्योऽध्यायाऽनुवाकसमूहः।...

स च वेदो बहुधा भिन्नः—सहस्रवर्त्मा सामवेदः, सात्यमुग्रिराणायनीयादिभेदेन; एकशतमध्वर्यूणां, काठकवाजसनेयकादिभेदेन; एकविंशतिर्बाह्वृच्या, आश्वलायनैतरेयादिभेदेन; नवधा आथर्वणं, मोदक-पैप्पलादकादिभेदेन।...

स वेदो विशिष्टः शब्दराशिरपौरुषेयो मन्त्र-ब्राह्मणाख्योऽनेकशाखाभेदभिन्नः धर्मस्य 'मूलं' प्रमाणं, परिज्ञानहेतुः। 'कारणं' मूलं, तच्च वेद-स्मृत्योर्धर्मं प्रति ज्ञापकतयैव, न निर्वर्तकतया, न च स्थिति-हेतुतया, वृक्षस्येव।

धर्मशब्दश्च प्राग्व्याख्यातः; यत्पुरुषस्य कर्त्तव्यं प्रत्यक्षाद्यवगम्यविलक्षणेन स्वभावेन श्रेयःसाधनम्। कृषि-सेवादि भवति पुरुषस्य कर्त्तव्यं, अस्य च तत्साधनत्वस्वभावोऽन्वय-व्यतिरेकाभ्यामवगम्यते; यादृशेन व्यापारेण कृष्यादेर्व्रीह्यादिसिद्धिः, साऽपि प्रत्यक्षाद्यवगम्यैव। यागादेस्तु साधनत्वं येन च रूपेण अपूर्वोत्पत्ति र्व्यवधानादिना, तन्न प्रत्यक्षाद्यवगम्यम्। श्रेयश्च अभिलषितस्वर्ग-ग्रामादिफलप्राप्तिः सामान्यतः सुखशब्द-वाच्या। व्याधि-निर्धनत्वा-ऽसौख्य-नरकादिफलप्राप्तिः सामान्यतो दुःखशब्दवाच्या, तत्परिहारश्च। अन्ये तु परमानन्दादिरूपं 'श्रेयः'।

अयं धर्मो ब्राह्मणवाक्येभ्योऽवगम्यते लिङ्गादियुक्तेभ्यः; क्वचिच्च मन्त्रेभ्योऽपि 'वसन्ताय कपिञ्ज-लानालभते' इत्येवमादिभ्यः।

'अखिलः' कृत्स्नः; न किञ्चित्पदं, वर्णो, मात्रा वा, यन्न धर्माय।...विध्यर्थवादमन्त्रनामधेयात्मको वेदः;...सर्वेषामेतेषां धर्मप्रतिपादनपरत्वम्।...तस्मात्सिद्धं कृत्स्नस्य वेदस्य धर्ममूलत्वम्। अन्ये तु श्येनादिवाक्यानां धर्मोत्पत्तिमत्त्वाभावमाशङ्कमाना निषेधानां च 'न लशुनं भक्षयेद्' इत्यादीनामखिलग्रहणं मन्यन्ते।

कैश्चित्तु 'मूल' शब्दः कारणपर्यायो व्याख्यायते; धर्मस्य वेदो मूलं, प्रतिष्ठाकारणं साक्षात्प्रणाड्या च—'स्वाध्यायमधीयीत' 'ऋग्वेदं धारयन्विप्रः' इत्यादिचोदनासु साक्षात्, अग्निहोत्रादिकर्मस्वरूपज्ञापकतया प्रणाड्या।

'स्मृति-शीले च तद्विदाम्'; 'अनुभूतार्थविषयं विज्ञानं स्मृतिरुच्यते'। तच्छब्देन वेदः प्रत्यवमृश्यते, तं विदन्ति 'तद्विदः'; वेदार्थविदाम्—'इदं कर्त्तव्यम्, इदं न कर्त्तव्यम्' इति यत् स्मरणं तदपि प्रमाणम्।

स्मृति-शीले च तद्विदाम्; स्मृतिश्च शीलं च स्मृति-शीले। 'शीलं' राग-द्वेषप्रहाणमाहुः; तच्च धर्ममूलं वेद-स्मृतिवन्न ज्ञापकतया, किन्तु निर्वर्तकत्वेन; राग-द्वेषप्रहाणाद्धि धर्मो निर्वर्तते।

ननु च 'श्रेयःसाधनं धर्मं' इत्युक्तं; राग-द्वेषप्रहाणमेव च तत्स्वभावम्। तत्राऽसति व्यतिरेके किमुच्यते 'रागादिप्रहाणाद्धर्मो निर्वर्तत' इति ?।

उक्तमस्माभिः—'धर्मशब्दोऽयं स्मृतिकारैः कदाचिद्विधिनिषेधविषयभूतायां क्रियायां प्रयुज्यते, कदाचित्तदनुष्ठानजन्य आफलप्रदानाऽवस्थायिनि कस्मिंश्चिदर्थे; तस्य च सद्भावे शब्द एव प्रमाणं; यदि हि यागस्तथाविधं वस्त्वनुत्पाद्य विनश्येत्, तदा कालान्तरे कुतः फलोत्पत्तिः ? तदेतद्वस्तु, 'धर्म' शब्देनाऽत्राभिप्रेतम्; तस्य 'शीलं' मूलमिति न किञ्चिदनुपपन्नम्। तदभिप्राया एव व्यवहाराः—'एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः' इति। क्रियाया, अनुष्ठानसमनन्तरमेव नाशात्, कुतः कालान्तराऽन्वयः ?

वयं तु ब्रूमः—'समाधिः' शीलमुच्यते; तथाहि शील समाधाविति धातुषु पठ्यते; समाधानं च मानसो धर्मः, यच्चेतसोऽन्यविषयव्याक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणता, तच्छीलमुच्यते। द्वन्द्वश्चाऽयमितरेतरयोगे; तेन परस्परसापेक्षयोः स्मृति-शीलयोः धर्मं प्रति प्रामाण्यमेवाऽभिप्रेतं, न पूर्ववन्निर्वर्तकत्वम्; एतदुक्तं भवति—समाधानवती या स्मृतिः सा प्रमाणं, न स्मृतिमात्रम्। तेन सत्यपि वेदार्थवित्त्वे यदतत्पराणां स्मरणं न तद्धर्ममूलं, भ्रान्त्यादिसंभवाच्छास्त्रार्थाऽवधानशून्यानाम्।...विदुषामुपाध्यायादागमितविद्यानां तथा तदभ्यासपराणामनुष्ठानपराणां च स्मृतिः प्रमाणम्। एतत्सर्वं मन्वादीनामासीद् इति स्मर्यते; नाऽन्यथा तत्कृतेषु ग्रन्थेषु शिष्टानां परिग्रहोपपत्तिः।...अद्यत्वेऽपि यस्यैतद्धेतुसद्भावः सोऽपि मन्वादिवद् ग्राह्यवाक्यः स्यात्। तथा च विदुषां प्रायश्चित्ताद्युपदेशे; तथाभूता एव परिषत्त्वेन प्रमाणीभवन्ति—'एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तम' इति। अत एव स्मर्त्तृपरिगणना—'मनुर्विष्णुर्यमोऽङ्गिरा' इति निर्मूला; तथाहि—'पैठीनसि-बौधायन-प्रचेतःप्रभृतयः' शिष्टैरेवंरूपाः स्मर्यन्ते, न च परिगणनायामन्तर्भाविताः; सर्वथा यमविगानेन शिष्टाः स्मरन्ति वदन्ति वा एवंविधैर्गुणैर्युक्तं, तेन चैतत्प्रणीतमिति तस्य वाक्यं सत्यपि पौरुषेयत्वे धर्मे प्रमाणं स्यादिति 'स्मृति-शीले च तद्विदाम्' इत्यस्यार्थः। अद्यत्वे य एवंविधैर्गुणैर्युक्तः ईदृशेनैव च हेतुना ग्रन्थमुपनिबध्नीयात् स उत्तरेषां मन्वादिवत्प्रमाणीभवेत्।

'आचारश्चैव साधूनाम्'; 'च' शब्देन वेदविदामिति सम्बध्यते, पदद्वयेन शिष्टत्वं लक्ष्यते; शिष्टानां य आचारः सोऽपि धर्मे मूलम्; 'आचारो' व्यवहारः = अनुष्ठानम्; यत्र श्रुति-स्मृतिवाक्यानि न सन्ति, शिष्टाश्च धर्मबुद्ध्याऽनुतिष्ठन्ति, तदपि वैदिकमेव पूर्ववत्प्रतिपत्तव्यम्।...ईदृश आचारः; एषोऽपि हि स्वभावभेदेन, पुरुषाणां मनःस्वास्थ्य-दौःस्थ्यादिभेदेनाऽनेकरूपः प्रतिविशेषमानन्त्याद् अशक्यो ग्रन्थेनोपनिबद्धुम्। यदेव बहुशः प्रियमस्येत्युपलक्षितं तदेवाऽवसरान्तरे विपरीतं सम्पद्यते;...न तत्र

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः , स सर्वोऽभिहितो वेदे, सर्व-ज्ञानमयो हि सः ।७।
सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा , श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ।८।

---

पूर्वश्लोके तु सामान्यात्प्रामाण्यं विहितं स्मृतेः ; अत्र मनुस्मृतेरस्या वैशेष्यमभिधीयते ।
"यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ,
तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम्"※
"ऋचो, यजूंषि, सामानि, मन्त्रा आथर्वणाश्च ये , सप्तर्षिभिस्तु यत्प्रोक्तं, तत्सर्वं मनुरब्रवीत्"†
"वेदार्थोपनिबद्धत्वात्प्राधान्यं हि मनोः स्मृतम् , मन्वर्थविपरीता या, सा स्मृतिर्न प्रशस्यते ।
तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च , धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते"‡
"यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् , नहि तत्समतिक्रम्य वचनं हितमात्मनः"¶
"तस्य कर्मविवेकार्थं शेषाणामनुपूर्वशः , स्वायंभुवो मनुर्धीमानिदं शास्त्रमकल्पयत् ;
अस्मिन्धर्मोऽखिलेनोक्तो, गुणदोषौ च कर्मणाम् , चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ;
देशधर्माञ्जातिधर्मान्कुलधर्मांश्च शाश्वतान् , पाषण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान्मनुः"
मनुर्यदवदत्किञ्चित्तद्भेषजमिति श्रुतिः ; तस्मादिदमुपादेयं दुःखहान्यै, सुखाप्तये ।७।
प्रागुक्तं धर्ममूलत्वं वेदादीनाम्; अथाऽधुना , तेषां स्वबुद्धियोगेन मीमांस्यत्वं विधीयते ।
सर्वं = वेदादिशास्त्रं, तु निःशेषं निखिलं, धिया अन्वीक्ष्यैव, श्रुतिप्रोक्तमपि धर्मं स्वमाचरेत् ।
"ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः ;
यस्तन्न वेद, किमृचा करिष्यति ? य इत्तद्विदुस्त इमे समासते ।" ×
"यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किम् ?
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ?"
उभौ यौ कुरुतः कर्म यश्च वेद, न वेद यः , तयोर्यो विद्यया कुर्यात्तत्कृतं वीर्यवत्तरम् ।

---

सामान्यतः शक्यं वेदानुमानं, न विशेषतः; अष्टकादीनां तु नियतैकरूपसमस्तप्रयोगस्मरणमित्येष स्मृत्याचाराणां भेदः ।

'आत्मनस्तुष्टिरेव च' धर्ममूलमित्यनुषज्यते, वेदविदां साधूनामिति च । अस्याश्च धर्ममूलत्वं प्रामाण्येनैवेत्याहुः; यत्र ह्येवंविधानामनुष्ठेयेऽर्थे मनः प्रसीदति, द्वेषो न भवति, स धर्मः ।

ननु च यस्य प्रतिषिद्ध एवार्थे मनः प्रसीदेत् स धर्मः प्राप्नोति, विहिते च किङ्कथिका स्यात् स न धर्म इति ?...

एवमेतद्—ईदृशानां महात्मनां मतिमतां महाप्रभावो मनःप्रसादो येनाऽधर्मोऽपि धर्मतामेति धर्मश्चाऽधर्मतां, न रागद्वेषादिदोषवताम्; यथा रुमायां यत्किञ्चिद् द्रव्यं प्रविशति, तत्सर्वं लवणसात्सम्पद्यते; एवं वेदविदा सहसोत्पन्नेन मनःपरितोषेण सर्वं निर्मलीक्रियते ।...अथवा नैव तेषामधर्मे आत्मा परितुष्यति; यथा विषघ्नीमेवौषधीं नकुलो दशति, नाऽन्याम्; अत उच्यते—'नकुलो यां यां दशति सा सा विषघ्नोति' । इह भवन्तश्चाहुः—'ये वैकल्पिकाः पदार्थास्तेषु यस्मिन्पक्षे मनःप्रसीदति स पक्ष आश्रयितव्यः ("वैकल्पिके आत्मतुष्टिः प्रमाणम्" इति गर्गः ) वक्ष्यति च द्रव्यशुद्धौ प्रायश्चित्तेषु च—'तस्मिंस्तावत्तपः कुर्याद् यावत्तुष्टिकरं भवेत्' । अथवा योऽश्रद्दधानो नास्तिकतया तस्याऽनधिकारमाह; नास्तिकस्य हि न वैदिकं कर्म कुर्वतोऽपि आत्मा तुष्यति, अतस्तेन क्रियमाणमपि कर्म निष्फलमेव । अथवा सर्वकर्मविषयो भावप्रसाद उपदिश्यते; अनुष्ठानकाले क्रोध-मोह-शोकादि त्यक्त्वा प्रमुदितेन भाव्यम्, अतश्च शीलवदस्याः सर्वशेषतया धर्ममूलत्वाऽभिधानम्" [ मनौ २, ६ मे० ति० भाष्यम् ]

※ ऋ० सं० १-८०-१६ । † मात्स्ये, वायौ च । ‡ बृहस्पतिः । ¶ स्मृ० चं० धृतम् अङ्गिरोवचनम् ।
× ऋ० सं० १-१६४-३९ ।

श्रुति-स्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः , इह कीर्तिमवाप्नोति, प्रेत्य चानुत्तमं सुखम् ।९।
श्रुतिस्तु वेदो विज्ञेयो , धर्मशास्त्रं तु वै स्मृतिः ।

---

"केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः , बुद्धिहीनविचारे तु धर्महानिः प्रजायते"
पौरुषेयमुपादेयं वचनं बुद्धिसङ्गतम् ; अन्यदार्षमपि त्याज्यं सद्भिर्धर्मविशुद्धये ।
"युक्तियुक्तमुपादेयं वचनं बालकादपि , अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना" +
"युक्तियुक्तं वचो ग्राह्यं, न ग्राह्यं गुरुगौरवात् ; सर्वशास्त्ररहस्यं तद्याज्ञवल्क्येन भाषितम्" ÷
"नैतच्छ्रुत्वागमादेव तव धर्मानुशासनम् , प्रज्ञासमवहारोऽयं कविभिः संभृतं मधु ।
न धर्मवचनं वाचा, नैव बुद्ध्येति, नः श्रुतम् ; इति बार्हस्पत्यविज्ञानं प्रोवाच मघवा स्वयम् ।
न त्वेव वचनं किञ्चिदनिमित्तादिहोच्यते , स्वविनीतेन शास्त्रेण ह्यविद्यः स्यादथाऽपरः ।
लोकयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः ; समुद्दिष्टं सतां धर्मं स्वयमूहेत पण्डितः ।
अमर्षाच्छास्त्रसंमोहादनिमित्तादिहोच्यते शास्त्रं, प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ।
आगमागतया बुद्ध्या वचनेन प्रशस्यते , अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ।
अनुपागतमेवेदं शास्त्रमेवमपार्थकम् , दैतेयानुशना प्राह संशयच्छेदनं पुरा"°
"तस्मात् कौन्तेय, विदुषा धर्माधर्मविनिश्चये , बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं कृतात्मना" ||
वेदो मान्यः, पुराणं वा, कुरानो, वैवलोऽथवा? अस्यवेदोक्तवाक्यस्य कोऽर्थो,ऽयं वाऽन्य एव वा?
इत्यादिसंशये जाते, निर्णयं कः करिष्यति ? विना सद्बुद्धिमात्मीयां भूयोलोकमताऽनुगाम् ?
तस्मात्सर्वं तु वेदादिशास्त्रमध्यात्मचेतसा निःशेषमनुसन्धाय, स्वधर्मं प्रविशेद्बुधः ।८।
श्रुतिस्मृत्युदितं धर्मं सम्यग् बुद्ध्या च निश्चितम् , अनुतिष्ठन्नरः कीर्तिं सुखं च परमश्नुते ।९।

श्रुति-स्मृति-परिचयः, तत्र वेदः

"विद ज्ञाने" स्मृतो धातुस्ततो 'वेदः' प्रसिध्यति , तस्मान्मुख्यतया वेदशब्दो ज्ञानार्थबोधकः ।
यं साक्षात्कृतधर्मभ्यः श्रुत्वा चक्रुः श्रुतर्षयः ग्रन्थं, तत्रापि शिष्टानां 'वेद'संज्ञा प्रवर्तते × ;
ग्रन्थोऽपि वेदजन्यत्वादभेदाध्यवसायतः वेद इत्युच्यते लोके चिरादेव महाजनैः ।
न्याय-वेदान्त-मीमांसा-सांख्य-शब्दैश्च कथ्यते बुद्धिरेव, परन्त्वेभिः शास्त्रनामापि गृह्यते ।
ज्ञानपर्यायवेदादिशब्दैरेवं निगद्यते ग्रन्थोऽप्यध्यात्मविज्ञानजन्यत्वादिति सन्मतम् ।
इष्टप्राप्तेस्तथाऽनिष्टपरिहारस्य साधनं यो वेदयति वेदः सोऽध्यात्मविद्यात्मकः परः ,
अपरः स तु विज्ञेयः साङ्गः सामादिलक्षणः । "द्वे विद्ये वेदितव्ये;" ते धी-शास्त्रलक्षणे स्मृते + ।

---

+ "पद्मजन्मना" इति पाठ० योगवा० । ÷ या० शि० ।

° म०भा० शां० अ० १४२ । || म० भा० शां० अ० १४१ श्लो० १०४ ।

× "साक्षात्कृतधर्माण ऋषयो बभूवुः ; तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्यः उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च । बिल्मं = भिल्मं, भासनमिति वा" ( नि० १–२०–२ )

+ "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा—ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषमिति । अथ परा ( अध्यात्म-विद्या, सद्बुद्धिरूपा ) यया तदक्षरमधिगम्यते" ( मुण्ड० १ खं० १मं० ४–५ )

"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैव, अपरा च; तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । इतिहास-पुराणं न्यायो मीमांसा धर्मशास्त्राणीत्यपरा; यया तदक्षरमधिगम्यते" इति प्राचीनतमः पाठः न्यायवार्तिकभूमिकायां ( पृ० २० टि० १ ) निर्दिष्टो द्रष्टव्यः ।

यत्तूपनिषदामेव परविद्यात्वमुच्यते ; तन्न प्रामाणिकं, तासामन्तर्भावादृगादिषु ।
मन्त्रब्राह्मणयोः काचित्, काचिदारण्यकेष्वपि उपनिषद्विकीर्णाऽस्ति तस्माद्वेदान्त उच्यते ।
वेदाद्भिन्नो न वेदान्तः, शरीरान्न पृथक् शिरः ; तस्मादुपनिषद्वाक्यं ज्ञानकाण्डमृगादिषु ।
बुद्धिरेव परा विद्या तस्मादध्यात्मसंज्ञिता ; अपरा साङ्गवेदाख्या सहोपनिषदा मता ।
द्वयोस्तु वेदशब्देन विद्ययोर्ग्रहणं मतम् ; शास्त्रादभ्यर्हिता बुद्धिस्तस्मात्सैव परा स्मृता ।
तस्माद्वेदेन = सद्बुद्ध्या, वेदं = शास्त्रं विचारयेत् ; यो हि बुद्ध्यानुसन्धत्ते धर्मं वेत्ति स तत्त्वतः ।
बुद्ध्यैव जन्यते शास्त्रं तद्रहस्यं च बुध्यते ; बुद्धिपूर्वा कृतिर्वेदे मन्त्रब्राह्मणलक्षणे ।
अतः श्रेयस्तरो वेदो बुद्धिसंज्ञः परो मतः , अथर्वऋग्यजुःसाम-लक्षणश्चापरः स्मृतः ।
"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति स्मृतिः ÷ । "इतिहासपुराणं च पञ्चमो वेद उच्यते" ; †
"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः, पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः, अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ।
दश चाष्टौ च विख्याता एता धर्मस्य संहिताः, एतासामेव विद्यानां व्यासमाह महेश्वरः ।
शतानि त्रीणि शास्त्राणां, महातन्त्राणि सप्ततिम् , व्यास एव तु विद्यानां महादेवेन कीर्तितः ।
तन्त्रं पाशुपतं नाम, पञ्चरात्रं च विश्रुतम् , योगशास्त्रं च, साङ्ख्यं च, तन्त्रं लोकायतं तथा ,
तन्त्रं ब्रह्मतुला नाम, तर्कविद्या, दिवौकसाम् , सुखदुःखार्थजिज्ञासा, कारणं चेति विश्रुतम् ,
तर्कविद्यास्तथा चाष्टौ स चोक्तो न्यायविस्तरः, दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः ,
पुराणाश्च प्रणीताश्च तावदेवेह संहिताः, धर्मशास्त्राणि तद्वच्च, एकार्थानि च नान्यथा ,
एकार्थानि पुराणानि, वेदाश्चैकार्थसंहिताः, नानार्थानि च सर्वाणि ततः शास्त्राणि शङ्करः
प्रोवाच भगवान्देवः कालज्ञानानि यानि च, चतुःषष्टि-प्रमाणानि, आयुर्वेदं च सोत्तरम् ,
अष्टादश-विकल्पां तां दण्डनीतिं च शाश्वतीम् , गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ;
इत्येताः शङ्करप्रोक्ता विद्याः शब्दार्थसंहिताः, पुनर्भेदसहस्रं तु तासामेव तु विस्तरः ।
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः, शश्वदभ्यस्यते लोके वेद एव तु सर्वशः ।
वेदाश्चतस्रः संक्षिप्ता वेदवादाश्च ते स्मृताः, एतासां पारगो यश्च स चोक्तो वेदपारगः ।
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः, शुक्रः स्वायंभुवश्चैव मनुः परमधर्मवित् ,
ब्रह्मा च परमो देवः सदा सर्वैः सुरासुरैः, सर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ।
अहं शान्तनवो भीष्मः प्रसादान्माधवस्य च, शङ्करस्य प्रसादाच्च ब्रह्मणश्च कुरुद्वह ,
वेदपारग इत्युक्तो याज्ञवल्क्यश्च शर्वशः ✻"
"प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुध्यते ; एतं विदन्ति वेदेन, तस्माद्वेदस्य वेदता" ‡

---

"द्वे ब्रह्मणी वेदितव्ये-शब्दब्रह्म, परं च यत् ,
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" ( म० भा० शां० २३२,३० )

"द्वे ब्रह्मणी वेदितव्ये-शब्दब्रह्म, परं च यत् ; 'द्वे विद्ये वेदितव्ये' हि इति चाऽऽथर्वणी श्रुतिः ।
द्विविधं ब्रह्म वक्ष्यामि, शृणु व्यासाऽखिलात्मगम्-पुराणं परमाग्नेयं ब्रह्मविद्याऽक्षरं परम्,
ऋग्वेदाद्यपरं ब्रह्म, सर्ववेदमुखं परम् द्वे विद्ये भगवान्विष्णुः परा चैवापरा द्विज,
ऋग्यजुःसामाथर्वाख्या वेदा, अङ्गानि षड् द्विज-शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः
छन्दोऽभिधानं, मीमांसा, धर्मशास्त्रं, पुराणकं, न्यायो वैद्यक-गान्धर्वं, धनुर्वेदोऽर्थशास्त्रकम्,
अपरेयं; परा विद्या यया ब्रह्माऽवगम्यते, यत्तददृश्यमग्राह्यमगोत्र-चरणं ध्रुवम्" [अग्नि पु० अ०१]

÷ आप० परिभाषा० ३१ । † भाग० १-४-३० । ✻ महाभारते शान्तिपर्वणि १२२ अध्याये श्लो० ३१—४७ कुं० सं० । ‡ सायणीयवेदभाष्यभूमिकादिषु प्रयुक्तम् ।

ते सर्वार्थेष्वमीमांस्ये (?) ताभ्यां धर्मो हि निर्बभौ ।१०।

अथ स्मृतिः—

स्मरणं, मननं, ध्यानं, प्रणिधानं च, चिन्तनं , निदिध्यासनमित्यादि, स्मृतिवाचकमिष्यते ।
अननुभूतपूर्वेऽपि विषये या प्रजायते बुद्धिरात्ममनोयोगात्, स्मरणात्सोच्यते स्मृतिः + ।
येषां मतेऽनुभूतार्थाऽसंप्रमोषः स्मृतिः स्मृता ÷ , तेषामपि न सा बुद्धि-प्रभेदादतिरिच्यते ।
सम्यग्ध्यानेन निश्चित्य कार्याकार्यविनिर्णयं , यदाप्तैः क्रियते धर्मे शास्त्रं, तदपि च स्मृतिः ।

"ध्यै चिन्तायां," ततो ध्यानं; "स्मृ चिन्तायां" ततः स्मृतिः ;
ध्यायतीति पदस्येष्टा विवृतिः स्मरतीत्यतः ।

ध्यानजं सर्वमेवैतद्,यच्छास्त्रेष्वभिशब्दितं , तस्मादध्यात्मबुद्ध्यैव कार्यः शास्त्रार्थनिर्णयः ।
वेदोपाङ्गतया धर्मशास्त्रादेरपि वेदता ; पृथगुक्तिः प्रपञ्चार्था, ध्यानिकत्वेन वा स्मृतेः ।
ऋषयो मन्त्रद्रष्टारो वेदं कुर्वन्ति दर्शनात् ; मननात् पर्षदः, सन्तो वा, शास्त्रं तु यथास्थिति ।
यत्त्वपि श्रूयते काले काले लोकमतात्मकं ; वाक्यं नव्यविधानार्थं, तच्चापि श्रवणाच्छ्रुतिः ।
तन्मूलकं विधानं तु संस्मृत्य करणात्स्मृतिः ; एवं प्रतियुगं शास्त्रमन्यदन्यद्विधीयते ।
यदा यदा प्रकुर्वन्ति धर्मचक्रप्रवर्त्तनं सन्त,स्तदा तदा चान्यद्धर्मशास्त्रमपीष्यते ।
पूर्वधर्मसमाम्नायो लोकाभ्युदयबाधकः यदा भवति, लोकेषु तदाऽन्या जायते श्रुतिः ।
आन्दोलनेन तां श्रुत्वा लोकवाणीं विधीयते यद्विधानं, तदप्याहुः श्रुतिं वेदं च वेदनात् ।
तां लोकेषु विकीर्णां तु स्मृत्वा स्मृत्वा विरच्यते यद्विधानं, तदप्याहुर्धर्मशास्त्रं तथा स्मृतिम् ।
क्रियते धर्मनानात्वं लोकैर्यथापरिस्थिति ; यथाप्रयोजनं चान्यद्धर्मशास्त्रं प्रणीयते ।
मनुष्याणां कृते धर्मो, धर्मशास्त्रं च जायते ; तस्मादेतद्द्वयं तेषां श्रेयसे परिवर्तते ।
"शृणु देवि, समुद्देशान्नानात्वं धर्मसङ्कटे , धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः ;
स्मृति-धर्मश्च बहुधा सद्भिराचार इष्यते ;
देशधर्माश्च दृश्यन्ते, कुलधर्मास्तथैव च , जातिधर्माश्च वै धर्मा, गणधर्माश्च शोभने ,
शरीरकालवैषम्यादापद्धर्मश्च दृश्यते ; एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः" 卐
"अथ यद्यद्यदा भावि कालयोगाद्युगादिषु , तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ;
श्रुतिरेषा समाख्याता, तदर्थं कारणात्मना अनाम्नायविधानाद्वै वेदा ह्यन्तर्हिता यथा" ⁂
"आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ; आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः" ‖
इत्थं श्रुतिं स्मृतिं चान्यां प्रतिदेशं यथास्थिति कुर्वन्ति पुरुषार्थेभ्यस्तत्तद्देशमहाजनाः ।

श्रुति-स्मृति-मीमांस्यत्वम्

"ते सर्वार्थेषु मीमांस्ये" एवं पाठ इहोचितः ; एष एव तु सत्पाठो मनोर्भाष्यमये धृतः
यद्, भविष्यपुराणेऽपि; ततः शुद्धोऽयमेव हि ⊙ "अमीमांस्ये" इति प्राप्तः शोधकादिप्रमादतः ,
यद्वा व्याख्यातृभिः क्षिप्तः स्वोत्प्रेक्षितार्थसिद्धये ; पूर्वापरविरोधेन मूलपाठो नहीदृशः ।
"सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा" § "यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः" ¶
एवमादौ तथान्ते च सत्तर्कात्मिकया धिया मीमांस्यत्वं श्रुतिस्मृत्योः कण्ठादाह मनुः स्वयम् ;

---

+ "आत्ममनसोः संयोगविशेषात् , संस्काराच्च स्मृतिः" ( वै० द० ९-२-६ )

÷ "अनुभूतविषयाऽसंप्रमोषः स्मृतिः" ( यो० द० पा० १ सू० ११ )

卐 महाभा० अनु० अ० २३९ । ⁂ म० भा० शां० अ० २१२ । ‖ म० भा० शां० अ० २६६ ।

⊙ भविष्यपु० ब्रा० प० अ० ७ श्लो० ५६, द्रष्टव्यम् । § मनौ २-८ । ¶ मनौ १२-१०६ ।

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः, स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ।११।

प्रवर्तते च मीमांसाशास्त्रं वेदार्थशुद्धये, इतिहास-पुराणाभ्यां वेदोपबृंहणं स्मृतम्,
स्वयं बिभेति वेदोऽपि स्वल्पबुद्धेः प्रहारतः, अतः श्रुतिस्मृती स्यातां मीमांस्ये इति निर्णयः ।
ते सर्वार्थेषु = धर्मार्थकाममोक्षेषु, सज्जनैः सम्यग्विचारणीये स्तः सुव्यवस्थाप्रसिद्धये ।
"अमीमांस्ये" इति ग्रन्थे स्याच्चेदेव दुराग्रहः, हेतुवादान्न मीमांस्ये इत्यर्थः क्रियतां तदा ।
याभ्यां प्रकाशते धर्मस्ते मीमांस्ये श्रुतिस्मृती, नो चेद्धर्मस्य हानिः स्यादधर्मश्च प्रसज्यते ।१०।

श्रुति-स्मृत्योरदूष्यत्वम्

मीमांस्यत्वं श्रुतिस्मृत्योः प्रोक्तं शुद्धधिया सता ; अधुना हेतुवादेन तद्दूषणं निषिध्यते ।
हेतुरुच्छिङ्खलः स्वार्थो रागद्वेषादिमूलकः, तन्निमित्तमसच्छास्त्रं हेतुशास्त्रमिहोच्यते ।
तदाश्रयेण ते धर्ममूले श्रुतिस्मृती उभे द्विजोऽपि योऽवमन्येत, बहिष्कार्यः स पर्षदः ।
ज्ञानं, तन्मूलसच्छास्त्रं 'यः कुतर्केण निन्दति, स वेदनिन्दको ज्ञेयो विद्याद्वेषी नराधमः ।
स्वभिन्न-परलोकार्थो नास्तीति मतिरीदृशी यस्य कामात्मनः पुंसः स एव नास्तिकः स्मृतः ।
यो दूषयति जल्पेन लोकतन्त्रात्मिकां श्रुतिं, महाजनगृहीतां च शिष्टस्मृतिं वितण्डया ;
अतिकामात्परार्थं वा स्वार्थाय बाधते च यः, स सभाया बहिष्कार्यः सद्भिर्वादविशुद्धये ।
विजिगीषुकथा जल्पः स्वपक्षहठहेतुकः, विपक्षस्थापनाहीनो वितण्डा स च कथ्यते ।
सभ्येषु विजिगीषाया भावे सति दुराग्रहात्, हेतुवादेन बाध्येत न्याय्यः पक्षोऽपि वै सताम् ।
साम्प्रदायिकसभ्यानां स्वार्थवादेन भूयसा, व्यवस्थापकपर्षत्सु दृश्यते न्यायबाधनम् !
वर्गवादाश्रयादेवं सदस्या बहवोऽपरे, सद्विधानं प्रबाधन्ते प्रजाऽभ्युदयसाधनम् ।
तस्माद्वैतण्डिकः सभ्यो जल्पको वा सहेतुकः, भ्रमान्निर्वाचितो लोकैर्निष्कास्यः पर्षदः सताम् ।
सद्वादिनस्तु ये लोकहितैकमात्रहेतवः, ते निर्वाच्या महात्मानः सद्विधानप्रसिद्धये ।
"वीतरागकथावादो" "वादः प्रवदतां हरिः" अध्यात्मविद्यया वादस्तस्माद्वादः प्रशस्यते ।

"वादे वादे जायते तत्त्वबोधः" तत्त्वज्ञानात्सत्यधर्मे प्रवृत्तिः,
धर्मादर्थः, काम-मोक्षौ च; तस्मात्, सेव्यो वादस्तत्त्वविज्ञानहेतुः ।

न ह्यनध्यात्मवित्कश्चिच्चिन्निश्चिनोति क्रियाफलम्, अनया क्रियया त्वेतत्फलं साध्यमितीदृशम् ।
कर्मणां तत्फलानां च ज्ञानाभावे तु यो विधिः क्रियेत, न भवेत्तेन लोकाऽभ्युदयसाधनम् ।
प्रत्युत जायतेऽनर्थः प्रायेणातः सदस्यतां पर्षदां नार्हति न्यायादेवानध्यात्मविन्नरः ।
लोकप्रतिनिधिः कार्यः साधुरध्यात्मवित्तमः, व्यवस्थापकपर्षत्सु लोकतन्त्रार्थसिद्धये ।
एवमाद्यर्थ एवाऽत्र द्योत्यते युक्तिसङ्गतः ; एतद्भिन्नप्रकाराच्च श्लोको व्याख्यायते त्वयम्—
"मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः, तत्प्रयुक्त-प्रयोक्तारो गृह्यकाराः समूचिरे*"

"एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा,
तान्येतानि (एतान्यति) प्रमाणानि, न हन्तव्यानि हेतुभिः
यस्तानि हेतुभिर्हन्यात्, सोऽन्धे तमसि मज्जति §"

"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्"
"पुराणं मानवो धर्मः, साङ्गो वेद,श्चिकित्सितम्, आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः"†
एवमाद्यभियुक्तोक्तेर्वेद-शास्त्रविरोधिभिः असत्तर्कैरसच्छास्त्राश्रयैः सद्धर्म-कारणे
श्रुति-स्मृती तिरस्कुर्याद् यस्तु वेदविनिन्दकः नास्तिकः स बहिष्कार्यो द्विजश्चेत्तत्समाजतः ;

* देवलस्मृ० । § स्मृ० चं० धृतं यमवचनम् । † महाभारते, विष्णुस्मृतौ, तत्त्वसंग्रहे च ।

वेदसंस्था द्विजस्यैव, तस्मात्तन्निन्दको द्विजः तत्सामाजिकदण्डार्हो न्यायाच्च व्यवहारतः ;
यस्यां समाजसंस्थायां यावद् यस्य सदस्यता तावत्तेन न कर्तव्या तद्विधानतिरस्क्रिया ;
अर्थाद्, असत्प्रमाणेन दुष्टतर्काश्रयेण वा तद्विधानविरोधो न कर्त्तव्यः स्वार्थभावतः ;
एवं कुर्वन्बहिष्कार्यस्तत्संस्थासर्वकर्मणः , अन्यथा कार्यहानिः स्यात् , तदुत्थानं च बाध्यते।
लोककल्याणहेतोश्चेत्तद्विधानानुशोधनम् अवश्यापेक्षितं यस्य सदस्यस्य मतौ भवेत् ,
तेन तन्नियमादेव सद्वादैः सहयोगिनां मतं स्वीयानुगं कृत्वा कार्यं तत्परिवर्त्तनम्।
न हि संस्था-सदस्येन तद्विरोधोऽविधानतः युक्तः स्यादिति सन्न्यायः शास्त्रे लोके च शस्यते।
तस्मात्, 'मूले' द्विजत्वस्व हेतुभूते, श्रुति-स्मृती, द्विजः सन्नपि यः कश्चिद् हेतुशास्त्राश्रयान्नरः
अवमन्येत नास्तिक्यात्, स तु सद्भिर्द्विजातिभिः वेदमूलस्वसंस्थाया निष्कास्यो धर्मशुद्धये।
इत्यर्थो द्विजशब्दस्य प्रयोगादिह सूच्यते। बहिष्कारः समाजाच्च संभवेत्समकर्मणः ;
द्विजैर्द्विजबहिष्कारो युज्यते द्विजकर्मणः नाऽद्विजे द्विजसंस्थाया दण्डः सामाजिकः पतेत्।
तस्मादत्र द्विजस्यैव वेद-स्मृतिविगर्हणे नास्तिक्यमिष्यते, संस्था-बहिष्कारश्च कथ्यते।
'हेतुशास्त्राश्रयाद्' एतन्निर्देशादनुमन्यते, सम्यक्तर्काऽनुसन्धानाद् वेद-स्मृतिपरीक्षणम्।
न हि "तर्काऽप्रतिष्ठानात्"§ सर्वस्तर्को निरस्यते ; स्वयं वेदान्तसूत्राणां तर्कायैव प्रवर्त्तनात्।
तर्कैर्वेदार्थमीमांसां कर्त्तुमेव प्रवर्तिता पूर्वोत्तरादिमीमांसात्रयी काण्डत्रयात्मिका।

---

"पुराणं, मानवो धर्मः, साङ्गो वेद,श्चिकित्सितम् , आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः।
मन्ये, तेनैव दत्तेयं जड़ेभ्यस्तैर्विभीषिका ; आज्ञासिद्धत्वमन्यत्र वाङ्मात्रात्किं नु वा भवेत् ?
यैः पुनः स्वोक्तिषु स्पष्टं युक्तार्थत्वं विनिश्चितं , तत्प्रत्यायनसामर्थ्यमात्मनश्च, महात्मभिः ,
कुतीर्थ्यमत्तमातङ्गमदग्लानिविधायिनम् , एवमस्ताऽखिलत्रासाः सिंहनादं नदन्ति ते—
'तापाच्छेदाच्च निकषात्सुवर्णमिव पण्डितैः , परीक्ष्य भिक्षवो ग्राह्यं मद्वचो, न तु गौरवात्"
तत्त्वसंग्रहे कारिकाः—३५८४—३५८८; अत्र चरमे श्लोके साक्षाद्भगवतो बुद्धस्य वचनमेवानूदितं, तच्चैतत्—
"युक्तियुक्तं वचो ग्राह्यं, न ग्राह्यं गुरुगौरवात् , सर्वशास्त्ररहस्यं तद् याज्ञवल्क्येन भाषितम्"
"अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् , अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ;
युक्तियुक्तमुपादेयं वचनं बालकादपि , अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना"
इति याज्ञवल्क्यशिक्षा-योगवासिष्ठादि-वैदिकसद्ग्रन्थोक्तार्थाऽनुसारमेवेति सुधीभिस्तोलनीयम्।

§ ब्रह्मसू० अ० २ पा० १ सू० ११। अत्र—"अथोच्येत, अन्यथा वयमनुमास्यामहे, यथा नाऽप्रतिष्ठादोषो भविष्यति। न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम्। एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते; केषाञ्चित्तर्काणामप्रतिष्ठितत्वदर्शनेन अन्येषामपि तज्जातीयकानां तर्काणामप्रतिष्ठितत्वकल्पनात्। सर्वतर्काऽप्रतिष्ठायां च लोकव्यवहारोच्छेदप्रसङ्गः, अतीत-वर्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुख-दुःख-प्राप्ति-परिहाराय प्रवर्तमानो लोको दृश्यते। श्रुत्यर्थविप्रतिपत्तौ चाऽर्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्यवृत्तिनिरूपणरूपेण क्रियते। मनुरपि चैवं मन्यते—
'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमं , त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता' ; इति,
'आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना यस्तर्केणाऽनुसन्धत्ते, स धर्मं वेद; नेतरः'
इति च ब्रुवन्।

अयमेव तर्कस्याऽलङ्कारो यदप्रतिष्ठितत्वं नाम; एवं हि सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति। न हि पूर्वजो मूढ आसीदित्यात्मनाऽपि मूढेन भवितव्यमिति किञ्चिदस्ति प्रमाणम्। तस्मान्न तर्काऽप्रतिष्ठानं दोषः।...क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते।...अत आगमवशेन, आगमानुसारितर्कवशेन च, चेतनं ब्रह्म जगतः कारणं, प्रकृतिश्चेति स्थितम्" इति शाङ्कर-भाष्यम्।

**वेदः, स्मृतिः, सदाचारः, स्वस्य च प्रियमात्मनः , एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ।१२।**

---

न्याय-साङ्ख्यादि शास्त्रं यत्साक्षात्तर्कमयं स्मृतं , तच्चापि वैदिकैः शिष्टैः प्रमाणं परमिष्यते ।
तस्माद्वैतण्डिकस्तर्को हेतुशास्त्राश्रयस्तु यः , तस्यैवोक्ताऽप्रतिष्ठानाद्धर्मज्ञानेऽप्रमाणता ।
वेदशास्त्राश्रयो यस्तु सत्तर्कस्तत्त्ववादिनां , तेन धर्मानुसन्धानं शास्त्रेष्वेव विधीयते ।
"वेदशास्त्राऽविरोधी च तर्कश्चक्षुरपश्यतां ; रूपमात्राद्धि वाक्यार्थः केवलान्नाऽवतिष्ठते ।
सतोऽविवक्षा, पारार्थ्यं, व्यक्तिरर्थस्य लैङ्गिकी , इति न्यायो बहुविधस्तर्केण प्रविभज्यते ।
शब्दानामेव सा शक्तिस्तर्को यः पुरुषाश्रयः ; शब्दाननुगतो न्यायोऽनागमेष्वनिबन्धनः"*
केचिद् बुद्धादिभिः प्रोक्तं वेदबाह्यागमं बुधाः हेतुशास्त्रमिति प्राहुः; तच्च सत्यं प्रतीयते ।
यया युक्त्या हि मन्वादेः प्रोच्यते वेदमूलता , तयैव बुद्धशास्त्रादेः सेत्यग्रे दर्शयिष्यते ।११।

( धर्मप्रमाणनिरूपणम् )

वेदनिन्दानिषेधो यः पूर्वश्लोके प्रदर्शितः , स एवावर्तते त्वत्र स्मृत्याचारात्मतुष्टिषु ;
अर्थाद्, वेदवदेवास्ति स्मृत्यादिर्धर्मलक्षणम् , तस्मात्सद्भिर्बहिष्कार्यः स्मृत्यादिनिन्दकोऽपि ना ;
एवं मेधातिथिः षष्ठश्लोकेनाऽस्य न्यचारयत् पौनरुक्त्य, मथ व्याख्यामन्यथापि व्यकल्पयत्।†
शीलस्याचार एवान्तर्भावः संभवतीत्यतः , धर्मप्रमाणमत्राऽऽहुश्चतुर्धेति तु केचन ।
वस्तुतः धर्ममूलं प्राक् षष्ठश्लोकेन दर्शितम् ; अत्र धर्मप्रमाणोक्तेः पौनरुक्त्यं न वर्तते ।

---

* वाक्यपदीय-ब्रह्मकाण्डे श्लो० १३६–३८ । अत्र—"शब्द एवोपदेष्टा; तत्सामर्थ्यमेवानुगच्छन्तो वक्तारो योग्यशब्दनिबन्धनयैव विवक्षया प्रवर्तन्ते । नियतां तु शब्दशक्तिमर्थप्रकरणलिङ्गवाक्यादिभिरनुगच्छति पुरुषे शब्दाश्रितमेव सामर्थ्यं पुरुषाश्रयोऽयं 'तर्क' इति मन्यन्ते । शब्दशक्तिरूपापरिगृहीतस्तु साधर्म्य-वैधर्म्यमात्रानुसारी सर्वागमोपघातहेतुत्वाद् 'अनिबन्धनः' शुष्कस्तर्क, इत्युच्यते; तद्यथा—
यद्, उदुम्बरवर्णानां घटीनां मण्डलं महत् , पीतं न गमयेत्स्वर्गं; किं तत्क्रतुगतं नयेत्"
इति वृत्तिः । एष श्लोको महाभाष्येऽपि ( अ० १ पा० १ आ० १ पृ० ३३ ) उदाहृतम्

† "नाऽत्र कश्चिद्विशेषः; वेदनिन्दाप्रतिषेधेन स्मृति-सदाचारा-ऽऽत्मतुष्टीनामपि निन्दकस्य बहिष्कारोऽनेन विहितः । तेषामपि वेदमूलधर्माऽभिधानम्, अतः स्मृत्यादिनिन्दको वेदनिन्दक एव । ननु श्लोकद्वयेन नाऽर्थः; एवं वक्तव्यम्—
'श्रुत्यादीनात्मतुष्ट्यन्तान्हेतुशास्त्राश्रयाद्द्विजः यो निन्देत्स बहिष्कार्यः साधुभिर्नास्तिकत्वतः' ।
उच्यते; नाऽऽचार्या ग्रन्थगौरवं मन्यन्ते; बुद्धिगौरवं यत्नेन परिहरन्ति; तस्मिन्हि सति असम्यगवबोधो धर्मस्य, स च पुरुषार्थं विहन्ति । भेदनिर्देशेऽपि हि चोदयेयुः—'वेद-ग्रहणमेव कर्त्तव्यं, सर्वस्य धर्मस्य वैदिकत्वात्;' तस्माद्विस्पष्टार्थं भेदेनोभयनिर्देशः; संक्षिप्तरुचीनां पूर्वश्लोकः, अन्येषां श्लोकद्वयम् ।
'स्वस्य च प्रियमात्मनः' इत्यनेन प्रागुक्ता आत्मतुष्टिरेवोक्ता; 'स्व'ग्रहणं वृत्तपूरणार्थम् ( वस्तुतस्तु 'स्व' ग्रहणं 'स्वस्य' प्रत्येकं निजस्यैव आत्मनः प्रियम् = आत्मतुष्टिः, धर्मे प्रमाणं, न तु 'आत्मनस्तुष्टिरेव च' इत्यत्र 'साधूनाम्' इत्यस्याऽनुवृत्तिरित्यर्थद्योतनार्थमेव कृतमित्यनुसन्धेयम् ) । एतत्साक्षाद्धर्मस्य लक्षणं, निमित्तं = ज्ञापकं; न पुनः प्रत्यक्षं, यथाऽन्यैरुक्तं—'साक्षात्कृतधर्माण' इति । 'विधा' शब्दः प्रकारवचनः—एकमेव धर्मे प्रमाणं वेदाख्यं, तस्य त्वेते भेदाः स्मृत्यादयः । ( वेद एव तु सर्वशः ) ।
अन्ये तूपसंहारार्थमिमं श्लोकं व्याचक्षते; समाप्तं धर्मलक्षणप्रकरणमिति पुनः पाठः समाप्तिं सूचयति; यथा द्विरभ्यासो वेदाङ्गेषु—'संस्थाजपेनोपतिष्ठन्त उपतिष्ठन्त' इति; तथा च पिण्डीकृत इव प्रागुक्तोऽर्थो हृदि वर्तते ; यथा नैयायिका 'अनित्यः' शब्द इति प्रतिज्ञाय साधनोपन्यासं कृत्वा निगमयन्ति 'तस्मादनित्यः शब्द' इति । प्रायेण चैषा ग्रन्थकाराणां रीतिः; तथा महाभाष्यकारोऽपि क्वचित्सूत्रं वार्तिकं वा पठित्वा व्याख्याय पुनः पठति" [ मनौ २, १२ मे० ति० भाष्यम् ।

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते;

---

यन्मूलं तत्प्रमाणं च धर्मस्येति निरूपितम् ; भेदो निर्वर्तकत्वेन, ज्ञापकत्वेन चेष्यते
वेदपाठेन धर्मोऽस्ति, धर्ममूलमतः श्रुतिः ; वेदेन ज्ञायते धर्म, स्तत्प्रमाणमपीति सः ;
एवं स्मृत्यादिपाठाद्यैः धर्मः सम्पद्यते, तथा ज्ञाप्यते चेति मूलत्वं प्रामाण्यं चोभयं स्थितम्।
शीला-ऽऽचारा-ऽऽत्मतुष्टीनां साक्षादेव स्वरूपतः धर्मनिर्वर्तकत्वेन, तन्मूलत्वमपि स्वतः;
प्रामाण्यमपि चैतेषां श्रेष्ठनिष्ठाऽनुकारतः ; श्रेष्ठ-शीलादिकं दृष्ट्वा लोकास्तदनुकुर्वते ।
इत्थं वेदादिषु ज्ञेयं धर्ममूलत्वमप्युत तत्प्रमाणत्वमित्येतद् वक्तुं श्लोकद्वयं स्मृतम् ।
शीलस्य चाऽऽत्मतुष्टेश्च गतार्थत्वमिहेष्यते ; तथा धर्मात्मजं प्राह भीष्मः सद्धर्मतत्त्ववित्—
"अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा , अनुग्रहश्च, दानं च, शीलमेतत्प्रशस्यते ।
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् , अपत्रपेत वा येन, न तत्कुर्यात्कथञ्चन ;
तत्तु कर्म तथा कुर्याद् येन श्लाघ्येत संसदि; × शीलं समासेनैतत्ते कथितं कुरुसत्तम" †
अन्यद्यदिह वक्तव्यं, षष्ठश्लोके तदीरितम् ; अग्रे यथाप्रसङ्गं च वक्ष्यते समपेक्षितम् ।१२।

धर्मविरुद्धा-ऽर्थ-कामाऽऽसक्तिप्रतिषेधः

अर्थ-कामेषु याऽऽसक्तिर्भवेद्धर्मविरोधिनी , मोक्षसाधनबाधा वा, सैवाऽत्र प्रतिषिध्यते ।
सम्यग्वृत्तिस्तु सर्वेषु पुमर्थेष्वविरोधतः विहितैवाऽस्ति शास्त्रेषु, लोकेष्वपि च शस्यते ।
धर्मवन्मोक्षवच्चाऽर्थे कामे च पुरुषार्थता , तस्मात्तदर्थनीयत्वाऽऽसक्तिः स्वाभाविकी नृणाम् ।
धर्मस्याऽप्यर्थ-कामौ हि लोकाऽभ्युदयिकं फलं , तस्मादपि न हेयत्वं तयोरैकान्तिकं मतम् ।
इत्थं तयोरसक्तानां धर्मज्ञानं निरर्थकम् , अतोऽनासक्तिरत्रेष्टा चतुर्वर्गाऽनुबन्धिनी ।
परस्पराऽविरोधेन स्विष्टं त्रिवर्गसेवनम् ; एतत्सर्वं च शास्त्रेषु सम्यगस्ति निरूपितम्—
'ऊर्ध्वबाहुर्विरौम्येष, न च कश्चिच्छृणोति मे , धर्मादर्थश्च कामश्च, स किमर्थं न सेव्यते ?

न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ;
नित्यो धर्मः, सुख-दुःखे त्वनित्ये, जीवो नित्यो, हेतुरस्य त्वनित्यः" §

युधिष्ठिरः—"तात धर्मा-ऽर्थ-कामानां श्रोतुमिच्छामि निश्चयं ,
लोकयात्रा हि कात्स्न्र्येन तिष्ठत्केषु प्रतिष्ठिता ?
धर्मा-ऽर्थ-कामाः किंमूलाः ? त्रयाणां प्रभवश्च कः ?
अन्योन्यं चाऽनुषज्जन्ते, वर्त्तन्ते च पृथक्पृथक् ।
भीष्मः—यदा ते स्युः सुमनसो लोके धर्मा-ऽर्थनिश्चये ,
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ।
धर्ममूलः सदैवाऽर्थः, कामोऽर्थफलमुच्यते ;
सङ्कल्पमूलास्ते सर्वे, सङ्कल्पो विषयात्मकः ,
विषयाश्चैव कात्स्न्र्येन सर्व आहारसिद्धये ,
मूलमेतत् त्रिवर्गस्य; निवृत्तिर्मोक्ष उच्यते ।
धर्माच्छरीरसंगुप्तिः, धर्मार्थं चाऽर्थ उच्यते ,
कामो रतिफलश्चाऽत्र; सर्वे ते च रजस्वलाः ।

सन्निकृष्टांश्चरेदेतान् , न चैतान्मनसा त्यजेत् , विमुक्तस्तपसा सर्वान्धर्मादीन्कामनैष्ठिकान् ;

---

× "यच्चाऽपि कुर्वतो नात्मा जुगुप्सामेति पुत्रक ,
तत्कर्त्तव्यमशङ्केन, यन्न गोप्यं महाजने" [मार्क० पु० अ० ३५ श्लो० ५७]

† म० भा० शां० अ० १२४ श्लो० ६६–६८ । § म० भा० स्वर्गारो० अ० ५ श्लो० ६२–६३ ।

श्रेष्ठे बुद्धिस्त्रिवर्गस्य, यदयं प्राप्नुयान्नरः ‡‡
कर्मणा बुद्धिपूर्वेण भवत्यर्थो, न वा पुनः ; अर्थार्थमन्यद्भवति, विपरीतमथाऽपरम्,
अनर्थार्थमवाप्यर्थमन्यत्राद्योपकारकं, बुद्ध्याऽबुद्धिरिहार्थेन तदज्ञाननिकृष्टया।
अपध्यानमलो धर्मो, मलोऽर्थस्य निगूहनं, सम्प्रमोदमलः कामो, भूयः स्वगुणवर्जितः।
यो धर्मा-ऽर्थौ परित्यज्य काममेवानुवर्तते, स धर्मा-ऽर्थपरित्यागात्प्रज्ञानाशमिहाच्छति + ।
प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः, तस्मान्नास्तिकता चैव दुराचारश्च जायते।
दुराचारान् यदा राजा प्रदुष्टान्न नियच्छति, तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव" ¶
"परित्यजेदर्थ-कामौ यौ स्यातां धर्मवर्जितौ ; सर्वलोकविरुद्धं च धर्ममप्याचरेन्न तु।
धर्मात्संजायते ह्यर्थो, धर्मात्कामोऽभिजायते, धर्म एवाऽपवर्गाय, तस्माद्धर्मं समाश्रयेत्।
धर्मश्चाऽर्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः, सत्त्वं रजस्तमश्चेति; तस्माद्धर्मं समाश्रयेत्।
ऊर्ध्वं गच्छन्ति सत्त्वस्था, मध्ये तिष्ठन्ति राजसाः, जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः;
यस्मिन्धर्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ, इहलोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते।
धर्मात्संजायते मोक्षो, ह्यर्थात्कामोऽभिजायते, एवं साधन-साध्यत्वं चातुर्विध्ये§ प्रदर्शितं।
य एवं वेद धर्मार्थकाममोक्षस्य मानवः माहात्म्यं चाऽनुतिष्ठेत, स चानन्त्याय कल्पते" ||'

"शतायुर्वै पुरुषो विभज्य कालमन्योन्याऽनुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत; बाल्ये विद्याग्रहणादीनर्थान्, कामं च यौवने, स्थाविरे धर्मं मोक्षं च; अनित्यत्वादायुषो यथोपपादं वा सेवेत; ब्रह्मचर्यमेव त्वाविद्याग्रहणात्।... अर्थश्च... तन्मूलत्वाल्लोकयात्रायाः।... शरीरस्थितिहेतुत्वाद् आहारसधर्माणो हि कामाः, फलभूताश्च धर्मा-ऽर्थयोः।...
एवमर्थं च कामं च धर्मं चोपाचरन्नरः इहाऽमुत्र च निःशल्यमत्यन्तं सुखमश्नुते।
किं स्यात्परत्रेत्याशङ्का कार्ये यस्मिन्न जायते, न चाऽर्थघ्नं सुखं चेति, शिष्टास्तत्र व्यवस्थिताः।
त्रिवर्गसाधकं यत्स्याद् द्वयोरेकस्य वा पुनः कार्यं, तदपि कुर्वीत; न त्वेकार्थं द्विबाधकम्" +
विनोदपदेशं सिद्धो हि कामोऽनाख्यातशिक्षितः, स्वकान्तारमणोपाये को गुरुर्मृग-पक्षिणाम्?
मुमुक्षवोऽपि सिद्ध्यन्ति विरागाद्रागपूर्वकात्, विषयेच्छानुबन्धिन्यो निसर्गात्प्राणिनां धियः।
धर्ममूलः स्मृतः स्वर्गः, तत्रापि परमाः स्त्रियः ; गृहस्थधर्मो दुर्वारो नराणां धर्मयत्नजः ;
हिताश्चापत्यसन्तानैः स्त्रियस्त्विह परत्र च, परं सम्प्रत्ययो भोगः, प्रकर्षार्थाय वै स्त्रियः।

---

‡‡ "स्वर्गादिकं बाह्यं फलं विप्रकृष्टं, तदर्था एते विप्रकृष्टाः; आत्मज्ञानरूपं फलं तु सन्निकृष्टं, तदर्था एते सन्निकृष्टाः, तांश्चरेत् = सेवेत; धर्मश्चित्तशुद्ध्यर्थः, अर्थो निष्कामकर्मार्थः, कामो देहधारणमात्रार्थ इत्येवमेते सेव्या इत्यर्थः। 'धर्मादीन्कामनैष्ठिकान्' कामान्तान् = धर्मा-ऽर्थ-कामान्, सर्वानपि मनसाऽपि न त्यजेत्, किमुत स्वरूपेण न त्यजेदित्यर्थः। कथं तर्हि एतांस्त्यजेदित्याह—'तपसा विमुक्त' इति; विचारेणैव तेभ्यो विमुक्तो भवेत्, सङ्कल्पत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः। ततश्च किम्? अत आह—'श्रेष्ठे' इत्यर्धेन; 'त्रिवर्गस्य बुद्धिः' निष्ठा, 'श्रेष्ठे' मोक्ष एवाऽस्ति; 'यद्' यदि 'अयं' कर्त्ता, तं श्रेष्ठं प्राप्नुयात्; इतस्तु निष्कामस्य तस्य दौर्लभ्यमेवेति भावः" [ नैलकण्ठीयम् ]

+ "अत्रापस्तम्बाऽऽम्रनिदर्शनात्, तद्यथा—आम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्त इत्येवंरूपाद्, धर्मोऽर्थ-कामाभ्यामविनाभूतः, अर्थश्च कामेनाऽविनाभूतः सर्वत्राऽस्ति; परिशेषात्काम एव धर्मा-ऽर्थौ अतिक्रम्याऽस्ति; तत्परं निन्दति—'य' इति" [ नैलकण्ठीयम् ]। ¶ म० भा० शां० अ० १२३।

§ 'चातुर्विद्ये' इति पाठान्तरम्; चतस्रो विद्याः—आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीत्यः एव चातुर्विद्यं, तस्मिन् इत्यर्थः। ||' कूर्मपु० पूर्ववि० अ० २। + कामसू० अ० २।

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।१३।

तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषां ; दोषास्तु परिहर्त्तव्या; इत्याचार्यैः स्थिरीकृतम् ।
अपि नाम त्रिवर्गेऽस्मिन्सेवेतोत्तरबाधकं , पूर्वस्य तु प्रधानत्वान्न सेव्यः पूर्वबाधकः" ‡
इत्थं नैसर्गिकत्वेन, पुमर्थत्वेन, मुख्यतः धर्मस्यापि फलत्वेन, ह्यर्थ-कामौ समीहितौ ;
अतोऽन्योन्यानुरोधेन, मिथश्चाऽनुपघाततः , त्रिवर्गः सेव्यते सद्भिर्लोकाऽभ्युदयलक्षणः ।
तस्मादत्राऽर्थकामेषु याऽऽसक्तिः प्रतिषिध्यते धर्मज्ञानार्थिनां, सेयं धर्मबाधात्मिका मता ;
अन्यथा धर्मजिज्ञासा, तस्मिन्प्रवृत्तिश्च वा नृणां , न स्याद् ; धर्मे प्रवृत्तिर्हि कामार्थाऽऽसक्तिहेतुकी ।
तस्माद्धर्मप्रतीप्सेषु मोक्षस्य परिपन्थिषु 'अर्थ-कामेष्वसक्तानां, धर्मज्ञानं विधीयते' ।

श्रुतिप्रामाण्यवादः

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः' इत्युक्तेर्महती श्रद्धा मनोर्वेदेऽनुमीयते ।
हृदयेनैव वेदस्य माहात्म्यं स्वीकृतं मनोः ; एतद्धि द्वादशाऽध्याये स्वयमेव प्रवक्ष्यति—
"पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् , अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ।
या वेदबाह्याः स्मृतयो याश्चकाश्च कुदृष्टयः, सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः।
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् , तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् , भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः , वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्मतः ।
बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् , तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ।
सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च , सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ।
यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् , तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ।
वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् , इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ।
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा, ग्रन्थिभ्यो धारिणो वराः, धारिभ्यो ज्ञानिनः श्रेष्ठा, ज्ञानिभ्यो व्यवसायिनः।
तपो विद्या च विप्रस्य निःश्रेयसकरं परम् , तपसा किल्विषं हन्ति, विद्ययाऽमृतमश्नुते"
एतदाशयकाः श्लोका अन्यग्रन्थेष्वपि स्मृताः ; तैश्च धर्मप्रमाणत्वं वेदस्यैव परं मतम्—
"परापरविभागेन वेदार्थो द्विविधः स्मृतः ; वेदार्थः परमः साक्षात्परात्परतरं परम् ;
अपरो धर्मसंज्ञः स्यात्, तत्परप्राप्तिसाधनम् । 'अधर्मः' परिहाराय, वेदार्थत्वेन भक्तितः
गीयते मुनिशार्दूलैः; कदाचिन्नतु मुख्यतः । अधर्मपरिहारेण धर्मस्त्वव्याकुलो भवेत् ,
अव्याकुलेन धर्मेण श्रद्धयाऽनुष्ठितेन तु, वेदार्थः परमः साक्षात्सिध्यत्येव न संशयः" ❋
"श्रुतयोऽनित्यतामेषां प्रवदन्ति हि सादरम् । श्रुत्यनुग्राहकस्तर्को; न स्वतन्त्र; इति स्थितिः ।
दृष्टसाम्येन वेदज्ञाः, खलु तर्कोऽर्थसाधकः; श्रुतिरन्याऽनपेक्षा हि द्विजेन्द्रा, अर्थसाधिका ।
प्रत्यक्षादिप्रमाणानां पञ्चानां पण्डितोत्तमाः, अगम्यं ब्रह्म, धर्मश्चा,ऽधर्मः, श्रुत्यैव गम्यते ।
अन्तरेण श्रुतिं बोद्धुं यतन्तेऽतीन्द्रियं पदं, ते करेणाऽपि माधुर्यं जानन्त्येव सुनिश्चितम् ।
पुरा कश्चिन्महामूर्खः सङ्गिरो नाम वाडवः, पूर्वजन्मकृतात्पापाद्वेदश्रद्धाविवर्जितः,
तर्कशास्त्ररतः, साक्षाद्ब्रह्मातीन्द्रियमव्ययं , धर्मा-ऽधर्मौ च, तर्केण केवलेन मुनीश्वराः ,
अक्लेशेन परिज्ञातुमकरोद्यत्नमुत्तमम् । तर्को नानाविधस्तस्य प्रतिभातो मुनीश्वराः ;
तेन मोहावृतः सद्यः सङ्गिरो मुनिपुङ्गवाः , चकार दीक्षां पाषण्ड-मार्गे श्रद्धापुरःसरम् ।
पुनस्तर्काऽप्रतिष्ठानात्संगिरोऽतीव मोहितः , त्यक्त्वा पाषण्डमार्गं च, चचार च यथारुचि ।
पुनर्मोहावृतः साक्षात्स्वसारं मातरं तथा गत्वा, ममार कालेन संगिरः साहसी द्विजः ।

‡ कामसू० टी० अ० २ धृतानि शास्त्रवचनानि । ❋ सूतसं० यज्ञवैभवखं० अ० २ श्लो० २–५ ।

अत्युग्रा अतिसन्नद्धा यमदूता भयङ्कराः, सङ्गिरं तु समादाय शीघ्रं विप्रा यमं ययुः..."†
"स्मार्तेभ्यः श्रौतधर्माश्च वरिष्ठा मुनिसत्तमाः ; वरिष्ठं सर्वधर्मेभ्यो ज्ञानं मोक्षैकसाधनम् ।
ज्ञानान्नास्ति परोधर्म इति वेदान्तनिर्णयः ; ज्ञानस्य कारणेभ्यस्तु श्रुतिरेव महत्तरा ।
चोदनालक्षणो ह्यर्थो धर्मः साक्षान्निरूपणे ; इतरो व्यवहारे तु धर्म इत्यभिशब्द्यते ।
आस्तिक्यान्वयमात्रेण धर्माभासेऽपि सुव्रताः, प्रयुक्तो धर्मशब्दस्तु, मुख्यो धर्मस्तु वेदजः ।...
यथा गुरुसमस्त्राता नास्ति, संसारसागरात्, तथा वेदसमं मानं नास्ति, तत्र न संशयः"*
"यश्चतुर्वेदविद्विप्रः पुराणं वेत्ति नाऽर्थतः ; तं दृष्ट्वा भयमाप्नोति वेदो–'मां प्रतरिष्यति;'
इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् । (बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ) ।
वेदाः प्रमाणं प्रथमं स्वत एव, ततः परं स्मृतयश्च, पुराणानि, भारतं मुनिपुङ्गवाः,
अन्यान्यपि मुनिश्रेष्ठाः शास्त्राणि सुबहूनि च ; सर्वं वेदाऽविरोधेन प्रमाणं, नाऽन्यवर्त्मना ।
एक एव द्विजा वेदो, वेदार्थश्चैक एव तु ; तथापि मुनिशार्दूलाः, शाखाभेदेन भेदितः ;
अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः । ब्रह्माणं मुनयः, पूर्वं सृष्ट्वा तस्मै महेश्वरः
दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान् । प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रताः ।
विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ;
स पुनर्देवदेवस्य प्रसादादम्बिकापतेः, संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान्द्विजाः ।
ऋग्वेदः प्रथमः प्रोक्तो, यजुर्वेदस्ततः परः, तृतीयः सामवेदाख्य,श्चतुर्थोऽथर्व उच्यते ।
एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना ; यजुर्वेदो द्विजा, एकशतभेदेन भेदितः ;
नवधा भेदितोऽथर्व-वेदः; साम, सहस्रधा ; व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः ।
अयं साक्षान्महायोगी व्यासः सर्वज्ञ ईश्वरः, महाभारतमाश्चर्यं निर्ममे भगवान्मुनिः ।
तस्य शिष्या महाभागाश्चत्वारो मुनिसत्तमा अभवन् ; स मुनिस्तेभ्यः पैलादिभ्योऽददाच्छ्रुतीः ;
तेभ्योऽधीता श्रुतिः सर्वैः साध्वी विप्राः सनातनी ; तया वर्णाश्रमाचारः प्रवृत्तो वेदवित्तमाः" +
"ऋचो, यजूंसि, सामानि, तथैवाथर्वणानि च, ब्रह्मणः सहजं रूपं, नित्यैषा शक्तिरव्यया ।
अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा आदौ वेदमयी, भूता यतः सर्वाः प्रवृत्तयः ।
अतोऽन्यानि हि शास्त्राणि पृथिव्यां यानि कानिचित्, न तेषु रमते धीरः; पाषण्डी रमते बुधः ।
वेदार्थवित्तमैः कार्यं यत्स्मृतं मुनिभिः पुरा, स ज्ञेयः परमो धर्मो, नाऽन्यशास्त्रेषु संस्थितः ।
या वेदबाह्याः स्मृतयो, याश्च काश्च कुदृष्टयः, सर्वास्ता निष्फलाः प्रेत्य, तमोनिष्ठा हि ताः स्मृताः‡"
"श्रुति-स्मृत्युदितं सम्यक्कर्म वर्णाश्रमात्मकम् अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ।
धर्मात्संजायते भक्ति,र्भक्त्या सम्प्राप्यते परं, श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ।
न्यान्यतो जायते धर्मो, वेदाद्धर्मो हि निर्बभौ ; तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपं वेदमाश्रयेत् ।
ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी, ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तते ।
तेषामेव च गुप्त्यर्थं वेदानां भगवानजः ब्राह्मणादीन्ससर्जा,ऽथ स्वे स्वे कर्मण्ययोजयत् ।
ये न कुर्वन्ति तद्धर्मं तदर्थं ब्रह्मनिर्मिताः, तेषामधस्तान्नरकांस्तामिस्रादीनकल्पयत ।
न च वेदादृते किञ्चिच्छास्त्रं धर्माऽभिधायकं ; योऽन्यत्र रमते, सोऽसौ न संभाष्यो द्विजातिभिः ।
यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन्विविधानि तु श्रुतिस्मृतिविरुद्धानि, निष्ठा तेषां हि तामसी ।
कापालं, भैरवञ्चैव, यामलं, वाममार्हतम्, एवं विधानि चाऽन्यानि मोहनार्थानि तानि तु ।
ये कुशास्त्राऽभियोगेन मोहयन्तीह मानवान्, मया सृष्टानि शास्त्राणि मोहायैषां भवार्णवे ।
वेदान्तवित्तमैः कार्यं यत्स्मृतं कर्म वैदिकं, तत्प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ।

† सूतसं० यज्ञवैभवखं० अ० १८ श्लो० ७–१८ । * सूतसं० यज्ञवैभवखं० अ० २० ।
+ सूतसं० शिवमहात्म्यखं० अ० १ । ‡ कूर्मपु० पू० अ० २ ।

वर्णानामनुकम्पार्थम्मन्नियोगाद्विराट् स्वयं  स्वायंभुवो मनुर्द्धर्मान्मुनीनां पूर्वमुक्तवान् ;
श्रुत्वा चाऽन्येऽपि मुनयस्तन्मुखाद्धर्ममुत्तमं  चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ।
तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः  ब्रह्मणो वचनात्तानि करिष्यन्ति युगे युगे ,
अष्टादश पुराणानि व्यासाद्यैः कथितानि तु  नियोगाद्ब्रह्मणो राजं,स्तेषु धर्मः प्रतिष्ठितः ।
अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु ; युगे युगेऽत्र सर्वेषां कर्त्ता वै धर्मशास्त्रवित् ।
शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्द एव च, ज्योतिःशास्त्रं, न्यायविद्या, मीमांसा चोपबृंहणम् ;
एवं चतुर्दशैतानि विद्यास्थानानि सत्तम , चतुर्वेदैः सहोक्तानि; धर्मो नाऽन्यत्र विद्यते ।
एवं पैतामहं धर्मं मनु-व्यासादयः परं  स्थापयन्ति समादेशाद् यावदाभूतसंप्लवम् ।
ब्रह्मणा सह, ते सर्वे सम्प्राप्ते प्रतिसञ्चरे  परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ।
तस्मात्सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ; धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत्" 卐
"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं  विवर्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ।
एकमेव यदाम्नातं, भिन्नं शक्तिव्यपाश्रयात् , अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ।
अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः  जन्मादयो विकाराः षट् भावभेदस्य योनयः ।
एकस्य सर्ववीजस्य यस्य चेयमनेकधा  भोक्तृ-भोक्तव्यरूपेण भोगरूपेण च स्थितिः ।
प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः  एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक्पृथक् ।
भेदानां बहुमार्गत्वं, कर्मण्येकत्र चाङ्गता , शब्दानां यतशक्तित्वं, तस्य शाखासु दृश्यते ।
स्मृतयो बहुरूपाश्च दृष्टा-ऽदृष्टप्रयोजनाः  तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ।
तस्यार्थवादरूपाणि निश्रिताः स्वविकल्पजाः  एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ।
सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा  युक्ता प्रणवरूपेण सर्ववादाऽविरोधिनी ।
विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः  विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ।...
न चाऽऽगमादृते धर्मस्तर्केण व्यवतिष्ठते  ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् । A
धर्मस्य चाऽव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः , न ताँल्लोकप्रसिद्धत्वात्कश्चित्तर्केण बाधते ।
अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु  भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ।
निर्ज्ञातशक्तेर्द्रव्यस्य तां तामर्थक्रियां प्रति  विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ।

---

卐 कूर्मपु० पू० अ० १२ । A एतदुत्तरार्धं 'न्यायमञ्जर्यां' द्वितीयाह्निके १०७ तमे पृष्ठे 'जयन्तभट्टेन' समुदाहृतं; 'हेलाराजेन' च 'जातिसमुद्देशे'—'ज्ञानमस्मद्विशिष्टानाम्...' इति श्लोकव्याख्यायामुद्धृतम् ।

अस्मिन्विषये—

"न चाऽतीन्द्रियानर्थाञ्श्रुतिमन्तरेण कश्चिदुपलभते इति शक्यं संभावयितुं, निमित्ताभावात् । शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत् ? न, सिद्धेरपि सापेक्षत्वात्; धर्माऽनुष्ठानापेक्षा हि सिद्धिः, स च धर्मश्चोदनालक्षणः । ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते । सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यन्निर्णयकारणमस्ति" इत्यादि 'स्मृत्यनवकाशदोषप्रसङ्ग इति' (ब्रह्मसू० २, १, १) वेदान्तसूत्र शाङ्करभाष्यम्,

"आर्षं, सिद्धदर्शनं च धर्मेभ्यः" इति वैशेषिक-(अ० ९ आ० २ सू० १३)–सूत्रं,

"योगाङ्गाऽनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" (पा०२सू०२८) इति योगसूत्रं,

"अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः"(स०३प०४१) इति रघुवंशपद्यं चाऽनुसन्धेयम्

यत्नेनाऽनुमितोऽप्यर्थः कुशलैरनुमातृभिः अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ।B
परेषामसमाख्येयमभ्यासादेव जायते मणि-रूप्यादिविज्ञानं तद्विदां, नाऽनुमानिकम् ।
प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः पितृ-रक्षः-पिशाचानां कर्मजा एव सिद्धयः ।
आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् अतीताऽनागतज्ञानं प्रत्यक्षान्न विशिष्यते ।
अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा ये भावान्, वचनं तेषां, नाऽनुमानेन बाध्यते । C
यो यस्य स्वमिव ज्ञानं दर्शनं नाऽतिशङ्कते, स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ?
इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् । D
चैतन्यमिव यश्चाऽयमविच्छेदेन वर्तते आगम,स्तदुपासीनो हेतुवादैर्न बाध्यते ।
हस्तस्पर्शादिवान्धेन विषमे पथि धावता अनुमानप्रधानेन विनिपातो न दुर्लभः ;
तस्मादकृतकं शास्त्रं स्मृतिं च सन्निबन्धनाम् आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ।...
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ; अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।※
वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती, न प्रकाशः प्रकाशेत, सा हि प्रत्यवमर्शिनी ।
सा सर्वविद्या-शिल्पानां कलानां चोपबन्धनी, तद्वशादभिनिष्पन्नं सर्वं वस्तु विभज्यते ।...
न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते, बीजं सर्वागमापाये; त्रय्येवातो व्यवस्थिता ।
अस्तं यातेषु वादेषु, कर्तृष्वन्येष्वसत्स्वपि, श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते ।
ज्ञाने स्वाभाविके,नाऽर्थः शास्त्रैः कश्चन विद्यते ; धर्मो ज्ञानस्य हेतुश्चेत्, तस्याम्नायो निबन्धनम् ।

---

B. "तर्काऽप्रतिष्ठानाद्"...इति ब्रह्मसूत्र-(२, १,११)-भाष्ये श्रीशङ्कराचार्यैः—"इतश्च नाऽऽगमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम्; यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्काः अप्रतिष्ठिता भवन्ति; उत्प्रेक्षाया निरङ्कुशत्वात् । तथाहि कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते; तैरप्युत्प्रेक्षिताः सन्तस्ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुं; पुरुषमतिवैरूप्याद्" इत्यादि यदुक्तं तदपीमां हरिकारिकां प्रायः शब्दतोऽर्थतश्च स्पृशति । उदाहृता चेयं कारिकाऽपि तत्र 'भामत्यां' दृश्यते । एषा कारिका जयन्तभट्टेनाऽपि 'न्यायमञ्जर्यां' द्वितीयाह्निके ( १२० तमे पृष्ठे ) संगृहीता; उदाहृतं चैतत्प्रतिविधानार्थं श्लोकान्तरं; तद्यथा—

"यत्नेनाऽनुमितो योऽर्थः कुशलैरनुमातृभिः,
अभियोगशतेनाऽपि सोऽन्यथा नोपपाद्यते" [न्या० मं० आ० २ पृ० १२४]

C. एतत्कारिकाद्वयं कैयटेन—'पृषोदरादीनि यथोपदिष्टम्' ( ६।३।१०९ ) इतिसूत्रभाष्यप्रदीपे उदाहृतम् । गोपालिकाकारेण रामचन्द्रेण च 'स्फोटसिद्धौ' एकविंशश्लोकव्याख्यायाम् 'अतीन्द्रियान्...' इति श्लोक उद्धृतः; तत्र—'कोऽतिक्रमितुमर्हति' इति चतुर्थचरणे पाठान्तरमुपात्तम् ।

"लौकिकानां हि साधूनामर्थं वागनुवर्तते ; ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ।...
आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत् ;
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता, नैते वाचं विप्लुतां व्याहरन्ति"
[ उत्तररामचरिते १, १०; तथा ४, १८ ]

D. इयं कारिका श्लोकवार्तिके ( मीमांसासू० ५ श्लो० ३ ), न्यायमञ्जर्यां च ( आ० ४ पृ० २५१ ) पाराशर्य-व्यासकृतित्वेन स्मर्यते ।

※ इयं कारिका मीमांसाश्लोकवार्तिक-न्यायरत्नाकरे ( सू० ४ श्लो० १७५ ), न्यायमञ्जर्यां (आ० २ पृ० ८०), स्याद्वादमञ्जर्यां (पृ० १०६), स्पन्दकारिकाव्याख्यायां (पृ० ५१), गोपालिकायामप्येकविंशश्लोकव्याख्यायामुदाहृता; हेलाराजेनापि सम्बन्धसमुद्देशे द्वितीयस्मिञ्श्लोके प्रथमोऽस्याः पादः संगृहीतः । एतदुत्तरार्धसंवादि—'यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः' इति स्पन्दकारिकासु दृश्यते ।

अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकां ; † शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ।
अविभागाद्विवृत्तानामभिख्या स्वप्नवच्छ्रुतौ, भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः" ‡
"यज्ञानां तपसां चैव शुभानां चैव कर्मणां वेद एव द्विजातीनां निःश्रेयसकरः परः" ×
"यदविज्ञातशास्त्रेण कदाचित्साधितं भवेत्, न चैतद्बहु मन्तव्यं घुणोत्कीर्णमिवाक्षरम्" ।
"दोषाः सन्ति, न सन्तीति, पौरुषेयस्य युज्यते ; वेदे कर्तुरभावात्तु दोषशङ्कैव नाऽस्ति नः" +
"वेदाः प्रमाणं, स्मृतयः प्रमाणं, धर्मा-ऽर्थयुक्तं वचनं प्रमाणं ;
यस्य प्रमाणं न भवेत्प्रमाणं, न तस्य कुर्याद्वचनं प्रमाणम्" =
"अमीमांसा बहिःशास्त्रा ये चाऽन्ये वेदवर्जिताः, यत्ते ब्रूयुर्न तत्कुर्याद्, वेदाद्धर्मो विधीयते" ⁂

वेदस्यैव मुख्यं शास्त्रत्वं, शास्त्रलक्षणादिकं, सर्वशास्त्राणां वस्तुतो वेदत्वमेव,
कर्त्तव्या-ऽकर्त्तव्यव्यवस्थायां तत्प्रामाण्यं च

पुरुषार्थ-प्रशास्तृत्वाद्वेद एव तु मुख्यतः शास्त्रमित्युच्यते; तद्वद् 'वेद-शास्त्रं' च कथ्यते ।
"शास्ति यत्साधनोपायं पुरुषार्थस्य निर्मलं, तथैव बाधकाऽपायं, तच्छास्त्रं मुनयो विदुः ;
शासनं पुरुषार्थेभ्य,स्त्राणं चाऽनर्थतो नृणाम्, एतच्छास्त्रस्य शास्त्रत्वं, नान्यदस्त्यस्य लक्षणम्"
असन्निधार्थविज्ञानं शब्दविज्ञानजं तु यत्, तदेव शास्त्रमित्याह शबरः शास्त्रलक्षणम्—
"शास्त्रं शब्दविज्ञानाद् असंनिकृष्टेऽर्थे विज्ञानम्" * ।
"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा, पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ।
स्वरूपकथनं यत्तु कस्यचित्तत्र दृश्यते, तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ;
भावनायां समस्तायां वाक्यादेवोपजायते प्रवृत्तिर्वा निवृत्तिर्वा, तच्छास्त्रं; न पदाद्यतः ।
सामान्यरूपमप्येतद् अधिकाराद् विशिष्यते ; चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ।
यथा च चोदनाशब्दो वैदिक्यामेव वर्तते, शब्दज्ञाना-ऽर्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ †"
"न सर्वसुलभं शास्त्रं नैकमत्यं च तद्विदां, तस्मात्सर्वस्य हृदयं सुलभं शास्त्रमिष्यते" ‡
"शासनात्कृपया नित्यं सर्वाश्रमनिवासिनाम्, तारणात्सर्वपापेभ्यः शास्त्रमित्यभिधीयते" ×
इष्टं शास्ति तु यल्लोकाननिष्टात्त्रायते च यत्, तदेव शासनात्, त्राणाच्चापि शास्त्रं निरुच्यते ।

---

†. 'तस्मै नूनमभिद्यवे, वाचा विरूप नित्यया, वृष्णे चोदस्व सुष्टुतिम्" ( ऋक्सं० ८, ७५, ६ )
"अनादिनिधना नित्या ( विद्या ) वागुत्सृष्टा स्वयंभुवा,
आदौ वेदमयी दिव्या, यतः सर्वाः प्रवृत्तयः"
अयं श्लोकः—म० भा० शां० अ० २३२ श्लो० २४; कूर्मपु० पू० अ० २ श्लो० २८; ब्रह्मसूत्र-(अ० १ पा० ३ सू० २८ )-शाङ्करभाष्ये चोदाहृतो द्रष्टव्यः । तथा च—"अत एव च नित्यत्वम्" (ब्रह्मसू० १, ३, २९) एतत्सूत्रशाङ्करभाष्येऽपि—"वेदनित्यत्वं स्थितं द्रढयति—अत एव च नित्यत्वमिति ।...तथा च मन्त्रवर्णः—
'यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्' ( ऋ० सं० १०, ७१, ३ )
इति स्थितामेव वाचमनुविन्नां दर्शयति । वेदव्यासश्चैवमेव स्मरति (म० भा० शां० अ० २१० श्लो० १९)—
'युगाऽन्तेऽन्तर्हितान्वेदान् सेतिहासान्महर्षयः लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा' इति ।"
इत्येवं वेदादेरनादिप्रवाहनित्यत्वं निरूपितं द्रष्टव्यम् । ‡ वाक्यपदीय-ब्रह्मकाण्डे ।

× या० स्मृ० अ० १ श्लो० ४० । + अयं श्लोकः "शास्त्रस्यानभिशङ्क्यत्वाद् अभिचारानुव्याहारयोश्च क्वचित्फलदर्शनात्, नक्षत्र-चन्द्र-सूर्य-तारा-ग्रहचक्रस्य लोकार्थं बुद्धिपूर्वकमिव प्रवृत्तेर्दर्शनाद्, वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्राया, हस्तगतस्य च बीजस्य भविष्यतः सस्यार्थे त्यागदर्शनात्, चरेद्धर्मानिति वात्स्यायनः ।" इत्येतस्य कामसूत्रस्य ( अ० २ ) टीकायां धृतः ।

= स्मृतिचन्द्रिकाधृतं यमवचनम् । ⁂ स्मृति चं० धृतं प्राचेतसं वचनम् । * मी० शाबरभा० १,१,५
† मी० श्लो० वा० शब्दपरि० सू० ५ ‡ शतश्लो० ध० शा० १-११ × पूर्णज्यो० ।

"पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्, अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ;...
"बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्," = इति वेदस्य शास्त्रत्वं प्राह स्वायंभुवः स्वयम्।
वेदशास्त्रपदेनोक्तं वेदान्ताऽध्यात्मदर्शनम्, तदिष्टं तत्त्वतः शास्ति, भ्रमाच्च त्रायते जनान्।
"ध्यानिकं सर्वमेवैतद्यदेतदभिशब्दितम्, न ह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते।"
'एतद्' नामेह सर्वेषां दृश्यमानं 'जगत्' स्मृतं ; आत्मनो ध्यानजन्यत्वाद् 'ध्यानिकं' चैतदुच्यते।
सर्वमाध्यात्मिकं ह्येतदात्मध्यानमयं जगत्, अतोऽनध्यात्मविन्नैतत्कार्य-तत्त्वार्थविद्भवेत्।
जगतः कार्य-तत्त्वा-ऽर्थान् यो न जानाति तत्त्वतः, नाऽसौ क्रियाफलं सम्यग्वेत्ति श्रेयोऽभिलक्षणम्।
सम्यक्क्रियाफलाऽज्ञानान्न ह्यनध्यात्मशास्त्रवित् लोकनेतृत्वयोग्यः स्याद्, गाणपत्यं न चार्हति।
"सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च, सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति।"
वेदशास्त्रविदध्यात्मविच्चैको मनुना स्मृतः, तस्मादध्यात्मवेदान्तो वेदशास्त्रमिति स्थितम्।
"अध्यात्मविद्या विद्यानां" सैवोपनिषदुच्यते, वेदान्तश्चेति, तस्यैव वेदशास्त्रत्वमिष्यते।
"इति गुह्यतमं शास्त्रं" स्वगीतोपनिषन्मयम, पार्थ कृष्णः स्वयं प्राह वेदान्ताध्यात्मसंज्ञितम्।
"न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते, निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्।
दुर्बोध्यं तु भवेद्यस्मादध्येतुं नैव शक्यते, तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम्।
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः, वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश"❖
चतुर्दशादिविद्यानां जन्मस्थानं यतः स्मृतम्, तस्मादध्यात्मविद्याख्यं वेदशास्त्रं परं मतम्।
"चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे, धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ;
अष्टादश पुराणानि चरितं राघवस्य च, रामस्य कुरुशार्दूल, धर्मकामार्थसिद्धये,
तथोक्तं भारतं वीर पाराशर्येण धीमता, वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो"
"अष्टादश पुराणानि रामस्य चरितं तथा, विष्णुधर्मादिशास्त्राणि, शिवधर्माश्च भारत,
कार्ष्णं च पञ्चमं वेदं यन्महाभारतं स्मृतम्, सौराश्च धर्मा राजेन्द्र, मानवोक्ता महीपते ;
जयेति नाम एतेषां प्रवदन्ति मनीषिणः" [ वीरमि० धृतानि भविष्यपुराण-वचनानि ]
धर्मार्थकाममोक्षाणां सदुपायस्य शासनात् तथा त्राणादविद्याया जयन्तीति जया इमे।
एवं हि सर्वशास्त्राणां वेदत्वं स्मर्यते; ततः विद्यास्थानसमूहोऽस्ति 'वेद एव तु सर्वशः'।
सर्वविद्यात्मकं चैतद्वेदशास्त्रं महाजने सर्वसाधारणे मानं सामान्यादभिधीयते—
"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः, न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ, ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि"*
एतेन सिद्धवत्प्रोक्ता विधेयात्मनि मुख्यतः चोदनालक्षणे धर्मे वेदस्यैव प्रमाणता।

वेद-शास्त्रकर्तृत्वे, तदर्थनिर्णयादौ च बुद्धेरेव कारणत्वं, परमं प्रामाण्यं च

श्रेयोलक्षणधर्मे तु वेदस्यापि प्रवर्तके बुद्धिरेव परं मानं श्रुतिप्रत्यक्षहेतुकी।
यत्, साक्षात्कृतधर्मभ्यो मन्त्रद्रष्टृभ्य आगतः वाङ्मयो ग्रन्थरूपोऽत्र 'वेद' इत्यभिशब्दितः,
तत्, सतां सात्त्विकी बुद्धिरेव वेदस्य कारणं ; न स्यादाकस्मिको वेदो ग्रन्थात्मा वाक्यराशिकः।
एवं च वेदहेतुत्वात्, तद्द्वारा वेदकृन्मुनेः बुद्धिरेव परं मानं धर्मे सिद्ध्यति चान्ततः।
साधारणस्य लोकस्य बुद्धिः शास्त्रत्वनिश्चये, शास्त्रार्थनिर्णये चैवं प्रमाणं परमं भवेत्।
शास्त्रं यदि प्रमाणं स्यात्कार्याकार्यव्यवस्थितौ, किं तु तर्हि प्रमाणं स्याच्छास्त्रा-ऽशास्त्रव्यवस्थितौ?
शास्त्रार्थश्च यथार्थः कः? कथं चेत्यादि-संशये—"बुद्धौ शरणमन्विच्छ" बुद्धिरेवान्तिमा गतिः।
अत्र "गुह्यतमं शास्त्रं" गीतोक्तं बुद्धियोगजम्† तथा च कपिलादीनामध्यात्मदर्शनं स्मृतम्।

❖ वीरमि० परिभाषाप्र० धृतं योगियाज्ञवल्क्यवचनम्।
* भ० गी० अ० १६ श्लो० २३-२४। † भ०गी० १५-२०।

"उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः, अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत"⁑
अध्यात्मशास्त्रमुत्सृज्य यः कर्मणि प्रवर्तते, तस्यैवासफलत्वं तु वासुदेवेन दर्शितम्।
कार्याकार्यव्यवस्थायां शास्त्रस्याऽस्ति प्रमाणता, शास्त्रनिर्माणहेतुत्वं बुद्धेरध्यात्मचेतसाम्।
शास्त्रार्थनिर्णये चैवं सदसच्छास्त्रनिश्चये, साधारण्येन लोकानां बुद्धेः प्रामाण्यमिष्यते।
"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" श्रुतितत्त्वबुभुत्सूनामात्मज्ञानं परायणम्।
विद्या वेदो मतिः संविद् धीः प्रज्ञा चेतना प्रमा, इत्यादि लक्षणं बुद्धेः सार्थानर्थान्तरं पदम्।
एषाऽसाधारणं चास्ति विश्वव्यापारसाधनं, स्वयंज्योतिः स्वतोमानं तत्त्वनिर्णयकारणम्;
शास्त्रयोनिरियं प्रोक्ता बुद्धिरेवात्मनः प्रभा, इन्द्रियादिप्रमाणानां धर्मादेश्च प्रकाशिका।
नरो विवक्षितानर्थान्विनिश्चित्य धिया सदा, वक्ति, लिखति वा; तच्च स्वयमेवानुभूयते।
"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया"¶ तस्मादुत्पद्यते शास्त्रं वाङ्मयं बुद्धिमूलकम्।
वेदेऽपि बुद्धिपूर्वैव वाक्यानां रचना स्मृता; आम्नायस्य प्रमाणत्वम् ऋषीणां वचनान्मतम् §।
सर्गादौ ब्रह्मणे वेदं यो देवः प्रहिणोति सः, आत्मबुद्धिप्रकाशोऽस्ति येन वेदः प्रकाशितः।

"यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै,
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"❋

प्रज्ञाकरणमादिष्टं ब्राह्मणत्वप्रयोजकम्, शास्त्रं प्रज्ञाविहीनस्य वाचो विग्लापनं स्मृतम्।
"तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः, नाऽनुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्"†
वेदमात्रा च गायत्र्या वाचां देवतया स्वयम्, स एव स्तूयते देवो "धियो यो नः प्रचोदयात्"
संयुनक्तु स नो बुद्ध्या शुभयेति श्रुतावपि, ऋषिः प्रार्थयते रुद्रं बुद्धिसंयोगमात्मनः।

"यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः।
हिरण्यगर्भं जनयामास पूर्वं, स नो बुद्ध्या शुभया संयुनक्तु"⁑

धर्मं जिज्ञासमानं च शास्त्रपारगमर्जुनम्, बुद्धौ शरणमेवार्त्तं कृष्णः प्रेषयति स्वयम्। +
"गुह्यं मा धर्ममप्राक्षीरतीव भरतर्षभ, प्रवक्तुं नोत्सहे पृष्टो धर्ममेतं युधिष्ठिर।
धर्मो ह्यणीयान्वचनाद्बुद्धेश्च भरतर्षभ, श्रुत्वौपम्यं सदाचारैः साधुर्भवति स क्वचित्।
कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः, तादृशोऽयमनुप्रश्नस्तद् ध्यायस्व स्वया धिया" ×
एवं भीष्मोऽपि धर्मस्य स्वधीगम्यत्वमादिशत्, तस्माद्धर्मस्य विज्ञाने बुद्धिः शास्त्राद्गरीयसी।
वस्तुतस्तु न भेदोऽस्ति दूरतो बुद्धिशास्त्रयोः, आपाततोऽविचारेण तयोर्भेदः प्रतीयते।
यथा शरीरसञ्चारी वायुरेकोऽपि भिद्यते उपाधिना, तथा बुद्धिरेकैवाभासते द्विधा।
अध्यात्मं समवेतं सत् यत्तत्त्वं बुद्धिसंज्ञकम्, तच्चेव बहिरुद्बुद्धं वाङ्मयं शास्त्रमुच्यते।
"अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्, तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्।
"वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः, करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते"❋
स्वबुद्धि-परबुद्धिभ्यां भेदे च बुद्धिशास्त्रयोः, शास्त्रीयपरबुद्धिभ्यः स्वबुद्धिस्तु विशिष्यते।

---

⁑ महाभा० शां० अ० ३५० श्लो० ६। ¶ पा० शि० ६।

§ "बुद्धिपूर्वा वाक्यकृतिर्वेदे; ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम्; "बुद्धिपूर्वो ददाति; तथाप्रतिग्रहः" [ वै० द० अ० ६ आ० १ सू० १–४ ]

"इच्छा-द्वेष-पूर्विका धर्मा-ऽधर्मप्रवृत्तिः" [ वै० द० अ० ६ आ० २ सू० १५ ]

"असद्बुद्धिभ्यो लिङ्गमृषेः; तद्वचनादाम्नायस्य प्रामाण्यम्" [वै०द० अ० १० आ० २ सू० ९–१०]

❋ श्वे० ६।१८। † बृहदारण्यके ४।४।२१। ⁑ श्वे० उ० ३।४। + भव० गी० अ० २ श्लो० ४९। × म० भा० शां० अ० १३०। ❋ वाक्यपदीये ब्रह्मकाण्डे श्लो० ४६–४७।

परबुद्धिः सदोषा स्यात्–शास्त्ररूपत्वमापिता , लेखकादिप्रमादाच्च, दुष्टहेतोश्च संभवात् ।
आत्मनः प्रियकामाय, समाजस्य हिताय वा , धर्मबुभुत्सया यस्तु स्वयमेव प्रवर्तते ,
तस्य बुद्धौ न दोषः स्यादसद्धेतोरसंभवात् ; शास्त्रबुद्धेरतः साक्षादात्मबुद्धिः प्रशस्यते ।
आत्मबुद्धिप्रकाशस्य पुंसोऽपि भ्रमसंभवः , तथाऽप्यध्यात्मबुद्ध्यैव कार्यः शास्त्रार्थ-निर्णयः ।
पद्भ्यां हि गच्छतः पुंसः स्यादेव स्खलनं क्वचित् ; नातः कश्चिदनुन्मत्तो बाहुभ्यां गन्तुमीहते ,
सर्वासां शास्त्रबुद्धीनां यावच्छक्यं समन्वयं कृत्वा, हेयमविज्ञानं, ग्राह्यं विज्ञानमेव च ;
एतच्च कुरुवृद्धोक्त्या निम्नोदाहृतया स्फुटम्—"अभिगम्य मतीनां हि सर्वासामेव निश्चयम् ,
यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते , तथा तथा विजानाति, विज्ञानं चास्य रोचते ।
अविज्ञानादयोगो हि पुरुषस्योपजायते , विज्ञानादपि योगश्च; योगो भूतिकरः परः" †
बुद्धिवृद्धिकराण्येव शास्त्राणीति मनौ स्मृतं ; 卐 तद् बुद्धौ सहकारित्वं शास्त्राणां; न प्रधानता ।
सहकारी यथादर्शः प्रकाशो वास्ति चक्षुषः , बुद्धेरपि तथा शास्त्रं धर्म-ब्रह्मादिवेदने ।
"यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किम् , लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति"⁂
शास्त्रकृद्विदुषां चापि क्वचिद्रागादिदर्शनात् , संभवद्दूषणं शास्त्रं स्याद् , भ्रमादेश्च संभवात् ।
अतो बुद्ध्या परीक्ष्यैव ग्राह्यं शास्त्रमतं सदा ; तस्मात्प्रधानता बुद्धेः, शास्त्राणां तदधीनता ।
"तस्मात्कौन्तेय, विदुषा धर्माधर्मविनिश्चये , बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं कृतात्मना" । ×
"नैतच्छ्रुत्वागमादेव तव धर्मानुशासनम् , प्रज्ञासमवहारोऽयं कविभिः संभृतं मधु ।" =
"केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः , बुद्धिहीन-विचारे तु धर्महानिः प्रजायते ।" +
किं बहुनाऽथवोक्तेन, सुखं सर्वं स्वबुद्धिजम् , दुःखं च सर्वशः पुंसामस्ति प्रज्ञापराधजम् ।
तस्माच्छास्त्रं प्रमाणं स्यात्कार्याकार्यव्यवस्थितौ , शास्त्राशास्त्रव्यवस्थायां बुद्धिरेवेति निर्णयः ।
बुद्धिश्च त्रिविधा प्रोक्ता गीतायां गुणभेदतः ; तत्र धर्मे प्रमाणं तु सात्त्विकी बुद्धिरिष्यते ।
"प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये , बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी;
यया धर्ममधर्मं च कार्यं चाकार्यमेव च , अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ।
अधर्मं धर्ममिति या मन्यते तमसा वृता , सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ।"❖
येषां तु सात्त्विकी बुद्धिस्त एवाध्यात्मवित्तमाः , श्रेयःसाधनतां ज्ञात्वा धर्मशास्त्राणि कुर्वते ।
अयं साधारणो लोकः सर्वस्तदनुसारतः , धर्मे प्रवर्त्तते; ह्येतद् एव शास्त्रप्रयोजनम् ।
यथा च राजशास्त्राणि व्यवस्थापकपर्षदि , केचिदेव प्रकुर्वन्ति विशेषज्ञा महाशयाः ।
शेषो लोकस्तु तान्येवाऽनुसृत्यार्थे प्रवर्तते, कामे चेति, तथैवैतद् धर्मे मोक्षे च युज्यते ।
शेषो लोकोऽर्थ-कामेषु तैरेवेह प्रवर्त्यते ; तद्वद्धर्मे च मोक्षे च,ज्ञेया शास्त्र-प्रमाणता ।
व्यक्तिधर्मे स्वकीयैव बुद्धिः स्यात्परमा प्रमा , पारलौकिकधर्मे सा ज्ञेया श्रद्धास्वरूपिणी ;
लौकिके व्यक्तिधर्मे तु साऽऽत्मतुष्ट्यात्मिका स्मृता , सैवात्मौपम्यदृष्टिश्च ज्ञेया धर्मतुला नृणाम्।
सामाजिके तु सद्धर्मे लौकिके, पारलौकिके , मानं समष्टिबुद्धिः स्यान्महाजनिकपर्षदः ।
-अर्थाद्, एकाकिनः स्वीया बुद्धिरेव परा प्रमा . धर्मे स्यात्स्वार्थिके, किंवा परार्थे, पारमार्थिके ;
समाजे वर्त्तमानस्य परैः सार्धं तु जीवतः धर्मे, बुद्धिः प्रमाणं स्याद्भूयःशिष्टैकमत्यगा ।

---

† म० भा० शां० अ० १३० ।

卐 "बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च , नित्यं शास्त्राण्यवेक्षेत, निगमांश्चैव वैदिकान् ।
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ; तथा तथा विजानाति, विज्ञानं चाऽस्य रोचते"
[ मनु० ४, १९—२० ]

⁂ पञ्चतन्त्रे । × म० भा० शां० अ० १४१ श्लो० १०४ । = म० भा० शां० अ० १४२ श्लो० ३ ।

+ बृहस्पतिः । ❖ भ० गी० अ० १८ ।

समाजाऽग्रजरूपाणां विद्यया वयसा तथा, समाजस्योत्तमाङ्गानां, श्रद्धितानां, महाजनैः
पुरो हितानां = नेतृत्वे नियुक्तानां, महात्मनाम्, आयुक्तानामलुक्षाणां सर्वभूतहितैषिणां
सतां समग्रसद्बुद्धिर्धर्मे सामाजिके तुला; एकस्याऽपीदृशस्योक्ता बुद्धिर्धर्मप्रवर्तिका।
अध्यात्मविदुषां बुद्धिस्त्वेव शास्त्रादिरूपतः, धर्मे मानं; न चाऽत्यन्तं बुद्धेः शास्त्रादि भिद्यते।
अर्थात्, शास्त्रनिबद्धा वा, सदाचारेङ्गिताऽथवा, आत्मतुष्ट्यात्मिका क्रिया, बुद्धिरेव हि सर्वथा
धर्मे मानं समस्तानां व्यस्तानां वा महात्मनां; इत्येवमाशयः सारान्मनोरत्राऽवधीयताम्।
एतच्च प्रथमाध्याये तृतीयश्लोक-भाष्यतः कणेहत्याऽवगन्तव्यं सम्यक्किञ्चित्प्रविस्तरात्।
किञ्च, शास्त्रस्य, बुद्धेश्च प्रमाणत्वं व्यवस्थितं स्वे स्वे मेये विभागेन, श्रोत्र-चक्षुःप्रमात्ववत्;
कार्या-ऽकार्यव्यवस्थायां शास्त्रस्येष्टा प्रमाणता; बुद्धेस्तु शास्त्रकर्तृत्वे, शास्त्रार्थस्य च निर्णये*;
श्रोत्रं शब्दे परं मानं, चक्षू रूपादिदर्शने, एवं शास्त्रं च, बुद्धिश्च, तत्तन्मेयेऽविरोधतः।
बुद्धेर्ऋषित्वविज्ञानाद्, 'ऋषि'शब्दार्थदर्शनात्, वस्तुतो बुद्धिरेवाऽस्ति प्रमाणं परमं नृणाम्†।

---

* "यथा सामान्यतः देशः कालो दशा च त्रिधा विज्ञायते, तथा शास्त्रमपि उपदेश—व्याख्यान—विचाररूपेण त्रिविधमिति पूर्वाचार्याः सूचयन्ति। तत्राद्यं—'अथ शब्दानुशासनम्' 'अथ योगानुशासनम्' इत्यादिकमनुशासनपदघटितप्रारम्भकं; द्वितीयं—'अथातो दर्शपूर्णमासौ व्याख्यास्यामः' 'अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः' इत्यादिकं व्याख्यापदघटितप्रारम्भकं; तृतीयं तु—'अथातो धर्मजिज्ञासा' 'अथातो ब्रह्मजिज्ञासा' इत्यादिकं जिज्ञासापदघटितप्रारम्भकम्। तृतीयमेव न्यायनिबन्धनात्मकं शास्त्रं 'मीमांसाशास्त्रम्' इत्युच्यते; 'मीमांसाशास्त्रं च न्यायनिबन्धरूपम्' इति प्रकरणपञ्चिकायां शास्त्रमुखे प्रतिपादितम्। तथा चोक्तं न्यायवार्तिकतात्पर्यटीकायां—

'मीमांसासंज्ञकस्तर्कः सर्वो वेदसमुद्भवः; सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत्'

पूजितविचारवचनो हि मीमांसाशब्दः, अयुक्तप्रतिषेधेन युक्ताऽभ्यनुज्ञानं तर्कः; प्रमाणेतिकर्तव्यतात्वेन च प्रमाणाद्वेदादभेद उक्तः 'सो ऽतो वेद' इति (पृ० ४१)। तथा च उपदेशकालं, व्याख्यानकालं च अनादृत्य विचारकालाऽनुरोधेन प्राचीनग्रन्थपरामर्शमुखेनैन विचारोऽत्र चिकीर्षितः; यत उच्यते वाक्यपदीये (२, ४९२—९३)—

'प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः; कियद्वा शक्यमुन्नेतुं स्वयत्नमनुधावता?
तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना, अनुपासितवृद्धानां विद्या नाति प्रसीदति' इति।

तत्रापि—

'एकं यदि भवेच्छास्त्रं, ज्ञानं निस्संशयं भवेत्; बहुत्वादिह शास्त्राणां, ज्ञानतत्त्वं सुदुर्लभम्'

इति नारायणीये उक्तत्वेऽपि—

'यस्य नास्ति निजा प्रज्ञा, केवलं तु बहुश्रुतः, न स जानाति शास्त्रार्थं, दर्वी पाकरसं यथा'

इति विदुरनीति-वचनानुरोधेन विचारः कर्तव्यः। तत्राऽप्यत्र विचारे परीक्षकैः तात्पर्ये परं दृष्टिर्विधेया, न तु शब्दार्थे केवले; यतश्च प्रोक्तं कुमारिलेन वार्तिकारम्भे—

'न चाऽत्राऽतीव कर्तव्यं दोषदृष्टिपरं मनः; दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते' इति।

सर्वेषां दर्शनानामिदं खलु परममुद्देश्यं, यद् रागादिदोषवर्जनमिति; तथा हि महाभारतम्—

'शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः; स एव सर्वशास्त्रज्ञः, यस्य शान्तं मनः सदा।
यत् श्रुतं न विरागाय, न धर्माय, न शान्तये, सुबद्धमपि शब्देन, काकवाशितमेव तत्' इत्यादि"

[ दर्शनोदये पृ० १–३ ]

† "ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः;
यस्तन्न वेद, किमृचा करिष्यति? य इत्तद्विदुस्त इमे समासते।

**श्रुतेः परप्रमात्वोक्तेः पार-दौर्बल्यमिङ्गितं; स्मृत्याचारातमतुष्टीनां क्रमात् श्रुत्याद्यपेक्षया ❀**
**"श्रुत्या सह विरोधे तु बाध्यते विषयं विना; व्यवस्थयाऽविरोधेन कार्योऽन्यत्र परीक्षकैः †।**

ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे, यस्तन्नवेद, किं स ऋचा करिष्यति? य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति।... अयं मन्त्रार्थचिन्ताऽभ्यूहोऽभ्यूळ्होऽपि श्रुतितोऽपि तर्कतः; न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः। न ह्येषु प्रत्यक्षमस्ति अनृषेरतपसो वा; पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्ताद्। मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्—'को न ऋषिर्भविष्यतीति?' तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताऽभ्यूहमभ्यूळ्हं; तस्माद् यदेवं किञ्चाऽनूचानोऽभ्यूहति, आर्षं तद्भवति।

'हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः
अत्राह त्वं विजहुर्वेद्याभिरोहब्रह्माणो विचरन्त्युत्वे'

हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते, समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण, ऊह एषां ब्रह्मेति वा। सेयं विद्या श्रुति-मति-बुद्धिस्तस्यास्तपसा पारमीप्सितव्यम्" [ निरु० अ० १३ खं० १०—१३ ]

अत्र 'ऊह' ब्रह्मणः = तर्कात्मनो वेदस्य, बुद्धिरूपस्य, ऋषित्वं = मन्त्रद्रष्टृत्वं, वेदादिशास्त्रकर्तृत्वं तदर्थनिर्णयकारणत्वं च स्पष्टतरमेवाम्नातं दृश्यते। "ऋषिर्वेदः" इत्यादिवाक्येष्वपि 'वेदस्य' = ज्ञानस्य बुद्धिरूपस्यैव ऋषित्वमवगम्यते; आर्षबुद्धिमत्प्रणीतत्वाद्वा वेद-ग्रन्थोऽपि मन्त्रराशिः 'ऋषिः' इत्यभिधीयते। "बुद्धिपूर्वा वाक्यकृतिर्वेदे" एवमादेः शास्त्रवचनादपि बुद्धिमत्पुरुषविरचितत्वमेव वेदशास्त्रस्य प्रमीयते, तेन च बुद्धेर्ऋषित्वम्। अत्र—

"अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्, त ऋषयोऽभवन्; तद् ऋषीणामृषित्वम्" [ तै० आ० प्रपा० २, अनु० ९, मं० १, निरु० अ० २ खं० ११ कं० १ ]

"असद्वा इदमग्र आसीत् तदाहुः—किं तदसदासीदिति? ऋषयो वाव तेऽग्रेऽसदासीत्। तदाहुः—के त ऋषय इति? प्राणा वा ऋषयः, ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसाऽरिषंस्तस्माद् ऋषयः" [ शत० ब्रा० कां० ६ ब्रा० १ खं० १ ]

"साक्षात्कृतधर्माण ऋषयो बभूवुः" "ऋषिर्दर्शनात्, स्तोमान्ददर्श" "ऋषयो मन्त्रद्रष्टारः" इत्याद्यप्यनुसन्धेयम्।

❀ "अथैतेषां विरोधे बलाबलम्। तत्र श्रुत्योर्विरोधेऽगृह्यमाणविशेषत्वाद् द्वयोरपि तुल्यबलत्वम्, अनुष्ठाने परं विकल्पः; यथा षोडशिग्रहणाऽग्रहणादौ। एवं स्मृत्योराचारयोरपि विरोधे द्रष्टव्यं, तुल्यन्यायत्वात्। श्रुत्य-स्मृत्योर्विरोधे तु श्रुतिर्बलीयसी, निरपेक्षत्वात्; स्मृतेस्तु मूलभूतवेदानुमानसापेक्षत्वेन विलम्बितत्वाद्दुर्बलत्वं, यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेद्' 'औदुम्बरी सर्वा वेष्टयितव्या' इति। स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसी, स्मृतेः साक्षात् श्रुत्यनुमापकत्वात्; आचारस्तु स्मृतिद्वारा तदनुमापकत्वाद् दुर्बलः; यथा 'सूर्याविदे वधूवस्त्रं दद्याद्' इति स्मृत्या 'चतुर्थेऽह्नि वधूवस्त्रपरिधानाद्याचारो विरुद्धः; 'सूर्याः' तद्देवत्या ऋचः; तथा मातुलकन्यापरिणयनं—'मातुलस्य सुतामुद्वा इति स्मृतिविरुद्धम्" इत्यादि-वीरमित्रोदये ( परिभाषाप्र० पृ० २५ ) द्रष्टव्यम्।

† अयं पाठो वीरमित्रोदयधृतः; मूले तु सम्प्रति मुद्रितोपलभ्यामानपुस्तके—'व्यवस्थयाऽविरोधेन कार्यो यतनः परीक्ष्यते" इति पाठो दृश्यते; "व्यवस्था त्वविरोधेन कार्याऽन्यत्र परीक्षकैः" इत्येवं पाठस्तु सङ्गतो ज्ञायते। 'विषयं विना' कुत्राऽपि विषयेऽवकाशमन्तरेण, यतः 'स्मृतिर्बाध्यते' बाधितार्थिका भवति, अतः तस्यां 'अविरोधेन व्यवस्थया' अविरोधेन व्यवस्थायै, 'अन्यत्र' विरुद्धश्रुत्यदर्शनकालादौ, विषयः 'कार्यो' बाधितार्थकत्वं कल्पनीयमिति 'कल्पतरु'स्वरसः। 'व्यवस्थया' इति चतुर्थ्यर्थे तृतीया।

स्मृत्या सहाऽविरोधेन चार्थशास्त्रस्य साधनं; परस्परविरोधे तु अर्थशास्त्रस्य बाधनम् ।
अदृष्टार्थे विकल्पस्तु व्यवस्था-संभवे सति; स्मृतिशास्त्रविकल्पस्तु आकांक्षापूरणे सति ।
वेदमूले स्थितं त्वेतदनुष्ठानं, क्रिया सती; एवं शक्यविधानं तु; न्यायो ह्येवं व्यवस्थितः"‡
"भूयांसो धर्मवक्तारः उत्पन्ना, भाविनस्तथा; निधानं सर्वधर्माणां वेद एव तु शाश्वतः ※"
"श्रुति स्मृतिविरोधे तु श्रुतिरेव गरीयसी; अविरोधे सदा कार्यं स्मार्त्तं वैदिकवत्सता †"
"विरोधे त्वनपेक्षं स्याद्, असति ह्यनुमीयते ; विरोधे वेदवाक्येन, तेन चार्थेऽनधिष्ठिते ।
इतश्च न प्रमाणत्वं मूलहेत्वन्तरेक्षणात् ; व्यभिचारे हि नोत्पत्तिरर्थापत्त्यनुमानयोः ।
क्वचिद् भ्रान्तिः,क्वचिल्लोभः,क्वचिद्युक्तिविकल्पनं, प्रतिभाकारणत्वेन निराकर्त्तुं न शक्यते ।

---

शबराऽनुसारिणस्तु—'विषयं विना' विषयबाधाद्विरुद्धा स्मृतिर्बाध्यते एव; यत्र तु विषयान्तरकल्पनं संभवति, तत्राह—'व्यवस्थयेत्यादि' इत्याहुः ।

भाट्टास्तु—विरुद्धा स्मृतिः 'विषयं विना' श्रुतिमूलकत्वसन्देहेन प्रामाण्यसन्देहाद्विषयनिश्चयं विना, 'बाध्यते' तत्प्रतिपाद्यार्थोऽनुष्ठानं बाध्यते, इत्यर्थमाहुः" इत्यादि वीरमि० परि० प्र० पृ० २८ द्रष्टव्यम् ।

‡ भवि पु० ब्रा० प० अ० १८१ श्लो० १७–२० ।

※ वृद्धयाज्ञवल्क्यवचनम् । † मन्वर्थमुक्तावल्यां ( मनु० अ० २ श्लो० १३ ), गौतमधर्मसूत्र-( अ० १ सू० ५ )-हरदत्तवृत्तौ, वीरमित्रोदय-स्मृतिचन्द्रिकादिषु च धृतं लोगाक्षि-जाबालवचनम् ।

"विरोधे त्वनपेक्षं स्याद्, असति ह्यनुमानम् ; हेतुदर्शनाच्च" (मीमांसाद० अ० १ पा० ३ सू० ३–४) ।

"अथ यत्र श्रुतिविरोधः, तत्र कथम् ? यथा औदुम्बर्याः सर्ववेष्टनम् 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्' इति श्रुत्या विरुद्धम्; अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं, 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन विरुद्धम्; 'क्रीतराजको भोज्यान्न' इति 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इत्यनेन विरुद्धम् । तदप्रमाणं, कर्त्तृसामान्याद्, इति; एवं प्राप्ते, ब्रूमः—अशक्यत्वाद् व्यामोह इत्यवगम्यते । ...तस्मादुक्तं, श्रुतिविरुद्धा स्मृतिरप्रमाणमिति; अतश्च सर्ववेष्टनादि नादरणीयम् ।

लोभाद्वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्; तत्स्मृतेर्बीजम् । बुभुक्षमाणाः केचित् क्रीतराजकस्य भोजनमाचरितवन्तः; अपुंस्त्वं प्रच्छादयन्तश्चाऽष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः; तत एषा स्मृतिरित्यवगम्यते ।

अधिकरणान्तरं वा । 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति; 'यूपहस्तिनो दानमाचरन्ति' इति । तत्कर्त्तृसामान्यात् प्रमाणम्, इति प्राप्ते ब्रूमः—अप्रमाणं स्मृतिः; अत्राऽन्यन्मूलं; लोभादाचरितवन्तः केचित्, तत एषा स्मृतिः" A इति शाबरभाष्यम् ।

---

A "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति, इत्यग्नीषोमप्रणयनार्थं विसर्जनहोमकालसम्बन्धि-यजमानाच्छादनं वासोऽध्वर्युर्हरति, मुक्तकमेवैतदावरणानुमितं स्मरणम् । एवं 'यूपहस्तिनो दानमाचरन्ति' इति यूपपरिव्याणशाटकं 'यूपहस्ति' शब्देन निर्दिश्य अध्वर्युर्हर्तव्यतया आचाराऽनुमितयैव स्मृत्या प्रतिपादयन्ति ।

तत्राऽपि वेदमूलत्व-कल्पना नोपपद्यते, कर्त्तृसामान्यतः प्राप्ता; लोभसंभवपूर्वकात् ।

ऋत्विजो हि प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्माऽवश्यसमापनीयत्वनिबद्धसमाप्त्युत्तरकालभावि स्वाच्छन्द्यं च विदित्वा कार्यवत्तावेलायामेव खलगतधान्यविभागव्यावृत्तभृतकवत्स्वयमुत्पाद्योत्पाद्य तानि तान्यादेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शनव्यामोहितश्च यजमानः श्रद्दधानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छतीति तैरेषा स्मृतिः प्रवर्तिता स्यादित्याशङ्कायां वेदमूलत्वं नाऽनुमीयते; पूर्ववच्च लोभपूर्वकत्वकल्पनमेवोपपन्नमिति निर्णयात्सन्देहनिवृत्तिः" [ मी० तं० वा० १,३,४ ]

स्मृतेश्च श्रुतिभग्नायाः कारणान्तरसंभवः, न तु श्रुतेः; अतः सैव तद्विरोधे हि बाध्यते" ×
"स्मृत्याचारविरोधे, वा साम्य-वैषम्यसंशये, समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि।
यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता, आचाराणां तथैवेति न विशेषो बला-ऽबले।
यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात्प्रतीयते, फलाद्धियुज्यमानं हि प्रमाणं दुर्बलीभवेत्।
श्रुतिराचारमूलं या फलस्था सोपलभ्यते, यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते।
तावल्लब्धात्मकः पूर्वमाचारः प्रतितिष्ठति, प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम्?
तेनाऽऽचारबलीयस्त्वं, समत्वं वेह युज्यते; स्मृतीनां वा बलीयस्त्वं, शास्त्रस्था वेति वर्ण्यते।
उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समं, सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना;
तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते।
"आचारात्तु स्मृतिं ज्ञात्वा, श्रुतिर्विज्ञायते ततः, तेन, द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते।
न ह्येकैव श्रुतिः काचिदाचाराणां प्रवर्तिका, भिन्नाभिर्विप्रकीर्णत्वान्नाऽस्मृताभिः प्रवर्तनम्।
नैकप्रपाठकेनैव ह्याचाराणां विधिस्थितिः, क्वचित्प्रकरणे कश्चित्कथञ्चिदुपलभ्यते।...
एवं च विप्रकीर्णानामशक्यैकत्र संहृतिः, स्मृतिमेव दृढां मुक्त्वा, तस्मादस्त्यन्तरा स्मृतिः।
तेनाऽऽचारः स्मृतिं यावदनुमातुं प्रवर्तते, स्मृतिर्लब्धश्रुतिस्तावद्धर्ममेवाऽवधारयेत्।
तस्माद्, आचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति" (मी० तं० वा० अ० १ पा० ३ सू० ९)
"स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत्, तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत्" ❀

---

× "न च दृष्टकारणयोः स्मृत्याचारयोः प्रामाण्यम्; उक्तं च भट्टपादैः—
"विरुद्धा च, विगीता च, दृष्टार्था, दृष्टकरणा, स्मृतिर्न श्रुतिमूला स्याद्, या चैषा संभवश्रुतिः"
इति मेधातिथिमनुभाष्ये (अ० २ श्लो० १८) धृतं कुमारिलवचनम्।

"न तु दृष्टार्थे, अवरदौर्बल्यात्" (गौ० ध० सू० १, ५) 'दृष्टार्थे' दृष्टप्रयोजने, वेदविदां 'स्मृति-शीले धर्ममूले न भवतः; 'अवरदौर्बल्यात्'—'दृष्टो धर्मव्यतिक्रमः, साहसं च महतां' ते च धर्मव्यतिक्रम-साहसे, स्पष्टमेव लोभ-क्रोधादिमूलके भवतः; एवञ्चैतादृशयोरपि दृष्टकारण-प्रयोजनयोः स्मृति-शीलयोः धर्ममूलत्वे सति, तत्प्रामाण्येन विकर्मसु धर्मबुद्ध्या प्रवर्त्तमानः 'अवरो' जनः दौर्बल्यात् सीदति; तथा च श्रूयते—

'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते; तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः' इति; तस्मान्महता वेदविदामपि धर्मव्यतिक्रम-साहसरूपे, दृष्टार्थे दृष्टलोभ-क्रोधादिकारणे च स्मृति-शीले, न धर्मे प्रमाणमित्यर्थः। "विषयाऽभिलाषेण यदयुक्तमाचर्यते, स धर्मव्यतिक्रमः, क्रोधाद्यभिभवेन यत्क्रियते, तत्साह-सम्" तदेतद्द्वयमपि 'हेतुदर्शनात्' न धर्ममूलं भवितुमर्हतीति।

मस्करिभाष्ये तु—'न तु दृष्टार्थेऽवरदौर्बल्यात्' इत्येवं सूत्रपाठमुपादाय—"दृष्टार्थो, दृष्ट-प्रयोजनः, तस्मिन् दृष्टप्रयोजने, 'शीलं' धर्ममूलं न भवति; तथा च वशिष्ठः—'अगृह्यमाणकारणो धर्मः' इति।... 'अवरदौर्बल्यात्' न वरः 'अवरो' निकृष्टः, द्वेषाद्यभिभूतः अपरमार्थज्ञान इत्यर्थः, तस्य 'दौर्बल्यात्' धर्मा-ऽधर्मपरिज्ञानाशक्तेरित्यर्थः। एतच्चानेन ज्ञापितं भवति—महतामपि तद्विदां कदाचिदभि-भवोऽस्तीति, शरीरवतः प्रिया-ऽप्रिययोरवश्यंभावित्वात्, तस्माद् यावदेतेषां रागादिदोषेणाऽभिभवः, तावत्तेषा-माचारोऽपि न ग्राह्यः; तथा च वसिष्ठः—'शिष्टः पुनरकामात्मा' इति" इत्थं व्याख्यातम्।

"तुल्यबलविरोधे विकल्पः" (गौ० ध० सू० अ० १ सू० ६) अत्रत्यं मस्करिभाष्यं च श्रुत्यादीनां बला-ऽबलविवेके द्रष्टव्यम्।

❀ स्मृतिचन्द्रिकाधृतं 'चतुर्विंशति' वचनम्।

"स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः, अर्थशास्त्रात्तु बलवद् धर्मशास्त्रमिति स्थितिः †।
"धर्मशास्त्रा-ऽर्थशास्त्राभ्यामविरोधेन यत्नतः, संपश्यमानो निपुणं व्यवहारगतिं नयेत्।
यथा मृगस्य विद्धस्य व्याधो मृगपदं नयेत्, कक्षे शोणितपातेन, तथा धर्मपदं नयेत्।
यत्र विप्रतिपत्तिः स्याद् धर्मशास्त्रार्थशास्त्रयोः, अर्थशास्त्रोक्तमुत्सृज्य, धर्मशास्त्रोक्तमाचरेत्।
धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः, व्यवहारो हि बलवान्, धर्मस्तेनाऽवधीयते।
सूक्ष्मो हि भगवान्धर्मः परोक्षो दुर्विचारणः; अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्" ‡।
"प्रत्यक्षेणाऽनुमानेनाऽबाधेनाऽऽप्ताज्ञयाऽपि वा, यो ज्ञापितः, स सत्याख्यः परमार्थः प्रकीर्तितः।
आज्ञा राज्ञामृषीणां च मातापित्रोर्गुरोस्तथा, निर्हेतुकं ग्रहीतव्या, स्थितिः सभ्यजनस्य सा।
वस्तुस्थितौ तु केषाञ्चिन्न शब्दानां प्रमाणता; शब्दैरुक्तेऽप्यनुक्तेऽपि वस्तुन्यनुभवः प्रमा।
यन्नाऽनुभूयते साक्षात्, न चैवाऽप्यनुमीयते, तादृशे शब्दमात्रोक्ते, सन्देहो व्याहतिर्न चेत्।
व्याहते तु न सन्देहः, सद्यश्चाऽसत्यताग्रहः; सत्याराधनशीलानां सभ्यानां स्थितिरीदृशी—
'जलमानय पुत्रेति' विधेयाऽऽज्ञा पितुर्द्रुतं; 'वाराणसी हिमाद्रावि'त्यपरीक्ष्य न मन्यते।
'वन्ध्यापुत्रशिरोवर्ति हेमपात्रं गृहान्तरे, तदानयेति' व्याघातग्रस्तं सद्य उपेक्ष्यते ×"
एवं धर्मप्रमाणानां वेदादीनां बला-ऽबलं, विरोधे पार-दौर्बल्यं चाऽत्र किञ्चित्प्रदर्शितम्।
तेन स्मृत्याद्यपेक्षातो वेदस्यैवाऽवधार्यते, प्राबल्यं परमत्वं च स्वतःप्रामाण्यमेव च +।
बुद्धेर्वेदस्य मातुस्तु वेदशास्त्राद्यपेक्षया, अभ्यर्हितं प्रमाणत्वं प्रबलं चेति मन्यते।
"शास्त्रस्था तन्निमित्तत्वाद्" ❀ बुद्धिरेव परा प्रमा, इत्याह जैमिनिः साक्षाद्वेदमीमांसको मुनिः।
'शिष्टा एव प्रमाणं तु श्रुति-स्मृत्यवधारणे' = इत्याह शबराचार्यो मीमांसाशास्त्रभाष्यकृत्।
एतेनापि च शिष्टानां बुद्धेरेव प्रमाणता, दर्शिता परमा स्पष्टं वेदशास्त्रार्थनिर्णये।
वेदशास्त्रेण सामान्याद्धर्मज्ञानेऽथ सत्यपि, तत्प्रयोगस्य विज्ञानं विना बुद्धिं न सेत्स्यति।
"श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनं; बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम।
भगवानपि धर्मज्ञः स्वाध्यायनिरतः शुचिः, न तु तत्त्वेन भगवन्, धर्मं वेत्सीति मे मतिः।...
"श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनं; सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका।
प्राणान्तिके विवाहे च वक्तव्यमनृतं भवेत्; अनृतेन भवेत्सत्यं, सत्येनैवानृतं भवेत्।

---

† या० स्मृ० व्यव० अ० २ श्लो० २१। ‡ नारदस्मृ० अ० १ श्लो० ३७–४१। अत्रोक्तं, धर्मशास्त्राऽपेक्षया अर्थशास्त्रदुर्बलत्वं मत्स्यपुराणेऽपि सूचितं; तद्यथा—
"ततः प्रसाद्य देवेशः क्षमस्वेति दितिं पुनः, अर्थशास्त्रं समास्थाय मयैतद् दुष्कृतं कृतम्।...
क्षया-ऽतिशयदुःखं च नाऽर्थशास्त्रस्य चाऽऽदरः, धर्मैकवासना लोकाः पृथौ राज्यं प्रशासति" इति
(म० पु० अ० ७ श्लो० ६३; तथा अ० १० श्लो० ३२) × शतश्लो० ध० शा० अ० २ श्लो० ४—१०।

+ "या हि चोदना धर्मस्य लक्षणं, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति" (ब्र० सू० १, १, १ शाङ्करभाष्यम्)।

"धर्मजिज्ञासायां···श्रुत्यादय एव प्रमाणम्" (ब्र० सू० १, १, २ शां० भा०)।

"प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात्; अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात्" (ब्र० सू० १, ३, २८, शाङ्करभाष्यम्)।

"श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" (रघुवंशे स० २ प० २)।

❀ "शास्त्रस्था वा तन्निमित्तत्वात्" (मी० द० अ० १ पा० ३ सू० ९)।

= "कः पुनरत्र निश्चयः? यः शास्त्रस्थानां स शब्दार्थः; के शास्त्रस्थाः? शिष्टाः, तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च; तेन, शिष्टा निमित्तं श्रुति-स्मृत्यवधारणे" (मीमांसा-शाबरभाष्यम्, अ० १ पा० ३ सू० ९)।

यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा; विपर्ययकृतोऽधर्मः, पश्य धर्मस्य सूक्ष्मताम्†।"

युधिष्ठिरः—"निर्णये वा महाबुद्धे, सर्वधर्मविदां वर ,
प्रत्यक्षमागमो वेति, किं तयोः कारणं भवेत् ?

भीष्मः—नास्त्यत्र संशयः कश्चिदिति मे वर्तते मतिः ;
शृणु, वक्ष्यामि ते प्राज्ञ, सम्यक् त्वं मेऽनुपृच्छसि ।
संशयः सुगमस्तत्र, दुर्गमस्तस्य निर्णयः ; दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शनम् ।
प्रत्यक्षं कारणं दृष्ट्वा हैतुकः प्राज्ञमानिनः; नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च ।
तद्युक्तं व्यवस्यन्ति बालाः पण्डितमानिनः; अथ चेन्मन्यसे चैकं कारणं किं भवेदिति ;
शक्यं दीर्घेण कालेन युक्तेनातन्द्रितेन च, प्राणयात्रामनेकां च कल्पमानेन भारत ,
तत्परेणैव नाऽन्येन शक्यं ह्येतस्य दर्शनं; हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमं
ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते । न त्वेव गमनं राजन्, हेतुतो गमनं तथा ,
अग्राह्यमनिबद्धं च वाचा संपरिवर्जयेत् ।

युधिष्ठिरः—प्रत्यक्षं लोकतः सिद्धिः, लोकश्चागमपूर्वकः ,
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ।

भीष्मः—धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ।
अधर्मो धर्मरूपेण तृणैः कूप इवावृतः ; ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ,
अवृत्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः, धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः।
अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः, परमित्येव सन्तुष्टास्तानुपास्व च पृच्छ च ;
कामा-ऽर्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ, धर्म इत्येव संबुद्धास्तानुपास्व च पृच्छ च।
न तेषां भिद्यते वृत्तं, यज्ञाः स्वाध्यायकर्म च, आचारः कारणं चैव धर्मश्चैकस्त्रयं पुनः ।

युधिष्ठिरः—पुनरेव हि मे बुद्धिः संशये परिमुह्यति , अपारे मार्गमाणस्य परं तीरमपश्यतः।
वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि, पृथक्त्वं लभते चैषां, धर्मश्चैकस्त्रयं कथम्?

भीष्मः—धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः, यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ;
एक एवेति जानीहि त्रिधा धर्मस्य दर्शनं, पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा।
उक्तो मार्गस्त्रयाणां च तत्तथैव समाचार; जिज्ञासा न तु कर्तव्या धर्मस्य परितर्कणात्।
सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ; अन्धो जड इवाऽशङ्की यद् ब्रवीमि, तदाचर*"

इत्थमाप्तोपदेशेन, गुरोरव्याहताज्ञया, शिष्टवृद्धाऽनुशास्त्या च, शास्त्रं भवति वाङ्मयम्।
तस्माद्बुद्धिप्रसूतत्वं स्पष्टं शास्त्रस्य गम्यते; युगरूपानुवर्तित्वं विभिन्नत्वं च दृश्यते ।

"कालाऽवस्था तदा ह्यन्या, न सा वर्तति साम्प्रतम्; अन्यः कृतयुगे कालस्त्रेतायां द्वापरे परः।
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः, कालं समनुवर्तन्ते, यथा भावा युगे युगे ।
बल-वर्ष्म-प्रभावा हि प्रहीयन्त्युद्भवन्ति च; युगं समनुवर्त्तामि, कालो हि दुरतिक्रमः ।
द्वापरे च युगे धर्मो द्विभागोनः प्रवर्तते, विष्णुर्वै पीततां याति, चतुर्धा वेद एव च ।
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथाऽपरे द्विवेदाश्चैकवेदाश्चाऽप्यनृचश्च तथापरे ।
एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया; एकवेदस्य चाऽज्ञानाद्वेदास्ते बहवः कृताः।...
युगेष्वावर्त्तमानेषु धर्मो व्यावर्तते पुनः, धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः;
लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः; युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते।
एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते; युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः *"

† म० भा० वन० अ० २०६ तथा २०९ । * म० भा० अनु० अ० १६२ ।

* म० भा० वन० अ० १४९ ।

"वेदवादाश्चाऽनुयुगं ह्रसन्तीतीह नः श्रुतम्; आयूंषि चाशिषश्चैव वेदस्यैव च यत्फलम् †"
"तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे, अपृथग्दर्शनाः सर्वे ऋक्सामसु यजुःषु च ।...
त्रेतादौ संहता वेदा यज्ञा वर्णाश्रमास्तथा; संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ।
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा; दृश्यन्ते नाऽपि दृश्यन्ते कलेरन्ते पुनः किल ।
उत्सीदन्ति स्वधर्माश्च तत्राऽधर्मेण पीडिताः; गवां भूमेश्च ये चापामोषधीनां च ये रसाः ।
अधर्मान्तर्हिता वेदा वेदधर्मास्तथाऽऽश्रमाः विक्रियन्ते स्वधर्माश्च, स्थावराणि चराणि च ।
यथा विश्वानि भूतानि वृष्टिर्भौमानि प्रावृषि सृजते, सर्वतोऽङ्गानि तथा वेदा युगे युगे †"
"आद्ये कृते न धर्मोऽस्ति, स त्रेतायां प्रवर्तितः; द्वापरे व्याकुली भूत्वा प्रणश्यति कलौ युगे ।
वर्णानां द्वापरे धर्माः सङ्कीर्यन्ते तथाऽऽश्रमाः; द्वैधमुत्पद्यते चैव युगे तस्मिञ्श्रुतौ स्मृतौ ।
द्वैधाच्छ्रुतेः स्मृतेश्चैव निश्चयो नाऽधिगम्यते; अनिश्चयाधिगमनाद्धर्मतत्त्वं न विद्यते;
धर्मतत्त्वे ह्यविज्ञाते मतिभेदो भवेन्नृणाम् । परस्परविभिन्नैस्तैर्दृष्टीनां विभ्रमेण तु,
अयं धर्मो ह्ययं नेति निश्चयो नाऽभिगम्यते । करणानां च वैकल्यात्कारणस्याऽप्यनिश्चयात्
मतिभेदे च तेषां वै दृष्टीनां विभ्रमो भवेत्; अतो दृष्टिविभिन्नैस्तैः कृतं शास्त्रकुलं त्विदम् ।
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते; संक्षेपादायुषश्चैव व्यस्यते द्वापरेषु च;
वेदव्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु; ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्र-ब्राह्मणविन्यासैः स्वरक्रमविपर्ययैः संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः ।
सामान्याद्वैकृताच्चैव दृष्टिभिन्नैः क्वचित्क्वचित्, ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।
अन्ये तु प्रस्थितास्तान्वै, केचित्तान्प्रत्यवस्थिताः, द्वापरेषु प्रवर्तन्ते भिन्नार्थैस्तैः स्वदर्शनैः ।
एकमाध्वर्यवं पूर्वमासीद्, द्वैधं तु तत्पुनः, सामान्यविपरीतार्थैः कृतं शास्त्रकुलं त्विदम् ।
आध्वर्यवं च प्रस्थानैर्बहुधा व्याकुलीकृतं, तथैवाऽथर्वऋक्साम्नां विकल्पैश्चाऽप्यसंक्षयैः ।
व्याकुलो द्वापरेष्वर्थः क्रियते भिन्नदर्शनैः, द्वापरे संनिवृत्ते ते वेदा नश्यन्ति वै कलौ ।
उत्पद्यन्ते हि शास्त्राणां द्वापरे परिपन्थिनः ; आयुर्वेदविकल्पाश्च, अङ्गानां ज्योतिषस्य च ।
अर्थशास्त्रविकल्पश्च, हेतुशास्त्रविकल्पनम्, प्रक्रिया कल्पसूत्राणां, भाष्यविद्याविकल्पनं,

---

† म० भा० शां० अ० २३१ श्लो० २६, तथा तत्रैव अ० २६० श्लो० ७ । एतदनुसृत्यैवाऽधस्तनः 'कुसुमाञ्जलिः'—

"जन्म-संस्कार-विद्यादेः शक्तेः स्वाध्याय-कर्मणोः, ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ।

पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसंभवाः, ततः कामावर्जनीयसन्निधिजन्मानः, इदानीं देश-कालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः; पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादितः, इदानीन्तु जातेषु लौकिकव्यवहारमाश्रित्य; पूर्वं सहस्रशाखो वेदोऽध्यगायि, ततो व्यस्तः, ततः षडङ्ग एकः, इदानीन्तु क्वचिदेका शाखेति; पूर्वमृतवृत्तयो ब्राह्मणाः प्राद्योतिषत, ततोऽमृतवृत्तयः, सम्प्रति प्रमृत-सत्याऽनृत-कुसीद-पाशुपाल्य-श्ववृत्तयो भूयांसः; पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियाऽतिथयोऽपि संवृत्ताः, ततो वैश्यावेशिनोऽपि, सम्प्रति शूद्रान्नभोजिनोऽपि; पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, सम्प्रत्यघभुज एव; पूर्वं चतुष्पाद् धर्म आसीत्, ततस्तनूयमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे दानैकपात्; सोऽपि पादो दुरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यते" [ कुसु० स्तव० २ का० ३ ] ।

† म० भा० शां० अ० २३२ तथा २३८ ।

स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक्पृथक्, द्वापरेष्वभिवर्तन्ते मतिभेदस्तथा नृणाम् †"
इत्थं युगानुसारेण वेदस्य परिवर्तनात्, व्यस्ताऽनन्ताङ्ग-शाखत्वात्, संस्करणोपबृंहणात्,
नानाप्रस्थानभिन्नत्वाद्, विरुद्धार्थाऽसमन्वयात्, अर्थवादोक्तिभूयस्त्वात्, दुरूहार्थाऽनुशासनात्,
उच्चावचैरभिप्रायैर्हेतुभिश्च प्रवर्तितैः मन्त्रकृद्भिः प्रणीतत्वाद्विसंवाद्यर्थदर्शनात्,
महाजनाऽननुष्ठानाद्बहुंशाऽव्यवहारतः, युगाऽनुगक्रमह्रासाद्, विप्लवाच्चाऽन्ततः कलौ,
संभवद्द्वेष-रागादिस्वोत्प्रेक्षाहठवादिभिः प्रतिसंस्कर्तृभिः क्षिप्तैर्वाक्यैस्तत्त्वार्थविप्लवात्,
विशेषस्थितिसंभूतैर्देश-कालप्रयोजनैः महाजनाऽनुसारित्वा-ऽननुसारित्वदर्शनैः
सम्प्रदायविशेषार्थपक्षपाताशयानुगैः भाष्य-टीका-निबन्धाद्यैर्विषमार्थाऽनुवर्णनात्,
भ्रमा-ऽज्ञान-स्वसिद्धान्तपक्षपातदुराशयैः लेखकैः शोधकैः क्षिप्तपाठभेदार्थसंशयात्,
मिथो भिन्नार्थवादेषु विसंवादिषु शास्त्रिणां विचारेष्वप्यनाश्वासाद्, आचारेषु च भेदतः,
सदसच्छास्त्रविज्ञाने, सत्यशास्त्रार्थनिर्णये, कार्या-ऽकार्यविवेके च, बुद्धिरेवान्ततो गतिः।
"वेदा बहुमुखा भान्ति, स्मृतयश्च तथैव च, पुराणानि समस्तानि, बुद्धा-ऽर्हाद्यागमान्तराः,
शैवाश्च, वैष्णवाश्चैव, मदुक्ता आगमा अपि, अपभ्रंशाः समस्ताश्च, केवलं लौकिकी मतिः,
तर्काश्च विविधाः सूक्ष्माः स्थूलाश्च, सकला अपि, परस्परविरोधेन प्रभान्ति सकलात्मनाम्।
तेषामेवाऽविरोधे तु कालो याति च धीमतां; कथञ्चित्कालसद्भावेऽप्यविरोधो न सिद्ध्यति।
अतः सर्वं परित्यज्य मनसो मलकारणं, यथाभातेन रूपेण शिवं पश्येत्सुनिश्चलम्।
कृमि-कीट-पतङ्गेभ्यः पशवः प्रज्ञयाऽधिकाः, पश्वादिभ्यो नराः प्राज्ञा, तेषु केचन कोविदाः,
तथा तेभ्यश्च गन्धर्वाः पितरो मतिमत्तमाः, अन्ये च तारतम्येन पण्डिता उत्तरोत्तरं;
यूयं सत्त्वोत्कटाः प्राज्ञाः सर्वेषामपि हे सुराः, युस्मभ्योऽहं महाप्राज्ञो, मत्तः प्राज्ञो जनार्दनः,
जनार्दनादपि प्राज्ञः शङ्करो गुणमूर्तिषु, ततः प्राज्ञतमः साक्षाच्छिवः साम्बः सनातनः,
स एव साक्षात्सर्वज्ञस्ततोऽन्यो नास्ति कश्चन; तस्माद्धियामिमां त्यक्त्वा, ब्रह्म सर्वं विलोकयेत्"†
एवमाद्यार्षवाक्यैश्च तत्तद्योन्यनुसारतः, प्रज्ञायास्तारतम्येन तत्तत्कर्मप्रवेदने,
आक्रमेः शङ्करान्तानां बुद्धिरेव प्रशस्यते; तत्, स्वधर्मेषु सर्वेषां बुद्धिः स्वैवाऽन्तिमा प्रमा।
किञ्चेश्वरप्रणीतो वा, ऽपौरुषेयोऽथवा भवेद् वेदः, परन्तु लोकेषु न स्वयं स प्रवर्तते;
नैवेहाकाशवाणी तं ब्रह्मोत्सृष्टाऽशरीरिणी श्रावयतीति, नोपेत्य साक्षादीशोऽपि वक्ति नः।
नरैः साधारणैरेव दोषवद्भिः सहेतुकैः लोके वेदप्रचारोऽस्ति चिरादज्ञातकालतः;
तत्प्रमादादिदोषेणाऽवश्यं स्यादर्थविप्लवः, मूलपाठविपर्यास-न्यूनाऽधिक्यादिसंभवः।
नैवादितोऽद्यपर्यन्तं सर्वथाऽक्षुण्णरूपतः, मूलवेदस्य लोके स्याच्चिराबाधं प्रवर्तनम्।
अद्योपलभ्यमानेषु वेदग्रन्थेषु भूयसा शब्दाऽर्थव्याहतिः साक्षाच्चक्षुषैव विलोक्यते।
आस्तामज्ञातमूलस्य वेदस्य व्याहतेः कथा; ज्ञातग्रन्थविपर्यासो दृश्यः संस्करणान्तरे।
दृष्टमूला हि भूयांसो ग्रन्थाः प्रक्षेपकादिभिः दृश्यन्ते विकृता; वेदे किं वक्तव्यं चिरन्तने?
शाखाप्रभेदसाक्षात्त्वात्, शाखोच्छेदकथाश्रुतेः* अपि वेदस्य वैकृत्यं विप्लवश्चाऽनुमीयते।

† मात्स्ये अ० १४४; वायौ अ० ५८।

† सूतसं० यज्ञवैभवखण्डोपरिभागे ब्रह्मगी० अ० ९ श्लो० २५–३४।

* "इदानीमिव सर्वत्र दृष्टान्नाऽधिकमिष्यते इति चेन्न, स्मृत्यनुष्ठानाऽनुमितानां शाखानामुच्छेद-दर्शनात्; स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्याऽनभ्युपगमात्; मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात् B... अथाऽयमाशयः—वैदिका अप्याचारा राजसूया-ऽश्वमेधादयः समुच्छिद्यमाना दृश्यन्ते,

B. "ननु मन्वादिस्मृतयोऽपि वेदमूलत्वात्प्रमाणं, नाऽन्यतः इति? अत्रोच्यते; तदेतद्वेदमूलतया

इत्थं वेदस्य वैकृत्ये विपर्यासेऽथ विप्लवे दृढं ज्ञाते, क आश्वासस्तस्य तत्त्वार्थवेदने ?
तस्माद् यथार्थवेदत्वप्रविवेकाऽवधारणे, तत्तत्त्वार्थे च वै बुद्धेः प्रामाण्यं परमं स्थितम् ।

---

यत इदानीं नाऽनुष्ठीयन्ते; न चैते प्रागपि नाऽनुष्ठिता एव, तदर्थवेदराशेरप्रामाण्यप्रसङ्गात्, समुद्रतरणोपदेशवत् ।... तस्मात्, प्रत्यक्षश्रुतिरेव मूलमाचारस्य, सा चेदानीं नास्तीति शाखोच्छेदः; ...विश्वपरिग्रहाच्च न सहसा सर्वोच्छेद इति" [ कुसु० स्तव० २ का० ३ ] ।

"...वेदह्रासदर्शनात्; यत इदानीमश्रूयमाणस्यापि वेदस्यार्थोऽनुष्ठीयते, निबद्ध्यते च मन्वादिभिः; पुरुषाणामपचीयमानशक्तित्वाच्च, यथा ह्यश्वमेध-राजसूयाद्यनुष्ठानशक्तेरपचयस्तथाऽध्ययनशक्तेरपि । न च पूर्वमपि नाऽनुष्ठिता एव राजसूयादयः; तदर्थस्य वेदवाक्यस्य वैयर्थ्यप्रसङ्गात् । न च नित्याऽनुमेयवेदसम्भवः; वर्णानां नित्यत्वेऽपि, आनुपूर्व्याः पाठायत्तत्वात् ।...तस्मात्, पुरुषाणामनुष्ठानशक्तिवद् अध्ययनशक्तिरपि युगक्रमेणाऽपचीयते; ततो वेदानां शाखोच्छेदः, तदर्थानामनुष्ठानोच्छेदः, वर्णाश्रमाचारव्यवस्था विप्लवश्चेति । अत एव भगवतो व्यासस्य पुरुषशक्त्यपचयमात्रेण वचनानि—'स्वल्पायुषः स्वल्पसत्त्वाः' इत्यादीनि, वेदोत्सादमवेक्ष्य—'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्यादीनि, अनुष्ठानोत्सादमवेक्ष्य—'दानमेकं कलौयुगे' इत्यादीनि, आचारविप्लवमवेक्ष्य-'प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणाः' इत्यादीनि। तथा च श्रूयमाणा अपि वेदाऽवयवा उत्सादमुपयास्यन्ति, वेदत्वाद्वाक्यत्वाद्वा, उत्सन्नशाखावद्, इति न्यायः" इत्यादि उदयनाचार्यस्य 'आत्मतत्त्वविवेके' ( परिच्छे० ४ पृ० ४२४–२५ ) द्रष्टव्यम् ।

---

प्रामाण्यं, योगिप्रत्यक्षं धर्मग्राहकममृष्यमाणाः किलाचक्षते भवन्तः । एतच्च न युक्तम् । यथा हि भगवानीश्वरः सर्वस्य कर्ता सर्वस्येशिता सर्वदर्शी सर्वानुकम्पी च वेदानां प्रणेता समर्थितः, तथा योगिप्रत्यक्षमपि धर्मग्रहणे निपुणमस्मदादिप्रत्यक्षविलक्षणं प्रत्यक्षलक्षणे समर्थितमेव; तस्मात्, तन्मूला एव मन्वादिदेशना भवन्तु । यत्तु त्रिकालाऽनवच्छिन्नः कथं प्रत्यक्षगम्यो धर्मः स्यादिति चोदनैव तत्र प्रमाणमुच्यते, प्रतिविहितं तत्; ईश्वरप्रत्यक्षं यथा अग्निहोत्रादेर्धर्मत्वस्य ग्राहकम्, एवमष्टकादियागे तस्य ग्राहकं मन्वादिप्रत्यक्षं भविष्यतीति किमत्र त्रिकालाऽनवच्छेदेन तदवच्छेदेन वा कृत्यम् ? यद्येवमष्टकादिकर्मणां धर्मत्वाऽग्राहित्वादसर्वज्ञ ईश्वरः स्यात्, ज्ञात्वा वाऽनुपदिशन्न कारुणिको भवेत् ? नैष दोषः; सर्वं जानात्येव भगवान्, किञ्चित्स्वयमुपदिशति; किञ्चित्परानुपदेशयति; ते हि तस्याऽनुग्राह्या भगवतः, तेषां च तदनुग्रहकृतैव तथाविधज्ञानप्राप्तिः । मन्वादीनां प्रत्यक्षो धर्म इति वेदेऽपि पठ्यते—'साक्षात्कृतधर्माण ऋषयो बभूवुः, ते परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्राहुः' इति । नन्वेवं प्रत्यक्षमूलत्वाऽविशेषात् श्रुति-स्मृत्योर्विरोधे विकल्पः प्राप्नोति, बृहद्रथन्तरविध्योरिव, न बाध्य-बाधकभावः; न हि ईश्वरप्रत्यक्षस्य योगिप्रत्यक्षस्य च प्रामाण्ये कश्चिद्विशेषः, नैसर्गिकाहार्यत्वकृतस्तु भविष्यति; किं तेन ? उच्यते; भवतु विकल्पः; को दोषः ? वेदमूलत्ववादिभिरपि कश्चिद्विकल्पो व्याख्यात एव; विषयविभागेन वा विकल्पो व्याख्यास्यते; न च श्रुतिस्मृतिविरोधोदाहरणं किञ्चिदस्तीति स्वाध्यायाभियुक्ताः । तस्माद्, आप्तप्रत्यक्षमूलत्वेन वेदानामिव धर्मशास्त्राणां हि मत्रमं वेद(त्व)माहुः; उक्तं च—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्; बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति' इति"

[ न्यायमं० आ० ४ पृ० २६३—६४ ]

"ध्यानमयदृष्टिपातप्रमुषितकालाऽध्वविप्रकर्षेषु विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ।
वारांस्त्रीनभिषुण्वते, विदधते वन्यैःशरीरस्थिती, रैणेय्यां त्वचि संविशन्ति, वसते चापि त्वचस्तारवीः,
तत्पश्यन्ति च धाम नाभिपततो यच्चार्मणे चक्षुषी, धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते ।
अविद्याबीजविध्वंसादयमार्षेण चक्षुषा, कालौ भूतभविष्यन्तौ वर्त्तमानमवीविशत् ।
मीमांसते किमार्योऽयं कौशिकेऽप्यनुशासति; वाचमेषामृषीणां हि शास्त्रमेवाऽनुवर्तते ।
ज्योतिर्मयेन वपुषा जगदन्तसाक्षी, लज्जिष्यते कुलगुरुर्भगवान्वसिष्ठः ।

'अथाऽष्टादशभिर्विद्या-प्रस्थानैरुपबृंहितः वेद एव प्रमाणं स्यात् , न तु तद्बाह्य आगमः' 卐
इति सिद्धान्तमास्थाय, वेदबाह्यागमाख्यया बौद्धादींश्च समुत्प्रेक्ष्य, प्राहुः केचिदिहेदृशम्—

卐 "ततश्च पौरुषेया-ऽपौरुषेयभेदेन निगमागमव्यवहारो मुख्यः; अत एवोच्यते प्रमाणनयतत्त्वालोकालङ्कारे देवसूरिभिः ( ४--१ )--'आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः, उपचारादाप्त-वचनं च—

आगमो ह्याप्तवचनम्, आप्तिं दोषक्षयं विदुः; क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद् हेत्वसंभवात्' इति।

तथा सांख्यसप्ततिव्याख्यायां जयमङ्गलायाम्—

'स्वकर्मणाऽभियुक्तो यो रागद्वेषविवर्जितः निर्वैरः पूजितः सद्भिराप्तो ज्ञेयः स तादृशः' इति।

'आप्तः' क्षीणदोष इति। शब्दकल्पद्रुमे तु एवमुदाहृतम्—

'सृष्टिश्च, प्रलयश्चैव, देवतानां तथाऽर्चनं, साधनं चैव मन्त्राणां, पुरश्चरणमेव च ,
षट्कर्मसाधनं चैव, ध्यानयोगश्चतुर्विधः, सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः' इति।
'कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते, क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्'।

आगमपदं शास्त्रमात्रे मन्वादिभिः प्रयुज्यते; यथा ( अ० १२ श्लो० १०५ )—

'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमं, त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता' इति।

हरिरप्याह वाक्यपदीये—

'प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः; अनुपासितवृद्धानां विद्या नाति प्रसीदति' इति।

ततश्च शब्दप्रमाणमात्रे इदानीमागमपदं प्रयुज्यते।

तथा तन्त्रपदमपि मन्त्रपदप्रतिद्वन्द्वितया प्रयुज्यते; 'स्वतन्त्रः' 'परतन्त्र' इत्यादौ 'तन्त्र' पदम् 'अधीन'मित्यर्थमवगमयति; ततोऽपि पुरुषाधीनमिति शक्यते समुल्लिखितुम्। न्यायभाष्ये तु( १-१-२६)—
'इतरेतराऽभिसम्बन्धस्याऽर्थजातस्य उपदेशः शास्त्रं तन्त्रम्' इत्युक्तम्। तन्त्रलक्षणमप्येवं तन्त्रविद्भिरुदीर्यते ( शैवदर्शने सर्वदर्श० )—

'त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः, सूत्रेणैकेन संक्षिप्य प्राह, विस्तरतः पुनः' इति।

'चतुष्पाद'मित्यनेन विद्या-क्रिया-योग-चर्याख्यैश्चतुर्भिः पादैः सहितः प्रबन्धः महातन्त्रमिति सिध्यति। विष्णुसंहितायां तु सप्तमपटले—

'सर्वेऽर्था येन तन्यन्ते, त्रायन्ते च भयाज्जनाः, इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते'

इति श्रूयते। अनेन 'मननान्मन्त्रः, तननात्तन्त्र' इति सिद्ध्यति; तपोविशेषेण मनसा साक्षात्कृतो मन्त्रः, तदर्थस्य विस्तरेण निरूपणात् तन्त्रः। अयमपि विभागः पौरुषेया-ऽपौरुषेयरूप इत्येव फलति; अत एव वाराहतन्त्रे तन्त्रलक्षणमेवमुक्तमिति शब्दकल्पद्रुमः—

'सर्गश्च, प्रतिसर्गश्च, मन्त्रनिर्णय एव च, देवतानां च संस्थानं, तीर्थानां वर्णनं तथा ,
तथैवाश्रमधर्मस्य विप्रसंस्थानमेव च, संस्थानं चैव भूतानां, यन्त्राणां चैव निर्णयः ,
उत्पत्तिर्विबुधानां च, तरूणां कल्पसंज्ञितं, संस्थानं ज्योतिषां चैव, पुराणाख्यानमेव च ,
कोशस्य कथनं चैव, व्रतानां परिभावनं, शौचाशौचस्य चाख्यानं, नरकाणां च वर्णनं ,
हरचक्रस्य चाख्यानं, स्त्रीपुंसोश्चैव लक्षणं, राजधर्मो, दानधर्मो, युगधर्मस्तथैव च ,
कथ्यते व्यवहारश्च, तथा चाध्यात्मवर्णनम्; इत्यदिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते' इति।

---

यजूंषि तैत्तिरीयाणि मूर्तानि वमतिस्म यः, स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत्।
किं याज्ञवल्क्यो, जनकः किमेवं न वः स्वरूपं कवयोऽपि विद्युः;
प्रवाहनित्यानधिकृत्य युष्मान्सहस्रशाखाः श्रुतयः प्रथन्ते [ अनर्घरा० अं० १-२ ]

इत्यादिमीमांसकमहाकविभणितयोऽपि मन्वादीनां साक्षात्कृतधर्मत्वं, श्रुतिप्रत्यक्षहेतुत्वं, कर्तृसामान्यात्तत्स्मृतीनां श्रुत्यनपेक्षयैव प्रामाण्यं च पिशुनयन्ति।

'मनावत्र तु यत्प्रोक्तं "प्रमाणं परमं श्रुतिः" तेन, बुद्धादिशास्त्राणामप्रामाण्यं च सूचितं;
यच्चापि पूर्वमीमांसा-सूत्रे वेदविरोधतः, हेतुदर्शनतश्चोक्तं प्रमाणत्वेऽनपेक्षितं,
तद्बौद्धाद्यागमांल्लक्ष्यीकृत्यैवेति; ततोऽपि च, तेषामेवाऽनपेक्षत्वादप्रामाण्यं भवेदिति' §

एतेन सर्वसंग्रहः तन्त्रप्रबन्ध इति विस्तारार्थकतनुधातुनिष्पन्नस्तन्त्रशब्द इति युक्तमुत्पश्यामः। यामललक्षणमप्येवमेव समुदाहृतं तत्रैव—

'सृष्टिश्च, ज्योतिषाख्यानं, नित्यकृत्यप्रदीपनं, क्रमसूत्रं, वर्णभेदः, जातिभेदस्तथैव च ,
युगधर्मश्च संख्यातो, यामलं चाऽष्टलक्षणम्' इति।

एवञ्च प्राणभृतां सर्वव्यवहारानुकूलः सर्वशास्त्रसंग्रहस्तन्त्रप्रबन्ध इति···। अत्राप्यागमेषु बहवो मन्त्राः श्रूयन्ते; तेषां कल्पमन्त्रा इति नाम। तेऽपि सप्तकोटिमहामन्त्रान्तर्गता वैदिका एवेति सिद्धान्तः। कल्पपदमपि मन्त्रब्राह्मणात्मकवेदकिलक्षणप्रयोगशास्त्रपरतया मीमांसकैर्व्यवह्रियते—

'वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः, न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात्'

इति ( तन्त्रावा० १, ३, ११ ) अतएव पराशरसंहितायां ( १२ )—

स एव श्रुतिमन्त्रः स्याद्भेदस्वरविवर्जितः, तान्त्रिकं मन्त्रमित्युक्तं तदेव श्रुतिचोदितम्'

इति। तन्त्रवार्तिके (२,१,४८)—'तानेव वैदिकाञ्शब्दान्भारतादिनिवेशितान् स्वाध्याय-नियमं हित्वा लोकबुद्ध्या प्रयुञ्जते' इति। आगमपदाऽभिधेयानामेतेषां प्रबन्धानां चतुर्दशविद्यास्थानेषु धर्मशास्त्रेऽन्तर्भावं प्रकाशयन्ति पूर्वाचार्याः" ( दर्शनोदये आगमसारः पृ० ३९०–९३ )

§ "ततश्च एवमवधारयामः; अनादेः कालान्निगमविरुद्धप्रस्थाननिष्ठैः सौगतार्हतादिभिः आगम-सम्प्रदायः समाश्रितः। ततश्च निगमसम्प्रदायनिष्ठैरपि निगमाऽनुकूल्येन सकलजनश्रेयःकामनया आगम-सम्प्रदायः प्रवर्तित इति। ततश्च वैदिकागमो,ऽवैदिकागम इति विभागः परिनिष्पन्नः; तथाऽपि केचिद्विद्या-धीराः निगमसंरक्षणाय आगममात्रस्याऽप्रामाण्यं साधयन्ति।···ते चाऽऽगमाः तन्त्रवार्तिके एवमनूदिताः—

"यान्येतानि त्रयीविद्भिर्न परिगृहीतानि, किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि, लोकोप-संग्रह-लाभ-पूजा-ख्यातिप्रयोजनपराणि, त्रयीविपरीताऽसम्बद्धदृष्टशोभादिप्रत्यक्षाऽनुमानोप-मानाऽर्थापत्तिप्राययुक्तिमूलोपनिबद्धानि, सांख्य-योग-पाञ्चरात्र-पाशुपत-शाक्यनिर्ग्रन्थपरिगृ-हीतधर्माऽधर्मनिबन्धनानि, विषचिकित्सा-वशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधि-कादाचित्कसिद्धिनिदर्शनबलेनाऽहिंसा-सत्यवचन-दम-दान-दयादिश्रुति-स्मृतिसंवादिस्तोकार्थ-गन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यतराणि म्लेच्छाचार-मिश्रकभोजना-चरणनिबन्धनानि, तेषामेवैतत् श्रुतिविरोध-हेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते" [ तन्त्र वा० १, ३, ४ ] इति। अत्र बाह्यानि, बाह्यतराणीति, द्वेधा विभागोऽवगम्यते।···सांख्यतत्त्वकौमुद्यां ( का० ५ ) वाचस्पतिमिश्रेण—'आप्तग्रहणेन चाऽयुक्ताः शाक्यभिक्षु-निर्ग्रन्थक-संसारमोचकादी-नामागमाभासाः परिहृता भवन्ति। अयुक्तत्वं चैतेषां विगानाद्, विच्छिन्नमूलत्वात्, प्रमाण-विरुद्धार्थाऽभिधानाच्च, कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद् बोध्यम्" इति आगमाभासाः परिगणिताः" [ दर्श० आ० सा० ]।

"कतमोऽसावागम आह्नोक्तः; किं शाक्यभिक्षुक-दिगम्बर-संसारमोचकादीनामागमाः, किं वा वेदा इति? तत्र शाक्याद्यागमानां बुद्धर्षभादयः प्रणेतार इति स्फुटतरमस्ति स्मरणं, न तूक्तलक्षण ईश्वरस्तेषां कर्त्तेति। न चैते शौद्धोदनिप्रभृतयः तनुभुवनादीनां कर्त्तारो, येन सर्वज्ञा इति निश्चीयेरन्; तदुपायाऽनुष्ठा-नेन तु संभाव्येतैषां सर्वज्ञता, न च संभावनामात्रेण तत्प्रणीतेष्वागमेषु आश्वासः प्रेक्षावतां भवितुमर्हति; न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः; नो खलु निषेकाद्याः क्रियाः श्मशानान्ताः प्रजानामेते विदधति; न हि प्रमाणीकृतबौद्धाद्यागमा अपि लोकयात्रायां श्रुति-स्मृतीतिहास-पुराणनिरपेक्षागममात्रेण प्रवर्तन्ते; अपि तु तेऽपि 'सांवृत्तमेतद्' इति ब्रुवाणा लोकयात्रायां श्रुत्यादीनेवाऽनुसरन्ति। तस्माद्, भवतु वेदेषु जग-

**नैतत्प्रामाणिकं, नो वा युक्तियुक्तं, न सङ्गतं, नाऽप्यैतिहासिकं तथ्यं, तस्मात्सद्भिरुपेक्ष्यते। मनौ बुद्धादिशास्त्राणां सङ्केतोऽपि न दृश्यते, नाऽपि तत्पूर्वमीमांसा-सूत्रे, भाष्ये च शावरे।**

निर्मातृकर्तृकत्वस्मृतिः, मा वा भूत्, त एव तु ईश्वरप्रणीता इति पश्यामः। न ह्येते चैत्यवन्दनादिवाक्यवद् अन्यकर्तृकाः स्मर्यन्ते, न चाऽन्य आगमो लोकयात्रामुद्वहन्महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते; 'न चेश्वरोऽनुपादिशन्नवस्थातुमर्हति' इत्युक्तं; तत्, पारिशेष्याद्वेदा एव सकललोकयात्रामुद्वहन्तो हिताहितप्राप्तिपरिहारोपायमुपदिशन्त ईश्वरप्रणीता इत्यवगच्छामः। तथा ह्येत एव त्रैवर्णिकैर्यथावत्प्रयत्नेन गृह्यन्ते, धार्यन्ते च; तदर्थपालनायां च महर्षिपरम्पराभिरङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणीतानि। बुद्धादिवाक्यानि तु न लोकयात्रामुद्वहन्ति, न च तत्र लौकिकानामविगानं, न च विगायतां सांवृत्तमित्युक्त्वाऽपि तदर्थाऽनुष्ठानम्। तस्माद्, विगानात्, कैश्चिदेव म्लेच्छादिभिर्मनुष्यापसदैः पशुप्रायैः परिग्रहान्नैतेषामाप्तोक्तत्वसंभवः। न चैतेषां मन्वादिवाक्यवद्वेदमूलकतया प्रामाण्यमिति साम्प्रतम्? अध्येत्रध्यापयित्रनुष्ठातृकर्तृसामान्यस्य वेदमूलकत्वाऽनुमानलिङ्गस्य स्मृति-वेदयोरिव बुद्धादिवाक्येष्वभावात्; तत्सर्वज्ञत्वसन्देहेन चाऽनुभवमूलकत्वाऽनिश्चयात्" इत्यादि च न्यायवार्तिकतात्पर्यटीकायां (अ० २ आ० १ सू० ६८ पृ० ३००) द्रष्टव्यम्।

"कः पुनरयं महाजनपरिग्रहः? हेतुदर्शनशून्यैर्ग्रहणधारणार्थाऽनुष्ठानादिः; स ह्यत्र न स्याद् ऋते निमित्तम्। न ह्यत्रालस्यादिर्निमित्तं, दुःखमयकर्मप्रधानत्वात्; नाऽप्यन्यत्र सिद्धप्रमाण्येऽभ्युपायेऽनधिकारेणाऽस्मिन्ननन्यगतिकतयाऽनुप्रवेशः, परैः पूज्यानामप्यत्राऽप्रवेशात्; नाऽपि भक्ष्य-पेयाद्यद्वैतरागः तद्विभागव्यवस्थापरत्वात्; नाऽपि कुतर्काऽभ्यासाहितव्यामोहः, आकुमारं प्रवृत्तेः; नाऽपि संभवद्विप्रलम्भपाखण्डसंसर्गः, पित्रादिक्रमेण प्रवर्त्तनात्; नाऽपि योगाऽभ्यासाऽभिमानेनाव्यग्रताऽभिसन्धिः, प्राथमिकस्य कर्मकाण्डे सुतरां व्यग्रत्वात्; नाऽपि जीविका, प्रागुक्तेन न्यायेन दृष्टफलाभावात्; नाऽपि कुहकवञ्चना, प्रकृते तदसंभवात्।

संभवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे; तथाहि—भूयस्तत्र कर्मलाघवमित्यलसाः इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिकाः; भक्षाद्यनियम इति रागिणः; स्वेच्छया परिग्रह इति कुतर्काऽभ्यासिनः; पित्रादिक्रमाभावात्प्रवृत्तिरिति पाषण्डसंसर्गिणः; 'उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते' इत्यादिश्रवणादव्यग्रताऽभिमानिनः; सप्तघटिकाभोजनादिसिद्धेर्जीविकेत्ययोग्याः; आदित्यस्तम्भनं पाषाणपाटनं शाखाभङ्गो भूतावेशः प्रतिमाजल्पनं धातुवाद इत्यादिबन्धनात्कुहकवञ्चिताः; ततस्तान्परिगृह्णन्तीति संभाव्यते; अतो न ते महाजनपरिगृहीता इति विभागः" [ कुसु० २, ३ ]

"तथा चाऽनेन दृष्टान्तेन महाजनपरिगृहीतत्वाद् वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते। ननु महच्छब्दो यद्यत्र पूज्यप्रामाणिकवचनस्तदाऽसन्दिग्धासिद्धविशेषणो हेतुः; अथ बह्वर्थः, तदा सुगताद्यागमैरनैकान्तः, तेषामपि वा सर्वज्ञपूर्वकत्वमिति चेत्? न, बहुत्वातिशयस्य विवक्षितत्वात्। कोऽतिशयः? सर्वदर्शनान्तः-पातित्वम्। कस्तैः परिग्रहः? अर्थाऽनुष्ठानं, स्वीकृतप्रामाण्यव्याकरणादिपालनीयत्वं, स्वीकृतप्रामाण्यायुर्वेदस्वीकृतार्थत्वञ्च। तथाहि—नास्त्येव तद्दर्शनं, यत्र सांवृतमित्युक्त्वाऽपि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नाऽनुतिष्ठति, स्पृश्यास्पृश्यादिविभागं वा जनो नाऽनुमनुते, व्यतिक्रमे वा आचमन-स्नानादिप्रायश्चित्तं नाऽनुतिष्ठति। न सर्वथा सर्वो जन एवमिति चेत्? मा भूत; नहि सर्वत्र सर्वैर्योगिभिरायुर्वेदार्थो नाऽनुष्ठीयत इति न तस्य महाजनपरिग्रहः, अपि तु सर्वदर्शनान्तःपातिभिरित्येव। तथापि न सर्वो वेदार्थ एवमिति चेत्? मा भूत्; न हि सर्वो वैद्यकार्थ एवमपि तु कश्चिदपि केनाऽपि। एवं तर्हि सौगताद्यागमार्थोऽपि कश्चिदहिंसादिः सर्वदर्शनान्तःपातिभिरनुष्ठीयत एव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात्? न, सन्देहात्; किमहिंसादिर्वैदिक एवार्थो बिडालव्रतन्यायेन श्रद्धापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्धः, आहोस्वित्स्वयं प्रदृष्ट एवेति? न तावत्स्वयं दृष्ट एवेति, श्रमणकाद्यागमसाधारणत्वात्। यस्त्वसाधारणो मण्डलीकरणादिः, केशोल्लुञ्चनादिर्वा, नाऽसौ सर्वैरनुष्ठीयते। वैदिकस्तु असाधारण एव निषेकादिस्तथेति।

"⋯तस्मात्सर्वाऽभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव, नाऽन्येषाम्; सर्वाऽभ्युपेत-प्रामाण्यैरायुर्वेदादिभिः स्वीकृतश्चैषामर्थः, प्रतिपदं तदीयशान्तिक-पौष्टिक-प्रायश्चित्त-तपो-जप्य-दान-होमाऽभ्युपदेशात्। न चैष भागस्तत्राऽप्रमाणमेव, तुल्ययोग-क्षेमत्वात्। एतदेवाऽसिद्धं, प्रक्षेपस्याऽपि संभवादिति चेत्? न, अध्येत्रध्यापयितृसम्प्रदायाऽविच्छेदात्; 'अन्यथाकरणे चाऽस्य बहुभ्यः स्यान्निवारणम्' (श्लोकवा० सू० २श्लो० १५०) इति न्यायात्। तस्माद्, एवंरूपोऽपि महाजनपरिग्रहो वेदानामेवेति, सोऽयमीदृशो महाजनपरिग्रहो वेदस्याऽसर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वेन व्याप्यते। ⋯तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वाद्वा, प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहः; न तु पूर्वागमाऽनपेक्षाऽर्वाचीनपुरुषपशुपूर्वकत्वात्।⋯ तस्मात्, सर्गादिमहाजनमन्वादिपरिग्रहपूर्वकोऽयमद्ययावदनुवर्तत इति नाऽनवसरदोषाऽवकाशोऽपीति युक्तमुत्पश्यामः। तदेवं कथं मन्वादिभिः परिगृह्यन्तां वेदा इति चेत्? आयुर्वेदवदाप्तोक्तत्वनिश्चयात्; स एव कुत इति चेत्? अध्यक्षतस्तेषामप्यतीन्द्रियार्थदर्शित्वात्। तादृशानां तेषां तत्परिग्रहेण किं प्रयोजनमिति चेत्? अस्मद्व्यवहारेण अस्मदपत्यानि व्युत्पाद्यन्तां, तथा च धर्मसंप्रदायः प्रवर्ततामिति भूतदया स्वाऽधिकारसम्पादनञ्च; अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुप्तप्रतिबुद्धवत्पितृत्वेनाऽविप्रलम्भकत्वमुच्चावचभूतनिर्माणदर्शनेन सार्वज्ञ्यमनुमाय, आप्तत्वनिश्चयस्तेषां तस्य। यद्वा भगवानेव सम्प्रदायप्रवर्तनव्यसनव्यग्रः कायसहस्राणि व्युत्पाद्य-व्युत्पादकभावव्यवस्थितानि निर्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्यायवत् स्वयं नटित्वेति सर्वं सुस्थम्"। [ आत्मतत्त्ववि० परि० ४ पृ० ४१६—२८ ]

"कथं पुनः सुगताद्यागमेषु अनादरश्छान्दसानाम्? वेदविद्वेषिदर्शनान्तःपातिपुरुषप्रणीतत्वादिति मा शङ्किष्ठाः, जिनेन्द्र-जगदिन्दुप्रणीतेष्वपि आदरात्; तत्कस्य हेतोः? महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसारित्वात्। कुतस्तर्हि? सिद्धप्रामाण्यवेदविरोधात्। कथं तर्हि कतिपयैरपि तत्परिग्रहः? अलस-भीरुभिर्दुःखमयजात्य-कर्मविद्वेषात्, उत्तरगर्त्तीयतन्तुवायवत्; नत्वेवं वेदे, कर्मण्येव निर्भरत्वात्; त्रैवर्णिकबहिष्कृतैरनधिकारिभिरनन्यगतिकत्वात्, कीर्त्ति-प्रज्ञाकरवत्; न त्वेवं श्रुतौ, परैः पूज्यमानानामप्यत्राऽप्रवेशात्; इतः पतितानामपि परैरुपादानात्; भक्ष्य-पेयाद्वैतरुचिभिश्च रागात्, शरभादिवत्; नत्वेवमाम्नाये, तद्विभागव्यवस्थापनात्; कुतर्काऽभ्यासिभिश्च मोहात्, काणाचार्यादिवत्; नत्वेवं ब्रह्मणि, आबालभावं प्रवृत्तेः; अविवेकिभिश्च पाखण्डिसंसर्गात्, शौण्डिकादिवत्; न त्वेवं प्रकृते पित्रादिक्रमेण प्रवर्तनात्; योगाभ्यासाऽभिमानिभिरव्यग्रताऽभिसन्धेः, सुभूत्यादिवत्; न त्वेवं प्रस्तुते, प्रथमतः कर्मकाण्ड एव नियोगात्; अयोग्यैराजीवनात्, सामान्यश्रमणकवत्; नत्वेवं प्रकृते, आगन्तुकानामनधिकारात्; कुहकवञ्चितैः समीचीनप्रत्ययात्, दीपङ्कर-सुपिर-दर्शिबालिशवत्; न त्वेवं प्रकृते, तदभावात्। किन्तु महाजनपरिग्रहाद्वक्तृप्रामाण्यमनुमाय, आयुर्वेदे नैरुज्यकामवदिति" [ आत्मतत्त्ववि० परिच्छे० ४ पृ० ४३०—३३ ]

"ये तु सौगत-संसारमोचकागमाः पापकाचारोपदेशिनः, कस्तेषु प्रामाण्यमार्योऽनुमोदते;
बुद्धशास्त्रे हि विस्पष्टा दृश्यते वेदबाह्यता, जातिधर्मोचिताचारपरिहाराऽवधारणात्।
संसारमोचकाः पापाः प्राणिहिंसापरायणाः, मोहप्रवृत्ता एवेति न प्रमाणं तदागमः।
निषिद्धसेवनप्रायं यत्र कर्मोपदिश्यते, प्रामाण्यकथने तस्य कस्य जिह्वा प्रवर्त्तते?
ततो यद्यपि सिद्धिः स्यात्कदाचित्कस्यचित्कचित्, ब्रह्महत्यार्जितग्राम्यभोगवन्नरकाय सा।
निषिद्धाचरणोपात्तं दुष्कृतं केन शाम्यति, अतः कालान्तरेणाऽपि नरके पतनं पुनः।

यत्त्वत्र चोदितं—'परेषु पूर्वोक्तक्रमेण बुद्धाद्याप्तकल्पनां कुर्वत्सु किं प्रतिविधेयमिति' तत्रोच्यते; महाजनप्रसिद्ध्यनुग्रहे हि सति सुवचमाप्तोक्तत्वं भवति, नाऽन्यथा; महाजनश्च वेदानां, वेदार्थाऽनुगामिनां च पुराणधर्मशास्त्राणां, वेदाऽविरोधिनां च केषाञ्चिदागमानां प्रामाण्यमनुमन्यते; न वेदविरुद्धानां बौद्धाद्यागमानामिति कुतस्तेषामाप्तप्रणीतत्वम्? मूलान्तरं हि तत्र सुवचम् अज्ञानलोभादीत्येवमभिधाय वेदस्पर्धिनो बौद्धादयो निषेद्धव्याः। आह—

यन्मेधातिथिभाष्यादौ, यदि वा तन्त्रवार्तिके, बौद्धादिनिन्दनं, तत्तु क्लिष्टदृष्टिविवर्तितम् ।
आर्षग्रन्थाश्रयादेव बुद्धशास्त्रादिखण्डनं प्रभावोत्पादकं मत्वा, भट्टपादकुमारिलः,
मनौ बुद्धागमद्वेषं, मीमांसादर्शनेऽपि च, अप्रसक्तमपि स्वान्तःसक्तमेव व्यवर्तयत् ❁ ।

कोऽयं महाजनो नाम, किमाकारः, किमास्पदः, किंसङ्ख्यः, किंसमाचारः ? इति व्याख्यातुमर्हसि ।

अपि च बौद्धादयो, बुद्धादीनाप्तान्स्वागमप्रामाण्यसिद्धये वदन्ति; ते महाजनमपि निजं तत्सिद्धये वृन्दादिकं वदेयुरेव; कस्तत्र प्रतीकारः ? उच्यते; चातुर्वर्ण्यं चातुराश्रम्यं च यदेतदार्यदेशप्रसिद्धं स 'महाजन' उच्यते । आकारस्तु, तस्य कीदृशं पाणि-पादं, कीदृशं शिरोग्रीवं वा, कियती तस्य संख्येति पुरुषलक्षणानि गणयितुं न जानीमः । चातुर्वर्ण्यचातुराश्रम्यरूपश्चैष महाजनो वेदप्रथमप्रवृत्त आगमान्तरवादिभिरप्रत्याख्येय एव । तथा चैते बौद्धादयोऽपि दुरात्मानो वेदप्रामाण्यनियमिता एव चण्डालादिस्पर्शं परिहरन्ति; निरस्ते हि जातिवादाऽवलेपे वा क्व चाण्डालादिस्पर्शे दोषः ? येऽपि अन्ये केचिद् अशुचिभक्षणा-ऽगम्यागमनादिनिर्विकल्प-दीक्षाप्रकारमकार्यमनुतिष्ठन्ति, तेऽपि चातुर्वर्ण्यादिमहाजनभीतास्तत् रहसि कुर्वन्ति, न प्रकाशं; निर्विशङ्के हि तच्छास्त्रप्रत्यये किमिति चौर्यवत्तदर्थाऽनुष्ठानम् ? अत एव न निजो महाजन उत्थापयितुं शक्यते वृन्द-कादिः; किन्त्वयमेव चातुर्वर्ण्यादिमहाजनः; स चैष महाजनो वेदविरुद्धमागमं परिहरत्येव, नाऽनुमोदते ।

संसारमोचकं स्पृष्ट्वा शिष्टाः स्नान्ति सवाससः; बौद्धैरपि सहैतेषां व्यवहारो न कश्चन ।
वेदधर्माऽनुवर्त्ती च प्रायेण सकलो जनः; वेदबाह्यस्तु यः कश्चिदागमो, वञ्चनैव सा ।

ईदृशश्चाऽयमनन्यसामान्यविभवो महाभागो वेदनामा ग्रन्थराशिः, यदन्ये बाह्यागमवादिन एवमेव स्पर्धन्ते । ते हि स्वागमप्रामाण्यमभिवदन्तो वेदरीत्याभिदधति, वेदे यथा तथा प्रवेष्टुमीहन्ते, वैदिकानर्थानन्तराऽन्तरा स्वागमेषु निबध्नन्ति, वेदस्पर्शपूतमिवात्मानं मन्यन्ते, तेषामप्यन्तर्हृदये ज्वलतीव प्रामाण्यम् । अत एवंविधाया महाजनप्रसिद्धेरागमान्तरेष्वदर्शनान्न तेषामाप्तप्रणीतत्वम् । आह—

महाजनप्रसिद्ध्यैव वेदप्रामाण्यनिश्चयात्, किमर्थः कण्ठशोषोऽयमियानार्येण संश्रितः ?

वेदप्रामाण्यसिद्ध्यर्थं हि इदं शास्त्रमारब्धमिति गीयते, वेदप्रामाण्यस्य च महाजनसिद्ध्यैव सिद्ध-त्वात्, किं शास्त्रेण ? अलं क्षुद्रचोद्यैरीदृशैः —

महाजनप्रसिद्धं हि केचिद्विप्लावयन्त्यपि, अतस्तदुपघाताय शास्त्रमस्त्रं प्रयुज्यते ।

तस्मात्पूर्वोक्तानामेव प्रामाण्यमागमानां; न वेदबाह्यानामिति स्थितम्" [न्यायमं० आ० ४पृ० २६५—६७]

❁ "शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरु-द्धानि, त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि, त्रयीबाह्येभ्यश्चतुर्थवर्ण-निरवसितप्रायेभ्यो व्या-मूढेभ्यः समर्पितानीति न वेदमूलत्वेन संभाव्यन्ते । स्वधर्माऽतिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्व-प्रति-ग्रहौ प्रतिपन्नौ, स धर्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः ? उक्तं च—

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत्; आत्मानं योऽतिसन्धत्ते, सोऽन्यस्मै स्यात्कथं हितः ? इति ।

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलङ्कारबुद्धौ स्थितः, येनैवमाह—

कलिकलुषकृतानि यानि लोके, मयि निपतन्तु, विमुच्यतां तु लोकः; इति । स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधाऽतिक्रमाऽसमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणैः स्तूयते; तदनुशिष्टानु-सारिणश्च सर्वे एव श्रुति-स्मृति-विहितधर्माऽतिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते ।

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणां, ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ।

न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति ।

न शाखान्तरोच्छेदः कदाचिदपि विद्यते, प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ।

न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः, एवं चैत्यकरण-तद्वन्दन-शूद्रसम्प्रदान-कदानादीनां संवादः संभवति; मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् ।

श्रुतेः परप्रमात्वोक्तेः सामान्यात्तद्विरोधिनां सर्वेषां स्मृतिवाक्यानामप्रामाण्यमिहेष्यते ।

लोभादिकारणं चाऽत्र वह्वेवाऽन्यत्प्रतीयते, यस्मिन्सन्निहिते दृष्टे नास्ति मूलान्तराऽनुमा ।
शाक्यदयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् , हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ।
न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् ; हेतवश्चाऽभिधीयन्ते ये धर्मा दूरतः स्थिताः ।
एत एव च ते, येषां वाङ्मात्रेणाऽपि नाऽर्चनं, पाखण्डिनो विकर्मस्था हेतुकाश्चैत एव हि ।

एतदीया ग्रन्था एव मन्वादिभिः परिहार्यत्वेनोक्ताः—

'या वेदबाह्याः स्मृतयो, याश्च काश्चित्कुदृष्टयः, सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः'।

तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनाऽनपेक्ष्यं स्यादिति सिद्धम्"

[ तन्त्रवा० अ० १ पा० ३ सू० ४ ]

"यत्तर्हि वेदविहितं न बाधते, शिष्टान्वा वेदविदो न कोपयति, विहारारामण्डलकरण-वैराग्य-ध्यानाभ्यासा-ऽहिंसा-सत्यवचन-दम-दान-दयादि, तद् बुद्धादिभाषितं प्रमाणेनाऽविरुद्धमिति चेत ? न, 'शास्त्र-परिमाणत्वात् ;' परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहिता-पुराणशास्त्र-शिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा ।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरं, यदन्यत्क्रियते तस्य धर्मं प्रत्यप्रमाणता ।

तथा च प्रायश्चित्तदानादिकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य मानवादि-प्रायश्चित्तं दद्यान्न कश्चिदपि धर्मार्थं प्रतिपद्येत ।

वेदेनैवाऽभ्यनुज्ञाता येषामेव प्रवक्तृता नित्यानामभिधेयानां मन्वन्तरयुगादिषु ,
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः , वचनानि प्रमाणानि ; नाऽन्येषामिति निश्चयः ।

तथा च 'मनोर्ऋचः सामिधेन्यो भवन्ति' इत्यस्य विधेर्वाक्यशेषे श्रूयते—'मनुर्वै यत्कि-ञ्चिदवदत्तद्भेषजं भेषजतायै' इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ।...

इतिहास-पुराणं च कृत्रिमत्वेन निश्चितं, तथाप्यकृत्रिमे वेदे तद्विद्यात्वेन सम्मतम् ।

एवं ह्युपनिषत्सूक्तम्—'ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं, सामवेदमथर्ववेदं चतुर्थमिति-हास-पुराणं पञ्चमम्' इति । तेन, प्रतिकल्प-मन्वन्तर-युगनियतनित्यऋषिनामाऽभिधेयकृत्रिमविद्यास्थान-कारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते, तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन सम्मतानि ।...

तस्माद् यान्येव शास्त्राणि वेदमूलाऽनतिक्रमाद् अवस्थितानि, तैरेव ज्ञातो धर्मः फलप्रदः ।
यथैवाऽन्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् , शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतं ,
तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणां संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ।
स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ?
यथा कृतककर्पूरसुवर्णादिषु दीयते यद्बीजं, तदपि व्यक्तमग्राह्यत्वात्प्रलीयते ।

तेन कर्मानुरूप्यसामान्यतोदृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमप्य-हिंसादि श्वदृतिनिक्षिप्तक्षीरवदनुपयोग्यविश्रम्भणीयं च तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्म-शास्त्रेभ्यो नोपलभ्यते, तावदग्राह्यं भवति;

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते , तदा तेनैव सिद्धत्वाद् इतरत्स्यादनर्थकम् ।

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं, तत् , धर्मप्रमाणत्वेन नाऽपेक्षितव्यमिति"

[ तन्त्रवा० अ० १ पा० ३ सू० ५—७ ]

"नन्वेवं वेदमूलत्वेन प्रामाण्ये वर्ण्यमाने बाह्यस्मृतीनामपि प्रामाण्यं वदन्तः प्रावादुकाः कथं प्रतिवक्तव्याः ? उच्यते; प्रत्युक्ता एव ते तपस्विनः; उक्तं हि भगवता जैमिनिना—'अपि वा कर्तृसामान्या त्प्रमाणमनुमानं स्याद्' इति ( अ० १ पा० ३ सू० २ )। 'कर्तृसामान्याद्' इति कोऽर्थः? 'एकाऽधिकाराऽ-

एवमेवाह मीमांसा-भाष्ये श्रीशबरो मुनिः विरोधे त्वनपेक्षत्वे मन्वाद्युक्तं निदर्शयन् + ।
तद्वद्वेदविरुद्धांशो बौद्धादेश्चाऽप्रमाणता तुल्यन्यायेन युज्येत; न सर्वांशेष्विति स्थितिः ।

वगमाद्' इति; य एव वेदार्थाऽनुष्ठानेऽधिकृताः, कर्त्तारस्त एव स्मृत्यर्थाऽनुष्ठाने, आचमनादिस्मार्त्तपदार्थसंवलितवेदिस्तरणादिवैदिकपदार्थप्रयोगदर्शनात् । न त्वेवमेकाऽधिकाराऽवगमो बाह्यस्मृतिषु विद्यते; तस्मान्मन्वादिस्मृतय एव प्रमाणं, न बाह्यस्मृतयः" ( न्यायमं० आ० ४ पृ० २६३ )

+ "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं; हेतुदर्शनाच्च" ( मी० द० अ० १ पा० ३ सू० ३—४ ) इति जैमिनि-सूत्रयोः शाबरभाष्यमत्राऽपि टिप्पणे प्रागुद्धृतमनुसन्धेयम् । तत्र परमश्रौतत्वेनाऽभिमतं वैदिकस्मृतिवचनमेवाऽनूद्य शबरस्वामिभिस्तस्याऽनपेक्षत्वं प्रदर्शितम्; तदिदं बौधायनधर्मसूत्रेऽपि दृश्यते । तथा हि—"अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यं; चतुर्विंशतिं, द्वादश वा प्रतिवेदं; संवत्सरावमं वा प्रतिकाण्डं; ग्रहणान्तं वा, जीवितस्याऽस्थिरत्वात् । कृष्णकेशोऽग्नीनादधीतेति श्रुतिः" [ बौ० ध० सू० प्र० १ खं० ३ सू० १—६ ] इत्येभिः सूत्रैः पूर्वोत्तरपक्षाभ्यां श्रुतिविरोधे वैदिकस्मृतेरपि त्यागो विहितः । एवं हि तद्विवरणं प्राह गोविन्दस्वामी—"अधुना ग्रहणान्तपक्षमेव स्थापयितुं हेतुमाह—पौराणिकादिवेदब्रह्मचर्यचरणं न कार्यं, श्रौतस्य कर्मणोऽग्निहोत्रादेर्विच्छेदप्रसङ्गात्; किमिति विच्छेदः ? जीवितस्याऽस्थिरत्वात् । ननु कश्चित्कर्त्ता तावन्तं कालं जीवेदिति तेनैवाग्निहोत्रादि करिष्यते; तस्मान्न पूर्वेषां पक्षाणां त्यागो युक्त इत्याशङ्क्य श्रुतिविरोधमेव दर्शयति, अनया श्रुत्या विरोधात् स्मार्त्तानां पूर्वेषां पक्षाणां त्यागः" इति । एतदेव श्रौतर्षिबौधायनमतमनुसृत्य मीमांसाभाष्यकारः शबरमुनिः "अपुंस्त्वं प्रच्छादयन्तश्च अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः; तत एषा स्मृतिरित्यवगम्यते" इत्येवमस्याः स्मृतेरनपेक्ष्यत्वमर्थादप्रामाण्यमुक्तवान् । एवमेव श्रुतिविरोध-हेतुदर्शनाभ्यामनपेक्षत्वेन तादृशाऽन्यस्मार्त्तवाक्यानामप्यप्रामाण्यमेव सर्वथा शबराऽभिमतम् । किं बहुना, सर्वस्मृतिधुरि कीर्तनीयायाः समस्तश्रौतधर्मशास्त्रशिरोरत्नायमानायाः सर्वज्ञानमयवेदार्थगर्भायाः सर्वज्ञमनुप्रणीतायाः स्मृतेरपि बहूनि श्रुतिविरुद्ध-हेतुदर्शनमूलानि वचनानि, कैश्चित्प्रक्षिप्तानीव मत्वा, शबरस्वामिना प्रामाण्येऽनपेक्षणीयान्यभिमतानीति दृश्यते; तथाहि—मीमांसादर्शने षष्ठाऽध्याये क्रतुषु स्त्रिया अप्यधिकाराऽधिकरणे ( अ० ६ पा० १ अधि० ३ ) पूर्वपक्षे—

"भार्या, पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः; यत्ते समधिगच्छन्ति, यस्य ते तस्य तद्धनम्"

[मनु०८,४१६] इति मनुस्मृतिवचनमुद्धृत्य, "फलोत्साहविशेषात्तु" [मीमांसासू० ६,१,१३] 'तु' शब्दः पक्षं व्यावर्तयति; न चैतदस्ति, निर्धना स्त्रीति । द्रव्यवती हि सा, फलोत्साहाऽविशेषात् । स्मृतिप्रामाण्यादस्वया तया भवितव्यं, फलार्थिन्याऽपि । श्रुतिविशेषात्, फलार्थिन्या यष्टव्यं; यदि स्मृतिमनुरुध्यमाना परवशा, निर्धना च स्यात्, 'यजेत' इत्युक्ते सति न यजेत; तत्र स्मृत्या श्रुतिर्बाध्येत । न चैतन्न्याय्यं; तस्मात्फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयाद्, यजेत चेति । "अर्थेन च समवेतत्वात्" [ मी० द० ६, १, १४ ] अर्थेन चाऽस्याः समवेतत्वं भवति एवं दानकाले संवादः क्रियते—'धर्मे, चाऽर्थे च कामे च, नाऽतिचरितव्येति' । यत्तु उच्यते, 'भार्यादयो निर्धना' इति; स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव, श्रुतिविरोधात् । तस्मादस्वातन्त्र्यमनेन प्रकारेणोच्यते, संव्यवहारप्रसिद्ध्यर्थम् । 'क्रयस्य धर्ममात्रत्वम्" [ मी० द० ६, १, १५ ] यत्तु क्रयः श्रूयते, धर्ममात्रं तु तत्; नाऽसौ क्रय इति । क्रयो हि उच्च-नीचपण्यपणो भवति; नियतं त्विदं दानं; शतमतिरथं शोभना-ऽशोभनां च कन्यां प्रति । स्मार्त्तं च श्रुतिविरुद्धं विक्रयं नाऽनुमन्यन्ते; तस्मादविक्रयोऽयमिति" इत्येवमादि शाबरभाष्येऽभिहितम् । अनेन सुस्पष्टतरमेवैतदस्ति यदुत श्रुतिविरोधे, लोभादिहेतुमूलत्वे च निश्चिते सति वैदिकस्मृतीनामप्यनपेक्ष्यत्वमार्षमीमांसासम्मतं; न तु केवलं वेदबाह्यत्वेन कल्पितानां बुद्धाद्यागमानामेव सर्वथा सर्वशः । तस्मात् तद्विषयं कुमारिलोत्प्रेक्षितमनार्षमतमेव प्रेक्षावद्भिः सद्भिरनपेक्ष्यमुपेक्षणीयं चेति सुधियो विमर्शकाः प्राहुः; तच्चैतदग्रेऽभिधास्यते ।

भट्टादेः 'श्वदृतिक्षीर'न्यायस्त्वन्यायमूलकः शुद्धोपशब्द पचातः प्रेक्षावद्भिरुपेक्ष्यते ❀ एष कौमारिलो न्यायो मन्वादिष्वपि बुद्धवत् प्रायोक्तुं शक्यते नूनं तद्युक्त्यैवानयासतः ; तस्मादस्यस्य दुष्टत्वं, स्वपक्षप्रतिबन्दिता, केवलं द्वेषमूलत्वं, व्याहतत्वं च दृश्यते । यतः सर्वमनुष्येभ्यस्त्वविशेषात्प्रवर्तते शूद्रसाधारणेभ्योऽत्र समा बुद्धस्य देशना , तद्धेतोरपि यत्तस्या अप्रामाण्यप्रकल्पनं, तत्तु वेदविरुद्धत्वादेवोपेक्ष्यं मनीषिभिः 卐

---

❀ "सन्मूलमपि (बुद्धोपदिष्टम् ) अहिंसादि, श्वदृतिनिक्षिप्तक्षीरवदनुपयोगि, अविश्रम्भणीयं च" [तन्त्रवा०]

"शाक्योक्ताऽहिंसनं धर्मो, न वा ? धर्मः, श्रुतत्वतः;
न धर्मो, न हि पूतं स्याद् गोक्षीरं श्वदृतौ धृतम् ।

'ब्रह्मचर्यमहिंसां चाऽपरिग्रहं च सत्यं च यत्नेन रक्षेद्' इति श्रुतावहिंसादिर्धर्मत्वेनोक्तः, स एव धर्मः शाक्येनाऽप्युक्तः; तस्मात्, शाक्यस्मृतिर्धर्मे प्रमाणमिति चेत् ? न, स्वरूपेण धर्मस्याऽपि गोक्षीरन्यायेन शाक्यसम्बन्धे सति अधर्मत्वप्रसङ्गात्, तदीयग्रन्थेन अहिंसादिर्नाऽवगन्तव्यः; तस्मान्न सा स्मृतिर्धर्मे प्रमाणम्" [ जै० न्या० मा० अ० १ पा० ३ अधि० ४ ]

卐 "यद्यसौ वेदमूलः स्याद्, वेदवादिभ्य एव तु उपदेशं प्रयच्छेयुः, यथा मन्वादयस्तथा ;
यतस्तु मूर्ख-शूद्रेभ्यः कृतं तैरुपदेशनं, ज्ञायते तेन दुष्टं तत्सांवृतं कूटकर्मवत् ।
ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदां, त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः ।
नाऽदृष्ट्वा वेदवाक्यानि, शिष्येभ्यश्चाऽप्रदर्श्य वा, ग्रन्थप्रणयनं तेषामर्पणं चोपपद्यते"

[ तत्त्वसं० श्लो० ३२२६-२९ ]

"न चाऽपि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते; विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात् ।...
सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव, निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ;
एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते; कुड्यादिनिःसृतत्वाच्च नाऽऽश्वासो देशनासु नः ।
किन्तु बुद्धप्रणीताः स्युः किमु वा कैश्चिद्दुरात्मभिः ? अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः"

[ चोदनासूत्रे श्लोकवा० १३३, तथा १३८–४०; एतत् तत्त्वसंग्रहेऽपि किञ्चित्पाठान्तरेणाऽनूदितं दृश्यते श्लो० ३२४१-३२४६ ] इत्येवमादि बुद्धविषयं कौमारिलमधिक्षेपमनूद्य, शान्तरक्षितेन तत्त्वसंग्रहे ( श्लो० ३५६७—९० ) इत्थं प्रतिविहितम्—

"वेदमूलं च नैवेदं बुद्धानामुपदेशनं; निष्कलङ्कं हि तत्प्रोक्तं, सकलङ्कं श्रुतौ पुनः ।
स्वार्थसंसिद्धये तेषामुपदेशो न तादृशः; आरम्भः सकलस्त्वेष परार्थं कर्त्तुमीदृशः ।
तस्माज्जगद्धिताधानदीक्षिताः करुणात्मकाः, अनिबन्धनबन्धुत्वादाहुः सर्वेषु तत्पदम् ।
ये हि लोभ-भय-द्वेष-मात्सर्यादिवशीकृताः, प्रादेशिकी भवेत्तेषां देशना निःकृपात्मनाम् ।
करुणापरतन्त्रास्तु स्पष्टतत्त्वनिदर्शिनः, सर्वापवादनिःशङ्काश्चक्रुः सर्वत्र देशनाम् ।
यथा यथा च मौर्ख्यादिदोषदुष्टो भवेज्जनः, तथा तथैव नाथानां दया तेषु प्रवर्तते ।
नैवावाह-विवाहादिसम्बन्धो वाञ्छितो हि तैः, उपकारस्तु कर्त्तव्यः; साधु गीतमिदं ततः—
विद्याचरणसम्पन्ने ब्राह्मणे, गवि, हस्तिनि, शुनि चैव, श्वपाके च, पण्डिताः समदर्शिनः" इत्यादि ।
"ज्ञानवान्मृग्यते कश्चित्तदुक्तप्रतिपत्तये , अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ;
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् , कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ?
हेयोपादेयतत्त्वस्य साऽभ्युपायस्य वेदकः यः, प्रमाणमसाविष्टो; न तु सर्वस्य वेदकः ।
दूरं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु ; प्रमाणं दूरदर्शी चेद् ? एत, गृध्रानुपास्महे ।
साधनं करुणाऽभ्यासात्सा बुद्धेर्देहसंश्रयात् ; असिद्धोऽभ्यास इति चेत् ? नाश्रयप्रतिषेधतः ।...
दयावान्दुःखहानार्थमुपायेष्वभियुज्यते ; परोक्षोपेयतद्धेतोस्तदाख्यानं हि दुष्करम् ।...

वेदवाचं हि कल्याणीं 'शूद्राय चाऽरणाय च'† वेद एव स्वयं प्राह, शास्त्रे चैतन्निरूपितम् ।
"···शास्त्रं सर्वाऽधिकारं स्यात्" तिर्यग्वर्जमिति स्वयं जैमिनिस्तद्गुरुर्व्यासश्चाहतुर्वैदिकावृषी‡:
किञ्चैलूषैतरेयाद्यास्तथा काक्षीवदायः, ऋषयो वेदकर्त्तारः प्रसिद्धाः शूद्रयोनयः ।
शूद्रेभ्य एव मूर्खेभ्यः शास्त्रस्याऽस्ति प्रयोजनं वैशेष्यादिति कारुण्याद्भगवद्बुद्धदेशना ,
यदि तेभ्योऽपि सामान्यादधिकारात्प्रवर्तते, तर्हि पापं किमत्रस्यात् ? नैतत्सद्बुद्धिगोचरम् ।
यत्, 'शास्त्रपरिमाणत्वाद्' बौद्धादेर्वेदबाह्यता भट्टैरुत्प्रेक्षिता, तत्तु वेदव्यासोक्त्यसङ्गतम् ।
भारते पञ्चमे वेदे, वेदव्यासमुनिः स्वयं, सर्वशः सर्वशास्त्राणां वेदत्वं व्यक्तमुक्तवान् ।
"विद्याश्चतस्रः कूटस्थाः" वेदसंज्ञास्तु या मताः, तासामेवागमाः सर्वे स्मृता "भेदविकल्पनाः" ।
तस्माद्, ऋक्संहिताग्रन्थाद् आलौकायतिकागमं, सर्वं व्यासमते शास्त्रं "वेद एव तु सर्वशः*"

परार्थवृत्तेः खड्गादेर्विशेषोऽयं महामुनेः , उपायाऽभ्यास एवाऽयं, तादर्थ्याच्छासनं मतम् ।
निष्पत्तेः प्रथमं भावाद्धेतुरुक्तमिदं द्वयं ; हेतोः प्रहाणं त्रिगुणं, सुगतत्वमनिश्रयात् ।...
तायात् तत्त्वस्थिराऽशेषविशेषज्ञानसाधनं ; बोधार्थत्वाद्गमेः, बाह्यशैक्षाऽशैक्षाऽधिकस्ततः ।
परार्थज्ञानघटनं तस्मात्तच्छासनं, ततः दयापरार्थतन्त्रत्वं, सिद्धार्थस्याऽविरामतः ।
दयया श्रेय आचष्टे, ज्ञानात्सत्यं ससाधनं ; तच्चाऽभियोगवान्वक्तुं यतस्तस्मात्प्रमाणता ।
उपदेशतथाभावस्तुतिस्तदुपदेशतः प्रमाणतत्त्वसिद्ध्यर्थम्; अनुमानेऽप्यवारणात् ,
प्रयोगदर्शनाद्वाऽस्य, यत्किञ्चिदुदयात्मकं , निरोधधर्मकं सर्वं, तदित्यादावनेकधा ;
अनुमानाश्रयो लिङ्गमविनाभावलक्षणं , व्याप्तिप्रदर्शनाद्धेतोः साध्येनोक्तं च तत्स्फुटम्"
इत्यादि प्रमाणवार्तिके प्रथमपरिच्छेदे द्रष्टव्यम् ।

† शुक्लयजुः २६, २ । ‡ मी० द० ६, १, ४, एवं ब्रह्मसू० १, ३, २५ ।

* महाभारते शान्तिपर्वणि द्वाविंशत्यधिक-शततमे (१२२) अध्याये ( कुं० सं० पृ० १९५ )—

" भूयः स भगवान्ध्यात्वा चिरं शूलधरः प्रभुः, असृजत्सर्वशास्त्राणि महादेवो महेश्वरः,
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः" इत्युपक्रम्य
"विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पनाः—
अङ्गानि, वेदाश्चत्वारो, मीमांसा, न्यायविस्तरः, पुराणं, धर्मशास्त्रं च, विद्या ह्येताश्चतुर्दश;
आयुर्वेदो, धनुर्वेदो, गान्धर्वश्चेति ते त्रयः, अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु"

इति चतसृणां वेदविद्यानां कूटस्थत्वं, तासामेवाङ्गोपाङ्गादिभेदविकल्पनया चतुर्दशत्वमष्टादशत्वञ्चाऽभिधाय—
"दश चाऽष्टौ च विख्याता एता धर्मस्य संहिताः; एतासामेव विद्यानां व्यासमाह महेश्वरः,
शतानि त्रीणि शास्त्राणां, महातन्त्राणि सप्ततिं, व्यास एव तु विद्यानां महादेवेन कीर्तितः—
तन्त्रं पाशुपतं नाम, पञ्चरात्रं च विश्रुतं, योगशास्त्रं च, साङ्ख्यं च, तन्त्रं लोकायतं तथा,
तन्त्रं ब्रह्मतुला नाम, तर्कविद्या दिवौकसां, सुखदुःखार्थजिज्ञासा, कारणं चेति विश्रुतं,
तर्कविद्यास्तथा चाऽष्टौ, स चोक्तो न्यायविस्तरः, दश चाऽष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः,
पुराणाश्च प्रणीताश्च तावदेवेह संहिताः, धर्मशास्त्राणि तद्वच्च एकार्थानि च, नाऽन्यथा,
एकार्थानि पुराणानि, वेदाश्चैकार्थसंहिताः, नानाऽर्थानि च सर्वाणि ततः शास्त्राणि शङ्करः,
प्रोवाच भगवान्देवः, कालज्ञानानि यानि च, चतुःषष्टिप्रमाणानि, आयुर्वेदं च सोत्तरम्,
अष्टादशविकल्पां तां दण्डनीतिं च शाश्वतीं, गान्धर्वमितिहासं च नाना विस्तरमुक्तवान्;
इत्येताः शङ्करप्रोक्ता विद्याः शब्दार्थसंहिताः पुनर्भेदसहस्रं तु तासामेव तु विस्तरः;
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः, शश्वदभ्यस्यते लोके, वेद एव तु सर्वशः"

इति तासामेव अष्टादशविद्यानां व्यासीकरणेन पाशुपतादितन्त्रागमरूपतया परिणतानां नानाप्रस्थानत्वमापादितानामपि तत्त्वतः 'सर्वशो वेदत्वमेव' अङ्गीकृत्य,

वेदव्यासार्षमन्तव्यप्रतीपत्वादनार्षता स्फुटा भाट्टमतस्याऽस्ति; तस्मात्तदनपेक्ष्यते ।
यत्प्रमाणेन, युक्त्या वा यया, न्यायेन येन वा, मन्वादेर्वेदमूलत्वं, बौद्धादेरपि तत्तथा ।
एतज्जयन्तभट्टेन सप्रमाणं निरूपितं विस्तरान्न्यायमञ्जर्यां; दृश्यं तदिह टिप्पणे ।¹

"विद्याश्चतस्रः संक्षिप्ता, वेदवादाश्च ते स्मृताः, एतासां परगो यश्च, स चोक्तो वेदपारगः ;
वेदानां पारगो रुद्रो, विष्णुरिन्द्रो बृहस्पतिः, शुक्रः स्वायंभुवश्चैव मनुः परमधर्मवित्,
ब्रह्मा च परमो देवः, सदा सर्वैः सुराऽसुरैः, सर्वस्याऽनुग्रहाच्चैव व्यासो वै वेदपारगः"

इत्येतासामेव पारगत्वेन रुद्रादीनां वेदपारगत्वं निर्दिश्य, रुद्रप्रभृतिभिर्व्यासपर्यन्तैर्वेदर्षिभिः शिष्टैः परिगृहीतत्व-कथनेन, पाशुपतादि-लोकायतान्तानां तन्त्राणां भट्टपादैर्वेदबाह्यत्वेन परिगणितानामपि, वेद तुल्यत्वं, स्पष्टमभिहितं, परमं प्रामाण्यं च ध्वनितं; तस्मादेतद्विरुद्धमनार्षं भाट्टमतं सुतरामश्रद्धेयमिति ध्येयम् ।

¹ "अन्ये सर्वागमानां तु प्रामाण्यं प्रतिपेदिरे, सर्वत्र बाधसन्देहरहितप्रत्ययोदयात् ।
सर्वत्र वेदवत्कर्त्तुराप्तस्य परिकल्पना, दृष्टार्थेष्वेकदेशेषु प्रायः संवाददर्शनात् ।

यत्पुनरत्रोक्तं सर्व एवागमाः परस्परविरुद्धार्थोपदेशत्वादप्रमाणं स्युरिति, तत्रोच्यते; आप्तप्रणीतत्वेन तुल्यकक्ष्यत्वादन्यतमदौर्बल्यनिमित्ताऽनुपलम्भाच्च न कश्चिदागमः किञ्चिद्बाधते । विरोधमात्रं त्वकिञ्चित्करं, प्रमाणत्वाऽभिमतेषु वेदवाक्येष्वपि परस्परविरोधदर्शनात् । पुरुषशीर्षस्पर्शन-सुराग्रह-गवालम्भादिचोदनासु वचनान्तरविरुद्धमर्थजातमुपदिष्टमेव । किञ्च, आगमानां विरोधोऽपि नातीव विद्यते, प्रमाणानां पुरुषार्थे सर्वेषामविवादात् ।

नानाविधैरागममार्गभेदैरादिश्यमाना बहवोऽभ्युपायाः,
एकत्र ते श्रेयसि संपतन्ति, सिन्धौ प्रवाहा इव जाह्नवीयाः ।

तथाहि अपवर्ग उपेयः सर्वशास्त्रेषु निर्दिश्यते; ज्ञानविषये तु विवदन्ते ।. तत्राऽपि प्रायश आत्मविषयतायां बहूनामविप्रतिपत्तिः । प्रकृति-पुरुषविवेकज्ञानपक्षे तु प्रकृतेर्विविक्ततया पुरुष एव ज्ञेयः । नैरात्म्यवादिनस्तु आत्मशैथिल्यजननायाऽपदिशन्ति । स्वच्छं तु ज्ञानतत्त्वं यत्तैरिष्यते, तत्स्वातन्त्र्यादनाश्रितत्वादात्मकल्पमेव; कूटस्थनित्यत्वे प्रवाहनित्यत्वे च विशेषः । एवं प्रधानयोस्तावदुपायोपेययोरविवादः । क्रिया तु विचित्रा प्रत्यागमं भवतु नाम, भस्म-जटापरिग्रहो वा, दण्ड-कमण्डलुग्रहणं वा, रक्तपटधारणं वा, दिगम्बरता वाऽवलम्ब्यतां, कोऽत्र विरोधः ? वेदेऽपि किमल्पीयांसः पृथगितिकर्त्तव्यताकलापखचिताः स्वर्गोपायाश्चोदिताः ? तस्मात्परस्परविरोधेऽपि न प्रामाण्यविरोधः । अतश्च यदुच्यते—

कपिलो यदि सर्वज्ञः, सुगतो नेति का प्रमा ? अथोभावपि सर्वज्ञौ, मतभेदस्तयोः कथम् ? इति,
तदपास्तं भवति; प्रधाने सति भेदाऽभावात्, क्वचिच्च तद्भावे प्रामाण्यविरोधात् । न च क्रोशनहेतुकर्मोपदेशाद् आगमान्तराणामप्रामाण्यं ? तस्याऽप्रमाणतायामप्रयोजकत्वात् ।

विचिकित्सा हि नृशिरःकपालाद्यशनेषु या, साऽप्यन्यदर्शनाऽभ्यासभावनोपनिबन्धना ;
तथा च शान्तचित्तानां सर्वभूतदयावतां वैदिकीष्वपि हिंसासु विचिकित्सा प्रवर्तते ।

अभिचारादिहिंसायां वैदिक्यामपि भवतु हृदयोत्कम्पः, करणांशोपनिपातिनी हिंसेति लिप्सातस्तस्यां प्रवृत्तिः । यस्त्वग्नीषोमीयादिपशुहिंसेतिकर्त्तव्यतांशस्था, यस्यां क्रत्वर्थो हि शास्त्रादवगम्यते इति वैदिकी प्रवृत्तिः, तस्यामपि कारुणिको लोकः सविचिकित्सो भवति, वदति च—'यत्र प्राणिवधो धर्म,स्त्वधर्मस्तत्र कीदृशः' ? इति । न चैतावता वेदस्याऽप्रामाण्यम्; एवमागमान्तरेष्वपि भविष्यति । यस्त्वागमान्तरेभ्यः कौलादिभ्यः खेचरताद्यर्थसिद्धावपि निषिद्धाचरणकृतः कालान्तरे प्रत्यवायोऽवश्यं भवतीत्युक्तं, तदपि न युक्तं; तस्यार्थस्य तदागतिनिषिद्धत्वाऽभावात्; आगमान्तरनिषिद्धत्वेऽपि वैकल्पिकत्वकल्पनोपपत्तेः । पुरुषार्थप्राप्त्युपायत्वाच्च तस्य तस्मिन्सिद्धे कुतः प्रत्यवायः ? भवतु वा कालान्तरे ततः प्रत्यवायः, तथाऽप्यधिकारिभेदेन तत्फले कर्मणि चोद्यमाने श्येनादाविव नाऽऽगमप्रामाण्यमत्र हीयते । 'श्येनेनाऽभिचरन्यजेत' इत्यत्र 'अभिचरन्' इति शता, लङ्घितनिषेधमधिकारिणमाचष्टे; तस्य च श्येनयागश्चोदितः, स च तत्प्रयोगात्कृतवधः प्रत्यवैत्येव,

न च वेदस्याऽप्रामाण्यम्। उक्तं च ( शाबरभाष्ये अ० १ पा० १ सू० २ ) 'उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति'। अधिकारभेदाच्च विचित्रकर्मचोदना नाऽनुपपन्ना; मरणकामस्य सर्वस्वारः चोदितः, आयुष्कामस्य कृष्णलचरुः। तस्मादेतदपि नाऽप्रामाण्यनिमित्तम्। यदपि बौद्धागमे जातिवादनिराकरणं, तदपि सर्वाऽनुग्रहप्रवणकरुणाऽतिशयप्रशंसापरं, न च यथाश्रुतमवगन्तव्यं; तथा च तत्रैतत्पठ्यते—'न जातिकाय-दुष्टान्प्रव्राजयेद्' इति। तस्मात्सर्वेषामागमानामाप्तैः कपिल-सुगतार्हत्प्रभृतिभिः प्रणीतानां प्रामाण्यमिति युक्तम्। अन्ये मन्यन्ते, सर्वागमानामीश्वर एव भगवान्प्रणेतेति; स हि सकलप्राणिनां कर्मविपाकमनेकप्रकार-मवलोकयन् करुणयाताननुग्रहीतुमपवर्गप्राप्तिमार्गं बहुविधमुत्पश्यन् आशयाऽनुसारेण केषाञ्चित्क्वचित्कर्मणि योग्यतामवगम्य तं तमुपायमुपदिशति; स्वविभूतिमहिम्ना च नानाशरीरपरिग्रहात्स एव संज्ञाभेदानुपगच्छति, अर्हन्निति कपिल इति सुगत इति स एवोच्यते भगवान्; नानासर्वज्ञकल्पनायां यत्नगौरवप्रसङ्गात्। ननु बुद्धः शुद्धोदनस्याऽपत्यं, स कथमीश्वरो भवेत्? परिहृतमेतद् भगवता कृष्णद्वैपायनेन—

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत, अभ्युत्थानधर्मस्य, तदात्मानं सृजाम्यहम्' इति।

शरीरमेव शुद्धोदनस्याऽपत्यं, नाऽऽत्मा; अतः प्रतियुगं विष्णुरेव भगवान्धर्मरूपेणाऽवतरतीत्यागमविदः प्रतिपन्नाः। ननु वेदसमानकर्तृकेष्वागमान्तरेषु कथं तादृशो महाजनसम्प्रत्ययो नास्ति? एवं नास्ति, तेन वर्त्मना भगवता कतिपये प्राणिनोऽनुगृहीता, येषां तादृश आशयो लक्षितः; वैदिकेन तु वर्त्मना निःसङ्ख्यकाः प्राणिनोऽनुगृहीता इति तत्र महानादरः, आगमान्तरेषु कृश इति। एककर्तृके परस्परविरोधः कथमिति चेत्? वेदैरेवाऽत्र वर्णितः समाधिः; तेष्वपि भूयसः परस्परविरोधस्य दर्शनादित्युक्तम्। तस्मादीश्वर-प्रणीतत्वादेव सर्वागमानां प्रामाण्यम्। अपरे पुनर्वेदमूलत्वेन सर्वागमप्रामाण्यमभ्युपागमन्; यो हि मन्वा-दिदेशनानां वेदमूलतायां न्याय उक्तः—

'भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भकात्, दृष्टाऽनुगुणसामर्थ्याच्चोदनैव लघीयसी' इति,

स सर्वागमेषु समानः। न च मन्वादिस्मृतीनां मूलभूता श्रुतिरुपलभ्यते; अनुमानेन तु तत्कल्पन-मागमान्तरेष्वपि तुल्यम्। ननु चोक्तम् 'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्याद्' इति, तच्चेह नास्तीति कथं श्रुत्यनुमानं? नैष दोषः

एकाऽधिकाराऽवगमो न प्रामाण्ये प्रयोजकः, मिश्राऽनुष्ठानसिद्धौ तु कामं भवतु कारणम्'।

न च पृथगनुष्ठीयमानमपि कर्म न प्रमाणमूलं भवति, वर्णाश्रमभेदाऽनुष्ठेयकर्मवत्।

कर्तृसामान्यशून्यत्वादथ मूलान्तरोदयः, तदसद्बाधकाभावाद् भ्रान्त्यादिप्रतिषेधनात्;
प्रत्यक्षमूलतायां तु गुर्वी भवति कल्पना; वेदस्त्वनन्तशाखत्वान्मूलं तत्र स्वसङ्गतम्।
नन्वत्र वेदमूलत्वे द्वेषो वेदविदां कथम्? गत्वा त एव पृच्छ्यन्तां येषां द्वेषादि विद्यते।
गोवधे वा कथं तेषां द्वेषः सुस्पष्टवैदिके? प्रत्युक्तं च विरुद्धत्वं, शाखाऽनन्त्याच्च दुर्गमम्।
किमियद्वेदसर्वस्वं यावदस्मन्मुखे स्थितम्? शाखान्तराद्वा संवादो न लभ्येतेति का प्रमा?

तथा च साङ्ख्यशास्त्रप्रसिद्धत्रिगुणात्मकप्रकृतिसूचनपरम् 'अजामेकां लोहित-शुक्ल-कृष्णाम्' इति वैदिक लिङ्गमुपलभ्यते; निर्ग्रन्थकथितवचसः चित्तत्वज्ञानशंसी चाऽयमनुवादो दृश्यते—'मुनयो वातरशना' इति; एवं रक्तपटपरिग्रह-भस्म-कपाल-धारणादिमूलमप्यभियुक्ता लभन्ते एव।

मन्वादिस्मृतिवत्कर्तृसाम्यस्याऽसंभवेऽप्यतः, प्रमाणं वेदमूलत्वाद्बाह्या सर्वागमा स्मृतिः। ततश्च—

'यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः, स सर्वोऽभिहितो वेदे, सर्वज्ञानमयो हि सः'

इत्यत्र यथा मनुग्रहणं, गौतम-यमा-ऽऽपस्तम्ब-संवर्त-कातिकादिस्मृत्यन्तरोपलक्षणम्, एवमर्हत्कपिलसुगता-द्युपलक्षणपरमपि व्याख्येयम्।··· इत्यतो वेदमूलत्वात्सर्वागमः प्रमाणम्।

सर्वागमप्रमाणत्वे नन्वेवमुपपादिते, अहमप्यद्य यत्किञ्चिदागमं रचयामि चेत्;
तस्याऽपि हि प्रमाणत्वं दिनैः कतिपयैर्भवेत्; तस्मिन्नपि न पूर्वोक्तन्यायो भवति दुर्वचः?
जरत्पुस्तकलिखितं यदपि, तदपि किञ्चिदिदानीं केनापि धूर्तेन प्रख्याप्यते?

विष्णोरेवाऽवतारत्वान्मनु-व्यासादिवन्मता 'धर्मसंथापनार्थाय' बुद्धादेरपि देशना।
यन्नवमाऽवतारत्वं कलौ मुख्यतयाऽर्हितं वैदिकार्यैस्तदादेशो 'वेदबाह्यागमः' कथम्?
वेदान्ताऽद्वयवादोपज्ञातृत्वात्, सर्ववित्त्वतः, गौडपादोपजीव्यत्वाद्, बुद्धे वेदर्षिता स्फुटा। *

महाजनसमूहे ये प्रसिद्धिं प्रापुरागमाः, कृतश्च बहुभिर्येषां शिष्टैरिह परिग्रहः,
अद्य प्रवर्त्तमानाश्च नाऽपूर्वा इव भान्ति ये, येषां न मूलं लोभादि, येभ्यो नोद्विजते जनः,
तेषामेव प्रमाणत्वमागमानामिहेष्यते; न मृष्यते तु यत्किञ्चित्प्रमाणं कुट्टिनीमतम्। तथाहि—
अमितैकपटनिवीताऽनियतस्त्रीपुंसविहितबहुचेष्टं, नीलाम्बरव्रतमिदं किल कल्पितमासीद्विटैः कैश्चित्;
तदपूर्वमिति विदित्वा निवारयामास धर्मतत्त्वज्ञः राजा शङ्करवर्मा; न पुनर्जैनादिमतमेवम्।
इत्याप्तोक्तत्वहेतोः परिमुषितपरोदीरिताऽशेषदोषाद् एषां वेदागमानां सुदृढमुपगते मानभावे प्ररोहं,
तन्मूलत्वात्तथात्वं पुरुषवचनतो वाऽस्तु शास्त्रान्तराणां, तद्द्वारेणाऽपि वक्तुं न खलु कलुषता शक्यते वेदवाचाम्"
[ न्यायमं० आ० ४ पृ० २६७—२७२ ]

इत्थं "वाचस्पतिमिश्रगुरुणा जयन्तभट्टाचार्येण तु न्यायमञ्जर्यामधिकारिभेदेन सर्वेषामप्यागमानां प्रामाण्यं व्यवस्थापितं; प्रायः स एव मार्गः वीरमित्रोदयादिप्रबन्धैरनुसृत इति विज्ञायते।" [ दर्शनो० आगमसा० पृ० ४९५ ]

"ननु सांख्य-योग-पञ्चरात्र-पाशुपताद्यागमाः किं धर्मे प्रमाणमुत न? आद्ये, 'धर्मस्य च चतुर्दश' इति संख्याव्याकोपः; द्वितीये, अविगीतमहाजनपरिग्रहविरोधः। उच्यते; तेऽपि वेदाऽविरुद्धाः प्रमाणमेव; तथा च योगियाज्ञवल्क्यः—

'न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते; निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्।
दुर्बोध्यं तु भवेद्यस्मादध्येतुं नैव शक्यते, तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम्।
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां, धर्मस्य च, चतुर्दश;
सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा, अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्' इति।

अत्र 'सांख्यं योगः पञ्चरात्रम्' इत्युपक्रम्य, 'हेतुभिर्नविरोधयेद्' इत्युक्तेस्तेषामदूष्यत्वमात्रे तात्पर्यं, न तु प्रामाण्यम्' इत्यपरार्कोक्तम् [ या० स्मृ० १,७ ] अनादरणीयम्, 'अतिप्रमाणानि' इत्यभिधानात्। तथा महाभारते [　　　　　]—

'पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः, प्रापणं भगवत्प्रोक्तं भुञ्जते चाऽत्र भोजनम्।
तस्य प्रशासतो राज्यं धर्मेणाऽमित्रघातिनः, नाऽनृता वाक्समभवत्, मनो दुष्टं न चाऽभवत्'
इति उपरिचरराजप्रशंसामुखेन पञ्चरात्रस्य प्राशस्त्यमुक्तम्। तथा—
'सांख्यस्य वक्ता कपिलः, परमर्षिः स उच्यते, हिरण्यगर्भो योगस्य वक्ता, नाऽन्यः, पुरातनः;
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते, प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन।
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः, उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः।
पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम्।' बृहत्पराशरेऽपि—
'वैदिकं तु जपं कुर्यात्, पौराणं, पाञ्चरात्रिकं; यो वेदस्तानि चैतानि, यान्येतानि च सा श्रुतिः।
पञ्चरात्रविधानेन स्थण्डिले वाऽथ पूजयेत्' इति। विष्णुधर्मोत्तरेऽपि—
'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा, कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे'
'कृतान्तः' सिद्धान्तः" इत्यादि सर्वागमप्रामाण्यनिरूपणं वीरमित्रोदयपरिभाषाप्रकाशे द्रष्टव्यम्।

*"ज्ञानेनाऽऽकाशकल्पेन धर्मान्यो गगनोपमान्, ज्ञेयाऽभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम् A
अशक्तिरपरिज्ञानं क्रमकोपोऽथवा पुनः, एवं हि सर्वथा बुद्धैरजातिः परिदीपिता।

A "आकाशेनेपदसमाप्तमाकाशकल्पमाकाशतुल्यमेतत्; तेन आकाशकल्पेन ज्ञानेन, किं?

उपलम्भात्समाचारादस्तिवस्तुत्ववादिनां जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा।
अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतं, ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम्।
आदिबु द्धैः)द्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः; यस्यैवं भवति क्षान्तिः, सोऽमृतत्वाय कल्पते।
अलब्धावरणा सर्वे धर्माः प्रकृतिनिर्मलाः, आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः।
**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः; सर्वे धर्मास्तथा ज्ञानं, 'नैतद्' बुद्धेन भाषितम् B"**

इत्यादि गौडपादीयमाण्डूक्यकारिकायामलातशान्तिप्रकरणे चतुर्थे दृश्यते। एभिर्गौडपादाचार्यवचनैस्तदीयसम्पूर्णकारिकाग्रन्थपर्यालोचनया, एतत्प्रतिपाद्यविषयाणां बौद्धसिद्धान्तैः सह सम्यक्तोलनया च, सुव्यक्तमेवाचार्यगौडपादस्य भगवद्बुद्धोपजीवित्वं, बुद्धोपदेशस्य च गौडपादीयसिद्धान्तोपजीव्यत्वमवगम्यते। एतत्प्रकरणादौ यद्, गौडपादेन सम्यक्संबुद्धो द्विपदां वरो (मनुष्यश्रेष्ठः) भगवान्बुद्धोऽभिवन्दितः, यच्चाऽनेनाऽऽचार्येण प्रकरणान्ते 'तायिनो' बुद्धस्य 'भाषितं' सिद्धान्तत्वेनोपसंहृतं, तदेतदुभयमपि भगवति बुद्धे तदीयश्रद्धाऽतिशयं, बुद्धदेशनासु तस्याऽतीवाश्वासं, च दृढतरमभिव्यनक्तीति सुस्पष्टमस्ति सुधियाम्।

---

धर्मानात्मनः, किंविशिष्टान्? गगनोपमान्, गगनमुपमा येषां ते गगनोपमाः, तानात्मनो धर्मान्। ज्ञानस्यैव पुनर्विशेषणम्—ज्ञेयैर्धर्मैरात्मभिरभिन्नम्, अग्न्युष्णवत्सवितृप्रकाशवच्च, ज्ञानं, तेन ज्ञेयाऽभिन्नेन ज्ञानेनाकाशकल्पेन ज्ञेयात्मस्वरूपाऽव्यतिरिक्तेन, गगनोपमान् धर्मान्, यः संबुद्धः, संबुद्धवानिति, अयमेवेश्वरो यो नारायणाख्यः, तं 'वन्दे' अभिवादये, 'द्विपदां वरं' द्विपदोपलक्षितानां पुरुषाणां 'वरं' प्रधानं, पुरुषोत्तममित्यभिप्रायः। उपदेष्टृनमस्कारमुखेन ज्ञान-ज्ञेय-ज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिहप्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति" [ शाङ्करभाष्यम् ]

अयं कारिकाशयः—अत्र ज्ञानस्य, सर्वेषां वस्तुधर्माणां च पदार्थस्वरूपाधायकानां, आकाशकल्पत्व-गगनोपमानत्वाऽभिधानात्, ज्ञेयस्य च तदभिन्नत्वाऽनुसन्धानात्, संबोद्धैव केवलोऽद्वितीयोऽवशिष्यते; एवं ज्ञान-वस्तुधर्म-तदाधारभूतज्ञेयप्रतिषेधेन अवशिष्टं ज्ञातृमात्रमद्वयतत्त्वं, यः स्वयं स्वस्मिन्नेव संबुद्धः, तं द्विपदां वरं, मनुष्येषु श्रेष्ठं भगवन्तं बुद्धमहं वन्दे इति। अत्रत्यशाङ्करभाष्येऽपि नारायणाख्यः पुरुषोत्तमः सम्यक्संबुद्धो बुद्ध एवाऽभिप्रेतः, एतत्प्रकरणोपसंहारवाक्याऽनुरोधात्। भगवतो बुद्धस्य च नारायणाऽवतारत्वमितिहासपुराणादिषूपवर्णितं, मनुष्यरूपत्वेन 'द्विपदां वरत्वं' च जगति प्रसिद्धमेवेति।

B "यस्मात्, न हि क्रमते 'बुद्धस्य' परमार्थदर्शिनो, 'ज्ञानं' विषयान्तरेषु 'धर्मेषु' धर्मसंस्थं, सवितरीव प्रभा; 'तायिनः' तायोऽस्यास्तीति तायी, सन्तानवतो निरन्तरस्याकाशकल्पस्येत्यर्थः, पूजावतो वा, प्रज्ञावतो वा; 'सर्वे धर्मा' आत्मानोऽपि, 'तथा' ज्ञानवदेवाकाशकल्पत्वान्न क्रमन्ते क्वचिदप्यर्थान्तरे इत्यर्थः। यदादावुपन्यस्तं—'ज्ञानेनाकाशकल्पेन' इत्यादि, तदिदमाकाशकल्पस्य तायिनो बुद्धस्य, तदनन्यत्वादाकाशकल्पं ज्ञानं, न क्रमते क्वचिदप्यर्थान्तरे; तथा धर्मा इति। आकाशमिवाऽचलमविक्रियं निरवयवं नित्यमद्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वं, 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते (बृ० उ० ४, ३; २३) इति श्रुतेः। ज्ञान-ज्ञेय-ज्ञातृभेदरहितं परमार्थमद्वयम् 'एतन्, न' बुद्धेन भाषितं; यद्यपि बाह्यार्थनिराकरणं, ज्ञानमात्रकल्पना, च अद्वयवस्तु-सामीप्यमुक्तम्; इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः" [ शाङ्करभाष्यम् ]

अत्राऽयमाशयः—"तायतेऽनेनेति 'तायः' सुदृष्टमार्गोपदेशः, सोऽस्याऽस्तीति 'तायी' (प्र० वा० वृत्तौ परिशि० १—३, पृ० ५२०), तस्य तायिनो, भगवतो बुद्धस्य, 'ज्ञानं' 'धर्मेषु' ध्रियन्त इति धर्माः, सत्तावन्तः पदार्थाः तेषु 'न क्रमते' न प्रवर्तते, भगवान्बुद्धः स्वज्ञानविषयतया किमपि वस्तु सद्रूपं न स्वीकरोतीत्यर्थः, तन्मते सर्वेषां धर्माणां (ध्रियमाणपदार्थानां) आकाशकल्पत्वाद्, गगनोपमशून्यरूपत्वाद्वा अतः 'बुद्धेन' परमार्थदर्शिना भगवता शौद्धोदनिना प्रज्ञावता 'सर्वे धर्माः' निखिलज्ञेयविषयाः, 'तथा ज्ञानं' च सर्वज्ञेयभूतधर्मविषयं, 'नैतत्' न, एतत्' इत्येवंरूपेण निषेधविधयैव 'भाषितं' प्रतिपादितं, लोकेभ्य उपदिष्टम्; अर्थात्, किमपि ज्ञेयं वस्तु भगवता बुद्धेन सद्भूतं न मतं, न वाऽस्तीति

अत्र स्वकारिकायां, गौडपादस्य बुद्धविशेषणतया 'तायि' पदप्रयोगोऽपि अमुमेवार्थमवगमयति। दृश्यतेहि 'तायि'शब्दो बौद्धसम्प्रदायेऽतितरां समादृतः, सुप्रयुक्तश्च भूयसा तन्महापण्डितैः। तथाहि दिङ्नागस्य प्रमाणसमुच्चये—

"प्रमाणभूताय, जगद्धितैषिणे, प्रणम्य शास्त्रे सुगताय तायिने,
प्रमाणसिद्ध्यै स्वकृतिप्रकीर्णनान्निबध्यते विप्रसृतं समुच्चितम्"

इति पद्यमादावेव विद्यते। अन्यत्र ( प्र०वा० वृत्तिपरिशिष्टे १—३ पृ० ५१८ ) एतत्पद्योत्तरार्धं, पाठान्तरेणेत्थमुद्धृतं दृश्यते—"प्रमाणसिद्ध्यै स्वमतात्समुच्चयः करिष्यते विप्रसृतादिहैकतः" इति। "तत्र यथा प्रत्यक्षादिप्रमाणं, पुरुषार्थोपयोगिनोऽनधिगतस्यार्थस्य प्रकाशकं संवादकं च, तथा भगवानपि (बुद्धः); यत्रोत्कृष्टः पुरुषार्थः प्रतिबद्धश्चतुरार्यसत्यलक्षणे तत्त्वे, तद्विषयं हि ज्ञानमासाद्य मोक्षार्थिनां मोक्षाऽधिगमात्, तस्य ह्यनधिगतस्य प्रकाशकोऽविसंवादकश्च भगवान्स्याय इति प्रमाणसाधर्म्यात्प्रमाणं;

---

विधिमुखेन प्रतिपादितं; किन्तु सर्वमेव वस्तुजातं 'गगनोपमानमेव' दृष्टम्, 'सर्वं शून्यमिति' अत एव, 'न, एतत्' इति प्रतिषेधमुखेनैव सर्वं निर्दिष्टं च; एतदेव बुद्धेन दृष्टं परमार्थतत्त्वमिति। एतदेव बुद्धदर्शनं, सम्यग्दर्शनमिति तदुपजीविना गौड़पादाचार्येणाप्यभ्युपगतं, स्वग्रन्थोपान्त्यश्लोकेनोपसंहृतं चेति।

यद्यपि मूले—'नेति नेति' इति वेदान्तिकन्यायेन, 'न, एतद्' इत्येव जगद्विषयं बुद्धभापितमुपश्लोकितं, तथापि 'एतन्न' इति निषेधेनैव निषिध्यमानस्य समीपतरवर्तिन एतदोऽपेक्षयाऽवशिष्टं किञ्चित्तत्त्वमवगम्यते, तत्तु संबोद्धैव स्याद्, यः खलु 'एतन्न' इति संबुद्धः। अतः भगवता बुद्धेन यद्, 'एतन्न' इति भाषितं, तेन यद्यपि शब्दार्थमात्रतः बाह्यार्थनिराकरणमात्रमवबुध्यते, तथापि, एतदः समीपतरवस्तु सापेक्षत्वात्तत्प्रतिषेधेनाऽवशिष्टाऽद्वयवस्तुसामीप्यसमर्थादेवोक्तं भवति, ज्ञानमात्रकल्पना च सूच्यते; तस्माद् बुद्धेन शब्दतः साक्षादनुक्तमपि ज्ञान-ज्ञेय-ज्ञातृभेदरहितं परमार्थाऽद्वयतत्त्वं 'एतन्नेति' प्रतिषेधाऽनुयोगितया सुतरामेव सिध्यति। तदिदं परमार्थतत्त्वमद्वैतं बुद्धेन 'एतन्नेति' प्रतिषेधविधया सूचितं, विधिमुखेन वेदान्तेष्वेव विज्ञेयमिति शङ्कराचार्योऽभिप्रैति। तदित्थं 'एतन्न' इति बुद्धभाषिते, अहमिति योजनेन, 'अहम्, एतत्, न' इति सम्पूर्णं महावाक्यं भवति, बौद्धौपनिषददर्शनयोश्चैक्यं सम्पद्यत इति शङ्कराचार्याऽभिप्रायसारः।

अयंभावः—'एतद्' इति समीपतरवस्तुनिर्देशकं प्रसिद्धं ( समीपतरवर्ति चैतदोरूपम् ); एवं सति, 'एतद्, न' इति बुद्धभाषिते तत्त्वोपदेशे 'एतत्' पदेन, सर्वतः समीपतरवर्ति पुरोदृश्यमानं जगन्निर्दिश्य, 'न' इति प्रतिषिध्यते; तथा च 'एतद्' दृश्यमानं जगद्, 'न', वस्तुतो नाऽस्तीति प्रातिभासिकत्वमात्रमेतस्य विज्ञाप्य बाह्यार्थनिराकरणं बोध्यते; तेनान्ततः सर्वं शून्यमेव पर्यवस्यति। किन्तु नैतावन्मात्रमेव बुद्धभाषितार्थसर्वस्वं; 'एतन्न' इति कथनेन, यदपेक्षया समीपतरवर्ति जगदिदं निराक्रियते, असत्यं वा उच्यते, यश्च 'एतन्न' इति जगदसत्यत्वं संबुद्धो भवति, स संबोद्धा स्वयमवश्यमवशिष्यते। एवं 'एतन्नेति' निषिद्धाऽवशिष्टस्याऽद्वयपरमार्थतत्त्वस्य स्वयंसिद्धत्वादेव बुद्धेन शब्दतस्तन्नोक्तम्। शङ्कराचार्येण तु, बुद्धभाषिते 'एतन्नेति' शब्दार्थमात्राऽनुसन्धानेन लोकस्य अनात्मतावादभ्रमो मा भूदिति बुद्धभाषित-सूचितमेवाऽद्वयपरमार्थतत्त्वम् 'अहम्' इति पदं संयोज्य महावाक्यपूरणेन 'अहमेतन्न' इति सम्पूर्णं वेदान्ताऽद्वयदर्शनं स्पष्टतरं कृत्वा प्रकाशितमिति। तस्माद्, गौडपादपरम्परया शङ्कराचार्यस्याऽपि सुगताऽनुगतिकत्वं निःसंशयमभिधातुं शक्यते। अत एवाऽस्य परमाचार्यस्य 'प्रच्छन्नबौद्धत्वं, बौद्धतरत्वं च' कुमारिला-ऽऽनन्दगिरिप्रभृतिभिर्महापण्डितैरुद्घोषितं संगच्छते। स्वयं च श्रीशङ्कराचार्यैर्भगवान्बुद्धो बहुशः स्तुतो, धर्मसंस्थापकत्वेन श्रद्धितश्च; तथाहि [ दशावतारस्तोत्रे नवमं ९ पद्यं; बृहत्स्तोत्ररत्नाकरे पृ० ३४५, खे० बं० सं० ]—

"धराबद्धपद्मासनस्थाङ्घ्रियष्टिर्नियम्यानिलं न्यस्तनासाग्रदृष्टिः,
य आस्ते कलौ योगिनां चक्रवर्ती, स बुद्धः प्रबुद्धोऽस्तु नश्चित्तवर्ती" इति।

एतद्विषयाणि अन्यानि वचनानि अस्मिन्भाष्येऽन्यत्रोदाहृतानि, तत्र तत्र द्रष्टव्यानि।

तस्माद्बुद्धोपदेशोऽपि मनु-व्यासादिशास्त्रवत् आर्षागमः, प्रमाणं च तद्वदेवेति सन्मतम् ।
इत्थं वेदाऽविरोधेन सर्वासागमप्रमानता, तद्विरोधे तु सर्वेषामप्रामाण्यमिति स्थितम् ।
किन्तु सर्वत्र शास्त्रार्थे बुद्धिरेवाऽन्तिमा नृणां, स्याद्व्यवस्थापिका, सम्यक्कार्याऽकार्यविवेकिनी ।
इत्थमेवाऽत्र शास्त्रान्ते सुव्यक्तं भृगुणा स्वयं "मानवस्याऽस्य शास्त्रस्य रहस्यमुपदिश्यते ।
अनाम्नातेषु धर्मेषु कथं स्याद् ? इति चेद्भवेत्; यं शिष्टा ब्राह्मणा ब्रूयुः, स धर्मः स्यादशङ्कितः ।
धर्मेणाऽधिगतो यैस्तु वेदः सपरिबृंहणः, ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ।
दशाऽवरा वा परिषद् यं धर्मं परिकल्पयेत्, त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ।
त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः, त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशाऽवरा;
ऋग्वेदविद् यजुर्विच्च सामवेदविदेव च, त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ।
एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः, स विज्ञेयः परो धर्मो; नाऽज्ञानामुदितोऽयुतैः ।
अव्रतानाममन्त्राणां जातिमात्रोपजीविनां, सहस्रशः समेतानां परिषत्त्वं न विद्यते"

'भूत' उत्पन्नः, 'भूत' वचनम्, अप्रजातस्येश्वरादेः परपरिकल्पितनित्यस्य प्रतिषेधार्थम्, स्वार्थस्तु सामर्थ्यगत इति न तदर्थमेतदिति वक्ष्यते; प्रमाणं चाऽसौ भूतश्चेति प्रमाणभूतः, तस्मै प्रमाणभूताय प्रणम्येति योज्यम् । 'जगद्धितैषिणे' इति; 'जगद्धितं' हेयोपादेययोरात्यन्तिके हानोपादाने, तदेषणशीलाय, प्रणम्य··· इति सम्बन्धः ।······'सुगताय' इति; सुष्ठु गतः प्राप्तः सर्वथा सर्वहेयप्रहाणं ज्ञानादिसम्पदं चेति सुगतः, शोभनं वा गतोऽनुबुद्धवानिति सुगतः, ज्ञानार्थोऽत्र गतिः पूर्वत्र तु प्राप्तिवचनः । अनेन तु स्वार्थसम्पत्फलाऽवस्थाभाविन्युक्ता, पूर्वन्तु हेतुभाविनी परार्थसम्पदुक्ता; निरुपमां फलाऽवस्थाभाविनीं परार्थसम्पदमाह— 'तायिने' इति । तायतेऽनेनेति 'तायः' सुदृष्टमार्गोपदेशः, सोऽस्यास्तीति 'तायी' C ।

श्लोकश्चायं प्रमाणकथनप्रस्तावाद् भगवत्प्रामाण्यसाधकोऽनुलोम-प्रतिलोमतो ज्ञेयः । प्रमाणं भगवान् जगद्धितैषित्वात्, यतश्च जगद्धितैषी अतः शास्ता, यतश्च शासकोऽतो गोत्रभेदेन प्राज्ञजातीयत्वात्सुगतः, सुगतत्वाच्च सर्वजगत्त्रायकोऽतोऽयं प्रमाणमिति अनुलोमव्याख्या ।

प्रतिलोमतस्तु—प्रमाणं तायित्वात्, तायित्वं सुगतत्वात्, तच्च शास्तृत्वात्, एतच्च जगद्धितैषित्वात् । कार्यतः कारणाऽनुमानमिति व्याख्याभेदः" [ प्र० वा० वृत्तौ० परिशि० १—३ पृ० ५१८—२१ ]
एवमन्यत्राऽपि बौद्धवाङ्मये दृश्यते ।

"सुगतश्च सर्वज्ञो यदि परमार्थतो नेष्यते ? तर्हि किमर्थं 'प्रमाणभूताय' इत्यादिनाऽसौ समर्थितः, स्तुतश्चाऽद्वैतादिप्रकरणानामादौ दिङ्नागादिभिः सद्भिः ?" [ प्रमेयकमलमार्त्तण्डे पृ० २१ ]

C 'तायः' स्वदृष्टमार्गोक्तिः, वैफल्याद्वक्ति नाऽनृतं;
दयालुत्वात्परार्थं च सर्वारम्भाऽभियोगतः,
तस्मात्प्रमाणं; 'तायो' वा चतुःसत्यप्रकाशनम्,

दुःखहेतुनिवर्तकत्वेन 'स्वयं दृष्टस्य मार्गस्योक्ति, देशना 'तायः' कारणे कार्योपचारात्; तया हि सत्त्वान् तायते, तद्योगात् तायित्वम् । स च 'वैफल्याद्वक्ति नाऽनृतं' आत्मसुखाद्यभिलाषादिना कश्चिदसत्यं वदति, अज्ञानाद्वा; प्रहीणात्मदर्शनस्य साक्षात्कृततत्त्वस्य तदुभयं नास्ति ।

विशेषतः सत्याऽभिधानहेतुरेव कृपाऽस्तीत्याह—'दयालुत्वाच्च परार्थं च, सर्वस्य' मार्गाभ्यासादेः, 'आरंभेऽभियोगतः', परार्थमेवोद्दिश्य भगवानभिसंबुद्धः, कथन्तस्य मिथ्याऽभिधानेन सत्त्ववञ्चनाशङ्काऽपि ? 'तस्मात्' तायित्वात् 'प्रमाणं' भगवान् ( बुद्धः ) । यथादृष्टार्थप्रवक्तृत्वं हि संवादित्वमेवेति प्रथमप्रमाणलक्षणयोगात्प्रामाण्यमनेनोक्तम् । द्वितीयलक्षणयोगमप्याह—'तायो वा चतुःसत्यप्रकाशनं' परैरज्ञातस्य सत्यचतुष्टयस्य ( दुःख–समुदय–निरोध–मार्ग-संज्ञस्य ) प्रकाशनं वा 'तायः' तद्योगात् 'तायी' प्रमाणं भगवानुक्तः" [ प्र०वा० वृत्तौ परिच्छे० १, श्लो० १४७–४८, पृ० ६१–६२ ]

अत्राऽध्यात्मविदां पुंसां, पर्षदश्च विपश्चितां, बुद्धेरेव प्रमातृत्वं धर्मज्ञाने स्फुटं स्मृतम् ।
शास्त्राम्नातेषु धर्मेषु शास्त्रकृद्बुद्धिमानता, अनाम्नातेषु, शिष्टानां, पर्षदश्च, मतिः प्रमा ।
"दश वा वेदशास्त्रज्ञाः, त्रयो वा धर्मपाठकाः, यद् ब्रूयुः कार्य उत्पन्ने, स धर्मो धर्मसंशये *"
इत्थं व्यासोपदेशश्च भारते दृश्यते; तथा राजधर्मव्यवस्थार्थं पर्षत्संख्यादिवर्णनम्—

"चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्स्नातकाञ्शुचीन्,
क्षत्रियांश्च तथा चाऽष्टौ बलिनः शस्त्रपाणिनः,

वैश्यान्वित्तेनसम्पन्नानेकविंशतिसङ्ख्यया, त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके,
अष्टाभिश्चगुणैर्युक्तं सूतं पौराणिकं तथा, पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकं,
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनं, कार्ये विवदमानानां शक्तमर्थेष्वलोलुपं,
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम्; अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् †"
एवं सामाजिके धर्मे राजधर्मे च संशये, कार्याऽकार्यव्यवस्थायां, तत्तच्छास्त्रार्थनिर्णये,
पूर्वशास्त्रेषु तत्कालश्रेयःसाधनदर्शने, सद्व्याख्यानाऽनुसन्धाने, तत्सत्यार्थाऽवधारणे,
देशकालादिधर्माणां तद्योग्यपरिवर्तने, नव्यशास्त्रविधाने च, व्यवहारप्रवर्तने,
अननुष्ठानसंत्यक्त-सच्छास्त्रार्थप्रचारणे, लोकविक्रुष्टधर्माणामार्षाणां च निवर्तने,
आप्तबुद्धेः प्रमातृत्वं मुख्यमस्तीति निश्चितं; स एव ह्यन्तिमः पन्था येन याति महाजनः ।
शास्त्रस्यापि प्रमाणत्वे हेतुर्लोकपरिग्रहः, जनतोपेक्षितं शास्त्रं न प्रमाणमिति स्थितिः ।
शास्त्रोक्तमपि धर्मं नो लोकविक्रुष्टमाचरेत्; "यद्यपि शुद्धं, लोकविरुद्धं, नाचरणीयं नादरणीयम्"
एवं लोकमतस्यैव प्रामाण्यं परमं स्मृतं; बुद्धिरेव 'मतं' नाम, यद्वा तज्जो विनिश्चयः ।
भूयोलोकैकमत्येन या कार्यविषया मतिः भवेत्समष्टिरूपैका, सा लोकमतमुच्यते ।
तत्परमप्रमाणत्वं साक्षादेवेह दृश्यते तिरश्चामपि चेष्टासु, का कथा नरकर्मणाम् ?
निवृत्तिश्च प्रवृत्तिश्चाऽनिष्टेष्विष्टेषु कर्मसु, हेयोपादेयबुद्ध्यैव प्राणिनां दृश्यते स्फुटम् ।
शास्त्रे विधिनिषेधाभ्यां प्रवर्तन-निवर्तने ये चार्था-ऽनर्थयोरुक्ते, तेऽपि बुद्ध्यैव सिध्यतः ।
मानं श्रुतिकुमार्याश्च पुंयोगे गर्भवद्विधिः; श्रुतेः स ऋषिपुंयोगो बुद्धिद्वारैव संभवेत् ।
सर्वत्र लौकिके कार्ये वैदिके वाऽर्थदर्शने, प्रत्यक्षमीक्ष्यते बुद्धेरसाधारणहेतुता ।

* म० भा० शां० अ० ३६ श्लो० २०|†म० भा० शां० अ० ८५ श्लो० ७—११; "अष्टाभिर्गुणैः, शुश्रूषा, श्रवणं, ग्रहणं, धारण,मूहनमपोहनं, विज्ञानं, तत्त्वज्ञानं चेति, तैः । पञ्चाशद्वर्षवयसम्' इत्येकैकस्य विशेषणम् । 'सप्तभिः' मृगयाऽक्षाः स्त्रियः पानमिति चतुर्भिः कामजैः, दण्डपातनं, वाक्पारुष्यम् , अर्थदूषणमिति त्रिभिः क्रोधजैरिति सप्तभिः । 'अष्टानां' ब्राह्मणचतुष्टयं, शूद्रत्रयं, सूतश्चेति, तेषाम्" इति तत्र नैलकण्ठीयम् ।

"तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् ; देश-जाति-कुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम्; कर्षक-वणिक्-पशुपाल-कुसीदि-कारवः स्वे स्वे वर्गे; तेभ्यो यथाऽधिकारमर्थान्प्रत्यवहृत्य धर्मव्यवस्था; न्यायाऽधिगमे तर्कोऽभ्युपायः; तेनाऽभ्यूह्य यथास्थानं गमयेत्; विप्रतिपत्तौ त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत्" [गौ० धर्मसू० अ० ११ सू० २१-२७]

"देशधर्मादीनपि सम्यग् ज्ञात्वा आम्नायाऽविरोधेन गृह्णीयात्; विरोधे त्यक्तव्या इत्येवमर्थमुपदेशः । 'कर्षकाः' कृषिजीविनः, 'वणिजः' प्रसिद्धाः, 'पशुपाला' गोपालाः 'कुसीदिनो' वार्धुषिकाः, 'कारवो' ऽस्कारादयः । 'स्ववर्गे' इति वक्तव्ये, वीप्सावचनं, न केवलं कर्षकादय एव स्ववर्गे प्रमाणं, किन्तु ब्राह्मणादयोऽपीति । तत्राऽपि स्मृत्यन्तर-सामर्थ्यात् 'त्र्यवरा' एव प्रष्टव्याः, 'स्ववर्गे त्र्यवरा धर्मान्ब्रूयुः' इति प्रजापतिवचनात्" [ मस्करिभाष्यम् ]

वाद-जल्प-वितण्डनां कथानां परिचालने, वादगोष्ठीषु शास्त्रार्थे, सदसत्पक्ष-निश्चये,
व्यवस्थापकपर्षत्सु, पञ्चायत्तक्रियाविधौ, दण्डप्रणयने, न्याये, व्यवहारस्य दर्शने,
शास्त्रपाठे, तदर्थानां ग्रहणे, धारणे, स्मृतौ, वार्त्तालापेषु, लोकेभ्यः पुरुषार्थाऽनुशासने,
संवादे च, विवादे च, खण्डने, मण्डने तथा, परोक्तप्रतिपत्तौ च, स्वाऽभिप्रायाऽन्यबोधने,
वस्तुतत्त्वाऽनुसन्धाने, विरुद्धार्थसमन्वये, एवमादिषु नेतृत्वं बुद्धेरेवाऽस्ति कर्मसु ।
सर्वेषु च प्रमाणेषु प्रत्यक्षं परमं मतं, बुद्धिरूपं तदप्यस्ति सर्वकर्मप्रयोजकम् ।
अनुमानादि, शाब्दं च प्रमाणमपि तत्त्वतः, बुद्धिरेवास्ति; नो मानं किञ्चित्स्याद्बुद्धिवर्जितम् ।
वेद-वेदान्त-मीमांसा-सांख्य-न्यायादिशब्दतः, बुद्धिरेवोच्यते मुख्यं, तन्मयत्वाच्च वाङ्मयम् ।
बुद्धिपूर्वप्रणीतत्वादेव वेदस्य वेदता, शास्त्रस्य शास्त्रता, किंवा शिष्टवाचां प्रमाणता ।
बुद्धावव्याहतार्थत्वे ज्ञाते सत्येव, शब्दतः नृणां कर्मप्रवृत्तिः स्याद्, एषा स्वाभाविकी स्थितिः ।
तस्मादव्याहतार्थानामेवाप्तवचसामपि प्रामाण्यं, न तु सर्वेषां; भारते चैवमुच्यते—
"सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः, छेत्तारः संशयानां च; क्लिश्यन्तीहाऽल्पबुद्धयः ।
द्वेष-क्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः, अन्तःक्रूरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव,
धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत्; कुर्वते च बहून्मार्गांस्तान्हेतुबलमाश्रिताः;
सतां मार्गान्विलुम्पन्ति, लोभाऽज्ञानेष्ववस्थिताः ।
धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः या या विक्रियते संस्था, ततः साऽपि प्रपद्यते ।
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता, एत एव हि कौरव्य, दृश्यन्ते लुब्धबुद्धिषु ।
एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान्; शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान् ।
येष्वावृत्तिभयं नास्ति, परलोकभयं न च, नामिषेषु प्रसङ्गोऽस्ति, न प्रियेष्वप्रियेषु च,
शिष्टाचारः प्रियो येषु, दमो येषु प्रतिष्ठितः, सुखं दुःखं समं येषां, सत्यं येषां परायणं,
दातारो, न ग्रहीतारो, दयावन्तस्तथैव च, पितृ-देवातिथेयाश्च नित्योद्युक्तास्तथैव च,
सर्वोपकारिणो वीराः सर्वधर्माऽनुपालकाः, सर्वभूतहिताश्चैव, सर्वदेयाश्च भारत,
न ते चालयितुं शक्या धर्मव्यापारकारिणः, न तेषां भिद्यते वृत्तं, यत्पुरा साधुभिः कृतं,
न त्रासिनो, न चपला, न रौद्राः, सत्पथे स्थिताः, ते सेव्याः साधुभिर्नित्यं, येष्वहिंसा प्रतिष्ठिता ।
काम-क्रोधव्यपेता ये निर्ममा निरहङ्कृताः, सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च ।
न धनार्थं यशोऽर्थं वा धर्मस्तेषां युधिष्ठिर, अवश्यं कार्य इत्येव शरीरस्य क्रियास्तथा,
न भयं क्रोध-चापल्ये न शोकस्तेषु विद्यते, न धर्मध्वजिनश्चैव, न गुह्यं कञ्चिदास्थिताः,
येष्वलोभस्तथाऽमोहो, ये च सत्यार्जवे स्थिताः, तेषु कौन्तेय रज्येथा, येषां न भ्रश्यते मनः ।
ये न हृष्यन्ति लाभेषु नाऽलाभेषु व्यथन्ति च, निर्ममा निरहङ्काराः सत्त्वस्थाः समदर्शिनः,

लाभा-ऽलाभौ सुख-दुःखे च तात, प्रिया-ऽप्रिये मरणं जीवितं च,
समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्त्वपथे स्थितानां,
धर्मप्रियांस्तान्सुमहानुभावान् दान्तोऽप्रमत्तश्च समर्चयेथाः,
दैवान्सर्वे गुणवन्तो भवन्ति; शुभा-ऽशुभे वाक्प्रलापास्तथाऽन्ये*"

इत्थं शिष्टाप्तवाक्यानामेव धर्मे प्रमाणता प्रोक्ता; नाऽनाप्तदुष्टानां वाक्प्रलापस्य शास्त्रता ।
आप्ता-ऽनाप्तत्वविज्ञानं बुद्ध्यैव स्यादसंशयं, बुद्धिरेव प्रमा तस्मादाप्तप्रामाण्यसाधने ।
"प्रमाणमविसंवादि ज्ञानं; अर्थक्रियास्थितिः अविसंवादनं; शाब्देऽप्यभिप्रायनिवेदनात् ।
वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते, प्रामाण्यं तत्र शब्दस्य, नाऽर्थतत्त्वनिबन्धनम् ।
गृहीतग्रहणान्नेष्टं सांवृतं, धीप्रमाणता प्रवृत्तेस्तत्प्रधानत्वाद् हेयोपादेयवस्तुनि ।

* म॰ भा॰ शां॰ अ॰ १५८ ।

विषयाकारभेदाच्च धियोऽधिगमभेदतः, भावादेवाऽस्य तद्भावे, स्वरूपस्य स्वतो गतिः।
प्रामाण्यं व्यवहारेण; शास्त्रं मोहनिवर्तनं; अज्ञातार्थप्रकाशो वा, स्वरूपाधिगतेः परम्[†]"
इत्थं बुद्धानुगेनोक्तं सुधिया धर्मकीर्त्तिना; एतत्तात्पर्यमप्यस्ति बुद्धेः प्रामाण्यसाधने।
"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः"[‡] याऽत्रोक्ता साऽपि शिष्टानां बुद्धिरेवाऽस्ति वाङ्मयी।
इत्थं धर्मप्रमाणानां प्रामाण्यं, तद्बलाऽबलं, बुद्धेः सर्वाऽतिशायित्वं चाऽत्र सम्यङ्निरूपितम्।१३।

---

[†] प्रमाणवार्तिके परिच्छे० १ श्लो० ३—७। "प्रामाण्यं व्यवहारेण' अर्थक्रियाज्ञानेन; यस्य साधनज्ञानस्य तादात्म्यादनुभूतेऽपि प्रामाण्ये साशङ्का व्यवहर्तारोऽनभ्यासवशादनुत्पन्नाऽनुरूपनिश्चयाः, तत्राऽर्थक्रियाज्ञानेन प्रामाण्यनिश्चयः; अन्यत्र तु विभ्रमशङ्कासङ्कोचादुत्पत्तावेव स्वरूपस्य प्रामाण्यस्य स्वतो गतिरित्युक्तम्।... ननु यत्र तावदभ्यस्तसाधन-ज्ञानादिषु निरस्तभ्रमा व्यवहारिणः, तेषां स्वत एव प्रामाण्य-निश्चयः; यत्त्वनभ्यस्तसाधनं ज्ञानं, तस्याऽपि व्यवहारेणेति निष्फलं शास्त्र-प्रणयनमित्याह—'**शास्त्रं मोहनिवर्तनमिति**; यदि व्यवहारतः प्रमाणस्वरूपसिद्धिः, परस्परविरोधीनि लक्षणशास्त्राणि न स्युः। तस्माच्छास्त्रेण लक्षणोपदर्शनात् तद्विषयः संमोहो निवर्त्तनीयः; येन परलोकनिःश्रेयसादेर्व्यवहाराऽप्रसिद्धस्य सिद्धिर्भवति। तदेवमविसंवादनं प्रमाणलक्षणमुक्तम्; इदानीमन्यदाह—'**अज्ञातार्थप्रकाशो वा**' प्रकाशनं प्रकाशः, अज्ञात-स्यार्थस्य '**प्रकाशो**' ज्ञानं; तत्प्रमाणम्" [ प्र० वा० वृत्तिः ]

[‡] "गो-भूमि-हिरण्यादि-धनमर्थः; तत्र '**सक्तिः**' तात्पर्येण तदर्जन-रक्षणार्थं कृषि-सेवादिव्यापारकरणम्; '**कामः**' स्त्रीसंभोगः, तत्र '**सक्तिः**' नित्यं तदासेवनं, तदङ्गानां च गीत-वादित्रादीनाम्; तद्वर्जितानां पुरुषाणां '**धर्मज्ञानं**' धर्माऽवबोधो, '**विधीयते**' विशेषेण धीयते, व्यवस्थितं भवति; '**धीङ् आधाने**' इत्यस्यैतद्रूपम्। 'किमर्थं पुनस्तत्र सक्तानां न भवति धर्मज्ञानं; यावता तेऽपि यथाक्षणं तदविरोधिन्यवसरे भोजनादावितिहासश्रवणादन्योपदेशात्समाचाराद्वा शक्नुवन्ति ज्ञातुम्' इत्यत आह—'**धर्मं जिज्ञासमानानामिति**'। मुख्यं प्रमाणं धर्मे वेदः, स च तैर्न शक्यो ज्ञातुम्; अत्यन्तदुर्विज्ञानो ह्यसौ निगम-निरुक्त-व्याकरण-तर्क-पुराण-मीमांसाशास्त्रश्रवणमपेक्षते स्वार्थबोधे; न चेयान्ग्रन्थराशिः सर्वव्यापारपरित्यागेन विना शक्य आसादयितुम्। समाचारेतिहासादेः कतिपये धर्मा अवगम्यन्ते; न वेदादिवत्समस्ताङ्गयुक्तो ज्योतिष्टोमादिप्रयोगः; अत उक्तं—'**प्रमाणं परमं श्रुतिः**'। न तु समाचारादेः प्रामाण्यापकर्षः। तदुक्तं—
'**योऽहेरिव धनाद्भीतो, मिष्टान्नाच्च विषादिव, राक्षसीभ्य इव स्त्रीभ्यः, स विद्यामधिगच्छति**'।
अपरे तु '**अर्थकामा**' दृष्टफलैषिण उच्यन्ते; तत्र '**सक्तानां**' पूजा-ख्यात्यादिकामानां दृष्टफलार्थितया लोकपक्तिमात्रप्रयोजनानां, न '**धर्मज्ञानं**' धर्माऽनुष्ठानं '**विधीयते**' उपदिश्यते। ज्ञायतेऽस्मिन्निति '**ज्ञानम्**' अनुष्ठानमित्युच्यते; अनुष्ठीयमानो हि धर्मो व्यक्ततरो भवति, शास्त्राऽवगमकालतोऽपि; अतोऽनुष्ठानं धर्मज्ञानमुच्यते। अत एतदुक्तं भवति—यद्यपि धर्माऽनुष्ठानाल्लोकपक्त्यादि दृष्टं प्रयोजनमुपलभ्यते, तथापि न तत्सिद्धिपरतया तत्र प्रवर्तितव्यं; किं तर्हि ? शास्त्रेण तच्चोदितमिति कृत्वा। तथा च प्रवृत्तौ यदि दृष्टमपि भवति, भवतु न विचार्यते; तथा च श्रुतिः स्वाध्यायस्य दृष्टं फलमनुवदति—'**यशो लोकपक्तिरिति**'; **लोकः पच्यमानश्चतुर्भिरेनं भुनक्ति, अर्चया, दानेन, अजेयतया चाऽवध्यतया**' इत्यादि। श्लोकश्चाऽत्र भवति—

**"यथेक्षुहेतोरपि सेचितं पयस्तृणानि वल्लीरपि च प्रसिञ्चति,**
**तथा नरो धर्मपथेन सञ्चरन्यशश्च कामांश्च वसूनि चाऽश्नुते"**
[ मे० ति० भा० ]

**"नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत्; निष्फला ह्यभ्युदये भवन्ति। तद् यथाऽऽम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते। नो चेदनूत्पद्यन्ते, न धर्महानिर्भवति"** [ आप० धर्मसू० प्र० १ कं० २० सू० १-४ ]; वीरमित्रोदयेऽपि परिभाषाप्रकाशे ( पृ० ६७ ) द्रष्टव्यम्।

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ; उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः १४
उदितेऽनुदिते चैव समयाऽध्युषिते तथा, सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः† ।१५।
[श्रुतिं पश्यन्ति मुनयः, स्मरन्ति तु यथामृति; तस्मात्प्रमाणं मुनयः, प्रमाणं प्रथितं भुवि ।
धर्मव्यतिक्रमो दृष्टः श्रेष्ठानां, साहसं तथा; तदन्वीक्ष्य प्रयुञ्जानाः सीदन्त्यपरधर्मजाः]

**मानवधर्मशास्त्राऽधिकारी**

निषेकादि-श्मशानान्तो मन्त्रैर्यस्योदितो विधिः,
तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो; नाऽन्यस्य कस्यचित् ॥१६॥

---

परस्परविरुद्धार्थे यत्र द्वे भवतः श्रुती, नैकस्या बाधने तत्र कारणं किञ्चिदस्त्यतः,
प्रामाण्यमुभयोस्तुल्यम, अनुष्ठानं विकल्पतः, तुल्ये बलविरोधे हि विधिर्वैकल्पिकः स्मृतः ।
यथाऽग्निहोत्ररूपैकं कर्मैव विहितं त्रिषु मिथोविरुद्धकालेषु समयाऽध्युषितादिषु ।
तत्रैकस्मिन्ननुष्ठानं, नाऽन्यस्मिन्निति निर्णयः कर्त्तुं न शक्यते; तस्माद्धोमकालो विकल्प्यते ।
एष एव विधिः प्रोक्तः स्मृत्योराचारयोस्तथा
तुल्यन्यायाद्विरुद्धार्थाऽनुष्ठानस्य व्यवस्थितौ ॥ १४-१५ ॥
द्विजस्यैवाऽधिकारार्थं केचिद् व्याचक्षते बुधाः मनोर्वाक्यं;* परन्त्वेतन्मनुसन्तानमात्रगम् ।

---

† "यत्र श्रुत्योर्द्वैधं विरुद्धार्थाऽभिधानं, यं धर्मोऽयमिति काचिच्छ्रुतिराह, तमेवाऽधर्म इत्यन्या, तत्र 'उभावपि तौ धर्मौ' अनुष्ठेयौ विकल्पेन । तुल्यबले हि ते श्रुती; तत्रेयं प्रमाणमियं नेति अशक्यो विवेकः; अत एकार्थतुल्यबलविरोधे विकल्प इति ।··· न्याय्यश्च विकल्पः; यथाऽग्निहोत्राख्यमेकं कर्म, तस्य कालत्रयमुपदिष्टं; तत्र कर्म प्रधानं, कालो गुणः । न चैकस्मिन्प्रयोगे कालत्रयसंभवः; न च कालाऽनुरोधेन प्रयोगावृत्तिर्युक्ता; नाङ्गाऽनुरोधेन प्रधानमावर्तनीयं; तस्मान्न्याय्योऽयं, 'तुल्यबलविरोधे विकल्प' इति वचनात् ॥ उदाहरणमिदं समनन्तरप्रदर्शिते विरोधे । य एते त्रयः काला इतरेतरनिन्दया होमस्य विहिताः, तत्राऽयमर्थः श्रुतिवाक्यानाम्—'सर्वथा वर्तते यज्ञः' सर्वप्रकारो होमः प्रवर्तते, प्रवर्त्तनीय इत्यर्थः । या उदितहोमनिन्दा, सा न तत्प्रतिषेधार्था; किं तर्हि? अनुदितहोमविध्यर्था; एवमितरत्राऽपि । तेनाऽयमर्थ उक्तो भवति—'सर्वथा कर्त्तव्य एतेषां कालानामन्यतमस्मिन्काले' । तत्र यस्मिन्कृतस्तत्र सम्पूर्णः शास्त्रार्थो भवतीतीयं 'वैदिकी श्रुति'रेवम्परा; अस्मिन्नर्थेऽस्यास्तात्पर्यं, न पुनर्निन्द्यमानप्रतिषेधे । 'यज्ञो' होमोऽत्र अग्निहोत्राख्योऽभिप्रेतः; याग–होमयोर्यतो नात्यन्तं भेदः; देवतामुद्दिश्य द्रव्यस्य स्वत्वत्यागो 'नेदं मम, देवताया इदमिति' यागः; एतच्च स्वरूपं होमेऽप्यस्ति; अयं तु विशेषः—द्रव्यस्य होमे प्रक्षेपोऽधिकः; आरोपणविशेषोऽन्यादौ । अतो 'यज्ञ' शब्देनाऽत्र होमस्याऽभिधानं; होमे ह्येते कालाः श्रुतावाम्नाता, न यागमात्रे । उदितादिशब्दैश्च 'उदिते होतव्यम्' इत्यादिका श्रुतिरेकदेशेन लक्ष्यते । येयमुदिते होतव्यं, नोदिते होतव्यमिति श्रुतिः, सैवम्परेत्येवं योजना । 'समयाध्युषित'शब्देन समुदायेनैवोषसः काल उच्यते । अन्ये तु पदद्वयमेतदित्याहुः; 'समया' शब्दः समीपवचनः समीपिनमपेक्षते; उदिताऽनुदितयोः सन्निधानात्समीपी सन्ध्याकालः; 'अध्युषितं' रात्रेर्विवासकालः, व्युष्टायां रात्राविल्यर्थः ।··· अतो विकल्पेनैकं होमाख्यं कर्म, प्रतिकालत्रयविधानान्नास्ति विरोधः । सिद्धरूपे हि वस्तुनि इतरेतरविरुद्धरूपसमावेशाऽसंभवात् स्याद्विरोधो, न साध्ये । साध्यं हि अनेनाऽपि सिध्यति, अनेनाऽपीत्यवगम्यते; तत्र कुतो विरोधः? एष एव च स्मृतीनां विरुद्धानां विकल्पो न्याय्यः" [ मे० ति० भाष्यम् ]

"सूर्य–नक्षत्रवर्जितः कालः 'समयाऽध्युषित' शब्देनोच्यते; उदयात्पूर्वमरुणकिरणवान्प्रविरलतारकोऽनुदितकालः" इत्यादि मन्वर्थमुक्तावल्याम् ।

* "विदुषा ब्राह्मणेनेदमध्येतव्यमिति ( मनु० १, १०३ ) पठन्ति; स चाऽर्थवादः । तत्र

सरस्वती-दृषद्वत्योर्देवनद्योर्यदन्तरं , तं देवनिर्मितं देशं 'ब्रह्मावर्त्तं' प्रचक्षते ।१७।
तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः
वर्णानां साऽन्तरालानां स 'सदाचार' उच्यते ।१८।

---

वेदेऽथ वैदिके यज्ञे शूद्रस्याऽप्यधिकारिता, वेद-शास्त्राऽनुसारेण प्रागत्र दर्शिताऽसकृत्।
तस्मान्न युज्यते त्वत्र तद्विरुद्धार्थकल्पनं, विरुद्धत्वेऽनपेक्ष्यत्वं न्यायादस्यैव साम्प्रतम्।
तद्, यथा न विरोधः स्यात्तथा व्याख्यायतामिदं अन्यशास्त्रैकवाक्यैतच्छास्त्रकाराशयाश्रयात्।
मूले न द्विजशब्दोऽत्र, नाऽपि शूद्रपदं स्मृतं; कथं वैशेष्यतः स्यातां तयोर्विधि-निषेधकौ ?

नरः संस्कारवान्यः कोऽपीहाऽधिक्रियते स्फुटं;
संस्कारविधिहीनोऽन्यो यः कोऽप्येव निषिध्यते ।
निषेकादि-श्मशानान्तः संस्कारो विधिचोदितः,
यस्य स्यात् तस्य शास्त्रेऽस्मिन्नधिकार,स्तदर्हता ;

नाऽन्यस्येतीह सामान्यादुक्तिर्विधि-निषेधयोः सर्वेष्वेवाऽविशेषेण मानवेष्वभिवर्तते ।
यन्निषेकादिसंस्कारो मन्त्रतो विधिवद्भवेत्, तज्जन्ययोग्यतावत्त्वात्, शास्त्रेऽत्राऽधिक्रियेत सः
शूद्रजोऽज्ञातगोत्रश्च, जानश्रुति-मतङ्गवत्, मन्त्रवद्विधिसंस्कारैर्भवत्येव द्विजः पुमान्।
वस्तुतस्त्वधुना नैतद्वाक्यार्थो व्यावहारिकः ; महाजनाऽननुष्ठानादप्रामाण्यमिवापितः ।
न निषेकाद्यनुष्ठानं जातिनामधरेष्वपि द्विजम्मन्येषु भूयःसु नियमादस्ति साम्प्रतम्।
ते सर्वे यदि शास्त्रेऽस्मिन्भवन्त्येवाऽधिकारिणः , शूद्रैः किमपराद्धं, तन्निष्पक्षमवधीयताम्।
येषां केवलयोरस्ति 'कलावाद्यन्तयोः स्थितिः' तन्मते चाऽस्य वैयर्थ्यं मनुश्लोकस्य जायते ।
वस्तुतस्त्वत्र वक्तव्यं—'कलावाद्यन्तयोः स्थितिः' तुल्यैवेति, न भेदोऽस्ति कश्चिद् ब्राह्मण-शूद्रयोः
तस्मादेतादृशं वाक्यं त्वनित्यार्थविधायकं , कादाचित्कालिकं, त्यक्तुं योग्यमेवाऽधुना बुधैः ।
सर्वदेशमनुष्याणामधिकारोऽनिवारितः वेदेऽपि दृश्यते साक्षात् , स्मृत्यादेस्तु कथैव का ?
शिष्टाचारात्तथा भूयोमहाजनपरिग्रहात् , सिद्धसर्वाऽधिकारस्य निषेधोऽव्यावहारिकः ,
अनाऽभ्युदयिकश्चा,ऽतस्तत्प्रामाण्यं न युज्यते , सन्महाजनविक्रोशात् , प्रक्षेपस्य च संभवात्।१६।
अत्र देशविशेषस्य प्राशस्त्यं कालिकं स्मृतं, न नित्यमिति विज्ञेयं; तस्मान्नैवं तु सर्वदा ।
ब्रह्मावर्त्तसदाचारः कदाचित्प्रायशो नृणाम् अभूदादर्शभूतो;ऽतस्तदा देशः स तादृशः ।

---

'तव्य' प्रत्ययदर्शनात्कस्यचिद्विधिभ्रान्तिः स्यात् ; तथा च सति क्षत्रिय-वैश्ययोरध्ययनं निवर्तेत इत्येतदाशङ्का-निवृत्त्यर्थोऽयं श्लोकः क्षत्रिय-वैश्ययोः प्राप्तिं दर्शयति । तथा, यथाकामी शूद्रोऽप्यप्रतिषेधादध्येतुं प्रवर्तेत; तन्निवृत्त्यर्थमपीत्येवमिमं श्लोकं पूर्वे व्याचक्षिरे । 'शास्त्र' शब्दोऽयं मानवग्रन्थवचनः । 'अधिकारो' मया एतदनुष्ठेयमित्यवगमः ।··· ननु आदिमत्वान्मानवस्य ग्रन्थस्य, कथं तद्विषयो विधिरनादिवेदमूल इति शक्यते वक्तुं ? उच्यते;··· यानि वेदवाक्यानि, यानि तदर्थव्याख्यानवाक्यानि व्याख्यातृणां तत्प्रतिरूपकाणि, तान्यपि प्रवाहनित्यतया नित्यान्येव । अर्थोऽनुष्ठानं तु शास्त्रविषयः; तत्र चातुर्वर्ण्यस्याऽधिकारः ।···
'निषेको' गर्भाधानं, स आदिर्यस्य संस्कारकलापस्य स 'निषेकादिः' । गर्भाधानं च विवाहादनन्तरं प्रथमोपगमे 'विष्णुर्योनिं कल्पयतु' इति मन्त्रवत्केषाञ्चिद्विहितं, परेषामागर्भग्रहणात्प्रत्यृतु । 'श्मशानमन्तोऽस्येति 'श्मशानान्तः' । 'श्मशान' शब्देन मृतशरीराणि यत्र निधीयन्ते, तत्स्थानमुच्यते; तच्च साहचर्यात्प्रेतसंस्कारं 'पराचीमिष्टिं' लक्षयति; सा हि मन्त्रवती, न स्थानम् । अनेन च द्विजातयो लक्ष्यन्ते; तेषां हि मन्त्रवन्तः संस्काराः । 'द्विजातीनामिति' नोक्तं; विचित्रा श्लोकानां कृतिः स्वायंभुवस्यास्य मनोः।
···'नाऽन्यस्य कस्यचित्' इत्यनुवादः, द्विजातीनां नियतत्वात् । अथवा कश्चिन्मन्येत—'द्विजातीनामयं विहितोऽवश्यकर्त्तव्यः, शूद्राणां त्वशिष्टोऽप्रतिषिद्ध' इति; तदाशङ्कानिवृत्त्यर्थमिदमुक्तम् ( मे० ति० भा० )।

[ विरुद्धा च, विगीता च, दृष्टार्था-ऽऽदिष्टकारणे ,
स्मृतिर्न श्रुतिमूला स्याद्, या चैषा संभवश्रुतिः ]

कुरुक्षेत्रं च, मत्स्याश्च, पञ्चालाः, शूरसेनकाः, एष 'ब्रह्मर्षिदेशो' वै ब्रह्मावर्तादनन्तरः १९
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः ।२०।

---

न सदैव सदाचारः समो देशस्य कस्यचित् संभवेद्, येन तस्य स्यादादर्शत्वं सनातनम् ।
आसर्गाल्लयपर्यन्तं 'पारम्पर्यक्रमागतः' नैकदेशो सदाचारः कश्चिदावर्ततेऽक्षयः ।
योऽद्य देशः सदाचारो, दुर्वृत्तः श्वो भवेच्च सः, न सदाचारनित्यत्वं नूनं देशस्य कस्यचित् ।
अग्नौ तदौष्ण्यवत्, कस्मिंश्चिद्देशे समवायतः नाऽऽचारो नित्यसम्बद्धो यावदाश्रयसंस्थितिः ।
नाऽन्यत्किञ्चित्प्रमाणं हि प्रत्यक्षार्थेष्वपेक्ष्यते; प्रत्यक्षं देशधर्माणामुत्थानं पतनं च नः ।
तद्,ब्रह्मावर्त्तदेशस्य,तदाचारस्य,चाऽत्र यत्,प्राशस्त्यमुच्यते;तत्तु कादाचित्कालिकं स्फुटम् १८†
'अग्रे' प्राग्, यस्य जन्मा,ऽसौ, 'अग्रजन्मा' निरुच्यते। परजत्वा-ऽग्रजन्मत्वे स्यातां सप्रतियोगिके।
अग्रत्वमिह सर्वेषां परत्वाऽपेक्षिकं मतं; सर्व एवाग्रजो लोके स्वापेक्षोत्तरजन्मनः ।
(१) तस्मादत्रा'ऽग्रजन्मेति' वृद्धवर्गोऽभिधीयते; भवन्त्येव समाजेषु सर्वदैवाऽग्रजा नराः ।
सदैवाग्रजवृद्धानां परजेषूपदेष्टृता प्रकृत्यैवेष्यते; लोके चेयमस्ति परम्परा ।
शास्त्रेऽपि भूयसा प्रोक्ता श्रेयसी वृद्धदेशना; वृद्धसेवैव चादिष्टा विद्यालाभस्त्यसिद्धये ।
वृद्धाननुपसेव्यैव ग्रन्थज्ञानविशारदः भवन्नपि नरः प्रोक्तोऽज्ञान एव तु तत्त्वतः।
शब्दजन्यार्थविज्ञानाद् ग्रन्थाध्ययनसंभवात् , साक्षात्सर्वार्थसंवादि वृद्धज्ञानं विशिष्यते ।
प्रत्यक्षघटनामूला परिणामाऽनुभूतिजा क्रियाफलाऽनुबन्धज्ञा वृद्धबुद्धिः स्वभावतः,
एवं च शाब्दबोधाप्त-ज्ञानाद्ग्रन्थसमुद्भवात् , वृद्धबुद्धिः प्रशस्येत क्रियाप्रत्यक्षहेतुकी ।

---

† "उक्तानि धर्मे प्रमाणानि; विरोधे च विकल्पोऽभिहितः; अधिकारिणश्च सामान्येनोक्ताः ।इदानीं येषु योग्यतया धर्मोऽनुष्ठेयतामापद्यते, ते देशा वर्ण्यन्ते । 'सरस्वती' नाम नदी, अपरा 'दृषद्वती' तयोर्नद्योः 'यदन्तरं' मध्यं 'तं देशं ब्रह्मावर्त' इत्यनया संज्ञया 'प्रचक्षते' व्यवहरन्ति शिष्टाः । देवग्रहणमवध्यवधिमतोः स्तुत्यर्थं; 'देवैः स निर्मितः' अतः सर्वेभ्यो देशेभ्यः पावनतर इति" ।१७।

"अथाऽस्मिन्देशे य आचारः, तस्य प्रामाण्ये किं विद्वत्ता, शिष्टता चोपाधिरङ्गीक्रियते; अथवा अविदुषामशिष्टानां च देशोपाधिरेव प्रमाणम् ? किं चाऽतः ? यदि नाऽपेक्ष्यते, यत्तदुक्तम् 'आचारश्चैव साधूनामिति' विशेषणद्वयमनर्थकं, न ह्यसाध्वाचारस्य धर्ममूलतोपपद्यते, वेदसंयोगाऽसंभवात्; अथाऽपेक्ष्यते, देशविशेषसम्बन्धाऽनुपकारः, न हि देशान्तरेऽपि शिष्टसमाचारस्याऽप्रामाण्यं शक्यते वक्तुम् ? उच्यते; प्रायिकमेतदभिधानं; प्रायोवृत्त्याऽस्मिन्देशे शिष्टानां संभव इत्युक्तं—'तस्मिन्देशे य आचारः, स सदाचार' इति । ...तस्माद् 'एतान्द्विजातयो देशान्संश्रयेरन्' इत्येतद्विधिशेषा देशप्रशंसार्थवादा एते । परम्परैव 'पारम्पर्यम्' अन्यस्मादन्यमुपसंक्रामति, तस्मादन्यं, ततोऽप्यन्यमित्येवंरूपः प्रवाहः 'परम्परा' । 'क्रमः' तदविच्छेदः, तत 'आगतः' सम्प्राप्तः" [ मे० धा० भा० ]

"परम्परैव 'पारम्पर्यं' परम्पराक्रमेणाऽनिदम्प्रथमतया आगतः; तेन, आधुनिकाऽऽचारो वारितः । 'अन्तरालाः' सङ्करजातयः । यद्यपि देशान्तरेऽपि सदाचाराः सन्ति, तस्मिन्नपि च देशे अनुपनीतसहभोजनादयोऽनाचाराः परम्परागता बहवो दृश्यन्ते, तथापि सदाचारलक्षणे नैतद्वाक्यस्य तात्पर्यं, किन्तु तद्देशप्रशंसामात्रे, इति नाऽन्यदेशाचारस्याऽप्रामाण्यमिति 'मेधातिथिः' [ वीरमि० परि० प्र० पृ० ५६ ]

"त्वं तु केवलमस्त्रज्ञो वीरव्रतसमन्वितः, शास्त्रार्थे तत्त्वतो गन्तुं न समर्थः कथञ्चन।
युद्धशास्त्रविदेव त्वं, न वृद्धाः सेवितास्त्वया ; संक्षिप्त-विस्तरविदां न तेषां वेत्सि निश्चयम्"
"तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना, अनुपासितवृद्धानां विद्या नाऽति प्रसीदति"
एवमाद्यभियुक्तोक्तैश्चाऽयमर्थः समर्थ्यते : वृद्धाः पश्यन्ति शास्त्रार्थं प्रत्यक्षव्यवहारतः।
तस्मात्समाजवृद्धानां तत्तत्कालाग्रजन्मनां लोकशिक्षाप्रदातृत्वं न्यायादत्रोपदिश्यते।

(२) चातुर्वर्ण्येऽग्रजातत्वाद् ब्राह्मणश्चाऽग्रजः स्मृतः; विद्याया ग्रहणे चोक्तो "वर्णानां ब्राह्मणो गुरुः"
तस्मादत्राऽग्रजन्मेति निर्दिष्टो ब्राह्मणो नरः; इत्थं केचिद्बुधाः प्राहुः; सोऽयमर्थोऽपि युज्यते।
त्रिगुणेष्वग्रजो ज्येष्ठः श्रेष्ठः सत्त्वगुणो मतः ज्ञानात्मा; तत्प्रधानत्वाद्विद्वत्स्वग्रजतोचिता।
'मातुरग्रेऽधिजननाद्' अग्रजन्मत्वमिष्यते, भावि-ब्राह्मण्यसंस्कारैरभिजातस्य जन्मतः।
प्रायशो जन्मनैवाप्त-ब्राह्मणत्वगुणः पुमान्, तत्प्रभावोदयादेव ब्राह्मधर्मे प्रवर्तते;
ततः सम्पद्यते वर्णो ब्राह्मणाख्यः; स चाऽग्रजः उपचारेण संवृत्तो व्रियते लोकशिक्षकः।

(३)'अग्राद्'अर्थात्प्रधानाङ्गाद्विराजो-ब्रह्मणो मुखाज्,जन्माऽस्येत्यग्रजन्माऽसौ,इत्यर्थोऽपि बुधैः स्मृतः।
अत्राऽर्थे त्वग्रजन्मत्वं नूनमारोप्यते नृषु मुख-कर्मोपदेशादि-साधर्म्यादिति दर्शितम्।
वस्तुतस्तु मुखाज्जन्म,नैव श्रुत्याऽवगम्यते;"ब्राह्मणोऽस्य मुखमासीद्"इत्येवाऽस्ति श्रुतौ स्फुटम्।
ब्रह्मणो विश्वरूपस्य मुखं ब्राह्मण इत्ययम् अर्थः स्पष्टतरस्त्वत्र स्थूलबुद्ध्यापि बुध्यते।
मुख्यत्वान्मुखसादृश्यात्तद्गुण-कर्मरूपणात् 'मुखं ब्राह्मण' इत्युक्तं; न तज्जन्यतया श्रुतौ।
न मुखं मुखजन्यं स्याद् 'ब्राह्मणो ब्रह्मणो मुखम् आसीद्' इत्यत्र, सामानाऽधिकरण्यं तु सुस्फुटम्।
एतदार्षप्रमाणेन प्रागेवोक्तं सविस्तरं; एकत्रिंशत्तमे श्लोके पूर्वाध्यायस्य दृश्यताम्।

(४) चातुर्वर्ण्यविभागोऽस्ति कायव्यूहानुसारतः, समाजग्रज इष्टोऽतः शरीराग्रजरूपणात्।
जन्मकाले नृणामग्रे शिर एव प्रजायते अन्याङ्गाऽपेक्षया, तस्मात्प्रत्यक्षमग्रजं शिरः।
ज्ञानस्थानं तु मस्तिष्कं, तस्याऽधिकरणं शिरः, ज्ञानेन्द्रियसमूहस्य चाऽधिष्ठानं शिरो मतं,
ज्ञानसम्बन्धिकर्मार्हं मुखं चाऽस्ति शिरःस्थितं, तस्मात्तस्याऽग्रजन्मत्वं रूपकाच्चोपचर्यते।
ब्रह्मणो वेदसंज्ञस्य मस्तिष्केण विधारणात्, ब्रह्मरन्ध्राश्रयत्वाच्च शिरो ब्राह्मण उच्यते;
तद्रूपारोपतो ज्ञानप्रधानेषु नरेष्वपि, ब्राह्मण्यमग्रजत्वं च शास्त्रोक्तमुपपद्यते।
तस्मादत्राऽग्रजन्मेति ज्ञानवानिष्यते नरः, तत्सकाशात्स्वचारित्रं शिक्षेरन्सर्वमानवाः।

(५) 'अग्रजन्मेति' शब्देन जनतास्वग्रयायिनः पुरुषाश्चोपलक्ष्यन्ते, ये हि लोकपुरोहिताः।
'पुरो'ऽग्रे, लोकनेतृत्वे, हिता एव 'पुरोहिताः' श्रद्धिताः स्वस्तिकर्त्तारः; न श्राद्धाद्युपजीविनः।

(६) 'अग्रे' सर्गस्य वाऽऽरम्भे नृ-सृष्टिः प्रथमाऽभवद्, अत्रैवा,ऽतोऽग्रजन्मानः एतद्देशप्रसूतयः ;
अन्यदेशेषु ये पश्चाज्जातास्तेऽवरजाः स्मृताः तच्छिक्षा तूचितैव स्यादेतद्देशाऽग्रजन्मनः।

(७) अग्रजन्मेति शब्देन वेदो वाऽत्र विवक्ष्यते; संसारवाङ्मयस्याऽग्रे वेद एवोदपद्यत।
एतद्देशे ह्यभूदग्रे वेदजन्मेति वर्णनाद् एतद्देशाऽग्रजन्मत्वं वेदस्याऽत्रोपपद्यते।
एतद्देशप्रसूतोऽसौ वेद एव पुरातनः, पुरातत्त्वाऽनुसन्धानान्निश्चितो विश्ववाङ्मये।
तत्प्रभावोन्मिषज्ज्ञानैरन्यत्राऽपि महीतले, नानाभाषामया ग्रन्था विद्वद्भिःस्युः प्रकाशिताः।
वेदस्याऽपौरुषेयत्वेऽप्यत्रैवोक्तस्तदुद्भवः; स ह्यत्रत्यमहर्षीणां प्रतिभायामुपस्थितः।
"प्रपाठकचतुःषष्टि-नियतस्वरकैः पदैः, अन्यदेशेऽश्रुतप्रायैर्ऋग्वेदं कः करिष्यति ?."
एतद्देशप्रसूतानामृषीणामग्रजन्मनां बुद्धावेवोद्बभौ वेदः सृष्टेरादाविति स्मृतिः;
अन्यब्रह्माण्डसद्भावस्त्वित एव प्रवाहतः सर्गान्तरेषु वेदस्य, तज्जशास्त्रान्तरस्य च।
"अथ यद्यद्यदा भावि कालयोगाद्युगादिषु, तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम्;
श्रुतिरेषा समाख्याता, तदर्थं कारणात्मना अनाम्नायविधानाद्धे वेदा ह्यन्तर्हिता यथा—
युगान्ते ह्यस्तभूतानि शास्त्राणि विविधानि च, सर्वसत्त्वविनाशाद्धे, स्मृत्या जीवात्मनित्यया

अन्यस्मिन्नण्डसद्भावे वर्तमानानि नित्यशः, युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा, नियोगाद्ब्रह्मणो विप्रा लोकतन्त्रप्रवर्तकाः।
वेदविद्भगवान्ब्रह्मा, वेदाङ्गानि बृहस्पतिः, भार्गवो नीतिशास्त्रं तु जगाद जगतो हितं;
गान्धर्वं नारदो वेद, भरद्वाजो धनुर्ग्रहं, देवर्षिचरितं गर्गो, कृष्णात्रेयश्चिकित्सितं,
न्यायतन्त्रं हि कात्स्न्र्येन गौतमो वेद तत्त्वतः, वेदान्तं कर्मयोगं च वेदविद्ब्रह्मविद्भिभुः
द्वैपायनो निजग्राह, शिल्पशास्त्रं भृगुः पुनः, न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः;
हेत्वागमसदाचारैर्यदुक्तं, तदुपास्यते। अनाद्यं तत्परं ब्रह्म न देवा नर्षयो विदुः;
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः; नारायणादृषिगणाः, तथा मुख्याः सुरा-ऽसुराः,
राजर्षयः पुराणाश्च, परमं दुःखभेषजम् *" *[ म० भा० शां० अ० २१२ कुं० सं० ]

"ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः, तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमं
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ, आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमं;
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः;
सप्तप्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः, एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतं;
एकाग्रमनसो दान्ता मुनयः संयमे रताः, भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः,
इदं श्रेय, इदं ब्रह्म, इदं हितमनुत्तमं, लोकान्सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे।
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः; मर्यादा विविधाश्चैव दिवि, भूमौ च संस्थिताः।
आराध्य तपसा देवं हरिं नारायणं प्रभुं, दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह,
नारायणाऽनुशास्ता हि; तदा देवी सरस्वती, विवेश तानृषीन्सर्वाँल्लोकानां हितकाम्यया।
ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः शब्दे चाऽर्थे च हेतौ च एषा प्रथमसर्गजा।
आदावेव हि तच्छास्त्रमोङ्कारस्वरपूजितं;...लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते †"

एतदाख्यानतो, विश्व-वाङ्मयेष्वग्रजन्मनः वेदस्योक्तं प्रशास्तृत्वं 'पृथिव्यां सर्वमानवे'।
इत्थं व्याख्याविकल्पेऽपि नाऽर्थभेदोऽत्र जायते; सर्वथा ह्यस्य देशस्य बोध्यते विश्वशास्तृता।
अत्र भारतवर्षस्य या जगद्गुरुता स्मृता, सेतिहास-पुराणेषु, लोके साक्षाच्च दृश्यते।
पुरा मेरुप्रदेशस्थः शुकोऽत्र मिथिलां पुरीम् आगत्य जनकात्सम्यग्वेदान्तार्थमधीतवान्।

"एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः, पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं पृथ्वीं ससागराम्;
स गिरींश्चाऽप्यतिक्रम्य,नदी-तीर्थ-सरांसि च, बहुव्यालमृगाकीर्णा ह्यटवीश्च, वनानि च,
मेरोर्हरेश्च द्वे वर्षे, वर्षं हैमवतं ततः, क्रमेणैवं व्यतिक्रम्य, भारतं वर्षमासदत्;
स देशान्विविधान्पश्यंश्चीन-हूणनिषेवितान्, आर्यावर्त्तमिमं देशमाजगाम महामुनिः ‡"

एतद्देशप्रसूतस्य वृद्धाख्यस्याऽग्रजन्मनः; जयत्यद्याऽपि भूलोके भूयोदेशेषु देशना।
'पृथिव्यामिति' निर्देशात्, सर्वदेशनिवासिषु शिक्षाप्रचार आदिष्टो भारतीयाऽग्रजन्मने;
सर्वमानव-शिक्षोक्तेश्चैष एवार्थ इष्यते; वात्सल्याऽनुगुणैवेयं मानवी शुभकामना।
एतेन, 'वैदिकी शिक्षा नाऽन्यदेशनिवासिषु अत्राऽपि शूद्रसंज्ञेषु दातव्येति' मतं धुतम्।
मनौ मानव-कर्त्तव्यं वर्णधर्मादि यत्स्मृतं, तत्सर्वं विहितं वेदे, तस्मादेतच्च वैदिकम्।
एतदुक्तं चरित्रं चेत्स्व-स्ववर्णाऽनुसारतः, शिक्षेरन्मानवाः सर्वे समं भूलोकवासिनः
मनोराज्ञाऽनुसारेण; तर्हि वेदार्थ एव तैः स्यादधीतस्त्वगत्यैव; कथंशूद्रादिवारणम्?
नाऽयमर्थो मनोरिष्टश्चेत्? तर्हि 'पृथिवी'पदं, 'सर्वमानव' शब्दश्च तत्प्रयुक्तः किमाशयः?
'पृथिव्यां' चेत्समाविष्टं समस्तं वसुधातलं, यद्वा मनुष्यमात्रार्थे प्रयुक्ताः 'सर्वमानवाः'
मनोर्वा यद्यपत्यानि 'मानवा'व्याकृतौ स्मृताः, मन्वपत्येषु सर्वेषु वात्सल्यं चेत्समं मनोः,

† म० भा० शां० अ० ३३५ ‡ म० भा० शां० अ० ३२५, श्लो० १२—१५।

कारुण्यात्तत्प्रवृत्तिश्चेत् श्रेयसे सर्वजन्मिनां, तुल्या स्याद्यदि तच्चित्ते सर्वभूतहितैषणा,
मनोश्चेत्स्वविनेयेषु भेदभावो न संभवेत्, कथं तर्हि द्विजेष्वेव पक्षपातोऽस्य युज्यते ?
कथं भारतवर्षीयद्विजमात्रेषु, तत्र च ब्राह्मणेष्वधिकं प्रेम ? द्वेषः शूद्रेषु वा मनोः ?
न वैषम्यं न नैर्घृण्यं मानवेषूचितं मनोः महाकारुणिकस्येव पितुः पुत्रेषु जातुचित्।
तस्मात्सर्वमनुष्येषु सम्पत्तिरिव पैतृकी निर्विशेषात्समैवाऽस्ति सर्वत्र मनुदेशना।
अधिगत्य समं पुत्रा यथेह पैतृकं धनं, स्वयोग्यताऽनुसारेण ह्युपयोगं नयन्ति तत्;
कश्चित्तद्वर्धयत्यन्यो हारयत्यपरस्ततः पुमर्थं साधयत्यन्यस्त्वनर्थं कुरुते भृशं,
कश्चिद्गोपायति त्वन्यो नाशयत्येव दुष्कृतिः, एवं स्वांशेषु तद्योगक्षेम-नाशादि कुर्वते;
तथा समं प्रवृत्तेऽपि मानवे धर्मशासने, ग्रहणं, धारणं, तस्याऽनुष्ठानमुपयोगिता,
इतिकर्त्तव्यता, लोके यथाबुद्धि विभिद्यते; सुप्रयोगोऽप्रयोगश्च दुष्प्रयोगोऽपि जायते;
तन्मूलं फलवैषम्यं भवेत्; ज्ञानेषु, कर्मसु, तारतम्यं च; किन्त्वत्र पक्षपातो न शासितुः।
उपाध्यायः समं शास्ति, शिष्याश्चेद्विषमं विदुः; नाऽत्र दोषो भवेत्कश्चित्पक्षपातोऽथवा गुरोः।
"वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे, न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा;
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः †"
तुल्योपदेशमात्रेण निष्पक्षमुपदेष्टृता गुरोः सिध्यति; शिष्येषु समं ज्ञानं भवेन्न वा।
एतत्, सद्गुरुकर्त्तव्यं जानन्स भगवान्मनुः, कथं स्याद् द्विजमात्रार्थ-ज्ञानदानसमर्थकः ?
किञ्च, निष्पक्षमादिष्टा विद्या, शिष्यैः प्रयोजिता, गुरोरेव यशो लोके विस्तारयति भूरिशः।

"स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या, गुरुं हि गुणवत्तरमातनोति;
आदाय शुक्तिषु बलाहकविप्रकीर्णैं रत्नाकरो भवति वारिभिरम्बुराशिः *"

तद्धेतोरप्यनुन्मत्तः कीर्त्तिकामो गुरुः स्वयं न द्वेषं पक्षपातं वा विद्योद्देश्ये करिष्यति।
सर्वदेशमनुष्येषु स्वविद्याप्रथनं, तथा स्वीयग्रन्थप्रचारं च, को न वाञ्छति बुद्धिमान्?
लोकशिक्षाप्रचारार्थी विद्यादानपरायणः सद्गुरुः सुतरामेव निष्पक्षमुपदेक्ष्यति।
लोकसंग्रहदृष्ट्याऽपि सर्वेष्वेव समं नृषु, विद्यादानस्य धर्म्यत्वं सत्कार्यत्वं च गम्यते।
एतेन, 'तुल्यमेवैतद्देशजाताऽग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः'
एवं सर्वाऽधिकारोऽत्र विद्यायामुपपाद्यते; न भारतीयमात्रार्थं मानवं धर्मशासनम्।
'स्वं स्वं' स्वगुण-कर्माप्तस्ववर्णार्हं, स्ववृत्तिकं, 'चरित्रं' वर्ण-कर्त्तव्यमाश्रमाचारसंयुतम्;
एतत्, स्वं स्वं चरित्रं तु स्व-स्ववर्णाश्रमोचितं, शिक्षेरन्भारतीयेभ्यः पृथिव्यां सर्वमानवाः।
ननु कोऽयं विशेषोऽत्र सर्वलोकाऽतिशायनः; येन, विश्वगुरुत्वं स्याद् एतद्देशाऽग्रजन्मनः ?
उच्यते; प्रथमः सर्गो, मनोराद्यस्य चोद्भवः, अस्मिन्नेवाऽभवद्देशे; मनोर्जाताश्च मानवाः,
इत एवाऽन्यदेशेषु सर्वत्र पृथिवीतले प्रसस्रुः क्रमशः संख्यावृद्धौ वृत्त्यादिकर्शिताः‡।

† उत्तररामचरिते अं० २ प० ४। * अनर्घराघवे अं० २, प० ९।

‡ एतद्विषये इतिहास-पुराणादिषु 'सर्ग' प्रकरणं द्रष्टव्यम्। सर्गादौ मनोः सकाशान्मनुष्याणामुत्पत्तौ कतिचित्प्रमाणान्यधस्ताद्द्रष्टव्यानि—

"धर्मात्मा स मनुर्धीमान्, यत्र वंशः प्रतिष्ठितः, मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत्;
ब्रह्म-क्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः; ततोऽभवन्महाराज, ब्रह्म क्षत्रेण सङ्गतं;
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन्" [ म० भा० आदि० अ० ७५ श्लो० १३–१५ ]
"मनुना च प्रजाः सर्वाः सदेवा-ऽसुर-मानुषाः स्रष्टव्याः, सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति"
[ म० भा० वन० अ० १८७ श्लो० ५३ ] अयं सम्पूर्णोऽध्यायो द्रष्टव्यः; अत्र हि 'मत्स्य-मनुनौकथा, हिमवत्प्रदेशे मानवसृष्टि-विषया वर्णिताऽस्ति। मत्स्यपुराणे चादावेव इयं कथा दृश्यते।

अत्रैवादावुपज्ञातं वेदशास्त्रं, पुमर्थकं धर्म-कर्माऽप्युपक्रान्तं मनु-सप्तर्षिभिः पुरा।
सभ्यता चोदभूदादावत्रैव मनुजन्मसु, एतद्द्वारैव संसारे प्रससारेति नः श्रुतम्।
एतद्देशप्रसूतानामत एवाऽग्रजन्मता, अन्यदेशेऽनुजातानामवराणामपेक्षया।
सुतरामग्रजन्मभ्योऽधीयीरन्नन्यमानवाः एतद्देशप्रसूतेभ्यो; ज्येष्ठभ्रातुरिवाऽनुजाः।
अग्रजन्मा सुतः पित्रा शिक्षायां विनियुज्यते न्यायात्कनिष्ठपुत्राणां कारुण्याच्चेति दृश्यते।
मनुरप्येवमेवाह नृणां कारुणिकः पिता परजेषूपदेष्टृत्वमेतद्देशाऽग्रजन्मनाम्।
एतद्देशे पुरा-ऽग्रे ये संजाता आर्यपूर्वजाः, "कृण्वन्तो विश्वमार्यं" ते विसस्रुः पृथिवीतले।
एतदत्र पुरातत्त्वं सूचयन्भगवान्मनुः सर्वदा लोकशिक्षार्थं नियुङ्क्ते भारताऽग्रजान्।
चेतयत्यपि वैदेश्यान् 'शिक्षेरन्' इति निर्दिशन्, अत्रत्याध्यात्मविद्भ्यः शिक्षाग्रहणहेतवे।
अर्थाद्, वृत्ते च, वृत्तौ च, स्वयं सम्यग्व्यवस्थिताः, भारतीयाऽग्रजन्मानः पृथिव्यां सर्वमानवान्
सद्वर्णाश्रमचारित्रं शिक्षयन्तु यथार्हणम्; श्रेयोऽर्थिनश्च शिक्षेरन्नेभ्य एवाऽन्यदेशजाः;
नाऽन्यथा लोककल्याणं, न वा शान्तिमयं सुखं नाऽनृशंसं च विश्वं स्यान्न वा स्वस्त्ययनं जगत्;
इत्येवमुपदेशार्थः श्लोकोऽयं भगवन्मनोः योगक्षेमैषिणो वंद्ये, लोकसन्तानकारिणः।२०।

---

"मनुर्मनुष्याञ्जनयद्, राम, पुत्रान्यशस्विनः,
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्च मनुजर्षभ" [वा० रा० अरण्यकां० स० १४ श्लो० २९]
"क्षुवतस्तु मनोर्जज्ञ इक्ष्वाकुर्घ्राणतः सुतः; तस्य पुत्रशतज्येष्ठा विकुक्षि-निमि-दण्डकाः;
तेषां पुरस्तादभवन् 'आर्यावर्ते' नृपा नृप" [भा० स्कं० ९ अ० ६ श्लो० ४-५]
"हिमालयाऽभिधानोऽयं ख्यातो लोकेषु पावनः, अर्धयोजनविस्तारः, पञ्चयोजनमायतः;
ततः सर्वाः समुत्पन्ना वृत्तयो द्विजसत्तम, प्रसूतिर्यत्र विप्राणां श्रूयते द्विजसत्तम"A

एवं महाभारतादिष्वपि हिमवत्पार्श्व एव सर्वासां वृत्तीनां (जीविका-कर्मणां = चातुर्वर्ण्यधर्माणां) समुत्पत्तिः, विप्राणाञ्च मनोरादिमसन्तानानां प्रसूतिश्च स्मर्यते। मनोरादौ प्रजाताः प्रथम-मानवास्तु स्वभाव प्रभवैर्गुणैर्ब्राह्मणवर्णा एवाऽभन्निति मनुवाक्यादेवाऽवगम्यते—

"अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरं, पतीन्प्रजानामसृजं महर्षीनादितो दश;
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुं, प्रचेतसं वसिष्ठं च भृगुं नारदमेव च" इति।

एते हि मनुना प्रथमं सृष्टाः प्रजापतयः साक्षाद् 'ब्रह्माण एव पुराणेषु निश्चयं गताः', किमुत वक्तव्या ब्राह्मणा इति। एवमपि एतद्देशे प्रथमसृष्टानां मन्वपत्यानामग्रजन्मत्वं च सिद्धं निर्दिश्यते। चरक-संहितायामपि (चिकित्सा० अ० १ पा० ४ सू० २) हिमवत्पार्श्व एतद्देश एव प्रथमा मानवसृष्टिः सूच्यते—
"ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टा नाऽतिकल्याश्च प्रायेण बभूवुः; ते सर्वासामितिकर्त्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतमात्मदोषं मत्वा 'पूर्वनिवास' मपगतग्राम्यदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिः, गङ्गाप्रभवममर-गन्धर्व-यक्ष-किन्नराऽनुचरितमनेक-रत्ननिचयमचिन्त्याऽद्भुतप्रभावं ब्रह्मर्षि-सिद्धचारणाऽनुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं 'हिमवन्त' ममरा-ऽधिपाऽभिगुप्तं जग्मुः, भृग्वङ्गिरोऽत्रिवसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवाऽसितगौतमप्रभृतयो महर्षयः" इति।

---

A"आर्य-शास्त्रों में वेदों का दर्जा बहुत बड़ा है। वेद मे परमात्मा आज्ञा देते हैं कि 'अहं भूमि-मददामार्याय' अर्थात् 'मैने आर्यों को ही भूमि दी है।' दूसरी जगह आदेश है कि 'कृण्वन्तो विश्वमा-र्यम्' अर्थात् 'संसार को आर्य बनाओ। 'आर्य' का निर्वचन करते हुए निरुक्त मे यास्काचार्य कहते हैं, कि 'आर्य ईश्वरपुत्रः' 'आर्य ईश्वर पुत्र हैं।' इन सब उद्धरणों का तात्पर्य यही है कि परमेश्वर ने सब से प्रथम आर्यों को उत्पन्न करके, उनको ही यह भूमि दी है; और आर्यसभ्यता मे ही सबको रहने की ताकीद की है। संसार के अन्य मनुष्य, ईश्वरपुत्र इस लिये नहीं हैं कि, वे ईश्वर की अमैथुनी सृष्टि द्वारा उत्पन्न नहीं हुए। वे आर्यों की पतित शाखाओं से ही हुए हैं। अमैथुनी सृष्टि द्वारा तो केवल आर्यों की ही उत्पत्ति

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि, प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ।२१।
आ समुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्, तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः ।२२।

---

"उत्तरस्यां दिशि हिमवान्पर्वतो, दक्षिणस्यां विन्ध्यः; 'विनशनं' सरस्वत्या अन्तर्धानदेशः; 'प्रयागो' गङ्गा-यमुनयोः सङ्गमः; एतान्देशानवधीकृत्य 'मध्यं' मध्यदेशनामानं 'देशं' विद्यात् । नाऽत्युत्कृष्टो, नाऽतिनिकृष्ट, इत्यतोऽयं 'मध्यदेशो' न तु पृथिवीमध्यभवत्वात् ।२१।

आपूर्वसमुद्राद् आपश्चिमसमुद्राद् योऽन्तरालवर्ती देशः, तथा 'तयोरेव' पूर्वश्लोकोपदिष्टयोः 'गिर्योः' पर्वतयोः, हिमवद्विन्ध्ययोः, यद् 'अन्तरं' मध्यं, स 'आर्यावर्तो' देशो 'बुधैः' शिष्टैरुच्यते । 'आर्या आवर्तन्ते, तत्र पुनः पुनरुद्भवन्ति; आक्रम्याक्रम्याऽपि न चिरं तत्र म्लेच्छाः स्थातारो भवन्ति । 'आङ्' अत्र मर्यादायां, नाऽभिविधौ; तेन समुद्रद्वीपानि नार्यावर्तः । एते चतसृषु दिक्षु देशाऽवधय उपात्ताः— प्राच्यां पूर्वसमुद्रः, प्रतीच्यां पश्चिमः, उदग्दक्षिणयोर्हिमवद्विन्ध्यौ; एतौ ह्यवधित्वेनोपात्तौ; न तयोरार्यावर्तत्वमस्त्यतस्तत्र निवासाभावे प्राप्ते इदमाह । २२ ।—

---

हुई है; इसी लिये वे ईश्वरपुत्र कहलाते हैं । ये आर्य पहिले चारों रंग रूपों के मिश्रित रंग-रूप से ही उत्पन्न हुए थे; इसी लिये आदि मे उनका एक ही वर्ण, एक ही रूप, और एक ही भाषा थी [ "अमरेन्द्र, मया बह्व्यः प्रजाः सृष्टास्तदा प्रभो, एकवर्णाः, समाभाषा, एकरूपाश्च सर्वशः; तासां नाऽस्ति विशेषो हि दर्शने लक्षणेऽपि च" वा॰ रा॰ उत्तरकां॰ स॰ ३० श्लो॰ २१–२२ ] । वर्ण विभाग होने के पूर्व ही आर्यों के सर्वश्रेष्ठ पुरुषों मे से ब्रह्मा और वैवस्वत मनु, अपनी योग्यता के कारण, विद्या और शासन के लिये निर्धारित हो चुके थे । इसी लिये ये दोनों पुरुष, अब तक देवतुल्य ही माने जाते हैं । 'ब्रह्मा देवानां प्रथमः संबभूव' जिस तरह लिखा हुआ है, उसी तरह यह भी लिखा है कि, देव, असुर, मनुष्य आदि समस्त प्रजा मनु से ही उत्पन्न हुई है, और मनु से उत्पन्न होने के कारण ही, वह 'मानववंशी' अर्थात् मनुष्य कहलाती है । यही बात प्रसिद्ध इतिहासकार 'मेनिङ्ग' अपने ग्रन्थ मे लिखता है कि 'यह बात विद्वानों ने मान ली है कि आर्यों अथवा मनुष्य जाति के पूर्व पितामह 'मनु' या 'मनस' उसी तरह हैं, जिस तरह जर्मनों के 'मनस' हैं, जो 'ट्यूटनों' के मूल पुरुष समझे जाते हैं । अंग्रेजी का 'मैन' और जर्मन का 'मन्न' शब्द, 'मनु' शब्द के साथ उसी तरह मिलता है, जिस तरह जर्मन का 'मेनश' संस्कृत के 'मनुष्य' शब्द के साथ ❀' । इन्हीं मनु का यह मानव समाज, कुछ रोज़ तो इसी प्रकार चला; पर जब वर्ण-विभाग की आवश्यकता हुई, और गुण, कर्म, और स्वभावाऽनुसार उनका वर्णविभाग हो गया; उन्हीं मे से वर्णधर्म के प्राबल्य से, एक ही रङ्ग के चार रङ्ग हो गये—ब्राह्मण गौर-श्वेत, क्षत्रिय लाल, वैश्य पीत, और शूद्र श्याम रंग के हो गये । देशकी परिस्थिति के कारण, इन चारों की वृद्धि हुई, और उन्हीं मे से संसार की अनेक जातियाँ उत्पन्न हो गईं । इस तरह से आदि सृष्टि मे आर्यों की उत्पत्ति, और उन्हीं के वंशविस्तार से संसार को जातियों का वर्णन, आर्यों और आर्येतर जातियों के प्रामाणिक इतिहास में लिखा हुआ है; आधुनिक विज्ञान भी इसी की पुष्टि करता है" [वैदिकसं॰ पृ॰ २३८–३९]

---

❀ "It has been remarked by various authors (as Kuhn and Zeitschrift IV. 94 ff.) that in analogy with 'Manu' or 'Manus' as the father of mankind or of the Aryas, German mythology recognises Manus as the ancestor of Teutons. The English 'man' and the German 'Manu' appear also to be akin to the word 'Manu' as the German 'Menesh' presents a close resemblance to Manush of sanskrit," ['Mannings' Ancient and Medieval India' Vol. I, P. 118]

**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः, स ज्ञेयो यज्ञियो देशो, म्लेच्छदेशस्त्वतः परः ।२३।**
**एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः, शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद् वृत्तिकर्शितः ।२४।**

---

"कृष्णश्वेतः कृष्णपीतो वा 'कृष्णसाराख्यो मृगो यत्र चरति' निवसति; 'संभव' उत्पत्तिर्यत्र देशे तस्य 'स्वभावतः' न पुनर्देशान्तरात्प्राशस्त्योपायनादिना निमित्तेनानीतस्य कियन्तमपि कालं निवासः; 'स देशो यज्ञियो' यागार्हो बोद्धव्यः । 'अतः' कृष्णमृगचरणात्परोऽन्यो 'म्लेच्छदेशः' । 'म्लेच्छाः' प्रसिद्धाः, चातुर्वर्ण्यजात्यपेताः, प्रतिलोमजातीयाऽनधिकृताः—मेदान्ध्रशबरपुलिन्दादयः ।...

एतेषु देशेषु यागाङ्गानि दर्भ-पलाश-खदिरादीनि प्रायेण च भवन्ति; अधिकारिणश्च त्रैवर्णिका त्रैविद्याश्च तेष्वेव देशेषु दृश्यन्ते; अत एतदवलम्बनो यागार्हताऽनुवादः ।...यच्चोक्तं 'म्लेच्छदेशस्त्वतः परः' इत्येषोऽपि प्रायिकोऽनुवाद एव; प्रायेण ह्येषु देशेषु म्लेच्छा भवन्ति । न त्वनेन देशसम्बन्धेन म्लेच्छा लक्ष्यन्ते स्वतस्तेषां प्रसिद्धेः, ब्राह्मणादिजातिवत् । अथार्थद्वारेणाऽयं शब्दः प्रवृत्तो 'म्लेच्छानां देश' इति । तत्र यदि कथञ्चिद् ब्रह्मावर्तादिदेशमपि म्लेच्छा आक्रमेयुः, तत्रैवाऽवस्थानं कुर्युः, भवेदेवाऽसौ 'म्लेच्छदेशः'; तथा यदि कश्चित्क्षत्रियादिजातीयो राजा साध्वाचरणो म्लेच्छान्पराजयेत्, चातुर्वर्ण्यं वासयेत्, म्लेच्छांश्चार्यावर्त इव चाण्डालान्व्यवस्थापयेत्, सोऽपि स्याद् यज्ञियः; यतो न भूमिः स्वतो दुष्टा, संसर्गाद्धि सा दुष्यति अमेध्योपहतेव । अत उक्तदेशव्यतिरेकेणाऽपि सति सामग्र्ये त्रैवर्णिकेन अकृष्णमृगचरणेऽपि देशे यष्टव्यमेव । तस्मादनुवादोऽयं 'स ज्ञेयो यज्ञियो देशो, म्लेच्छदेशस्त्वतः परः' इत्युत्तरविधिशेषः ।२३।

यदर्थं देशसंज्ञाभेदकथनं, तमिदानीं विधिमाह । 'एतान्' ब्रह्मावर्तादीन्, 'देशान्द्विजातयो' देशान्तरेऽपि जाताः, 'संश्रयेरन्'; जन्मदेशं त्यक्त्वा ब्रह्मावर्तादिदेशसंश्रयणं प्रयत्नेन कर्त्तव्यम् । अत्र केचिदाहुः; अदृष्टार्थ एवाऽयमेतद्देशसंश्रयणविधिः । सत्यपि देशान्तरेऽधिकारसंभवे एतेषु निवासः कर्त्तव्यः । तत्र कल्प्याऽधिकारत्वे, यदि वा गङ्गादितीर्थस्नानवद् एतद्देशनिवासविधिः पावनत्वेन कल्प्यते । यथैव काश्चिदापः पवित्रतरा, एवं भूमिभागा अपि केचिदेव पवित्राः, यथोक्तं पुराणे । यदि वा संश्रयणादेव स्वतन्त्रात्स्वर्गो विश्वजिद्वत् । तत्रैतौ द्वावपि पक्षावप्राप्तौ । यद्यप्राप्तः संश्रयो विधीयते, कल्प्येताऽप्यधिकारः; तत्र चिन्त्यते कतरः पक्षो युक्त इति । स तु नित्यकाम्यानामुक्तया रीत्या एतद्देश एवाऽनुष्ठानसम्भवादधिकृतानां प्राप्त एव; न ह्येतद्देशव्यतिरेकेण कृत्स्नधर्माऽनुष्ठानसम्भवः । तथाहि, हिमवति तावत्काश्मीरादौ शीतेनार्दिता न बहिः सन्ध्योपासनेऽधिक्रियन्ते; न च यथाविधि स्वाध्यायसम्भवः प्राग्वोदग्वा ग्रामादुपनिष्क्रम्येति; न हि हेमन्त-शिशिरयोरहरहर्नदीस्नानादिसम्भवः ।

इदमेव च 'द्विजातय' इति वचनलिङ्गं; न कश्चिदेव देशोऽसति म्लेच्छसम्बन्धे स्वत एव म्लेच्छदेशः; अन्यथा तद्देशसम्बन्धान्म्लेच्छत्वे, कथं द्विजातित्वम् ? अथोच्यते—'न गमनमात्रान्म्लेच्छता, अपि तु निवासात्; स चाऽनेन प्रतिषिध्यते'—तच्च न; संश्रयोऽत्र श्रूयते; स च देशान्तरे भवतस्तत्त्यागेनाऽन्यदेशसम्बन्धः; न संश्रितस्यैव संश्रयणम् । अन्यथा एवमेवाऽवक्ष्यद्—'एतान्देशांस्त्यक्त्वा नाऽन्यत्र निवसेत्' । अथ सिद्धे संश्रयणे, तद्वचनमन्यनिवृत्त्यर्थमिति परिसङ्ख्या यथा स्यात्; तस्याश्च त्रयो दोषाः । अथ हानिर्लक्ष्यते, 'एतान्देशान्न जह्यादिति' ? न श्रुतार्थसंभवे लक्षणा युक्ता; अत एव न भूतपूर्वगतिः । तस्माल्लिङ्गमिदं—'न देशसम्बन्धेन पुरुषा म्लेच्छाः; किं तर्हि ? पुरुषसम्बन्धेन म्लेच्छदेशता' । शूद्रस्य द्विजातिशुश्रूषाया विहितत्वात्, तद्देशनिवासे सर्वदा प्राप्ते, तत्राऽजीवतो देशान्तरनिवासोऽभ्यनुज्ञायते । यदा बहुकुटुम्बतया, शुश्रूषाऽशक्त्या वा, अयं द्विजातिमाश्रितः, स न एनं बिभृयात्; तदा देशान्तरे संभवति धनार्जने निवसेत्; तत्राऽपि न म्लेच्छभूयिष्ठे; किं तर्हि ? यज्ञिये; म्लेच्छावृते यानासनाशनादिक्रियानिमित्तस्य संसर्गस्याऽपरिहार्यत्वात्तद्भावापत्तिप्रसङ्गात् । 'वृत्तिकर्शितो' वृत्त्यभावपीडितः, 'वृत्तिः' आत्म-कुटुम्बस्थितिसमर्थं धनं, तदभावे यत् 'कर्शनं' तत्सम्बन्धितयोच्यते; यथा 'वर्षाकृते सुभिक्ष-दुर्भिक्षे'; दुर्भिक्षं वर्षाभावकृतं, दुर्भिक्षं वर्षाकृतत्वेन व्यपदिश्यते । 'यस्मिंस्तस्मिन्' इत्यनियममाह" ।२४। [ मेधातिथिभाष्यम् ] ।

"अथ धर्महेतुनिरूपणं; स द्विविधः, आरादुपकारक-सन्निपत्योपकारकभेदात्। आद्यो यथा प्रयाजादिः; द्वितीयो द्रव्य-देवता-देश-कालकर्त्रादिः, तत्संस्कारश्च। द्रव्यं 'व्रीहिभिर्यजेत' इत्यादिवाक्ये विहितं; देवता 'यदाग्नेयोऽष्टाकपाल' इत्यादावग्न्यादिः, कालादि आहतुः शङ्ख-लिखितौ—'तत्र धर्मलक्षणानि देशः, काल, उपायो, द्रव्यं, श्रद्धा, पात्रं, त्याग इति। समस्तेषु धर्मोदयः साधारणः, अन्यथा विपरीतः; श्रद्धा-पात्रसम्पन्नो धर्मः कालाऽपेक्षः; श्रद्धा-द्रव्योत्पत्तिरिति कालः, तन्मूलो देश इति'।

अस्यार्थः—'धर्मलक्षणानि' धर्मनिमित्तानि, 'देशो' ब्रह्मावर्तादिः, 'कालः' सङ्क्रान्त्यादिः, 'उपाय' इतिकर्तव्यता, 'द्रव्यं' गवादि, 'श्रद्धा' शास्त्रार्थे दृढप्रत्ययः, 'पात्रं' विद्या-तपो-वृत्तसम्पन्नं, 'त्यागः' स्वस्वत्वनिवृत्तिपूर्वकः परस्वत्वोत्पत्तिफलको व्यापारविशेषः। 'समस्तेषु' सत्सु 'धर्मोदयः' विशिष्टदानधर्मफलोदयः; उपलक्षणमिदम्, अन्येष्वपि सर्वाङ्गसम्पन्नेष्वेव यागादिषु विशिष्टफलोदय इत्याह 'साधारण' इति; सर्वधर्मसाधारणोऽयं न्याय इत्यर्थः। 'अपरार्के' तु 'साधारण' इत्यस्याऽनन्तरं 'न्याय' इत्यपि पाठो दृश्यते। याज्ञवल्क्योऽपि—

'देशे काल उपायेन द्रव्यं श्रद्धासमन्वितं पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्' इति।

'अन्यथा' उक्तदेशाद्यभावे, 'विपरीतः' तादृशधर्मफलाऽजनकः। विशेषविहितदेशादिकं विनाऽपि, श्रद्धा-पात्र-विशेषसम्पत्तिमात्रेण पूर्वोक्तान्न्यूनं धर्मसिद्धिमाह—'श्रद्धा-पात्रसम्पन्नो धर्मः कालाऽपेक्ष' इति; श्रद्धापात्राभ्यामेव पूर्वोक्तकालाऽतिरिक्ताऽनिषिद्धकालसापेक्षाभ्यां धर्मः सम्पद्यते इति वाक्यार्थः। कालमेवाह—'श्रद्धाद्रव्योत्पत्तिरिति काल' इति; यस्मिन्नेव काले श्रद्धा, द्रव्यञ्च, स एव कालोऽपेक्षणीय इत्यर्थः; एवम्भूत-कालसम्पन्नो यः कश्चनाऽनिषिद्धो देशो धर्मस्य कारणमित्याह—'तन्मूलो देश' इति; 'स' प्रागुक्तः कालः, 'मूलं' धर्मजनने सहकारी यस्येत्यर्थः। श्रद्धा-पात्र-द्रव्यसम्पत्ति-रप्रतिषिद्धौ देश-कालौ धर्मसम्पत्तिरिति समुदायार्थः। तत्र देशो मार्कण्डेयपुराणे—

'भगवन्कथितस्त्वेष जम्बूद्वीपः समासतः; यदेतद्भवता प्रोक्तं कर्म नाऽन्यत्र पुण्यदं,
पापदं वा महाभाग, वर्जयित्वा तु भारतम्। इतः स्वर्गश्च मोक्षश्च मध्यश्चाऽन्तश्च गम्यते;
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते। योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात्;
पूर्वे किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः, दक्षिणे मलयो यस्य, हिमवानुत्तरे तथा;
तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तम, ब्रह्मत्वममरेशत्वं देवत्वमपि दुर्लभं;
मृगपश्वोषधिवरा योनीस्तद्वदतोऽश्नुते, स्थावराणां च सर्वेषाम्; अतो ब्रह्मन्, शुभा-शुभे
प्रयान्ति; कर्मभूर्ब्रह्मन्नाऽन्यलोकेषु विद्यते, स्वर्गाऽपवर्गप्राप्तिश्च, पुण्यं पापं च वै तथा
देवानामपि विप्रर्षे, सदैवैष मनोरथः, अपि मानुष्यमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ;
मनुष्यः कुरुते तत्तु यन्न शक्यं सुराऽसुरैः'। ( मार्क० पु० अ० ५७ )

विष्णुपुराणे—"उत्तरं यत्समुद्रस्य, हिमाद्रेश्चैव दक्षिणं, वर्षं, तद्भारतं नाम. भारती यत्र सन्ततिः। तथा
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम, कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्;
कर्मभूमिरियं स्वर्गमपवर्गं च गच्छताम्।
गायन्ति देवाः किल गीतकानि, धन्यास्तु ये भारतभूमिभागे,
स्वर्गापवर्गास्पदमार्गभूते, भवन्ति भूयः पुरुषाः सुरत्वात्।
कर्माण्यसङ्कल्पिततत्फलानि सन्न्यस्य विष्णोः परमात्मरूपे
अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति"। (वि० पु० अं० २ अ० ३)

भविष्यपुराणे—"ब्रह्मावर्तः परो देशः, ऋषिदेशस्त्वनन्तरः, मध्यदेशस्ततो न्यूनः, आर्यावर्तस्त्वनन्तरः"...

वसिष्ठः ( अ० १ सू० ८–१५ )—

'धर्मे आर्यावर्ते; आर्यावर्तः—प्रागादर्शात्, ( प्रागदर्शनात् ) प्रत्यक्कालकवनाद्, उदक्पारियात्राद्, दक्षिणेन हिमवतः, उत्तरेण च विन्ध्यस्य। तस्मिन्देशे ये धर्मा, ये चाचाराः, ते सर्वत्र ( सर्वे ) प्रत्येतव्याः; न ( ह्य ) त्व-न्ये प्रतिलोमक( क्ष )धर्मा( णः )णाम्।

गङ्गायमुनयोरन्तरेऽप्येके; यावद्वा कृष्णमृगो विचरति, तावद्ब्रह्मवर्चसमित्यन्ये । अथाऽपि भाल्लविनो निदाने गाथामुदाहरन्ति—

'पश्चात्सिन्धुर्विधारणी ( वितरणी ), सूर्यस्योदयनं (नी) पुरः (पुनः),
यावत्कृष्णोऽभिधावति ( कृष्णमृगो विचरति ) तावद्वै ब्रह्मवर्चसमिति"❀

अस्मिंस्तु अदर्शनादयः शब्दाः, 'पश्चात् सिन्धु' रित्याद्युदाहृत-श्रुत्युक्त-तत्तद्देशपराः; न ह्यन्ये । यतस्ते धर्माः 'प्रतिलोमकक्षधर्माणो' विपरीताः, अस्फुटस्वभावाः; 'कक्ष' शब्देन घनतृणावृतदेशवचनेनाऽस्फुटता लक्ष्यते । पुनरार्यावर्ताऽनुवादोऽन्वर्थ-संज्ञाप्रदर्शनार्थः; 'आर्याः' त्रयो वर्णा आवर्त्तन्ते यस्मिन्, इति । ततश्च आर्यैरत्रैव वस्तव्यम् । 'ब्रह्मवर्चसं' वृत्त-स्वाध्यायसम्पत्तिः; 'भाल्लविनः' छन्दोगाः; 'निदानं' छन्दोगसूत्रं; 'सिन्धुः' प्रसिद्धः; 'वितरणी' जनकपर्वतसमीपे मालवदेशे परशुरामेण धनुष्कोट्या कुण्डं भित्त्वा निर्मितेति जनप्रसिद्धा ।

आदिपुराणे—'कृष्णसारैर्यवैर्दर्भैश्चातुर्वर्ण्याश्रमैस्तथा समृद्धौ, धर्मदेशस्तमाश्रयेरन्विपश्चितः' ।

शङ्ख-लिखितौ —'देश आर्यो गुणवान् प्रागस्ताद्, अर्वागुदयाद्, यावदुच्चा गिरयो, यावत्पुण्याः सरितः, प्राक्सिद्धत्वाद्देशः सनातनः पुण्यः । कृष्णमृगो वा यावद्विचरति, तावदाचारः स्यात्, प्राक् सिन्धु-सौवीराद्, दक्षिणेन हिमवतः, पश्चात्काम्पिल्यायाः, उदक् पारियात्रादनवद्यं ब्रह्मवर्चसं सर्वेषाम्, अतोऽन्यदेश-जाति-कुलधर्माणामन्वया इति' ।

'अनवद्यम्' अविकलं; 'धर्माणाम्' एतद्देशधर्माणां; 'अन्वयाः' सन्तानाः; प्रत्येतव्या इति शेषः ।

पैठीनसिः—'आ हिमवतः, आ च कुमार्याः, सिन्धु-वैतरणी नदी, सूर्यस्योदयनं पुरः,
यावद्वा कृष्णमृगो विचरति, तत्र धर्मश्चतुष्पादो भवतीति' ।

विष्णुः—'चातुर्वर्ण्यव्यवस्थानं यत्र देशे न विद्यते,
तं म्लेच्छदेशं जानीयाद्; आर्यावर्त्तमतः परम्' ।" ( वीरमि० परिभाषा० )

निषिद्धदेशाः

"अवन्तयोऽङ्गमागधाः, सुराष्ट्राः, दक्षिणापथाः, उपावृत्सिन्धुसौवीरा, एते संकीर्ण-योनयः । आरट्टान्कारस्करान्पुण्ड्रान्सौवीरान्वङ्गान्कलिङ्गान्प्रानूनानिति च गत्वा पुनस्तोमेन यजेत, सर्वपृष्ठया वा† । अथाऽप्युदाहरन्ति—

---

❀ इमानि सूत्राणि 'बौधायनधर्मसूत्रेऽपि ( प्र० १ खं० २ सू० १०-१४ ) प्रायः समाक्षराण्येव सन्ति ।

"अदर्शनः, सरस्वत्या नद्या यत्र देशेऽन्तर्धानं, स देशः ।...'शूद्राणामनिरवसितानाम्' ( २, ४, १० ) इति पाणिनिसूत्रे भगवान्पतञ्जलिः—'कः पुनरार्यावर्त्तः ?' इति प्रश्नमुत्थाप्य, तत्समाधानत्वेन—'प्रागादर्शात्, प्रत्यक्कालकवनाद्, दक्षिणेन हिमवन्तम्, उदक्पारियात्रम्' इतीदमेव सूत्रमुददीधरद् इति प्रतिभाति । अत्र 'आदर्शादयः पर्वतविशेषाः' इति कैयटेन व्याख्यातम् । परन्तु बहुषु बौधायनधर्मसूत्रपुस्तकेषु हस्तलिखितेषु मुद्रितेषु च 'प्रागदर्शनाद्' इत्येव पाठः समुपलभ्यते; अतः, 'यत्प्राग्विनशनादपि' इति मनुवचनाऽनुरोधेन च, सूत्रे 'अदर्शनाद्' इत्येव पाठः समुचितः; तस्य च 'यत्र सरस्वती नदी अदर्शनं गता स देशः' विनशनाख्य एवार्थं इत्युचितं प्रतिभाति" [ बौ० ध० सू० १, २, १० टि० १] "पृषोदरादीनि यथोपदिष्टम्" [ ६, ३, १०९ ] इति पाणिनिसूत्रमहाभाष्येऽपि प्रागुक्तविध एव आर्यावर्तसीमनिर्देशो दृश्यते ।

†. "पुनस्तोमो नाम एकाहः । इष्टप्रथमसोमस्यैव प्रायश्चित्तमेकाहकाण्डोक्तं द्रष्टव्यं;—'यदि पद्भ्यामेव विशेषं कुर्वीत, एष ह वै पद्भ्यां पापं करोति आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् वा गच्छति', इति । 'सर्वपृष्ठेष्टिस्तु' आहिताग्निमात्रस्य; सा च—'य इन्द्रियकामो वीर्यकामः स्याद्' इत्यत्र विहिता । अनाहिताग्नेस्तु वक्ष्यति—'प्रतिषिद्धदेशगमन' इति" ( तत्रत्यं गोविन्दस्वामिकृतं विवरणम् ) ।

पद्भ्यां स कुरुते पापं यः कलिङ्गान्प्रपद्यते ; ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ‡"

[ "अथैष पुनस्तोमो यो बहु प्रतिगृह्य गरगीरिवमन्येत स एतेन यजेत" ( तां० ब्रा० १९, ४, १; का० श्रौ० २२, १०, १६; ) इत्यनेन यो विहितः सोमयाग एकाहात्मकः सः; एकसुत्याकः सोमयाग 'एकाह' इत्युच्यते । बृहद्-रथन्तर-वैरूप-वैराज-शाक्वर-रैवताख्यानि षट् सामानि पृष्ठाख्यस्तोत्रसाधनभूतानि; तत्प्रतिपाद्यगुणविशिष्ट इन्द्रो देवताऽस्या इष्टेरिति कृत्वा इष्टिरियं 'सर्वपृष्ठेष्टि'रिति कथ्यते" ] इति च तत्र टिप्पणम् ।

‡. बौधा० धर्मसू० प्र० १ खं० २ सू० १४—१६ । अत्रत्यं बौधायनवाक्यं वीरमित्रोदये किञ्चित्पाठान्तरेणेत्थमुद्धृतम्—

"आनर्त्तकाङ्गमगधाः, सुराष्ट्रा दक्षिणापथः,...
अर्वाक् कारस्करान्पाण्ड्यान्पुण्ड्रान्सौवीरान्वङ्ग-कलिङ्ग-प्रासूनानिति..." ।

'आनर्त्तका' द्वारका यस्मिन्देशे; 'अङ्गः' चम्पाप्रदेशः । अयं च निषेधस्तीर्थयात्रां विना; तदुक्तम्—

'अङ्ग-वङ्ग-कलिङ्गेषु, सौराष्ट्र-मगधेषु च, तीर्थयात्रां विना गच्छन्पुनः संस्कारमर्हति' ।

आदिपुराणे—

'आर्यावर्त्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः , कर्मदां, सिन्धुपारं च, करतोयां न लङ्घयेत्;
आर्यावर्त्तमतिक्रम्य विना तीर्थक्रियां द्विजः , आज्ञां चैव तथा पित्रो,रैन्दवेन विशुद्ध्यति' ।

कर्म द्यतीति व्युत्पत्त्या 'कर्मदा' कर्मनाशा । मगधे विशेषमाह—

'कीकटेषु गया पुण्या, नदी पुण्या पुनःपुनः , च्यवनस्याऽऽश्रमः पुण्यः, पुण्यं राजगृहं वनम्' ।

'कीकटो' मगधदेशः । वायुपुराणे—

'त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनं ; उत्तरेण महानद्या, दक्षिणेन च कीकटान्,
देशस्त्रैशङ्कवो नाम, श्राद्धकर्मणि गर्हितः । आदिपुराणे—

'काञ्चि-कोसल-सौराष्ट्रदेशाः कर्णाट-कच्छजाः, कावेरी-कोल्वणोद्भूतास्ते देशा निन्दिता भृशम्' ।

'कोल्वणः' त्र्यम्बकगिरिमध्यदेशः 'कोलवण' इति प्रसिद्धः ।

'पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात्, आरट्टा नाम दे देशा, न तेष्वार्योऽन्वहं वसेत्' ।

पञ्चनद्यस्तु—शतद्रु–विपाशैरावती-चन्द्रभागा-वितस्ताख्याः ।

'नर्मदा-सिन्धु-कौशीनां पारं, पद्मस्य पश्चिमं , गत्वा नरकमाप्नोति, तीर्थकालाऽधिकं वसन्' ।

'पारं' मध्यभागात्परभागः । 'पद्मस्य' पुष्करस्य ।

'अङ्ग-वङ्ग-कलिङ्गा-ऽऽन्ध्र-मद्र-मालविकास्तथा , नर्मदादक्षिणे यच्च, सिन्धोरुत्तर एव च,
पौण्ड्रश्चैव,सुराष्ट्रश्च, वैन्ध्य-मागधकाः, खशाः , न विवाहं, तथा श्राद्धं, यज्ञं, तेषु समाचरेत् ।
पापदेशाश्च ये केचिद् व्याधैरध्युषिता जनैः , गत्वा देशानपुण्यांस्तु कृच्छ्रं पापं समश्नुते' ।

कृष्णसारादिरहितदेशाऽभिप्रायमिदमिति स्मृतिचन्द्रिकाकारः ।

व्यासः—'देशाञ्शूद्रजनाक्रान्तानधार्मिकजनावृतान्,
म्लेच्छावृतान्प्रयत्नेन वर्जयेद्धार्मिको द्विजः' ।

श्रुतिरपि—'तस्मान्न जनमियान्नान्तमियाद्' ( बृ० आ० १, ३, १० ) इति । 'जनम्' अन्त्यजनम् ।

क्वचित्प्रतिप्रसवः; स्कान्दे—

'अङ्ग-वङ्ग-कलिङ्गांश्च, पर्वतांश्च, खशांस्तथा , सिन्धु-सौवीर-सौराष्ट्रान्, पारदानान्ध्रमालवान्,
विवाहने द्विजो नित्यमनापदि विवर्जयेत् ; एतान्यप्यापदि गृही संश्रयेद् वृत्तिकर्शितः' ।

पितामहः—'शूद्रराज्येऽपि निवसेद् यत्र मध्ये तु जाह्नवी ;
सोऽपि पुण्यतमो देशोऽनार्यैरपि समाश्रितः ।

"पञ्चेमानि महाराज, महाभूतानि संग्रहात्, जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः;
भूमिरापस्तथा वायुरग्निराकाशमेव च, गुणोत्तराणि सर्वाणि; तेषां भूमिः प्रधानतः।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः, भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः।
चत्वारोऽप्सु गुणा राजन्, गन्धस्तत्र न विद्यते। शब्दः स्पर्शश्च रूपं च तैजसोऽथ गुणास्त्रयः।
शब्दः स्पर्शश्च वायोस्तु; आकाशे शब्द एव तु। एते पञ्च गुणा राजन्, महाभूतेषु पञ्चसु
वर्तन्ते सर्वलोकेषु; येषु भूताः प्रतिष्ठिताः; अन्योन्यं नाऽभिवर्तन्ते साम्यं भवति वै यदा।
यदा तु विषमीभावमाविशन्ति परस्परं, तदा देहैर्देहवन्तो व्यतिरोहन्ति, नाऽन्यथा।
आनुपूर्व्या विनश्यन्ति, जायन्ते चाऽनुपूर्वशः; सर्वाण्यपरिमेयाणि, तदेषां रूपमैश्वरम्।
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः; तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते।
अचिन्त्याः खलु ये भावा, न तांस्तर्केण साधयेत्;
प्रकृतिभ्यः परं यत्तु, तदचिन्त्यस्य लक्षणम् *"

कुरुक्षेत्रनिवासेन, वाराणस्यां च मानवः, अहिंसकः स्नानरतः पापं हित्वा दिवं व्रजेत्।
न गङ्गया विना वासः, सर्वक्षत्रक्षयाहते; काश्यां तु मरणं श्रेष्ठं, विना क्षेत्रं प्रजापतेः।
गङ्गाद्वारे, प्रयागे च, गङ्गा-सागरसङ्गमे, निवासो न विना पुण्यैर्नराणामिह जायते'।

'सर्वक्षत्रक्षयो' नाम कुरुक्षेत्रं; कुरुक्षेत्रादन्यत्र गङ्गया विना न वासः श्रेष्ठः। प्रयागादन्यत्र मरणं, काश्यामेव श्रेष्ठम्।

व्यासः— 'ते देशास्ते जनपदास्ते शैलास्ते तथाऽऽश्रमाः,
पुण्या त्रिपथगा येषां मध्ये याति सरिद्वरा'।

विष्णुधर्मोत्तरे—'प्रभासे पुष्करे काश्यां नैमिषेऽमरकण्टके,
गङ्गायां सरयूतीरे निवसेद्धार्मिको जनः"

[ वीरमि० परिभा० पृ० ५८—६१ ]।

* म० भा० भीष्मप० अ० ५ श्लो० ३-१२। अत्रत्यमन्तिमश्लोकद्वयं वायुपुराणेऽपि ( अ० ३४ श्लो० ७-८ ) दृश्यते। मात्स्ये ( अ० ११३, श्लो० ४-६ ) तु एतद्विपरीतार्थोऽस्ति पाठः; तद्यथा—
"द्वीपभेदसहस्राणि, सप्त चाऽन्तर्गतानि च, न शक्यन्ते क्रमेणेह वक्तुं वै सकलं जगत्;
सप्तैव तु प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह; तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते;
अचिन्त्याः खलु ये भावास्तांस्तु तर्केण साधयेत्;
प्रकृतिभ्यः परं यच्च, तदचिन्त्यस्य लक्षणम्" इति।

'आनुपूर्व्या' भूम्यादिक्रमेण, 'विनश्यन्ति;' 'जायन्ते चाऽनुपूर्वशः' आकाशादिक्रमेण; विपर्ययेण क्रमोऽत उपपद्यते चेति न्यायेन सृष्टिक्रमविपरीतत्वात्संहारक्रमस्य। अत एव उत्पत्ति-विनाश-शीलत्वादेव 'सर्वाणि' एतानि भोक्तृ-भोग्यानि, 'अपरिमेयाणि' अनन्तानि, मरीचिकोदकह्रदतुल्यत्वात्; न हि मरीचिकोदकमियत्प्रमाणमिति परिमातुं शक्यम्। यत एतान्यपरिमेयाणि, 'तत्' तस्माद्धेतोः, 'एषां रूपमैश्वरम्' एव, न तु भौतिकं; न ह्यध्यस्तस्याऽधिष्ठानादन्यद्रूपमस्ति। अत एव 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वम्' इति सर्वस्य ब्रह्मभावश्रवणमुपपद्यत इत्यर्थः।

अपरिमेयत्वमेवाह—'तत्र तत्र' इति। सिद्धा अपि यत्र ब्रह्माण्डं भित्त्वा गच्छन्ति, तत्राऽपि वासनामया 'धातवो' व्यक्तयः पाञ्चभौतिका 'दृश्यन्ते' अतः अपरिमेया एव ते। एवं सत्यपि 'मनुष्या' गणकादयः, 'तर्केण' सूर्यगत्या, देशभेदेन दिनमानभेद-पादच्छायाभेदादिना च, 'तेषां प्रमाणानि' ( प्रचक्षते )। एतच्चोपलक्षणमाकारभेदस्याऽपि। तथा हि—केचित्कन्दुकाकारं, केचिच्चतुरस्रं, केचित्त्रिकोणं, केचिच्चक्राकारं च, भूमिसंस्थानं कल्पयन्ति; तथा प्रमाणभेदोऽपि जम्बूद्वीपपरिणाहगणकाः— 'तद्व्यासः कु-भुजङ्ग-सायक-भुवः सिद्धांशकेनाऽधिका' इति वदन्ति; पञ्चदशशतान्येकाशीतियोज-

नानि, योजनचतुर्विंशांशसहितानि। तथा लक्षयोजनं तत्परिणाह इति पुराणान्तरे। अत्राऽपि 'अष्टादश-सहस्राणि, षट्शतानि च' इति वक्ष्यति।

कस्तर्हि अत्र सिद्धान्तः? इत्याशङ्क्य, अनिर्वचनीय एवाऽयमर्थो; न तर्केण साधयितुं योग्य इत्याह—'अचिन्त्या' इति। 'ये भावाः' जगज्जन्मोपादान-निमित्त-परिमाण-धर्मा-ऽधर्मादयः पदार्थाश्चिन्तयितुमयोग्याः, 'तान्न तर्केण साधयेत्' न हि ते तर्केण साधयितुं शक्यन्ते; तर्कान्तरेण तस्य बाधसंभवात्, 'तर्काऽप्रतिष्ठानाद्' इति न्यायाच्च; अत एवाऽस्य श्लोकस्योत्तरार्धमन्यत्र पठन्ति—'नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः' इति। तथा हि, कन्दुकाकारे भुवनकोशे कल्प्यमाने, ये कन्दुकपृष्ठे कमठपृष्ठोपमे तिष्ठन्ति, तेषां कियानपि देशो जल-पशु-मनुष्याश्रययोग्योऽस्तीति वक्तुं युक्तम्; ये तु तन्नितम्बे तदधश्च वसन्ति, तेषां गुरुत्ववतामर्थानामधस्तादाश्रयाऽभावेनाऽवश्यं पतनं भवतीति तावान्देशो रिक्त एवाऽस्तीति वक्तव्यम्। तथा च तदाश्रया तत्कृता द्वीपान्तरकल्पना लोकदृष्टिविरुद्धेति पामरा अपि प्रतियन्ति। ननु यथा पृथिव्या अन्तरिक्षेऽवस्थानशक्तिर्दिगम्बरादन्यैः सर्वैर्वादिभिः कल्प्यते; तथा वयमपि तस्या आकर्षणशक्तिमन्यां कल्पयामहे; यया सर्वदिक्स्थाः प्राणिनः पृथिवीं पादाधस्थामेव मन्यन्ते, खं चोपरिस्थमिति? तर्हि लोकदृष्टिविरुद्धकल्पनापेक्षया सर्वप्राणिप्रत्यक्षस्वप्नमायेन्द्रजालादितुल्यतैवास्याः कुतो न कल्प्यते? ननु स्वप्नादिवदस्या बाधो न दृश्यत इति चेत्? प्राग्ब्रह्मात्मज्ञानान्मादर्शि, किं नश्छिन्नं? श्रुत्या तु ज्ञाते, द्वैतं न विद्यते; 'नेह नानाऽस्ति किञ्चन' इत्यादिकया ब्रह्मदर्शनेन, रज्जुदर्शनेन सर्पस्येव प्रपञ्चबाध आम्नायते। तथा च निष्कलङ्कात् श्रुतिप्रमाणाद् ब्रह्माऽद्वैतमेवादर्तव्यं; न तु सकलङ्कात्तर्काज्जगतोऽनिर्वचनीयत्वमिति भावः" [तत्रत्यं नैलकण्ठीयम्]।

"द्वीपः, पुं०, क्ली; ( द्विर्गता, द्वयोर्दिशोर्वा गता आपो यत्र; काकाक्षिगोलकन्यायेन द्वयोरित्युक्तेऽपि चतुर्दिक्षु इति सिद्धिः; 'ऋक्पूरब्धूरिति' (५, ४, ७४,) इति यत्; 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६, ३, ९७, इति ईत् ) वारिमध्यतटं; जलवेष्टितभूमिः; तत्पर्यायः—'अन्तरीपम्' इत्यमरः १, १०, ८। द्वीपोत्पत्तिर्यथा—

सूर्यः सुमेरुं प्रदक्षिणीकुर्वन् अर्द्धां पृथ्वीं प्रकाशयति, अर्द्धां तमसा आवृणोति। तदा भगवदुपासनोपचिताऽतिक्रान्तपुरुषप्रभावः प्रियव्रतो राजा, सूर्यरथसमवेगेन ज्योतिर्मयरथेन 'रजनीमपि दिनं करिष्यामीति' प्रतिज्ञां कृत्वा, सप्तवारं द्वितीयसूर्य इव सूर्यमनुपर्यक्रामत्। अस्य रथचरणनेमिपरिखाताः सप्तसिन्धव आसन्; यैरेव सिन्धुभिः पृथिव्याः सप्त द्वीपाः कृताः। ते जम्बु-प्लक्ष-शाल्मलि-कुश-क्रौञ्च-शाक-पुष्करसंज्ञकाः। तेषां पूर्वस्य यद्विस्तारमानम्, उत्तरतस्ततो द्विगुणेन विस्तारमानेन परिमाणम्। ते सिन्धुभ्यो बहिः-समं रचिताः; यथा सिन्धुभ्यो बहिरेकैकशो द्वीपाः, एवं द्वीपानामपि बहिः सिन्धवः। स प्रियव्रतः, बर्हिष्मतीगर्भजानुगतानात्मजान्— आग्निध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञकान्—यथासंख्येन एकैकस्मिन्द्वीपे एकैकमधिपतिं विदधे; इति श्रीभागवतीयपञ्चमस्कन्धात्संगृहीतम्।

अपि च—'मनोः स्वायम्भुवस्यासन्दशपुत्रास्तु तत्समाः, यैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना,
सससमुद्राकरवती प्रतिवर्षं निवेशिता, स्वायम्भुवेऽन्तरे पूर्वमाद्ये त्रेतायुगे तदा।
प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य तु, प्रियव्रतात्प्रजावन्तो वीरात्काम्याऽभ्यजायत ;
कन्या सा तु महाभागा कर्दमस्य प्रजापतेः। कन्ये द्वे, दश पुत्राश्च, सम्राट् कुक्षिश्च ते उभे ;
मेधा-ऽग्नि-बाहुमित्रास्तु त्रयो योगपरायणाः, जातिस्मरा महाभाग, न राज्याय मनो दधुः।
प्रियव्रतोऽभ्यषिञ्चत्तान् सप्त सप्तसु पार्थिवान् द्वीपेषु तेषु धर्मेण; द्वीपांस्तांश्च निबोध मे—
जम्बूद्वीपे तथाऽग्नीध्रं राजानं कृतवान्पिता, प्लक्षद्वीपेश्वरश्चाऽपि तेन मेधातिथिः कृतः,
शाल्मले तु वपुष्मन्तं, ज्योतिष्मन्तं कुशाह्वये, क्रौञ्चद्वीपे द्युतिमन्तं, हव्यं शाकाह्वये सुतं,
पुष्कराधिपतिञ्चैव सवनं कृतवान्सुतम्" इति मार्कण्डेयपुराणं ( अ० ५३ श्लो० १०—१८ )

'भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्यवर्याः ;
अर्द्धेऽन्यस्मिन्द्वीपषट्कस्य याम्ये क्षार-क्षीराद्यम्बुधीनां निवेशः ;

इत्युपक्रम्य भूगोलो भारते भीष्मपर्वणि वर्णितो; भारतं वर्षं चैवं तत्र प्रदर्शितम्—
"सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन, परिमण्डलो महाराज, द्वीपोऽसौ चक्रसंस्थितः ;*
नदीजलप्रतिच्छन्नः, पर्वतैश्चाऽभ्रसन्निभैः, पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा,
वृक्षैः पुष्प-फलोपेतैः सम्पन्नधन-धान्यवान्, लवणेन समुद्रेण समन्तात्परिवारितः" †
"प्रागायता महाराज, षडेते वर्षपर्वताः, अवगाढा ह्युभयतः समुद्रौ पूर्व-पश्चिमौ ¶

---

शाकं, ततः शाल्मलमत्र, कौशं, क्रौञ्चं च, गोमेदक-पुष्करे च,
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति'
इति सिद्धान्तशिरोमणिः" [ शब्दकल्पद्रुमे धृतम् ]

"त्रयोदश, समुद्रस्य द्वीपानश्नन्पुरूरवाः" [ म० भा० आदि० अ० ७५ श्लो० १९ ]

"त्रयोदशद्वीपा; अवान्तरभेदात्। ते च—स्वर्णप्रस्थः, चन्द्रशुक्लः, आवर्तनः, रमणकः, मन्दरहरिणः, पाञ्चजन्यः, सिंहलो, लङ्का, रोमकपत्तनं, सिद्धपुरं, यमकोटिः, इत्येकादश जम्बूद्वीपस्योपद्वीपाः; द्वादशो जम्बूद्वीपः, प्लक्षादिषट्कं चेति, अष्टादशद्वीपाः; प्लक्षादिषट्कस्यैकत्वविवक्षया त्रयोदश" [ नैलकण्ठीयम् ]

* "तर्हि किमस्य प्रमाणं, का वा आकृतिस्तवाऽभिमता ? इत्याशङ्क्य, आह—'सुदर्शनम्' इति। 'सुदर्शनो' नाम जम्बूवृक्षविशेषः, तन्नामाऽङ्कितोऽयं द्वीपः 'सुदर्शनद्वीपः'; कृत्स्नं ब्रह्माण्डमित्यर्थः। 'तं' प्रमाणत आकृतितश्च 'प्रकर्षेण वक्ष्यामि'। 'तु' शब्दः पक्षान्तरव्यावृत्त्यर्थः। 'परिमण्डलः' परमाणुमात्रं, परिमाणतो दुर्लक्ष्य इत्यर्थः; 'एषोऽन्तरात्मा चेतसा वेदितव्यः' इत्यात्मवदिति भावः। 'परिमण्डल' इत्यस्य सर्वतोवृत्तरूपः कन्दुकाकार इति व्याख्याने प्रागेव दोष उक्तः। अथ चक्राकार इत्युच्यते चेत् ? न; चिपिटाकारे तस्मिन् परिमण्डलशब्दस्याऽयोगात्, 'चक्रसंस्थित' इत्यनेन चक्रवत्संस्थितं संस्थानमाकारोऽस्येत्यनेनैव सिद्धत्वाच्च। अयं हि शब्दस्तार्किकाणां परमाणुपरिमाणे प्रसिद्धः; न चाऽनेन परिमाणेनोपेतं निरंशं वस्तु सिध्यति; यस्य कस्याऽपि अल्पपरिमाणस्य दशदिगवच्छेद्यप्रदेशभेदवत्त्वेन तस्याऽपि निरंशत्वायोगात्; न हि परमाणोः पूर्वदिगवच्छिन्नो देशः प्रतीच्याऽप्यवच्छिद्यत इति वक्तु शक्यं, दृष्टविरोधात्; तस्मात्, 'परिमण्डल' शब्दो दुर्लक्ष्यसद्वस्तुमात्रवचनः। तार्किकाणां परमाणुरपि तादृश एव; तत्र पारिभाषिकपरिमाणकल्पनं प्रस्थानभेदापादनार्थं, शून्यकारणतानिरासार्थं चेति दिक्। एवं सुदर्शनद्वीपस्य परिमाणमुक्त्वा, आकारमाह—चक्रसंस्थित' इति। परिदृश्यमानराष्ट्राकार इत्यर्थः; 'चक्रं राष्ट्रास्त्रयोरपि' इति विश्वः" [ नैलकण्ठीयम् ] † म० भा० भीष्मप० अ० ५ श्लो० १३–१५

¶ 'प्रागायताः' पूर्व-पश्चिमसमुद्रस्पर्शिनः। अत्रेयं शास्त्राऽनुभवयोरविरोधेन भूकल्पना प्रतिभाति; यथा, हस्तमात्रस्य चतुरस्रस्य चतुर्विंशत्यङ्गुलानि परिणाहः, षण्णवत्यङ्गुलानि परिधिः, किञ्चिन्न्यूनानि चतुस्त्रिंशदङ्गुलानि कर्णो भवति; एवम्—अष्टादशसहस्राणि, षट्शतानि च, जम्बूपर्वसंज्ञिताया भुवः प्रमाणमुक्तं; तदेवाऽत्र परिधित्वेन कल्पितं, तच्चतुर्थांशत्वेन चत्वारि सहस्राणि, षट्शतानि, पञ्चाशच्च योजनानि एकैको भुज इति तदेव समचतुरस्रस्य विष्कम्भप्रमाणमस्य कर्णः 'शुल्वशास्त्रोक्त'रीत्या षट्सहस्राणि, पञ्चशतानि, षट्सप्ततिश्च योजनानि, तस्याऽस्य भूचतुरस्रस्य चतुर्भिः समुद्रैर्वेष्टितस्य कोणा दिक्षु वर्तन्ते। तेन, दक्षिणस्यां दिशि रामसेतौ द्वयोः समुद्रयोः सन्धिः। एवमितरास्वपि दिक्षु समुद्रसन्धयो ज्ञेयाः। यस्त्वत्र ज्योतिर्विदां भूपरिधिः सप्ताङ्गनन्दाब्धियोजन ( ४९६७ ) संमितोऽभिमतः, स एवाऽस्माकं चतुरस्रविष्कम्भः ख वाण-रस-वेद मितः (४६५०); यत्तु एतयोरन्तरं सप्तेन्दुरामाः (३१७), तदपि यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समपादस्थितेन वा उन्मितस्य सूत्रस्य यः पञ्चमोंशः स हस्त इति विकल्पस्य कात्यायनादिभिरुक्तत्वाद्धस्तप्रमाणभेदकल्पनया योजनबहुत्वा-ऽल्पत्ववचनेन समाधेयम्। तथा भूमेश्चतुरस्रत्वेऽपि, तन्मध्यस्थमत्युच्छ्रितं मेरुं प्रदक्षिणीकुर्वतः सूर्यस्य मार्गो मण्डलाकारोऽस्तीति न बौद्धाऽभिमतं सूर्यद्वयं कल्प्यं भवति। अन्यत्सर्वं युक्त्यविरुद्धं ज्योतिर्विन्मतमेवाऽत्राऽनुसर्तव्यम्। यच्चु पुराणे पञ्चाशत्कोटियोजनं भूगोलप्रमाणमित्युक्तं, तदपि 'अचिन्त्याः ख

हिमवान्, हेमकूटश्च, निषधश्च नगोत्तमः, नीलश्च वैदूर्यमयः, श्वेतश्च शशिसन्निभः,
सर्वधातुविचित्रश्च शृङ्गवान्नाम पर्वतः, एते वै पर्वता राजन्, सिद्धचारणसेविताः;
एषामन्तरविष्कम्भो योजनानि सहस्रशः; तत्र पुण्या जनपदा,स्तानि वर्षाणि भारत!
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः; इदं तु भारतं वर्षं; ततो हैमवतं परम्" ‡
प्रसङ्गाद्भारतं वर्षं निर्दिश्यार्षेतिहासतः, आर्यावर्तादिसम्बन्धे किञ्चिदत्र विमृश्यते।
"सर्वेषामेव राजेन्द्र, प्रियं भारत, भारतं; तत्ते वर्षं प्रवक्ष्यामि, यथायथमरिन्दम!
महेन्द्रो, मलयः, सह्यः, शुक्तिमानृक्षवानपि विन्ध्यश्च, पारियात्रश्च, सप्तैते कुलपर्वताः।
तेषां सहस्रशो राजन्, पर्वतास्ते समीपतः अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः।
अन्ये ततोऽपरिज्ञाता ह्रस्वा ह्रस्वोपजीविनः, आर्या, म्लेच्छाश्च कौरव्य, तैर्मिश्राः पुरुषा विभो!...
तत्रेमे कुरु-पाञ्चालाः, शाल्वा, माद्रेय-जाङ्गलाः, शूरसेनाः, पुलिन्दाश्च, बोधा, मालास्तथैव च,
मत्स्याः, कुशल्याः, सौशल्याः, कुन्तयः, कान्ति-कोसलाः,
चेदि-मत्स्य-करूषाश्च, भोजाः, सिन्धु-पुलिन्दकाः,
उत्तमाश्च-दशार्णाश्च, मेकला,श्चोत्कलैः सह, पञ्चालाः, कोसलाश्चैव, नैकपृष्ठा, धुरन्धराः,
गोधा, मद्र-कलिङ्गाश्च, काशयो,ऽपरकाशयः, जठराः कुकुराश्चैव, सदशार्णाश्च भारत,
कुन्तयो,ऽवन्तयश्चैव, तथैवाऽपरकुन्तयः, गोमन्ता, मण्डकाः, सण्डा, विदर्भा, रूपवाहिकाः,
अश्मकाः, पाण्डुराष्ट्राश्च, गोपराष्ट्राः, करीतयः, अधिराज्य-कुशाद्याश्च, मल्लराष्ट्रं च केवलं,
वारवास्यायवाहाश्च, चक्रा,श्चक्रातयः, शकाः, विदेहा, मगधाः, स्वक्षा, मलजा, विजयास्तथा,
अङ्गा, वङ्गाः, कलिङ्गाश्च, यकृल्लोमान एव च, मल्लाः सुदेष्णाः, प्रह्लादा, माहिकाः, शशिकास्तथा,
वाल्हिका, वाटधानाश्च, आभीराः, कालतोयकाः, अपरान्ताः, परान्ताश्च, पञ्चाला,श्चर्ममण्डलाः

---

ये भावा न तांस्तर्केण साधयेद्' इत्यनेनैव प्रत्युक्तम्। अव्यवस्थितत्वान्मतानामनिर्वचनीयवाद एव शरणीकरणीय इत्येव वरम्। यद्वा सर्वत्र यत्प्रमाणं दृष्टं, तद्विंशांशेन तद्बोध्यं; तेन पञ्चाशत्कोटिस्थाने सार्धकोटिद्वय-विस्तारा भूमिः; लक्षस्थाने पञ्चसहस्रविस्तारो जम्बूद्वीपः; नवसहस्रस्थाने सार्धचतुःशतयोजनायामं भरतखण्डमिति। अस्मिन्पक्षे उदाहरिष्यमाणवैष्णवादिवाक्येभ्यो जम्बूद्वीपश्चतुर्दलकमलाकारः, तस्य चान्तःपरिधिः षट्शताऽधिकान्यष्टादशयोजनसहस्राणि, त्रयस्त्रिंशच्छतानि मध्यव्यासः; तेन फलतः पञ्चसहस्रव्यासता ज्ञेया। एवं सति यदा प्रागायतो हिमाचलः पूर्व-पश्चिमसमुद्रौ स्पृष्ट्वाऽस्ति, तदाऽयं भरतवर्षस्त्रिकोणो भवति; तेन पृथिवी त्रिकोणेति लोकप्रवादो,ऽनुभवश्चाऽनुसृतो भवति। अन्यथा भरतवर्षस्य धनुराकारत्वे, भूमध्य-रेखाया लङ्कातः सेतुमार्गेण प्रस्थितायाः—

'पुरी रक्षसां, देवकन्याऽथ, काञ्ची, सितः पर्वतः, पर्यली, वत्सगुल्मं,
पुरी चोज्जयिन्याह्वया, गर्गराटं, कुरुक्षेत्रमेषा भुवो मध्यरेखा'

इति स्मर्यमाणया, मध्यरेखया कुरुक्षेत्रस्य रामसेतुः सन्निहितः, द्वारका च दूरे स्यात्; द्वारका समीपे, सेतुश्च दूरे इति प्रत्यक्षमुपलभ्यते। (अतः) भरतवर्षस्य त्रिकोणत्वमित्येपैव कल्पना साधीयसीति दिक्" [नैलकण्ठीयम्]।

‡ म० भा० भीष्मप० अ० ६ श्लो० ३–७। "एवं दक्षिणां दिशमारभ्य, यावदुत्तरसमाप्ति, षट् प्राक्-पश्चिमायताः पर्वताः तैश्च सप्त-वर्षाणि भवन्ति—मध्ये मध्ये वासयोग्यानि स्थानानि भवन्ति—तेषां स्थानानां वर्षाख्यानामन्तरमाह—एषामिति। 'विष्कम्भो' विस्तारः, 'सहस्रशः'शब्द एष 'शतशः' शब्दपरः कर्त्तव्यः; लङ्का-हिमाचलयोरनेकसहस्रयोजनानन्तराऽभावात्, षष्ट्यधिकशतचतुष्कयोजनसंमितस्यैवान्तरस्य प्रसिद्धेः। तत्राऽपि शतं सेतोः परतः, षष्ट्यधिकत्रिशतं योजनानि सेतुतो हिमालय इति प्रत्यक्षसिद्धम्। 'वर्षाणि' वर्षन्ति, कामैः सिञ्चन्ति—पूरयन्तीति 'वर्षाणि' रम्यस्थानानि। वसन्त्येषु, तानि वर्षाणीति योगान्तरमाह—'वसन्तीति'। हिमवतो दक्षिणे भारतं वर्षं; उत्तरतो हैमवतं वर्षं द्वितीयम्" इत्यादि तत्र नैलकण्ठीयम्।

अटवीशिखराश्चैव, मेरुभूताश्च, मारिष , उपावृता-ऽनुपाऽवृत्ताः, स्वराष्ट्राः, केकयास्तथा , कुन्दापरान्ता, माहेयाः, कक्षाः, सामुद्रनिष्कुटाः , अन्ध्राश्च बहवो राजन् , अन्तर्गिर्यास्तथैव च , बहिर्गिर्या-ऽङ्गमलजा, मगधा मानवर्जकाः , समन्तराः, प्रावृषेया, भार्गवाश्च, जनाऽधिप , पुण्ड्रा, भर्गाः, किराताश्च, सुदृष्टा, यामुनास्तथा , शका, निषादा, निषधा,स्तथैवानर्त-नैर्ऋताः , दुर्गालाः, प्रतिमत्स्याश्च, कुन्तलाः, कोसलास्तथा , तीरग्रहाः, शूरसेना, ईजिकाः, कन्यकागुणाः, तिलभाराः, मसीराश्च, मधुमन्तः, सुकन्दकाः, काश्मीराः, सिन्धु-सौवीरा, गान्धारा, दर्शकास्तथा। अभीसारा, उलूताश्च, शैवला, बाह्लिकास्तथा , दार्वी, च वानवा, दार्वा, वातजामरथोरगाः , बहुवाद्याश्च, कौरव्य, सुदामानः, सुमल्लिकाः , बध्राः, करीषकाश्चाऽपि, कुलिन्दोपत्यकास्तथा , वनायवो, दशापार्श्वरोमाणः, कुशबिन्दवः , कच्छा, गोपालकक्षाश्च, जाङ्गलाः, कुरुवर्णकाः , किराता, बर्बराः, सिद्धा, वैदेहा, स्ताम्रलिप्तकाः , ओण्ड्रा, म्लेच्छाः, सैसिरिध्राः, पार्वतीयाश्च, मारिष, अथाऽपरे जनपदा दक्षिणा भरतर्षभ , द्रविडाः, केरलाः, प्राच्या, मूषिका, वनवासिकाः , कर्णाटका, महिषका, विकल्पा, मूषकास्तथा , झिल्लिकाः, कुन्तलाश्चैव, सौहृदा, नभकाननाः , कौकुट्टका, स्तथा, चोलाः, कोङ्कणा, मालवा नराः , समङ्गाः, करकाश्चैव, कुकुराङ्गारमारिषाः , ध्वजिन्युत्सवसङ्केता, स्त्रिगर्ताः, शाल्वसेनयः , व्यूकाः, कोकबकाः, प्रोष्ठाः समवेगवशास्तथा , तथैव विन्ध्यचुलिकाः, पुलिन्दा, वल्कलैः सह , मालवा, वल्लवाश्चैव, तथैवाऽपरवल्लवाः , कुलिन्दाः, कालदाश्चैव, कुण्डलाः, करटास्तथा , मूषकास्तनबालाश्च, सनीपा घटसृञ्जयाः , अठिदाः, पाशिवाटाश्च, तनयाः, सुनयास्तथा , ऋषिका, विदभाः, काका, स्तङ्गणाः, परतङ्गणाः , उत्तराश्चाऽपरम्लेच्छाः, क्रूरा भरतसत्तम, यवना, श्चीन-काम्बोजा, दारुणा म्लेच्छजातयः , सकृद्ग्रहाः, कुलत्थाश्च, हूणाः, पारसिकैः सह , तथैव रमणा, श्चीना, स्तथैव दशमालिकाः , क्षत्रियोपनिवेशाश्च, वैश्य-शूद्रकुलानि च , शूद्राऽऽभीराश्च, दरदाः, काश्मीराः, पशुभिः सह , खाशीरा, श्चान्तचाराश्च, पह्लवा, गिरिगह्वराः , आत्रेयाः सभरद्वाजा, स्तथैव स्तनपोषिकाः , प्रोषकाश्च, कलिङ्गाश्च, किरातानां च जातयः , तोमरा, हन्यमानाश्च, तथैव करभञ्जकाः , एते, चाऽन्ये जनपदाः, प्राच्योदीच्यास्तथैव च, उद्देशमात्रेण मया देशाः सङ्कीर्तिता विभो *"

"निसर्ग एष विख्यातः कुरूणां तु यथार्थवत् । भारतस्य तु वक्ष्यामि निसर्गं, तन्निबोधत ।
पुण्यतीर्थे हिमवतो दक्षिणस्यातलस्य हि पूर्व-पश्चायतस्याऽस्य दक्षिणेन द्विजोत्तमाः ;
तथा जनपदानां च विस्तरं श्रोतुमर्हथ ; अत्र वो वर्णयिष्यामि वर्षेऽस्मिन्भारते प्रजाः ।
इदं तु मध्यमं चित्रं शुभा-शुभफलोदयम् ;
उत्तरं यत्समुद्रस्य, हिमवद्दक्षिणं च यत् , वर्षं तद् भारतं नाम; यत्रेयं भारती प्रजा ।
भरणाच्च प्रजानां वै मनुर्भरत उच्यते† निरुक्तवचनाच्चैव वर्षं तद्, भारतं स्मृतम् ।
ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते ; न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।
भारतस्याऽस्य वर्षस्य नव भेदाः प्रकीर्तिताः , समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ।
इन्द्रद्वीपः, कसेरुश्च, ताम्रवर्णो, गभस्तिमान् , नागद्वीप, स्तथा सौम्यो, गन्धर्व, स्त्वथ वारुणः,
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ; योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् ।
आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै , तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ।
द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु सर्वशः ; पूर्वे किराता, ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ;
ब्राह्मणाः क्षत्रिया वैश्याः मध्ये शूद्राश्च भागशः , इज्या-युद्ध-वणिज्यादि वर्तयन्तो व्यवस्थिताः।
तेषां संव्यवहारोऽयं वर्तते तु परस्परं , धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ;

* म० भा० भीष्मप० अ० ९ । अस्मिन्नेवाऽध्याये भारतवर्षीयनदीनामपि वर्णनं सविस्तरं द्रष्टव्यम् ।

† "भरणात्प्रजनाच्चैव मनुर्भरत उच्यते" इति मात्स्ये ( अ० ११४ श्लो० ५ ) पाठः ।

सङ्कल्पपञ्चमानां तु आश्रमाणां यथाविधि, इह स्वर्गाऽपवर्गार्थं प्रवृत्तिरपि मानुषे।
यस्त्वयं नवमो द्वीपस्तिर्यगायत उच्यते, कृत्स्नं जयति यो ह्येनं, स सम्राडिह कीर्त्यते;
अयं लोकस्तु वै सम्राड्, अन्तरिक्षो विराट् स्मृतः, स्वराडन्यः स्मृतो लोकः; पुनर्वक्ष्यामि विस्तरम्§'

§ वायुपु० अ० ४५ श्लो० ७२–८७; मात्स्ये अ० ११४ श्लो० ५–१६; मार्क० पु० अ० ५७ श्लो० १–९। एषु वाय्वादिपुराणाध्यायेषु भाष्योद्धृतश्लोकानन्तरं, भारतवर्षीय-पर्वत-नदी-देशानां सुविस्तृतं वर्णनमस्ति। एवमेव भागवतादिष्वपि; तथा हि भागवते—"तत्राऽपि भारतमेव वर्षं कर्मक्षेत्रम्; अन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति" [भा० स्कं० ५ अ० १७ वा० ११] "भारतेऽप्यस्मिन्वर्षे सरिच्छैलाः सन्ति बहवः—मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुखः इन्द्रकीलः काम (राम) गिरिरिति चाऽन्ये च शत-सहस्र-शः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसङ्ख्याताः। एतासामपो भारत्यः प्रजा, नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति। चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती, सिन्धुरन्धः शोणश्च नदाः; महानदी वेदस्मृतिर्ऋषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृष-द्वती गोमती सरयू रोधस्वतीं सप्तवती सुषोमा शतद्रुश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः [विशेषतो भारतीय नद-नदी-नामानि महाभारते भीष्मपर्वणि नवमाध्याये द्रष्टव्यानि]। अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ल-लोहित-कृष्णवर्णेन स्वारब्धेन कर्मणा दिव्य-मानुष-नारकगतयो बह्वय आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते; यथावर्णविधानमपवर्गश्चाऽपि भवति" [भा० स्कं० ५ अ० १९ वा० १६–१९] इति। एतद्व्यतिरिक्तमधस्तान्निर्दिष्टेषु ग्रन्थस्थलेषु भारतवर्षवर्णनं, तदन्तर्गतनदी-पर्वत-देशादीनामुपव्याख्यानं च दृश्यम्—

(१) वा० रामायणे किष्कि० सर्गाः ४०–४६। (२) महाभारते आदिप० अ० ६७; अ० १०४ श्लो० ५३–५५; अ० १३८ श्लो० ७२–७७। म० भा० सभाप० दिग्विजयप० अ० २५–३२। म० भा० वनप० अ० ६१ श्लो० २१–२३, नलाख्याने विदर्भमार्गदेशनिर्देशः; तत्रैव तीर्थयात्रा पर्व; अ० २५४ कर्णदिग्विजयदेशाः; तत्रैव अ० ३०८ श्लो० २५–२७। म० भा० विराट्प० अ० १, श्लो० १२–१३; तत्रैव अ० ५ श्लो० १–४। म० भा० भीष्मप० अ० ९। म० भा० शां० अ० २०३; म० भा० महाप्र० प० अ० १–२। (३) अग्निपु० अ० ११८। (४) कूर्मपु० पू० अ० ४७। (५) ब्रह्मपु० अ० १९। (६) मत्स्यपु० अ० ११४। (७) मार्क० पु० अ० ५७–५८। (८) वायुपु० अ० ४५। (९) विष्णुपु० अं० २ अ० ३। एवमेव ब्रह्माण्डपुराणादिष्वपि भुवनकोशवर्णनप्रसङ्गेन भारतवर्ष-वर्णनमपि विशेषतो द्रष्टव्यम्। भुवनकोश-(भूगोल)-वर्णनमपि प्रायशः सर्वेष्वेव पुराणेषु, उपपुराणेषु, महाभारते, ज्योतिःशास्त्रे, योगभाष्यादिषु च दृश्यते; तेषां कतिचित्स्थलानीहाऽधस्तान्निर्दिश्यन्ते —

(क) अग्निपु० अ० १०७–८ तथा अ० ११९–२०। (ख) कूर्मपु० पू० अ० ४३–५०। (ग) गरुडपु० अ० ५४–५७। (घ) देवीभा० स्कं० ८ अ० १–१३। (ङ) पद्मपु० खं० १ अ० ३–९। (च) बृहन्नारदीयपु० अ० ३। (छ) ब्रह्मपु० अ० १८–२८। (ज) भागवते स्कं० ५ अ० १६–२०। (झ) मात्स्ये अ० ११३–१२८। (ञ) मार्क० पु० अ० ५४–६०। (ट) लिङ्गपु० अ० ४६। (ठ) वराहपु० अ० ७४–८९। (ड) वायुपु० अ० ३४–५०। (ढ) विष्णुपु० अं० २ अ० २–७। (ण) शिवपु० उमासं० अ० १७–१८। (त) वाल्मीकीयरा० किष्कि० स० ४६। (थ) महाभारते भीष्मप० अ० ४–११। (द) "भुवनज्ञानं सूर्ये संयमात्" (पा० ३ सू० २६) इति पातञ्जल-योगसूत्रस्य वैयासिकभाष्ये, नागेशवृत्तौ च। (ध) अभिधान-वाचस्पत्य-शब्दकल्पद्रुमादिषु—'भुवनकोश-भूगोल-ब्रह्माण्ड'शब्देषु। (न) सिद्धान्तशिरोमणिगोलाध्यायादौ। (प) महाभारत-मीमांसा (हिन्दीसं) प्र० १२ 'भूगोलिकज्ञान' पृ० ३८२–४१३; इति।

"अथैतद् आर्यावर्त्ताऽभिधानं न क्वचिदपि संहितायां, ब्राह्मणे वा श्रुतमस्ति; अनतिप्राचीनग्रन्थेषु, पातञ्जले महाभाष्ये, विशेषतस्तु भृगुप्रोक्तायां मनुसंहितायां, ततो महाभारतादावपि कृत एतत्स्वरूपादिनिर्णय इति तन्नामप्रसिद्धिः । तत्त्वस्तु आर्याणां वासनिबन्धनमेव तन्नामेति आर्यनामैव आर्यावर्त्तनामबीजमुपगम्यते । आर्यशब्दस्तु ऋक्संहितादौ बहुत्र बहुधा श्रूयते, प्रतीयते च तत्र सर्वत्रैव तदानीमिह पृथिव्यां श्रेष्ठजातिरेवार्यनामतः प्रसिद्धेति । तद्यथा—'विजानीह्यार्यान्ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान्' इति ऋ० सं० १, ५१, ८; 'साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता' इति ऋ० सं० १०, ८३, १; 'नव-दशभिरस्तुवत शूद्रार्यावसृज्येताम्' इति य० वा० सं० १४, ३०, क० १; 'तयाऽहं सर्वं पश्यामि, यश्च शूद्र उतार्यः' इति अथ० सं० ४, २०, ख० ३; 'शूद्रार्यौ चर्मणि व्यायच्छेते' इति सा० ता० ब्रा० ५, ५, १४। तैत्तिरीयसंहितायामप्येष आर्य-शूद्रयोश्चर्मनिमित्तः कलह आम्नातः ( ७, ५, ९, ८ ) । ऐतरेयकेऽप्याम्नात आर्यशब्दः—'अयुवमार्यस्य राष्ट्रं भवति' ( ८, ५, २ ) इति । महामुनिपाणिनाऽप्येकत्र आर्यशब्दोल्लेखः कृतः—'आर्यो ब्राह्मण-कुमारयोः' ( ६, २, ५८ ) इति । निरुक्तकारः खलु यास्कोऽप्येकत्र आर्यशब्दं व्यवहृतवान् जातिवचनम् —'विकारमस्यार्येषु' ( २, १, ४ ) इति । आर्य-शब्दव्याख्यानं चाऽन्यत्र कृतं तेनैवम्—'आर्यः = ईश्वरपुत्रः' ( ६, ५, ३ ) इति । अस्ति च 'अर्यः' इति पदं परिपठितं निघण्टौ ( २, २२ ) ईश्वरनामसु; तत एवाऽपत्यार्थप्रत्यये सिध्यत्यार्यशब्द इति सम्पन्नं तन्निर्वचनम् । तदेवमवगम्यते—यथा महम्मदीया महम्मदं नाम स्वधर्मप्रवर्त्तकं साक्षादीश्वरदूतं मन्यते, यथा वा कृश्चानाः स्वधर्मप्रचारकं ख्रीष्टं साक्षादीश्वरात्मजं मन्यन्ते, एवमेव पुराऽस्माकमपि पूर्वपुरुषा रूपवत्त्वेन, बलवत्त्वेन, विद्वत्त्वेन, सत्यवादितादिबहुसद्गुणवत्त्वेन, पवित्राचारत्वेन बहुगौरववन्त आसन्नित्येव 'ईश्वरपुत्रा' इत्यभवन्व्यपदिष्टाः, तदेवाऽस्माकमार्यनामनिदानमिति ❋ । त इमे आर्यास्तदानीमादर्भविज्ञानादि-ब्रह्मविज्ञानान्तवित्तमा अतिसभ्या अप्यतिप्राचीना ब्राह्मण-क्षत्रिय-वैश्येति त्रिविधाः, दस्यु-दासेतिद्विविधाऽसभ्य-शूद्रतोऽन्याः, 'ईश्वरपुत्रा' इति व्यपदिष्टा आसन् । अहो ! त एवेमेऽद्य कालचक्रपरिभ्रमणनियमतो लुप्तकल्पवेदविज्ञाना विलुप्तैक्यबला बहिर्वाणिज्यान्तर्वाणिज्यहीनाः सन्तो मुमूर्षुदशापन्ना भृशं श्वसन्तीति एव जीविता इति !

---

❋ "आर्यः, त्रि, [ अर्त्तुं प्रकृतमाचरितुं योग्यः; अर्यते वा; ऋ + ण्यत् ] 'सत्कुलोद्भवः' इत्यमरः; 'पूज्यः, श्रेष्ठः, बुद्धः' इति शब्दरत्नावली; 'सङ्गतः' इत्यजयः; 'मान्यः, उदारचरितः, शान्तचित्तः', यथा रामायणे, २ काण्डे—'योऽहमार्येण परवान्भ्रात्रा ज्येष्ठेन भाविनि'; 'न्यायपथावलम्बी, प्रकृताचारशीलः, सततकर्त्तव्यकर्माऽनुष्ठाता, तदुक्तम्—

'कर्त्तव्यमाचरन्काममकर्त्तव्यमनाचरन्, तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः'

धार्मिकः, धर्मशीलः, यथा मनुः ( १०,५७ )—'आर्यरूपमिवाऽनार्यं कर्मभिः स्वैर्विभावयेत्;' 'उचितः' यथा रामायणे—'मार्गमार्यं प्रपन्नस्य नाऽनुमन्येत कः पुमान् ?'

नाट्योक्तौ सम्मानसूचकमिदं नाम प्रायेण मान्यजनाह्वाने व्यवह्रियते, यथा साहित्यदर्पणे षष्ठपरिच्छेदे—

'स्वेच्छया नामभिर्विप्रः, विप्र, आर्येति चेतरैः, वाच्यौ नटी-सूत्रधारावार्यनाम्ना परस्परम् ।

'आर्यः, पुं० ( अर्त्तुं = सदाचरितुं योग्यः; ऋ + ण्यत् ) 'स्वमी, बुद्धः' इति हेमचन्द्रः; 'सुहृद्' इत्यजयः; 'श्रेष्ठवर्णः, म्लेच्छेतरजातिः,' यदुक्तं महाभारते—

'म्लेच्छाश्चाऽन्ये बहुविधाः पूर्वं ये निकृता रणे; आर्याश्च पृथिवीपालाः' इति;

'स्वनामख्यातः सावर्णमनोः पुत्रः, यथा हरिवंशे—

'वरीयांश्चाऽवरीयांश्च संमतो धृतिमान्वसुः, चरिष्णुरार्यो धृष्णुश्च राजः सुमतिरेव च,
सावर्णस्य मनोः पुत्रा भविष्या दश भारत" [ शब्दकल्पद्रुमे ]

वेदे तु ( ऋ० सं० ४, २६, २ ) मनोरपि 'आर्य' इत्येकं नाम श्रूयते; तथा सति, तदपत्यतया सर्वे मनुजा आर्याः स्युः, 'आर्य-मानव'शब्दौ च 'घटः, कलशश्चेव' पर्यायवाचिनौ स्याताम् ।

अथैत एव 'आर्या अत्राऽऽवर्त्तन्ते, पुनः पुनरुद्भवन्तीत्यार्यावर्त्तः' इत्याह च मनुटीकायां कुल्लूकः ( २, २२ ); 'आवर्त्तनं' पुनःपुनर्जन्मग्रहणमिति तदाशयः । अस्मन्मते तु जन्मान्तरस्वीकारेऽपि 'आर्या' ईश्वरपुत्रा इति व्यपदिष्टा मनुष्याः, यत्र 'आ' आभिमुख्येन, प्रधानरूपेण 'वर्त्तन्ते' विद्यन्ते, निवसन्तीति, स एव भूभाग 'आर्यावर्त्तः' । तदेवमार्यावासत एव 'आर्यावर्त्त' नामेति सिद्धान्तः ।

"न वैरमुद्दीपयति प्रशान्तं, न दर्पमारोहति, नाऽस्तमेति,
न दुर्गतोऽपीति करोत्यकार्यं, तमार्यशीलं परमाहुरार्याः ।
न स्वे सुखे वै कुरुते प्रहर्षं, नाऽन्यस्य दुःखे भवति प्रहृष्टः,
दत्त्वा न पश्चात्कुरुतेऽनुतापं, स कथ्यते सत्पुरुषार्यशीलः"

एवमादि च महाभारतादौ दृश्यमार्यलक्षणम् A ।

A "आर्यों का लक्षण करते हुए पाश्चात्य कहते हैं, कि 'जो गोरा हो, लम्बा हो, और जिसका शिर बड़ा हो, और जो भारत, ईरान, योरप में बसते हों, उसे आर्य कहते हैं (a)' । पर, भारतीय विद्वान् कहते हैं कि; 'जो रूप-रङ्ग, आकृति-प्रकृति, सभ्यता-शिष्टता, धर्म-कर्म ज्ञान-विज्ञान, और आचार-विचार, तथा शील-स्वभाव में सर्वश्रेष्ठ हो, उसे आर्य कहते हैं । पाश्चात्य विद्वानों के किये हुए लक्षण में उनका निजका स्वार्थ है; वे आर्य बनना चाहते हैं । परन्तु यथार्थ में वे आर्य नहीं हैं । उनके आर्य न होने की अनेक युक्तियों में से दो युक्तियां ध्यान देने योग्य हैं । (१) योरप की किसी भी भाषा मे 'आर्य' शब्द का बिगड़ा हुआ कोई रूप देखने मे नहीं आता; यदि वे आर्य होते, तो उनकी भाषा मे 'आर्य' शब्द अवश्य होता । ( २ ) भारतवर्ष का 'अनारी' शब्द बड़ा ऐतिहासिक है; यह शब्द 'अनार्य' का अपभ्रंश है । किन्तु कभी भी ऐसे लोगों के लिये प्रयुक्त नही होता, जिनकी नाक छोटी, और रङ्ग काला हो । प्रत्युत, ऐसे लोगों के लिये प्रयुक्त होता है, जो असभ्य, बेशऊर, और कमसमझ हों। जिस प्रकार 'आर्य' शब्द, सज्जन और साधुपुरुष का वाचक है; उसी प्रकार 'अनार्य' से बिगड़ा हुआ 'अनारी' शब्द भी, असभ्य, बेशऊर के लिये प्रयुक्त होता है । इन दोनों दलीलों से योरपनिवासियों के निकाले हुए 'आर्यत्व' के लक्षण कट जाते हैं; और यही सिद्ध होता है कि, 'आर्य' शब्द से सर्वश्रेष्ठ ही का ग्रहण होता है; लम्बा शिर, कञ्जी आँख, और सफेद रङ्ग का नहीं । आर्यों के लक्षणों मे जिस प्रकार विद्वानों ने लम्बे और गोरे आदि लक्षण किये हैं, उसी तरह उनके मूलस्थान के विषय मे भी नाना प्रकार की कल्पनायें की हैं । हम अभी देख चुके हैं कि योरपवासियों की भाषा मे 'आर्य' के लिये कोई शब्द नहीं है; न; 'अनारी' शब्द का अर्थ काला, ठिंगना और छोटी नाकवाला होता है । ऐसी दशा में योरपनिवासियों ने 'आर्य' का लक्षण जो अपने से मिलता हुआ किया है, वह माननेयोग्य नहीं है, और न उनके तथा उनके शिष्यों के द्वारा स्थापित किया हुआ 'आर्यों का मूल निवास' ही मानने योग्य है" [ वैदिक सं० पृ० २५०-५१ ]

(a) ARYANS–The most important family of Caucasic man to which all the chief civilisations of modern times belong. A tall, fair-skinned, long-headed race, whose origin is still doubtful though it was probably in central Asia and who spread in prehistoric times over the whole of Europe and parts of Asia and Africa. Almost all modern Europeans are of Aryan descent. The family is also called Indo-European or Indo-Germanic, but these names are open to objections from which the term Aryan is free.

(Harmsworth History of the world. p. 321)

स चार्यावासः पूर्वं तावद् हिमवत्पृष्ठस्य दक्षिणभागे, 'सुवास्तुप्रदेशे' एव आसीदिति गम्यते। श्रूयते हि ऋक्संहितायाम्—'सुवास्त्वा अधि तुग्वनि' ( ८, २०, ३७ ) इति। व्याख्यातश्चैष ऋगंशो यास्केन—'सुवास्तुर्नदी, तुग्व तीर्थं भवति, तूर्णमेतदायन्ति' ( ४, २, ७ ) इति। 'वास्तुः' वासभूमिः, सा खलु यस्यास्तीरे 'सुष्ठु' एव, सा नदी सुवास्तुर्नाम; तत्तीरस्थितो जनपदश्चाऽभवत्तन्नामतः सुवास्तुरेव। 'सुवास्त्वादिभ्योऽण्' ( ४, २, ७७ ) इति सूत्रदर्शनादवगम्यते—विदितश्चाऽयं प्रदेशः पाणिनेरपीति। 'कनिंगहाम'महोदयमतेऽद्य 'स्वात्' इति 'सुवात्' इति वा प्रसिद्धा नद्येव सा सुवास्तुः।...तथा च, तस्मादुजिहानप्रदेशीय-सुवास्तुनदीतीरस्थ-सुवास्तुजनपदाद् बहूत्तरस्थाऽतिप्रभावा 'रसा' नद्येव तदुत्तरसीमा; इदानीं 'कावुल' नदीति प्रसिद्धा हीनप्रभावा 'कुभा' एव स्यात्तत्पश्चिमसीमा; तक्षशिलाप्रदेशीया 'सरयू' रेवाऽसीत्तत्पूर्वसीमा ( न चाऽत्रोत्तरकोसलप्रदेशीया सरयूरुपपद्यते; कुभेत्यादि-साहचर्यात्...); अथ कुभाया नीचैः 'क्रुमु-सिन्धुसङ्गम' एव तद्दक्षिणसीमेति च सम्पद्यते सुतराम्। यदा हि सुवास्तुतः पश्चिमस्यां दिश्यवस्थितो निषधपर्वतोऽप्यभूदार्यावासः, तदाऽप्ययं सुवास्तुप्रदेश एवासीत्तदीयपूर्वसीमेति गम्यते...। ततः क्रमात्सुवास्तुतः प्राग् दक्षिणस्यामपि बहुदूरस्थां श्रीकण्ठशैलसमुद्भूतां जह्नुमुन्याश्रमतलवाहिनीं 'जह्नावीं' यावदार्यावासः सम्पन्नः। अत एवैषा ऋगाम्नाता ( ३, ५८, ६ )—'पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम्' इति। 'जह्नावी' 'जाह्नवी' इत्यनर्थान्तरमित्य-

---

"आर्य शब्द की व्युत्पत्ति, भारतीयवेदार्थतत्त्वज्ञ, पाश्चात्यदेशीय विद्वानों से भिन्न करते हैं। खेती करने के अर्थ मे प्रयुक्त 'अर्' धातु का यहाँ कहीं पता नहीं है; पाश्चात्यों का यह बलात् आरोप है। ऋग्भाष्य मे सायणाचार्य ने 'आर्य' शब्द का अर्थ कई प्रकार से लगाया है—

'विदुषोऽनुष्ठातॄन्' ( १, ५१, ८ ); 'विद्वांसः स्तोतारः' ( १, १०३, ३); 'विदुषः' ( १, ११७, २१ ); 'अरणीयं सर्वैर्गन्तव्यम्' ( १, २३०, ८ ); 'उत्तमं वर्णं त्रैवर्णिकं' ( ३, ३४, ९ ); 'मनवे' ( ४, २६, २ ); 'कर्मयुक्तानि' (६, २२, १०); 'कर्माऽनुष्ठातृत्वेन श्रेष्ठानि' (६, ३३, १०)। अर्थात्, विज्ञ यज्ञाऽनुष्ठाता, विज्ञ स्तोता, विज्ञ, अरणीय वा सर्वंगन्तव्य, उत्तमवर्ण त्रैवर्णिक, मनु, कर्मयुक्त, और कर्माऽनुष्ठान से श्रेष्ठ। शुक्लयजुःसंहिता के ( १४, ३० ) भाष्य मे महीधर ने 'आर्य' शब्द का अर्थ 'स्वामी' और 'वैश्य' लिखा है। किन्तु वेद के प्रयोग एवं यास्क के अर्थ में 'आर्य' शब्द मनुष्यमात्र के लिये प्रयुक्त दीखता है। सायण के भाष्य से भी यज्ञादिकर्माऽनुष्ठान द्वारा मानवजाति का श्रेष्ठ बनना प्रमाणित होता है। भारतीय वैदिक पण्डित 'ऋ' धातु और 'ण्यत्' प्रत्यय से 'आर्य' शब्द की व्युत्पत्ति बनाते हैं। 'ऋ' धातु का अर्थ चलना और फैलना है। मानवजाति गमनशील है, और जहाँ जाती है, फैल जाती है। कोई देश, काल, इसके बसने मे बाधक नहीं होते। गरम से गरम, शीत से शीत देश, टापू, पहाड़, जङ्गल, मरुस्थल सभी जगह फैली हुई है। प्रत्येक सभ्यजातिका यह दस्तूर है, कि अपने को ही मनुष्य और श्रेष्ठ समझती है, और भिन्न भाषाभाषियों को मनुष्येतर, बर्बर, पशु, राक्षस आदि कहती है। अपनी जाति और भाषा का प्रायः कोई विशेष नाम नहीं रखती। 'आर्यावर्त्त' का अर्थ हुआ—'मनुष्यों का आवास' और यहीं से मनुष्य-जाति चारों ओर संसार में फैली। इसी लिये यहाँ के मनुष्य 'आर्य' कहलाये इसी यौगिक अर्थ से लाक्षणिक और रूढ़ अर्थ बने—श्रेष्ठ, कुलीन, साधु, पूज्य, मान्य, उदारचरित, विद्वान्, मित्र, वैश्य, और देशभक्त। इसके यौगिकार्थ से 'घुमक्कड़' जाति भले ही कह लें; परन्तु 'आर्य' का अर्थ 'किसान' हमारे साहित्य में कहीं नहीं आया; लक्षणा से भी यह अर्थ नहीं बनता। 'आर्य' शब्द का एक और रूप 'अर्य' है। महीधर के मत से 'अर्य' वैश्य को कहते हैं। इसमें भी कोई अनौचित्य नहीं दीखता; क्योंकि, वैश्यों को अनादि काल से 'श्रेष्ठ' (सेठ), 'साधु' (साहु), आदि सम्मान्य शब्दों से सम्बोधन करते आये हैं। वैश्यों के लिये लक्ष्यार्थ मे 'अर्य' वा 'आर्य' का प्रयोग श्रेष्ठादि के लिये, और वाच्यार्थ मे व्यापार के अर्थ, गमनशील और फैलनेवाले के लिये समीचीन ही है" [हिन्दुत्व पृ० ७७१]

स्माकम् । प्रसिद्धैषा नदी भागीरथ्याः शाखाविशेषेत्युत्तराखण्डेऽद्यापि । 'जाह्नवप्रदेशस्य' पुराणौकस्त्वा-स्नानमिदं नूनं व्यक्तिगतं; न तु सार्वजनीनमिति च वेदितव्यम् । जह्नावीतीरस्थो जाह्नवप्रदेशः खल्व-द्यतनपाञ्चकोरायाः प्राक्, सिन्धुतः प्रत्यक्, वुनार्-( वर्नु )-प्रदेशतश्चोदक्, स्थित इति विश्वकोशसम्पादको वसुदासः । एवं च सुवास्तुसन्निहितैवेयं 'जह्नावी' इति स्वीकृतेऽपि नो न क्षतिः ।

तत एष आर्यावासः सारस्वतप्रदेशेषु विस्तीर्णः । तदाह यास्कः—'विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो वभूव; स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययावनुययुरितरे, ( २, ७, २ ) इति । इहैव बहव ऋङ्मन्त्राः, सामगानमन्त्राः, आथर्वणमन्त्राश्च समाम्नाताः; यागविधयश्चा-ऽत्रैव समुद्भूताः, परिपुष्टा वा; आर्यसाम्राज्यं चेहैव प्रथमं विश्रुतम् । अत एव सर्ववैदिकग्रन्थेषु सरस्वतीना-माख्यानादिकं बहुत्रैव श्रूयते ।...तदेतस्य सारस्वतप्रदेशस्य यागभूमित्वेन प्रशंसनमप्यनेकत्र श्रूयते; तद्यथा—

'नि त्वा दधे वर आ पृथिव्या इळास्पदे सुदिनत्वे अह्नाम् ;
दृषद्वत्यां मानुष आपयायां, सरस्वत्यां रेवदग्ने दिदीहि' ( ३, २३, ४ ) इति ।

अस्यार्थः—'इडायास्पदे' शस्यबहुले, अत एव 'पृथिव्या वरे' उत्कृष्टप्रदेशे, हे 'अग्ने' ! 'रेवत्' रेवान् = धनवान्, अहं 'त्वा' त्वां, 'आ' आभिमुख्येन, 'निदधे' स्थापयामि । कश्च सः शस्यबहुलः पृथिव्या वरः प्रदेश इत्याह—'दृषद्वत्याम्' 'आपयायां' 'सरस्वत्याम्' इति; दृषद्वतीतीरत आरभ्य, सरस्वतीतीरं यावत् त्रिनदीतीरप्रदेशः सर्व एव 'ब्रह्मावर्त्तः' । 'मानुषे' जनपदे तादृशे, त्वं 'दिदीहि' दीप्यस्व । अत एवोक्तं मनुना—

'सरस्वती-दृषद्वत्योर्देवनद्योर्यदन्तरं, तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते' इति ।

किमर्थं त्वां निदध इत्याह—'अह्नां सुदिनत्वाय' इति; जीवत्कालानां सुप्रभातीकर्त्तुमित्यर्थः ।

ततो यदा एष आर्यावर्तो बहुविस्तृतस्तदैव त्रिसप्तनदीभिः परिव्याप्तमिति वर्णितमस्यामृक्संहिता-याम् । तथा चाऽस्ति शाकल-संहितायां दशममण्डले नवर्चमेकं सूक्तं; तद्धि नदीस्तुतिपरमिति 'नदीस्तुत्' इति भाष्यते; ततस्तदानीन्तनार्यावर्तप्रधाननदीवर्णनञ्च लभ्यते । तस्येयं पञ्चमी ऋक् ( १०,७५ )—

'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणोह्या सुषोमया' इति ।

अत्र श्रुता गङ्गा ( १ ) नदी त्वस्मद्देशेऽतीव प्रसिद्धा । ततः पश्चिमस्था यमुना ( २ ) । ततः पश्चिमस्था सरस्वती ( ३ ) । ततः पश्चिमस्था शुतुद्री ( ४ ), याऽद्य शतद्रुरित्युच्यते । ततः पश्चिमस्था परुष्णी, सैव 'इरावती' इत्युक्ता यास्ककाले ( निरु० ९, ३, ५ ); एतर्हि तु 'ऐरावती' इति; ततः पश्चिमस्था असिक्नी, सैव 'चन्द्रभागा' इत्युच्यते; ततः पश्चिमस्था वितस्ता; ऐरावती चन्द्रभागा वितस्तेति तिसृणामासां नीचैः सम्मिलनतो याऽभूदतिप्रसारा मालवदेशीय-कश्यप-पुरतः पश्चिमस्यां दक्षिणा-ऽभिमुखी महानदी, सैवेह 'मरुद्वृधा' इति पञ्चमी ( ५ ) । तत एव कश्यपपुरतः प्राक्प्रवाहिता या शुतुद्री ( शतद्रुः ) पूर्वमिह वर्णिता, तस्या एव शतद्रोरुपरिष्टात्पश्चिमपार्श्वतः सङ्गता च प्राचीनतमा 'आर्जीकीया' ( ६ ); 'उरुञ्जिरा' इत्यप्यस्याः प्राचीनतरं नाम; इयमेव 'विपाड्' इत्युक्ता यास्ककाले ( निरु० ९, ३, ५ ); 'विपाशा' नामिका चेयमिदानीम् । ततोऽपि पश्चिमस्था 'सुषोमा' ( ७ ), येयं तक्षशिला-नामप्रदेशान्निम्नगामिनी सिन्धुसङ्गता । एता एव सप्तनद्यो यावद्भूभागेषु प्रवहन्ति, तावानेव प्रदेशः 'सप्तनद' इति 'सप्तसिन्धुः' इति वा ख्यायते । सिन्धुश्चेह नदीपर्यायः । तासु गङ्गा-यमुने विहाय याः पञ्चनद्यो यावत्सु भूभागेषु प्रवहमानाः सन्ति, स एव 'पञ्चनद' इति, 'सारस्वतप्रदेश' इति चेति संक्षेपः । ऋक्संहितायां मन्त्रमेकं ( ३, २३, ४ ) प्रदर्श्य, यदिह वर्णितो 'ब्रह्मावर्त्त'प्रदेशः, ततः परस्तादेष एव प्रदेशः पुण्यभूरिति परिगण्यते; तथाहि मनुसंहितायाम्—

'कुरुक्षेत्रं, च मत्स्याश्च, पञ्चालाः, शूरसेनकाः, एष ब्रह्मर्षिदेशो वै, ब्रह्मावर्त्तादनन्तरः' इति ।

वर्णित एष सप्तनदप्रदेशः सिन्धोः पूर्वपारस्थः । एवं सिन्धोः पश्चिमपारस्थोऽपि विद्यतेऽपरः सप्तनदप्रदेशः । स हीदानीमार्यावर्त्ताद् बहिर्भूतोऽपि आसीत्पुरा आर्यावर्तान्तर्गतः । अत एव संहितायामित उत्तरं षष्ठ्यामृचि तत्स्थानामपि सप्तानां नदीनां वर्णनं श्रूयते; तथा हि—

'तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या,
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे'

इत्यस्मिन्मन्त्रे 'तृष्टामा' प्रथमा; 'सुसर्त्तुः' द्वितीया; 'रसा' तृतीया; 'श्वेती' चतुर्थी; 'कुभा' पञ्चमी; 'गोमती' षष्ठी; 'मेहत्नु'युता 'क्रुमुः' सप्तमी । इमाः सर्वा एव सप्तनद्यो मध्यहिमालयोत्पन्नस्य, पूर्वं पश्चिमाऽभिमुखगामिनः, पश्चाद्दक्षिणप्रवाहिनः समुद्रगस्य सिन्धुनदस्य, पश्चिमस्यां पूर्व-दक्षिणाऽभिमुखं स्यन्दन्त्यः सन्त्यन्यनामतः । तत्रेदानीं 'चित्रल'–देशतः प्राग् वहमाना 'पञ्चकोर्'–प्रदेशीया स्यवयवा नद्येव स्यात् 'तृष्टामा'; 'सुसर्त्तु' इति सुवास्तोर्नामान्तरं, यद् अद्य 'स्वात्' इत्युच्यते; 'रसा' तु इहाऽपि पूर्ववर्णितैव; 'श्वेती' स्यादद्यतन—'डेराइस्माइलखां'—प्रदेशतलवाहिनी 'अर्जुनी'; 'कुभा' काबुल्; 'क्रुमुः' वर्णुप्रदेशवाहिनी 'कुरम्; 'गोमती' सम्प्रति 'गोमलिति' प्रसिद्धा । एताः तृष्टामाद्या नद्यः सप्तैव साक्षात् परम्परया वा सिन्धुसङ्गता एवेति । तदेवं चित्रलप्रदेशतः प्राक्, वेलुचिस्थानादित ऊर्ध्वं च यावत् पश्चिमोत्तरस्यां य आसीत्सुविस्तीर्णः पुरातन आर्यावर्त्तांशः, स एष एव पश्चिमसप्तनदप्रदेश इति वक्तुं युज्यते । किञ्च, यथा पूर्वसप्तनदान्तर्गतः पञ्चनदप्रदेशः, तथैव पश्चिमसप्तनदान्तर्गतः ( आफगान् ) पञ्चकोर्-प्रदेशोऽपीति । अतो 'गान्धारस्य' आर्यावर्तान्तर्गतत्वं सुतरां सम्पन्नम् । ततः संगच्छते—'गान्धारीणामिवाविका' ( ऋ० सं० १, १२६,७ ) इति संहितावचनम्, उपपद्यते च 'नग्नजिते गान्धाराय' ( ऐ० ब्रा० ७, ५, ८ ) इति ब्राह्मणवचनं, तथा—'साल्वेय-गान्धारिभ्यां च' ( ४, १, १६९ ) इति पाणिनिवचनञ्च । कुरुराज-धृतराष्ट्रपत्नी दुर्योधनादिबहुपुत्रप्रसविनी 'गान्धारी' तु भारत-प्रसिद्धैव । तथा अद्यतनपारस्य-राज्यप्राक्प्रान्तवर्त्ती 'पूर्वमद्र' देश इति मते पाण्डुराजपत्नी प्रसिद्धा 'माद्री' चाऽऽसीत्पुरा भारतीयैव । एवमेव 'पौर्वमद्र' इतिपदसिद्ध्यर्थं—'मद्रेभ्योऽञ्' ( ४, २, १०८ ) इति पाणिनिविधानं च सङ्गच्छते, सङ्गच्छते चैवं पारस्योत्तरप्रान्तवर्त्तिनोऽद्यतन 'मिदिया' नामसाम्राज्यस्य 'उत्तरमद्रत्वेन' ग्रहणमिति ।

एतयोः पूर्वापर-सप्तनदप्रदेशयोर्मध्ये मध्यहिमवत्समुद्भवोऽवाक्प्रवणः समुद्रान्तः प्राचीनार्यावर्त्त-द्विधाकृदतिप्रवलः सीमदण्ड इवैष 'सिन्धु'र्नामैको नदोऽद्याऽपि राजते । तस्याऽस्य सिन्धोरत्युत्तरस्यामति-दूरपश्चिमस्याञ्च अन्यासां सप्तानां नदीनां विद्यमानताऽपि श्रूयते; तदस्यैव 'नदीस्तुत्सूक्तस्य' सप्तम्यष्टम्यो-र्ऋचोः समालोच्यं सप्रणिधानम् । तास्वेका 'ऊर्णावती', स्यादेषा कैलाशनिम्नस्थोर्णाप्रदेशीया; हिरण्यमयी' 'वाजिनीवती' 'सीलमावती' इत्येता अपि तिस्रः स्युरत्युत्तरस्था एव; 'एनी' नदी तु निम्न-बेलुचिस्ताने प्रसिद्धैव; तथा 'चित्रा' अपि चित्रल-प्रदेशत आगत्य कुभायां मिलिता; 'ऋजीती' च या स्यात्तत्समीप-वाहिनीति ।

एतदुक्तत्रिसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यञ्च वर्णितं तत्रैव सूक्ते प्रथमं; तद्यथा तत्सूक्तीय-प्रथमर्चः परार्ध एषः—'प्र सप्त-सप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामतिसिन्धुरोजसा'

अस्यार्थः—'आपः' नद्यः 'सप्त सप्त' भूत्वा, 'त्रेधा' त्रिधा, त्रिश्रेण्यः सत्यः, 'प्रचक्रमुः' प्रावहन्, प्रवहन्ति अस्मिन् आर्यावर्त्ते; सिन्धोः पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्यां च सप्तेति । तासां 'सृत्वरीणां' एकविंशतिसङ्ख्याकानां नदीनाम्, 'ओजसा' बलेन, 'अति' अतिशयितः एको नदः 'सिन्धुः'।···अन्यत्र चाऽत्र संहितायां त्रिसप्तनदीनां श्रवणमस्ति; तद्यथा—'त्रिः सप्त सस्रा नद्यः' इति ( ऋ० सं० १०, ६४,८ ) । तत्त्वतस्तु, एतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत्पूर्वकालिक आर्यावर्तः । अत एव ऐतरेयके श्रुतम्—'यस्तेजोब्रह्मवर्चसमिच्छेत्,···प्राङ् स इयात्; योऽन्नाद्यमिच्छेत्··· दक्षिणा स इयात्, यः सोमपीथमिच्छेत्,··· उदङ् स इयात्' ( १, २, २ ) इति । प्रागादि-दिक्शब्दाश्च कञ्चिदवधिमपेक्षन्ते, कुतः प्राक्? इत्याद्याकांक्षायाः सर्वत्रोपजायमानत्वात् । तदत्र आर्यावर्तीय-सिन्धुमेव मध्यावधिं मन्यामहे; तस्मात् 'सिन्धुतः प्राग्' इत्यादिस्वीकारेणैव तेजस्त्वादिसिद्ध्युपपत्तेः । तथा च सिन्धोः प्राग्देशेषु सरस्वत्यादितीरभूमिषु यज्ञाऽनुष्ठानबाहुल्यश्रुतेस्तेजस्त्व-ब्रह्मवर्चस्त्वयोर्लाभः समुपपद्यते; शतद्रुसिन्धुसङ्गमतो दक्षिणस्यां हिमप्राचुर्याऽभावात्तापप्राबल्याद् भवत्येव प्रचुरशस्योत्पत्तिः;

सिन्धुतः पश्चिमस्यामरण्यप्राचुर्यात्तत्र पशुलाभः सम्भाव्य एव; शतद्रु-सिन्धुसङ्गमादुत्तरस्यामतिशैत्यात् शीतप्रभवस्य वल्लीसोमस्य लाभः, शारीरसोमस्य च वृद्धिर्भवेदेवेति । तदित्थमतिप्राक्तनार्यावर्त्तस्याऽयं सिन्धुर्मेरुदण्ड इवासीदिति प्रतीयते । इत एव 'स'कारादेः 'ह'काराद्युच्चारणकृद्भिर्यवनाऽनार्यैरिदं भूखण्डं 'सिन्धुस्थानम्' इति वक्तव्ये, 'हिन्दुस्तान' इत्युच्यते 卐 ।

···मूजवान् पर्वतस्तु कैलाशगिरेः पश्चिमस्थोऽद्याऽपि । तदेवम् ऋक्संहिताकाले 'ईरान'नामजनपदस्य चाऽऽर्यावर्तीयत्वं, तथा 'मूजवतो'ऽपीति स्यान्मन्तव्यमिति ।

अथर्वसंहितायाः पञ्चमकाण्डीय-चतुर्दशर्चं-द्वाविंशतितमसूक्तस्य तृतीयमन्त्रे 'परुष'नामजनपदस्य, चतुर्थे 'महावृष'-प्रदेशस्य, पञ्चम-सप्तमयोः 'मूजव'त्प्रदेशस्य, बह्लिकदेशस्याऽपि, अष्टमे पुनः 'महावृषमूजवतोः' नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे 'अङ्ग-मगध-मूजवद्-गान्धारीणां' च श्रवणमस्ति;

---

卐 [क] "हिन्दुः—जातिविशेषः । अत्र व्युत्पत्तिः—हीनं दूषयति [दुष् दु पृषो०] इति । अत्रोक्तम्—
पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया अष्टोत्तरशताशीति,र्येषां संसाधनात्कलौ,
पञ्च खानाः, सप्त मीरा, नव शाहा महाबलाः, हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्तिनः ।
हीनं च दूषयत्येव हिन्दुरित्युच्यते प्रिये । पूर्वाम्नाये नव शतं षडशीतिः प्रकीर्तिताः,
फिरिंगभाषया मन्त्रास्तेषां संसाधनात्कलौ, अधिपा मण्डलानां च संग्रामेष्वपराजिताः ।
इंरेजा नव पट्,पञ्च लण्ड्रजाश्चापि भाविनः । [मेरुतन्त्रवाक्यं वाचस्पत्ये, कोशान्तरे च धृतम्]
"अन्यवादी, क्रियाद्वेषी, नोपस्थाता, निरुत्तरः, आहूतप्रपलायी च, 'हीनः' पञ्चविधः स्मृतः"
इति नारदस्मृतौ ( अ० २ श्लो० ३३ ) 'व्यवहार' सम्बन्धि-'हीनः' निर्दिष्टः ।

[ख] "अर्वाचीनास्तु भरतखण्डस्थजनानां 'हिन्दु' इति संज्ञा । यथा भरतखण्डस्य 'हिन्दुस्थानमिति' नाम, इत्यादौ हिन्दुशब्दस्यार्थ इति । अत्रार्थे व्युत्पत्तिः—'सिन्धु'शब्दः अपभ्रंशात् सकारस्थाने हकारोच्चारणात् 'हिन्दुः' इति । तथा च वेदप्रतिपाद्यधर्मस्य सिन्धुनदीपर्यन्तत्वात् तद्धर्मवन्तोऽपि सिन्धुनामानः इति विज्ञेयम् । अत एव अर्वाचीनाः सिन्धुपरिसरं भरतखण्डं हिन्दुस्थानमिति व्यवहरन्ति । यथा 'दश, दस' इति स्थाने 'दाहा' इति, 'सार, सारु' इति स्थाने 'हारु' इति च ।" [ न्यायकोशे ]

सारार्थ—भारतवासी मनुष्यमात्र का नाम 'हिन्दू' है । अत एव इस देश को भी 'हिन्दुस्थान' कहते हैं । पहले यह नाम केवल-'सिन्धुनद' प्रदेशका था और सर्व प्रथम वैदिक धर्म का प्रचार वहीं हुआ, अतः तत्रत्य वैदिक धर्मानुयायियोंको भी 'सिन्धु' कहने लगे । पीछे फारसी भाषाके अनुसार 'स' कार के स्थान में 'ह'कार उच्चारण करके 'हिन्दु' प्रयोग होने लगा । कालक्रम से 'हिन्दुस्थान' शब्द भारतवास्तव्य मानवमात्र के लिए प्रयुक्त होने लगा ।

[ग] आसिन्धोः सिन्धुपर्यन्ता यस्य भारतभूमिका,
पितृभूः पुण्यभूश्चैव स वै हिन्दुरिति स्मृतः ।

अर्थात्—"उत्तर में सिंधु नदी के उद्गम स्थान से, पूर्व, दक्षिण और पश्चिम समुद्रकी सीमाओं के भीतर जो भारत भूमि है, वह जिसकी पितृभूमि और धर्मभूमि भी हो, वही हिन्दू है" ।

[ लोकमान्य तिलक, श्रीसावरकर आदि ]

[घ] "भारत की प्राचीनतम आर्यपरम्पराको अपनी परम्परा स्वीकार करता हुआ जो भारत की संस्कृति और भारत के धर्म को पूर्ण रूप से वा अंश-रूप से अपनावे, वही भारतीयों के लिये हिन्दू है ।" [हिन्दुत्व]

[ङ] "हिन्दू;···भारत में बसनेवाली आर्यजाति के वंशज, जो भारत में प्रवर्तित या पल्लवित आर्यधर्म, संस्कार, और समाज-व्यवस्थाको मानते चले आ रहे हों । वेद, स्मृति, पुराण आदि, अथवा इनमें से किसी एक के अनुसार चलने वाला । भारतीय आर्यधर्म का अनुयायी", आदि । (हिन्दी शब्दसागर) ।

परम्, उक्ता इमे सर्व एव जनपदास्तदानीमासन् अनार्यवासा इति च गम्यतेऽत एव।··· नन्वेवं 'पुरुष'-( पेशावर )-देशस्य, 'गान्धार'-( कान्दहार )-प्रदेशस्य, पूर्वमुक्तमार्यावर्त्तान्तर्गतत्वं किं न विरुध्येत ? अत्र ब्रूमः; तयोरार्यावर्तान्तर्गतत्वेऽपि एतन्मन्त्रदृक्काले अनार्यवासत्वे कोऽस्ति बाध इति; कालभेदात्सर्वसामञ्जस्यं भवेदेवेति।··· प्रदर्शितं मूजवन्नाम तु ऋक्संहितायां ( १०, ३४, १ ) श्रूयते इति सत्यं; परं, न तथाऽपि मूजवत्पर्वतस्य आर्यावासत्वं मन्तव्यमेव; तेन हि तत्रत्यसोमानामौत्कर्षमात्रप्रतीतेः। यच्चाथर्वणिकाम्नानम्—'उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम्' ( ५, ४, ८ ) इति; अस्माच्च तत्रत्यकुष्ठस्यौत्कर्षमात्रं गम्यते, न त्वन्यत्। सोमस्याऽनार्याऽधिकृतत्वं तु ऐतरेयब्राह्मणेऽपि सुव्यक्तम्। एवं 'महावृषस्याऽपि' सिद्धान्तः कृत एव। श्वेतपर्वतादपि प्रतीच्यस्य 'बह्लिकस्य' तु यदार्यावासत्वं प्रतीयते—'बह्लीकः प्रातिपीयः शुश्राव' इत्यादि ( शत० ब्रा० १२, ३, ३ ) श्रुतितः, तस्याऽपि कालभेदव्यवस्थैव स्वीकार्या; अपिवा तस्यार्याऽभिजनत्वे तु न कमपि बाधं पश्यामः। 'अङ्गराज्यस्य' चासीत्तदानीमनार्यत्वमेव; कुरुराजदुर्योधनकालत एव तस्याऽभवदार्यावर्त्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दा श्रूयते; तथा हि ( ऋ० सं० ३, ५३, १४ )—'किं कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे, न तपन्ति घर्मम्' इति। निरुक्तकारेण चैतद्व्याख्यायामुक्तम्—'कीकटो नाम देशोऽनार्यनिवासः' ( ६, ६, ४ ) इति। कीकट एव मगधः।··· तत्त्वतो हिमवत्पृष्ठमध्यस्थो 'मूजवान्नाम' नगराजस्तु स्यादार्यवासोऽनार्यवासो वा, परमासीत्पुरा आर्यावर्त्तोत्तरसीमेति तु मन्तव्यमेव।··· तदेवम्—'अद्यतन-पारस्यराज्यपश्चिमोत्तरस्थैशियामाइनरतः प्राक्, प्रत्यगनुगङ्गप्रदेशात्, उदक् सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाऽयमार्यावर्त्तः संहिताकालीन' इति निष्पद्यते।···

तदेवमैतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थं किरातजातिनिकेतनं किरातनगरमेवासीदार्यावर्त्तस्याऽस्य पूर्वप्रत्यन्तः, दक्षिणस्यां भरतवंशीयाऽधिकृतं सत्त्वद्राज्यमप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्यां गिरि-नदी-ग्रामसीमानां प्राचुर्यवर्णनाद् गान्धारदेशादिभ्यः परस्तादप्यासीदार्यवास इति गम्यते; उत्तरस्यां तु उत्तरकुरुणामजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति। एकत्र चाऽत्र श्रुतम्—'त एतेऽन्ध्राः, पुण्ड्राः, शबराः, पुलिन्दाः, मूतिवा, इत्युदन्त्या बहवो भवन्तीति' ( ७, ३, ६ )। तत्र 'एते' इति इदं शब्दव्यवहारादैतरेयकालेऽपि आसन्निमा जातय इति, 'उदन्त्या' इत्युक्ते प्रत्यन्तवासिनोऽनार्या इति च गम्यते। तथा चैषां देशानामनार्यभूत्वाऽभिधानादेषामन्तःस्थिताः प्रदेशा एवासन् तदानीमार्यभूमय इति सुवचम्। 'अन्ध्र' जातयोऽधुना दाक्षिणात्येषु प्रसिद्धाः, 'पुण्ड्र' इति विदानीं 'दीनाजपुर' इति प्रत्नतत्त्वाऽनुसन्धित्सवो वदन्ति, एवं 'शबर-पुलिन्द-मूतिवाः' विन्ध्यगिरिवासिनो म्लेच्छजातिविशेषास्त्वद्याऽपि प्रायः प्रसिद्धा एव। तदेवं न तदाप्येष आर्यावर्त्तः प्राच्यामतिविस्तृत इत्येवाऽस्माकम्।

अथ श्रूयते ह्येतद् विदेघमाथवाख्यानं शतपथे ( कां० १ प्र० ३ ब्रा० ३ कं० १०—१९ )—'विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार०-० स इमाः सर्वा नदीरति ददाह, सदानीरेत्युत्तराद् गिरेर्निर्द्धावति, तां हैव नाति ददाह, तां ह स्मैतां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाऽग्निना वैश्वानरेणेति। तत एतर्हि प्राचीनं बहवो ब्राह्मणास्तद्धा क्षेत्रतरमिवास स्रावितरमिवास्वदितमग्निना वैश्वानरेणेति। तदु हैतर्हि क्षेत्रतरमिव०-० सैषाऽप्येतर्हि 'कोशल-विदेहानां' मर्यादा, ते हि माथवाः ०-० स मे मुखान्निरपादीति' इति। एतस्मादाख्यानाद् व्यक्तमभिगम्यते, 'विदेह' नाम-मैथिलजनपदस्याऽनतिप्राचीनाऽऽर्यभूत्वम्। परं न तदाऽपि दक्षिणमगधस्यार्यावर्त्तत्वं सम्पन्नं मन्यामहे वयम्; अनतिप्राचीनपातञ्जलमहाभाष्य-वर्णितार्यावर्त्तलक्षणतोऽपि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तत्वप्रतीतेः। अपीह शतपथे ( १२, ९, ३, ३ ) 'बह्लिकः प्रातिपीयः शुश्राव' इति श्रवणात् पश्चिमस्यां तावदप्यासीद् बाह्लीकस्यार्यावर्त्तत्वमिति च स्वीकार्यम्। पाणिन्यागमेऽपि आयुधजीविवाचि-पर्श्वादिगणे पठितो बह्लीकः ( पा० सू० ५, ३, ११७ )। 'कम्बोजाल्लुक्' ( पा० सू० ४, १, १७५ ) इति 'कम्बोज' ग्रहणं च दृश्यते; तत्र सिन्ध्वादिगणेऽपि पठितः कम्बोजः ( पा० सू० ४, ३, ९३ )। गणपाठोऽपि पाणि-

निनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना ( १, १, ३४ )। महाभारतेऽपि वर्णितौ काम्बोज-वाह्लीकौ ( द्रो० प० अ० १५५ श्लो० ११७ )। अथ भगवता यास्केनाऽपि—'कम्बोजाः कम्बलभोजाः कमनीयभोजा वा; कम्बलः कमनीयो भवति ( २, १, ४ ) इति कम्बोजशब्दो निरुक्तः। 'प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एवैकेषु' इत्याद्युक्त्वा, तदुदाहरणाय प्रोक्तं चैतत्—'शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते… विकारमस्यार्येषु भाषन्ते 'शव' इति; दाति लवणार्थे प्राच्येषु, दात्रमुदीच्येषु' ( २, १, ३-४ ) इति। पातञ्जले महाभाष्ये पस्पशायामप्येवमेव। अपि तत्र पातञ्जले आर्यावर्त्तस्यास्य चतुःसीमनिरूपणमेवं कृतम्—'कः पुनरार्यावर्त्तः? प्रागादर्शात्, प्रत्यक्कालकवनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्' ( २, ४, १० ) इति। अत्राह, तट्टीकाकारः कैयटः—'आदर्शादयः पर्वतविशेषाः' इत्येव। 'जनपद-तदवध्योश्च' ( पा० सू० ४, २, १२५ ) इति सूत्रस्योदाहरणभूतं यदिदमादर्शक इति पदं लभ्यते, इतो ज्ञायते—'अस्ति आदर्श-नामा कश्चित्सीमपर्वत इति। सोऽयमादर्शः स्यादञ्जनपर्वतः, तत्पदनिरुक्तितस्तथैवाऽवगतेः। स चेदानीं 'सुलैमान्' इत्युच्यते; स हि शतपथब्राह्मणश्रुतश्वेतगिरेरेव दक्षिणांशः। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिरेवासीदार्यावर्त्तस्य पश्चिमसीमेत्यनुमानमपि न स्यादसङ्गतम्। तदानीन्तनार्यावर्तस्य पूर्वसीमभूतं 'कालकवनं' तु स्याद् धर्मारण्यतः प्राग् विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं 'वकासुर' ( बक्सर ) प्रदेशीयं ताड़कवनम्। पुराऽऽसीत्तद्धि कालयवनाश्रितं; तत्प्रभृत्येव तस्य 'कालवनं, कालकवनं' वेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य, विष्णुपुराणोक्तस्य च ( ५. २३, ५ ) तस्य कालयवनस्य मगधराज-जरासिन्धुमित्रत्वेन वर्णनात् 'कालवन-मगधयोः' सामीप्यानुमानं स्याच्च सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोल्लेखोऽपि तस्यैतस्य पतञ्जलेः संगच्छते; तथा हि—'हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु, गमिमेव त्वार्याः प्रयुञ्जते' इति ( म० भा० पस्पशा० )। तदेवं तदापि सौराष्ट्रजनपदस्य, तथेदानीं 'पटना' इत्यादिप्रसिद्धानां, प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो बहिः स्थितिरासीदित्यत्र नास्ति संशयलेशोऽपीति।

अथाऽत्र भगवान्मनुस्त्वाह—

'आ समुद्रात्तु वै पूर्वाद्, आ समुद्राच्च पश्चिमात्,
तयोरेवान्तरं गिर्योर्, आर्यावर्त्तं विदुर्बुधाः' इति।

'तयोः गिर्योः' पूर्वोपात्तयोः हिमवद्-विन्ध्ययोः। तदित्थं पूर्वापरसमुद्रव्याप्त्येष देशो मनोः सम्मतः। तत्र पूर्वः स्याद् गङ्गासागरसङ्गमः, अपरस्तु सिन्धुसागरसङ्गमः। स एष आर्यावर्तः 'ब्रह्मावर्त्त-देशो, ब्रह्मर्षिदेशो, मध्यदेशो, यज्ञियदेशश्चेति' चतुर्विधत्वेन वर्णितः, तेन, तत्प्रान्तभूमीनां म्लेच्छभूत्वमुररीकृतञ्च।...अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्हभूमय एव, तत्र काऽस्ति विचारणा; निर्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धु-सौवीर-काश्यादयो देशा अपि यज्ञाऽनुष्ठानार्हभूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्माच्चार्यावर्ताद् बहिः स्थिताः—

'पूर्वे किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः, आन्ध्रा दक्षिणतो वीर, तुरस्कास्त्वपि चोत्तरे'

इति ( वा० पु० १३, ४० ), एवमादिकाः—खोराशान-तुरस्क-पूर्ववङ्गोत्तरवङ्गा-ऽऽन्ध्र-प्रदेशादयोऽस्यार्यावर्त्तस्य प्रान्तभूमयः सर्वा एव म्लेच्छदेशाः; किञ्चाऽऽर्यावर्तान्तर्गता दक्षिणवङ्गा-ऽङ्ग-प्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेन अयज्ञियत्वान्म्लेच्छदेशा एव। तत्त्वतस्तु 'तयोरेवान्तरं गिर्योः' इति मनूक्तेः पूर्वस्यां यावत्येव विन्ध्यगिरेः प्रसृतिस्तावानेव यज्ञिय आर्यावर्त्तः स्वीकार्यः, ततो बहिरार्यावर्तत्वेऽपि, न त्वस्ति यज्ञियत्वमिति म्लेच्छभूत्वमेव; अत एव 'अङ्ग-वङ्ग कलिङ्गेषु-सौराष्ट्र-मगधेषु च' गमन-निषेधः संगच्छते। सूचितन्त्वेतद् तत्र मनुनैव—'एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः' इति। 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः। तथैतेषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्यते। एतर्ह्यपि प्राच्यमगधेषु 'पटना'प्रभृतिषु, अङ्गप्रदेशेषु भागलपुरादिषु चाऽन्यत आगताः 'शाकलद्वीपि' ब्राह्मणाः, तथा वङ्गेष्वत्र कान्यकुब्जादागता एव ब्राह्मणाः—'राढि-वारेन्द्र-वैदिका' इति ख्याता वसन्ति; 'कलिङ्ग-सौराष्ट्रयो'रप्येवम्। कलिङ्गप्रदेशाऽगम्यत्वं तु पाणिनिसूत्र-तद्वार्तिक-तन्महाभाष्येभ्यश्चाऽवगम्यते।

तथाहि—अस्ति पाणिनेरेकं सूत्रं 'परोक्षे लिट्' ( ३, २, ११४ ) इति; अत्र चाऽस्ति कात्यायनवार्तिकमिदम्—'अत्यन्ताऽपह्नवे च' इति, 'लिट्' वक्तव्य इति शेषः; उदाहरणं चाऽस्य दर्शितं पतञ्जलिना—'नो कलिङ्गान् जगाम' इति; विवृतं च तत् कैयटेन—'न केवलं तद्देशस्य भोजनादेरपह्नवो, यावत्तद्देशगमनादेरपि' इत्यादि। एष च कलिङ्गप्रदेशोऽद्यापि आर्यावर्त्ताद् बहिरेव संस्थितो 'मेदिनीपुरादारभ्य, तैलङ्गदेशान्तं यावद्विस्तृतः'। पुरा आसीदयम् 'उत्कलिङ्ग-मध्यकलिङ्ग-कलिङ्गेति' त्रिधा विभक्त इति 'त्रिकलिङ्ग'-नामा। 'त्रैलिङ्ग' नाम तु तत एव समुद्भूतम्; अपि 'उत्कलिङ्ग'नामत एव 'उत्कल' नामप्रसिद्धिरित्याहुरैतिहासिकाः। अत एव श्रीक्षेत्रे वर्णविचाराऽभावः; तद्दोषनिवृत्तये चोत्तरत्र समये केनचिद् 'उत्कलखण्ड' प्रणयनञ्चेति संभाव्यते।

अथाऽमरसिंहोऽपि 'प्राच्योदीच्य-मध्य-म्लेच्छेति' चतुर्विभक्तमार्यावर्त्तदेशसंस्थानमश्लोकयत्; तद्यथा—'आर्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्य-हिमालयोः' ( २, १, ८ ) इति। तत्र—'शरावत्यास्तु योऽवधेः देशः प्राग्दक्षिणः प्राच्य, उदीच्यः पश्चिमोत्तरः, प्रत्यन्तो म्लेच्छदेशः स्यात्, मध्यदेशस्तु मध्यमः' ( २, १, ६–७ ) इति। 'प्राक्' सहितो दक्षिणो देशः 'प्राग्दक्षिणः', एवं पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः' अन्तं प्रति गतः 'प्रत्यन्त': सीमान्तप्रदेश इति तदर्थः। तदित्थममरसिंहकाले 'शरावती' नाम नद्येवासीत् प्राच्योदीच्ययोः सीमेति गम्यते। अत एवोक्तं काशिकावृत्तौ (पा० सू० १,१, ७५)—'प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा, विदुषां शब्दसिद्ध्यर्थं, सा नः पातु शरावती' इति।

"अथैवम्—'अनुप्रत्नस्यौकसो हुवे' ( १, ३०, ९ ) इत्यादिश्रुतिगम्यमार्याणां 'प्रत्नौकस्त्वं' कतमस्य प्रदेशस्य स्यान्मन्तव्यमिति चेत् ? अत्रोत्तरन्तु—'स चार्यावासः पूर्वं तावद् हिमवत्पृष्ठस्य दक्षिणभागे सुवास्तुप्रदेशे एवासीद्' इत्यादिनोक्तमिहैव द्रष्टव्यम्। अपि 'अनुप्रत्नस्यौकसो हुवे' इत्यृक्श्रवणमात्रेण, किं सर्वेषामेवार्याणामादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात्सङ्गतं, किमु स्यात्तन्मन्त्रद्रष्टुरेवेति च विवेच्यम्। अस्माभिस्तूक्तं पुरस्तात्—'जाह्नवप्रदेशस्य पुराणौकस्त्वाम्नानमिदं व्यक्तिगतं, न तु सार्वजनीनमिति वेदितव्यम्' इति। तथा चाऽस्य मन्त्रस्य द्रष्टुः शुनःशेपस्यैव पूर्वावास आसीज् जाह्नव्या मूले जह्नूनाञ्चाऽधिपत्ये ( ऐ० ब्रा० ७, ३, ६ ) जह्नुमुन्याश्रमकान्तारे; तत एव हरिश्चन्द्रपुत्रो रोहितस्तं क्रीत्वा सारस्वतप्रदेशमानीतवान्; तच्चाख्यानमैतरेयके ( ७, ३, १–१६ ) श्रुतम्। जह्नोस्तदाश्रमारण्यं त्वद्यापि 'जाह्नवप्रदेश' इति गङ्गाप्रभवे हिमवत्पृष्ठे प्रसिद्धम्; तत एव जाह्नवप्रदेशाद् गङ्गायाः प्रकाशदर्शनाद्गङ्गयाश्चाऽपरं नाम 'जाह्नवी' इति। तदित्थम्—'अनुप्रत्नस्यौकसो हुवे' इति श्रुतिः सिद्धान्तपक्षेऽपि सुसंगच्छत एव। अपि वा हिमवत्पृष्ठस्थौकोनाम-नदीतीरभूमय एव 'प्रत्नौकसः;' तत्र चासीत्केषाञ्चिदार्याणां पुरा वास इत्यपि सुवचमिति†।

इदानीं सैषा आर्यावर्तभूमिः पश्चिमत, उत्तरतश्च, क्रमात्सङ्कुचिता; दक्षिणस्यां प्रायः पूर्ववदेव; पूर्वस्यां तु बहुवृद्धिं गता इति 'उत्कल-राढ़-गौड़-वङ्ग-नरकप्रदेशा अपि अद्य आर्यावर्त्तान्तर्गताः पुण्यभूमय एव गण्यन्ते; अतोऽत्रत्यवाङ्गाद्याश्चाऽद्य यूरोपादीनां म्लेच्छदेशत्वं मत्वा, तत्र गन्तुं न हृदयेनोत्सहन्ते ! 'कालो हि बलवत्तर' इति" [ ऐतरेयालोचनतः समाहृतम् ]।

---

† "ऋग्वेद में आर्य, दस्यु, विश्, वैश्य ब्राह्मण, क्षत्रिय, और शूद्र शब्द आये हैं। इनमें 'आर्य' और 'दस्यु' शब्दों को लेकर, पिछले डेढ़-सौ बरसों के भीतर, पाश्चात्य विद्वानों ने यह धारणा स्थिर की है कि, 'आर्य लोग बाहर से, भारत में आकर बसे, और यहाँ के मूल निवासियों को, जिन्हें वे 'दस्यु' कहते थे, अधिकारच्युत कर दिया। इस धारणा का मूलकारण यह था कि, यूरोपीय जातियों में भी 'आर्य' के समान उच्चारणवाले शब्द पाये जाते थे, और उनके यहाँ यह प्रवाद प्रचलित था कि, 'हम आर्य, कहीं और देश से आकर बसे हैं'। जब यूरोपीय विद्वान् यहाँ के साहित्य का अध्ययन करने लगे, तब उन्हें यूरोपीय और भारतीय भाषाओं में असाधारण समानता दीखने

ऋग्वेदकालिकार्यावर्त्तविषये पाश्चात्यानां केषाञ्चिद्विदुषां प्रत्नतत्त्वविमर्शकानां, तदनुयायिनां भारतीयानाञ्च कतिपयपुरातत्त्वाऽनुसन्धित्सूनां मन्तव्यमित्थमुपलभ्यते—

"तथाहि—ऋग्वेदकृतां वासभूमिस्तत्तन्नदी-पर्वतादिनिर्देशविशेषैरभिव्यज्यते। तत्र तावदयं निर्णयः—'आर्याः' प्रथमं 'हिन्दुकुष्' पर्वतस्य पाश्चात्येन कान्तारवर्त्मना समभूभागान् प्रविश्य, भारतवर्षस्य पश्चिमोत्तरभागाऽवस्थितं पारसीकभाषायां 'पञ्जाब्' इत्यभिधीयमानं 'पञ्चाप'समाख्यमन्वर्थनामानं जनपदमध्यवात्सुरिति'। ऋग्वेदे हि प्रायेण पञ्चविंशतिर्नद्यो निर्दिश्यन्ते। तत्र द्वित्राः केवलमपहाय, अन्याः सर्वा अपि सशाखायाः 'सिन्धुनद्याः' संस्थानविशेषैरनुगताः। तासामेव पञ्च, 'पञ्चापदेशे' शाखापञ्चकत्वेन प्रवहन्त्यः, पश्चादेकीभूय 'सिन्धुनदीं' सङ्गच्छन्ति; याः खलु—वितस्ता, असिक्नी (इयं पश्चाच्चन्द्रभागेत्याख्याता), परुष्णी (इयं पश्चाद् इरावतीत्याख्याता, सम्प्रति 'रावी' इत्युच्यते), विपाट्, शुतुद्री, च। अथापि वैदिकवर्गीया जनाः केचित्, 'सिन्धोः पार एव 'कुभायाः' प्रधानशाखामन्ववसिता, उत्तरतः 'सुवास्तु'पर्यन्तं, दक्षिणतः 'क्रुमु-गोमती'पर्यन्तं च स्थिताः।

काश्चिदेव नद्यः सूक्तेषु द्वित्राऽधिकवारं निर्दिश्यन्ते, बह्व्यस्तु सकृदेव। 'सिन्धुः, सरस्वती' च बहुत्र निर्दिश्येते। समग्रमेकं सूक्तं (१०, ७५) 'सिन्धोः' प्रशंसार्थं प्रवृत्तम्। सूक्तेऽस्मिन् अन्या अप्यष्टादश नद्यः प्रस्तूयन्ते; ताश्च भूयसा तदीयाः शाखा एव।...

'सिन्धु' शब्दः, संस्कृतभाषायामार्याऽधिवासभूमेः पश्चिमसीमरेखात्मकस्य नदीमात्रस्य वाचकत्वेन प्रथमं प्रयुक्तः। ततः पश्चात्प्राक्तनागन्तुकैरिह सिन्धोरेवाऽग्रतो दर्शनात् स एव शब्दः उपलक्षणमर्यादया 'भारतवर्षस्याऽपि' नामत्वेन परिकल्पितः। एवं 'ग्रीकैः' 'इण्डोस्' इत्येवंरूपेण गृहीतोऽयं शब्दस्त-

---

लगी। वह लोग, तब इस खोज में हुए कि, 'ये भारतीय कहाँ से आये?' इस धारणा की पुष्टि में उन्होंने संसार की सब से पुरानी पोथी ऋग्वेद में ये मन्त्र खोज निकाले—

'अनुप्रत्नस्यौकसो हुवे; (१,३०,९); 'पुराणमोकः सख्यं शिवं वां, युवोर्नरा द्रविणं जह्नाव्याम्; पुनः कृण्वानाः सख्या शिवानि, मध्वा मदेम सह नू समानाः' (३,५८,६)।

इन मन्त्रों से केवल इतना ही विदित होता है कि, जिनके सम्बन्ध में यह कथन है, वह पहले कहीं और (अन्यत्र) रहते थे। 'ओकस्' 'आवर्त्त' 'अयन' आदि, स्थान के सूचक हैं। संभव है, 'ओकस्' किसी स्थान का रूढ़ नाम ही हो। फिर भी 'सायण' आदि भाष्यकारों ने 'आर्यावर्त्त' से बाहर के किसी स्थान का न तो नाम बताया है, न सूचना दी है। दूसरे मन्त्र में 'शुनःशेप' के पूर्व स्थान का निर्देश करते हुए दूसरा नाम 'जह्नाव्यां' भी कहा है। यदि 'जह्नावी' या 'जाह्नवी' अर्थात् 'गङ्गा-नदी' निर्दिष्ट है, तो 'जह्नु' देश, वा पहाड़ से सम्बन्ध हो सकता है। 'यह आर्यावर्त्त के भीतर का ही नहीं है, और अवश्य कोई बाहरी देश है; ऐसी धारणा के लिये कोई प्रमाण न होते हुए भी, यूरोपीय विद्वानों ने, इसका अर्थ 'आर्यावर्त्त के बाहर का कोई देश' लगाया! यहाँ तो 'शुनःशेप' के बाहर से आने का प्रमाण है; सारी आर्यजाति के कहीं बाहर से आने का प्रमाण इसे क्यों माना गया यह वे ही जानें! यहाँ जो किसी के बाहर से आने की चर्चा है, उससे ही यह बिलकुल स्पष्ट, और पुष्ट है कि मत्र के कहनेवाले लोग, अवश्य ही उस देश के हैं, निर्दिष्ट व्यक्ति वा जाति, जहाँ के प्राचीन निवासी नहीं हैं। फिर, प्राचीनकाल में भी बाहर से आनेवालों के लिये यहाँ रुकावट थी, ऐसा कहने के लिये कोई प्रमाण नहीं है; प्रत्युत, 'मगों' और 'शाकद्वीपियों' का आना, और बसाया जाना, तो स्पष्टरूप से भगवान् श्रीकृष्ण के उत्तरकाल में वर्णित है। ऐसी दशा में यूरोपीय विद्वानों का यह कहना कि, प्राचीन 'ओकस्' मध्य एशिया के मैदान की ही सूचना देता है, और अकेला शुनःशेप' ही नहीं, सारी आर्यजाति का प्राचीन स्थान, अतः मूल स्थान वही है, बिलकुल निराधार है, और 'सत्यव्रत सामश्रमी' आदि वेदार्थतत्त्वज्ञों की व्याख्याओं से नितान्त असङ्गत है। सारी आर्य्यजाति के कहीं और से आकर, आर्यावर्त्त में बसे होने का स्पष्ट वर्णन, ऋग्वेद में, अथवा अन्यत्र कहीं नहीं है" (हिन्दुत्व, पृ० ७६८)।

नदीलक्षितस्य देशस्य 'इण्डिय' इति नामकरणे द्वारीबभूव । अपि चाऽयं शब्दः पुरा 'पारसीकैः' 'हिन्दु' रूपेणोपात्ते 'ऽवस्तायां' केवलदेशनामत्वेन प्रयुक्तः । यत्पुनरर्वाचीनैः 'पारसीकैः' 'सिन्धुनदी'परिसरप्रदेशात्मको, विन्ध्य-हिमाचलान्तःपाती, भागः 'हिन्दुस्थान' मिति व्यपदिश्यते, तद्युक्तरूपमाभाति ।

ऋग्वेदे तत्र तत्र 'सप्तसिन्धवो' निर्दिश्यन्ते। तत्र मन्त्र एकस्मिन्नयं शब्दः 'आर्याऽधिवास'भूमेरभिधायकत्वेन प्रयुक्तो दृश्यते । इदमत्राऽवधेयं यद्—'अवस्तायाम् अयं शब्दः 'पौरस्त्यकाबुलस्थान' मात्रस्याऽभिधायकः 'हप्तहिन्दु' रूपेणोपलभ्यत इति । यद्यत्र 'सप्त'पदं नियतसङ्ख्यापरत्वेन विवक्षितं स्यात्, तर्हि 'सप्तसिन्धवः' इत्यनेन 'कुभा-सिन्धू, पञ्चापगताः पञ्च नद्यश्च' ग्राह्याः । तत्र 'कुभाया' एव पश्चात्काले 'सरस्वती'त्ति नामधेयं परिकल्पितं तर्क्यते । यतो ह्येषा 'सरस्वती' ऋग्वेदेऽत्यन्तं पावनत्वेनाऽभिमता पौनःपुन्येन निर्दिश्यते, निरतिशयं देवतीकृत्य स्तूयते च । किन्तु ऋषेः स्तुतिः, निर्विशेषमतिविशालां कामपि नदीं विषयीकरोति । अतश्च सुगृहीतनामानो 'रोठ' प्रभृतयो विद्वांसः 'सरस्वती' इत्येतत्, 'सिन्धो'रेव, तद्गतपवित्रत्वद्योतकं नामधेयमित्यातिष्ठन्ते । परन्तु केषुचिन्मन्त्रेषु 'यमुना-शुतुद्र्यो'रन्तरालवर्तिनी काऽपि क्षुद्रा नदी 'सरस्वता'त्यनेन विवक्षितेति ज्ञायते । अपरञ्च, पश्चात्काले, 'सरस्वती, दृषद्वत्या' सह, अम्बालदेशाद् दक्षिणतः स्थितस्य सिम्लदेशादुपत्रिंशक्रोशदूरे लब्धाऽवधिकस्य ब्रह्मावर्त्तदेशस्य, सीमरेखात्वेन निर्दिष्टा दृश्यते । सैषा क्षुद्रा नदी यद्यप्यद्यत्वे सिकतान्तर्हिता, न प्रकाशते; तथापि तदीयः प्राक्तनो रयपथः सम्प्रत्युपलभ्यमानः, पुरा तस्याः 'शुतुद्री'शाखात्वेन अवस्थानमनुमापयति । तेनेदमनुमीयते यत् – सा पुरा वेदकाले समुद्रं सञ्जगाम; इतो विशालतरा च बभूवेति । अपि च सा तस्मिन्काले परमपावनत्वेनाऽभिमताऽभूत्; अत एव सिन्ध्वादिमहानद्यनुरूपान्महागुणांस्तद्गतत्वेन वर्णयतामृषीणामुक्तिषु नाऽत्युक्तिदोषः प्रसज्यते । इदमप्यनुसन्धेयं यत्—'सरस्वती-दृषद्वत्योः' कूलेऽग्निरात्मानमुद्दीपयतीति वर्णयता मन्त्रेण 'दृषद्वत्यपि' सकृत् 'सरस्वत्या' सह निर्दिष्टोपलभ्यते । एतेन 'ऋग्वेदकाले सिन्धुनद्याः' पौरस्त्यप्रान्तोऽपि साङ्गोपाङ्गानां यज्ञकर्मणां, मन्त्रनिर्माणस्य च निर्विघ्नप्रवृत्तेः स्थानभूतः पुण्यक्षेत्रतामवापेति अवगम्यते । अपि च, तादृग्वेदकालस्याऽन्तिमे भागे 'आर्यवर्गीयाः' केचित्तं देशमतिक्रम्य 'गङ्गायाः' पाश्चात्यतीरं प्रापन्, इत्यपि शक्यमभ्यूहितुम् । तथा क्षुत्तरतः स्थिता 'गङ्गायाः' प्रतीच्यतमा शाखा 'यमुना'ऽभिधाना नदी, ऋग्वेदे मन्त्रत्रयनिर्दिष्टोपलभ्यते । तत्र मन्त्रद्वये, तत्कूलपर्यन्तमार्यैरभिव्याप्तमिति व्यक्तीभवति । एवं 'गङ्गा'ऽपि तेषां परिचिता ज्ञायते । यतो हि तन्नामधेयमृग्वेदे साक्षादेकस्मिन्, असाक्षादन्यस्मिंश्च मन्त्रे निर्दिष्टमुपलभ्यते । इदमप्यवश्यमवधेयं यद्,—'गाङ्गाया नामाऽपि नोपलभ्यते वेदान्तरेष्विति' । दक्षिणाशां लक्ष्यीकृत्य प्रयाता आर्यवर्गीयास्तु पञ्चापदेशात्प्रवहन्त्यः पञ्च नद्यो यत्र सिन्धुनद्या सह संभिद्यन्ते, तावत्पर्यन्तमभिव्यापुः; न तां रेखामतिक्रम्य, जग्मुर्ऋङ्मन्त्रनिर्माणकाले ।...

एवं पर्वता अपि ऋग्वेदे बहुत्र निर्दिश्यन्ते; नद्यश्च पर्वतप्रभवत्वेन स्तूयन्ते । तत्र 'हिमवन्तः' इत्यनेन 'हिमाद्रय' एव विवक्षिताः; ते च विधात्रा पाल्यमानाः श्रूयन्ते । तदीयाः श्रृङ्गविशेषास्तु नैव ऋग्वेदे श्रृङ्गग्राहिकया निर्दिष्टाः । 'मूजवत्' समाख्यमेकं श्रृङ्गमन्योक्त्या सोमप्ररोहभूमित्वेन वर्ण्यते । श्रृङ्गमिदं 'काबुल' देशप्रत्यासन्ने 'काश्मीरेभ्यो' दक्षिण-पश्चिमाऽवस्थितेषु पर्वतश्रृङ्गेष्वन्यतमं च भवितुमर्हतीत्यर्वाचीनवैदिकग्रन्थाऽवलोडनान्निश्चीयते । अथर्ववेदस्त्वन्यदपि हिमालयसम्बन्धि गिरिद्वयं प्रस्तौति; तत्रैकः 'त्रिकुत्' इत्युच्यते; अयमर्वाचीनेषु वैदिकग्रन्थेषु 'त्रिकूट' इति, देश्यभाषासु 'त्रिकोट' इति च व्यपदिश्यते । तस्यैवोपत्यकायाम् 'असिक्नी' प्रवहति । अन्यश्च 'नावप्रभ्रंशन'समाख्यः; अयमेव पुराणोक्तो 'नौबन्धना'ख्यः, शतपथब्राह्मणोक्तः 'मनोरवसर्पणा'ख्यश्च गिरिः । यत्र हि तोयविप्लवाऽवसाने मनोर्नौका निश्चलाऽभूदिति शतपथब्राह्मणे ( कां १ प्र० ६ ब्रा० ३ मं० १—६ ) श्रूयते । 'आर्यावर्त्त-दक्षिणापथ'योर्मध्यवर्त्तिनो 'विन्ध्याद्रे'र्नामाऽपि नोपलभ्यते ऋग्वेदे; तथा विन्ध्याद्रिं दक्षिणेन प्रवहन्ती 'नर्मदा' अपि न प्रस्तूयते । एवंविधैर्लिङ्गविशेषैरेतदध्यवसीयते यत्—'आर्या, ऋङ्मन्त्रनिर्माणकाले, पश्चिमतः सिन्धुनद्या, पूर्वतः शुतुद्र्या, उत्तरतो हिमवता, च परिगतं तालवृन्ताकृति पश्चिमोत्तरभागं पूर्व-पश्चिमभागयोरुक्तं सीमाद्वयमतिक्रम्य, बहिः प्रसृतौ पार्श्वभागौ चाऽध्यासिषतेति ।

इत्थमेकत्र स्थलविशेषनिर्देशैः, अपरत्र शीतोष्णस्थितिवर्णनैः, अन्यत्र तत्तद्देशमात्रसुलभानां वृक्षलतादीनां निर्देशैश्च ऋग्वेदद्रष्टारः परमर्षयः 'कुभानदीमारभ्य, यमुनानदीपर्यन्तमायतं भारतवर्षस्य पश्चिमोत्तरं भागमभिव्यापन्नित्यवधार्यते'।···इत्थं नानादिग्देशान् प्राप्य, नानावर्गत्वेन भिन्ना अपि आर्या जातिमताचारैः सर्वेऽपि समानरूपा एवावर्तिषत। समुदायसामान्यवाचिना 'आर्य' शब्देन व्यपदिष्टास्ते स्वप्रतिपक्ष्यानादिनिवासिनो जनान् प्रथमं 'दस्यु-दास' शब्दाभ्यामाहूय, पश्चात् स्वनामविरुद्धया 'अनार्य' संज्ञया व्यपादिक्षन्। वर्गयोरनयोः स्वभावसिद्धः स्वरूपभेदस्तु केवलं वर्णकृतः। श्रूयते ह्यादिनिवासिनां कृष्णवर्णत्वं, दासवर्णस्याऽऽर्यवर्णविलक्षणत्वं च। मन्यामहे, वर्णभेदमेव निमित्तीकृत्य, जातिभेदा अपि प्रवृत्ताः; अत एव जातीनां 'वर्ण'व्यपदेशः।

अथार्याणां वर्गभेदानधिकृत्य विचारयामः। तेषां बहवो वर्गा ऋग्वेदे निर्दिष्टाः। तत्र पश्चिमोत्तरप्रान्तस्थितो 'गन्धारिवर्गः'; ते मेषपालवृत्तयोऽभूवन्नित्यवगम्यते। पश्चात्काले ते 'गन्धारा' इति, 'गान्धारा' इति चाख्याताः। अन्यः कश्चिदथर्ववेदोक्तो 'मूजवद्वर्गः;' ते च तत्र गन्धारिणां सन्निहिततरत्वेनोक्ताः। मूजवदासन्नदेशवर्तित्वात् ते तथा संज्ञिता इति तर्कयामः। एतौ द्वावेव वर्गौ आर्याऽधिवासभूमेः पश्चिमोत्तरभागाऽवस्थितौ।

यद्येव न सर्वे, तथापि भारतवर्षीयाः प्रधानभूताः बहवो वर्गाः ऋग्वेदे शश्वदुच्चार्यमाणेन 'पञ्चजनाः' इत्यनेन शब्देन विवक्षिताः। असंशयमनेन शब्देन 'पञ्चवर्गा' एवाऽभिधित्सिताः। ते च 'पञ्चवर्गा' मन्त्रद्वये निर्दिश्यमानाः—पूरवः, तुर्वशाः, यदवः, अनवः, द्रुह्यवश्च। ते पुनरन्योन्येषामनवरतं कलहायमाना अभूवन्। तेषु चत्वारो वर्गाः कैश्चिद्वर्गान्तरैः सह मिलित्वा दशानां राज्ञां निर्देशे स्थिताः 'तृत्सूनामधिपतिना सुदासा' सह संग्रामाय प्रवृत्ता आख्याताः। तथा हि—कदाचिद् दशराजानस्तृत्सुभिः सह युद्धायागमन्। प्रत्यर्थिभटाः 'परुष्ण्यास्तटे सङ्गताः। तत्र दशानां राज्ञां दारुणो रणः सम्प्रवृत्तः। परन्तु दशराजानस्तत्र प्रथममेव तन्नदीतरणोद्यमे, तत्प्रवाहनिरोधनसाहसे च, क्षीणसत्त्वास्तृत्सुभिरक्लेशं पराजिताः श्रूयन्ते। 'पूरवः' सरस्वत्याः कूलद्वयेऽधिष्ठिताः श्रूयन्ते; तथापि तद्वर्गीयाः केचित्ततोऽपि पश्चिमतः स्थिताः 'अलक्सान्द्रा'ऽनुचरैः परुष्ण्यास्तीरे दृष्टाः। तेषां राजा पुरुकुत्सपुत्रः 'त्रसदस्युः' तद्वंशीयः शूरो राजकुमारः तृक्षिश्च' ऋग्वेदे बहुत्र प्रस्तूयेते। वर्गान्तराऽपेक्षया सातिशयं स्तूयमानास्तु 'तुर्वशाः'। येषां 'कण्वगोत्रीयाः' पुरोहितास्ते 'यदवः' प्रायेण तेषां मित्रत्वेन वर्ण्यन्ते। 'अनव'स्तु परुष्ण्यास्तीरे न्यवसन्। तेषां पुरोहिताश्च भृगुवंशीयाः। 'अनवो द्रुह्यव'श्चैकचित्ता अभूवन्नित्यवगम्यते। ऋग्वेदे केवलमेकस्मिन्मन्त्रे निर्दिश्यमाना 'मत्स्याः' तृत्सूनां शत्रवोऽभूवन्। 'मत्स्याः' यमुनायाः प्रतीच्यकूले प्रत्यवसन्निति महाभारतादवगम्यते। 'सुदासः' शत्रूणां मध्ये प्रधानतमा भरताः। ते च ऋग्वेदस्यैकस्मिन्सूक्ते ( ३, ३३ ) 'विपाट्शुतुद्र्योः' सम्भेदमायान्तं विश्वामित्रमनुयान्तः प्रस्तूयन्ते। अन्यस्मिन्सूक्ते ( ३, ५३ ) विश्वामित्रः सुदासः पुरोहितो भूत्वा भरतानां कृते नदीः स्तुवन् गाधीचकारेति श्रूयते। इदं च नदीनां गाधीकरणं, मन्यामहे, सप्तममण्डलीय-त्रयस्त्रिंशत्तमसूक्तोक्त्यनुसारेण यदा विश्वामित्राऽतिशायिनो वसिष्ठस्य स्तुतिवचनैरुपकृताः सुदासाऽधिष्ठितास्तृत्सवो भरतानभ्यभूवन्, तदा भरतानामनुग्रहाय, वसिष्ठस्पर्धिना विश्वामित्रेण कृतं स्यात्। तेषां भरतानां यज्ञक्रियासु प्राधान्यमभूदित्यनुमीयते। अत एवाऽग्निः 'भारत' इति, यज्ञदेवता 'भारती' इति चाऽभिधीयते। तत्र भारती, बहुत्र सरस्वत्या सह स्तूयते। अग्निस्तुतिपरे कस्मिंश्चित्सूक्ते ( ३, २३ ) द्वौ भारतौ स्मृतौ; तत्रैको 'देवश्रवाः,' अपरो 'देवरात'श्च। तौ च 'दृषद्वत्यामापयायां सरस्वत्याञ्च यज्ञियाऽग्निममन्थिषातामिति श्रूयते। स एव देशः पश्चात्काले 'ब्रह्मावर्त्त' इति; 'कुरुक्षेत्र'मिति च संज्ञितः। 'तृत्सवः' परुष्ण्या नाऽतिदूरे पूर्वभागे कृताऽधिवासाः सम्भाव्यन्ते। तस्या एव पूर्वतीरे 'सुदाः' पश्चिमतस्तां नदीं तीर्णवतो दशराज्ञः प्रतियोद्धुं स्वकीयां सेनां निनायेत्यपि शक्यमाख्यातुम्। 'पञ्चजनाः' पश्चात्कालिकग्रन्थेष्वनिर्दिष्टनामानः सुदासोऽतिघोरे समरे सहायभूतत्वेन वर्णिताः। 'सृञ्जया' अपि तृत्सूनां मित्रभावे स्थितास्तर्क्यन्ते; यतः, तृत्सव इव सृञ्जया अपि तुर्वशानां नित्यशत्रवः श्रूयन्ते।

केषाञ्चिदन्येषां वर्गाणामृग्वेदे नामानि परं निर्दिश्यन्ते, न तु तानधिकृत्य कश्चिद्विशेषः प्रस्तूयते। अथाऽपि तेऽर्वाचीनेषु ग्रन्थेषु सविशेषमुपवर्णिताः। तथा हि—'उशीनराः' ऋग्वेदे सकृदेव निर्दिष्टा, ऐतरेयब्राह्मणोत्पत्तिकाले उत्तरभारतवर्षस्य मध्यभागे स्थिताः। तथा 'चेदयोऽपि' सकृदुपात्ताः, पुराणकाले मगधदेशमध्यासिषत।अन्ये च 'क्रिवयो' नाम सिन्धवसिक्नीसम्बद्धत्वेन वर्ण्यमानाः पश्चिमोत्तरां दिशमशिश्रियन्निति ज्ञायते। शतपथब्राह्मणे 'क्रिवयः' इति पञ्चालानां प्राचीनं नामधेयमित्युक्तम्। पञ्चलास्ते हस्तिनापुरादुत्तरतः स्थिताः। अथर्ववेदो, न केवलं 'गन्धारीन्' नाऽपि केवलं मूजवतः, किन्तु मगधान् अङ्गांश्चाऽपि प्राचीनवर्गत्वेन निर्दिशति। एतेनाऽथर्ववेदोत्पत्तेः पूर्वमेवार्याः गङ्गातीरं प्राप्तास्तदुत्पत्तिकाले तत्र सुप्रतिष्ठिता अभूवन्नित्यवधार्यते।

'पञ्चाला'स्तु न कस्मिंश्चिदपि वेदे निर्दिष्टाः। 'कुरवो'ऽपि यथासंभवं समस्तैस्तद्धितान्तैर्वा शब्दैर्द्वित्रमन्त्रेष्वसाक्षान्निर्दिष्टा उपलभ्यन्ते। शुक्लयजुर्वेदे तु ते साक्षान्निर्दिष्टाः। ब्राह्मणकाले पुनस्तावेव वर्गौ प्राधान्यमुपगतौ। प्रत्युत ऋग्वेदेऽतिशयेन निर्दिश्यमानाः—पूरु-तुर्वश-यदु-तृत्सु-प्रभृतयो वर्गाः नैव नामतोऽपि ब्राह्मण-ग्रन्थेषु निर्दिष्टाः। 'भरता' अपि ब्राह्मणग्रन्थेषु प्रधानपदमारोप्य स्तूयमानाः सदाचाराणामादर्शभूतत्वेन वर्ण्यन्ते; न तु तदानीन्तना अन्ये वर्गा इव ते पृथक्सङ्घात्मनाऽवस्थिता इति कुत्राऽपि प्रस्तूयन्ते। तेषां नामधेयमपि ब्राह्मणग्रन्थेषु, मनुस्मृतौ वा, निबद्धायां वंशावलिपट्टिकायां नोपलभ्यते। तथा बौद्धग्रन्थेष्वपि तेषां वार्त्तापि न श्रूयते।

इत्थंभूते व्यतिकरे इदमभ्यूहितुं युक्तं यत्—वेदोक्तास्ते बहवो वर्गाः क्रमेण नवनवान्निवेशदेशान्प्राप्तास्तत्तद्देशाऽवस्थाऽनुरूपेषु जीविकाव्यापारेष्वेकीभूता अन्यैरेव नामधेयैर्योजिता इति। तथा च वेदोक्ता भरताः पश्चात्काले कुरुवंश एवान्तर्भूताः; अत एव भरतः कुरुवंशीयानां मूलपुरुषत्वेन महाभारतादौ वर्ण्यते। कुरूणां रणकथामधिकृत्यकृत इतिहासोऽपि भरतसम्बन्धान्महाभारतमित्युच्यते। एवं महाभारतगतायां वंशावलौ पूरवः कुरूणामत्यन्तसन्निकृष्टत्वेनोक्ताः; अतस्तेऽपि क्रमेण कुरुष्वन्तर्भूता इति शक्यमास्थातुम्। ऋग्वेदाऽनन्तरकालिकेषु ग्रन्थेष्वगृहीतनामानस्तृत्सवोऽपि कुरुवंश एवान्तर्भूताः सम्भाव्यन्ते। पञ्चालास्तु 'क्रिवय' एवेति पूर्वमेव प्रास्तौष्म। तदेवमवधेयं यत्—अल्पाऽल्पाः पञ्चवर्गाः सम्मिलिताः पञ्चाला अभूवन्निति; अत एव तत्र 'पञ्च' शब्दस्य घटना। श्रूयते च ब्राह्मणग्रन्थेषु तुर्वशाः पञ्चालानामन्यतमा इति। तथा ऋग्वेदे तुर्वशानामत्यन्तसुहृत्त्वेन वर्ण्यमाना यदवोऽपि पञ्चालेष्वन्तर्भूताः सम्भाव्यन्ते। पुराणेषु पुनस्ते गोत्रप्रत्ययान्तेन 'यादव' शब्देन व्यपदिश्यमानाः पृथग्वर्गत्वेनाऽवस्थिताः; वर्ण्यते च तेषां वंशेऽवततार भगवान् श्रीकृष्ण इति।

इदमपरं विनोदयति नश्चेतः, यत्—ऋग्वेदे प्रभूतवित्तः प्रतापशाली कश्चिद् 'इक्ष्वाकु'नामा राजकुमारोऽविशेषं निर्दिष्टः; स एव सविशेषं रामायणादौ सूर्यवंश्यानां राज्ञां मूलपुरुषत्वेन, अयोध्याऽधिपतित्वेन च वर्णितः" [ वैं० सा० च० अ० ६ ]।

पाश्चात्यमतालोचनम्

"अथाऽत्र, युरोपीय-भ्रातरः केचन सम्प्रवदन्ते। श्रूयते हि ऋक्संहितायाम्—'अनुप्रत्नस्यौकसो हुवे' ( १, ३०, ९ ) इति; तेनाऽवगम्यते—'सारस्वतप्रदेशीयार्याणामादिपुरुषाणां वास आसीत्पुरा क्वचिदन्यत्रैवेति'। तच्चाऽऽर्याणामादिनिकेतनमस्यैवासिया-( एशिया )-खण्डस्य मध्यभागस्थितयोः 'बेलुर्त्तोग्-मुश्तागपर्वतयोः पश्चिमपार्श्वगताऽधित्यका भूमिः; तत एव 'भारतीयाः, पारसिकाः, शर्म्मण्यादयश्च विकीर्णा भारतादिष्विति।

वयमत्र ब्रूमः;—भारतीय-पारसिक-शर्म्मण्यादीनामार्यमूलत्वे, नैकजातिप्रभवत्वन्तु स्यात्स्वीकार्यम्; किन्त्विह औपनिवेशिका वयमिति नैव मन्तव्यमस्माकम्; स्वदेशस्वत्वहान्यादिदोषत्रयप्रसङ्गात्, तेषां तन्मतपोषकप्रमाणहेतूनामतिदौर्बल्याच्चेति।

ते त्रयो दोषाः खल्वेते—(क) नैष देशोऽस्माकं पैतृकः, अपि तु यथा अभवद् यवनानामधिकृतः, अद्य च इंग्लेण्डीयानां, तथैव पुराऽस्मत्पूर्वपुरुषैरत्रत्याननार्यान् विजित्य बलाद् गृहीत इति। एतेन,

अस्मिन्देशेऽस्माकं मूलस्वत्वं कदापि नास्ति; प्रत्युत यथा पूर्वं यवनानां जयलब्धं स्वत्वं सम्पन्नम्, अद्य च इंग्लेण्डीयानां, तथैव एकदा अस्माकमपि बभूवेत्येवेति प्रथमो दोषः । (ख) तदनु सम्पद्यत एवाऽस्माकं यहु-द्यादीनामिवोपनिवेशवासित्वमिति द्वितीयो दोषः । (ग) स्वार्थाऽनुरोधतः स्वावासकण्टकभूतानामेतद्देशीय-मूलस्वत्ववतामनार्याणामुच्छेदनञ्चेति तृतीयः ।

यदि हि तेषां तन्मतमस्माकमृतमित्यभिमतं स्यात्, तर्हि एते त्रयोऽपि दोषा गलेकुठारन्यायेन मन्तव्या एव स्युः । न च तथा; प्रत्युत दृश्यते हि न कश्चित्स्वावासभूमेश्चतुरङ्गुलभूमिस्वत्वमपि त्यक्तुमुत्सहते। तद्वयमिहार्यावर्ते चिरमासृष्टेर्निवसन्तोऽपि तद्विरुद्धप्रबलप्रमाणमन्तरा कथङ्कारं नाम पैतृकं स्वत्वमुत्सृजन्तो-ऽत्र दोषभावं क्षमामहे ? अपि राजशासनतोऽन्नाभावादितो, विपुलार्थाऽर्जनस्पृहासन्ताडनादितो वा, ये केच-नार्या अनार्याश्च स्वदेशाद्वहिर्भूता औपनिवेशिकत्वमापन्ना, आपद्यन्ते वा अद्याऽपि, अस्तु तेषां तथात्वमदोषाय, अतथाविधानामस्माकं विषये, तेषां तथाविधजल्पनं कथं न नो हृदयं व्यथयेत् ? एवं, दुर्बलानामाद्याऽना-र्याणां प्राणादिसम्पीड़नेनैवाऽस्मत्पूर्वपुरुषा इह वास्तुस्थानमालेभिर इत्यनृतमपि यदि ऋतायेत. तर्ह्येष तत्क-लङ्कप्रवादः कथं न भवेद् दोषायेति च हृदयवद्भिः सुधीभिरेवाकलनीयम् । सन्ति चाऽत्र तेषां तन्मतपोषका ये अष्टावनुमानेहतवो लिखिताः, तेष्वेकोऽपि न विचारसह इत्यस्माकम्; तद्यथा—

(१) 'एशियाखण्डतः प्रोषिता एवार्याः कालेन सर्वत्र यूरोपखण्डादौ बभूवुः कृतवास्तव्याः' इत्येवमस्त्येकः प्रवादः; अतोऽवगम्यते, 'नूनमासीदार्याणामादिवासः प्रथममेशियाखण्डमध्यभूभाग' इति तेषां तथाविधाऽनुमानस्य आद्यहेतुवर्णनम् ।

अत्र ब्रूमः—जागर्त्तु स प्रवादः, तेन किम्; तथा स्वीकारेऽपि न भवेदस्माकं भूस्वत्वनाशः, आर्यावर्त्तस्याऽस्य चैशियाखण्डीयभूभागत्वात् । निरवसिताश्चाऽस्माद् विश्वामित्रर्षिपुत्रादयः; तथा हि— **'त एते अन्ध्राः, पुण्ड्राः, शबराः, पुलिन्दा, मूतिवा, इत्युदन्त्या वहवो भवन्ति वैश्वामित्रा दस्यू-नां भूयिष्ठाः'** इति ऐ० ब्रा० ७, ३, ६ । अत एव त्वग्दोषदुष्टा भर्त्तृपरित्यक्ता अत्रिसुता विदुष्यपालैव ग्रीक्-देशीया अपेलो देवतेति संभाव्यते; तदत्र ऋं० सं० ८, ८१–सूक्तव्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम् ।

(२) भारतीय-पारसिक-इंग्लेण्डीयादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते; विशे-षतः सर्वास्वेव भाषासु शीतर्त्तुनामैकविधमेव प्रायः, तस्माच्चाऽवगम्यते, 'सर्वेषामेवैषामेकवंशप्रभवत्वं, शीत-प्रधानदेशवासित्वञ्चेति' तेषां तादृशाऽनुमानप्रवृत्तौ द्वितीयहेतुवर्णनम् ।

अत्र ब्रूमः—अस्त्वेषामेकवंशप्रभवत्वम्, अपि स्वीकार्यं च स्यात् 'पुराऽऽसीदेषां सर्वेषामेव हिम-प्रधानैकदेशवासित्वञ्च; तेन किम् ? शीतप्रधाने तस्मिन् सुवास्तुप्रदेशे हि तेषामुक्तसर्वजातिमूलार्याणां वास-स्वीकारेऽपि, किमेतन्नोपपद्यते ? उपपद्यत इति चेत् ? कृतं कल्पना-कल्पितसुदूरजन्मकल्पनयेति । अपि पार-सिकाऽवेस्तोग्रन्थस्य 'वेन्दिदाद्'प्रकरणीयाऽऽद्याऽध्याये, 'हरखइति'नामकस्यैकस्याऽभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नूनमेतस्य सारस्वतप्रदेशस्यैव; 'सरस्वती' शब्दस्यैव हि पारसिकभाषायां 'हरखइति' ( हरह्वती ) व्यवहारः सर्वसम्मतः; सिद्धान्तितश्च तथा 'क्लॉर्क्' महोदयेनाऽपि (१८६२ खृ० मु० व्या० ५६–५८ पृ० ) ।

( ३ ) तत्रैव 'अवेस्ता' ग्रन्थस्य 'वेन्दिदाद्'प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्यनम्वेजो'नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते; 'हिमर्त्तुप्रधानश्च स' इति चोल्लिखितं तत्र । स एष जनपदः पारसिकाना-मादिवास्तव्यः स्यात्; स्वीक्रियते च तथा तैः पारसिकैः । भारतीय-पारसिकयोर्वेदनमण्डलसारूप्याद्, भाषा-सादृश्याद्, अग्निपूजकत्वसाम्याच्च, एकप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणामेवावासभूमिः स्यात् स 'ऐर्यनम्वेजो' जनपद इति तत्र तृतीयहेतुवर्णनम् ।

अत्र ब्रूमः—अस्तु पारसिकानामार्यवंशसमुत्पन्नत्वेन अस्मद्भ्रातृत्वं, स्याच्च स्वीकार्यं तेषामादि-पुरुषाणाम् 'ऐर्यनम्वेजो'वासित्वं; न तथाऽप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरस्मद्देशतो

विताडितानां तदादिपुरुषमात्राणां तथात्वसंभवात् । एकवंशप्रभवाणामपि हि पुरुषाणां नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केपाञ्चित्स्वदेशवासित्वमपीति सुवचमेव । अपि वा 'राजतरङ्गिणी' वर्णितः 'आर्याणक' देश एव 'पेर्यनम्वेजो' इति पारसिकनामभागासीत्; स च स्यात्केपाञ्चिदार्याणां वासभूमिः, पारसिकानां चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्वमवदातम् । स च देशः काश्मीरादुत्तरो हिमप्रधानोऽपि आर्यावर्त्तान्तर्गत एव; तथा हि —

'तुषारवर्षैर्बहुलैस्तमकाण्डनिपातिभिः, आर्याणकाऽभिधे देशे विपन्नं केचिदूचिरे' इति (४,३६७)

वस्तुतस्तु 'पेर्यनम्वेजो' नाम नगरं नाद्य क्वचिदपि केनाऽप्युपलभ्यते; पुरा कासीत्तस्य विद्यमानतेत्यपि नाद्य यावत् सुनिर्णीतं; तदलं खपुष्पपर्यालोचनयेति ।

( ४ ) अस्ति चैवमपि प्रवादः—'ग्रीक्-रोमकजाति' पूर्वपुरुषाः पूर्वोत्तरदेशतः प्रोषिता इताल्यादौ ( इटालि ) न्यवात्सुरिति' । स एष प्रवादस्तदैव सङ्गच्छेत, यदि नामासिया( एशिया )खण्डस्थमध्यभूमिरेव तेषामाद्यार्याणां निकेतनं मन्येतेति तत्र चतुर्थहेतुवर्णनम् ।

अत्र ब्रूमः—पूर्ववर्णितः सुवास्त्वादिप्रदेशोऽपि इताल्यादिभ्यः किञ्चिदुत्तरपूर्वगत एवेत्यतस्तत्प्रवादोपपत्तिरुभयत्र समानैवेति ।

( ५ ) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकाऽतीतमहिमान्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनानामार्याणां स्वीकारात् तादृशस्थानस्यैतदादिपुरुषाणां वासभूत्वं सम्भाव्यत इति तत्र पञ्चमहेतुवर्णनम् ।

अत्र ब्रूमः—हिमवद्दक्षिणभागस्था आर्यास्तपःसाधनादिकं चिकीर्षवश्चिरमेव हिमवदुत्तरभागं गत्वा कृतकृत्या भवन्ति; इत एव तस्य पवित्रतमत्वेन वर्णनम्; न त्वादिपितृवासनिबन्धनमिति । लोकाऽतीतमहिमाऽन्वितत्वन्तु उत्तराणां कुरूणामजेयत्वादिश्रवणत एव । हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्, उत्तरशब्दमात्रं तद्बीजम् । तदिदं स्फुटं प्रतिपादयिष्यामोऽष्टमे, इह चोत्तरत्र किञ्चिदिति ।

( ६ ) श्रूयते हि कौषीतकब्राह्मणे—'उदीच्यां दिशि प्रज्ञाततरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं, यो वा तत आगच्छति, तस्य वा शुश्रूषन्ति इति ह स्माहैषा हि वाचो दिक् प्रज्ञाना' इति ( १, ७, ६ ) । तदेवं कौषीतकब्राह्मणग्रन्थप्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि, तदादिपुरुषाणां हिमवदुत्तरखण्डवासित्वेनैषोत्तरदिक्स्तुतिः सङ्गच्छत इति, तत्र षष्ठहेतुवर्णनम् ।

अत्र ब्रूमः—ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका श्रुतिः; ऐतरेयकाले कुरु-पञ्चाल-शिवि-सौवीरगणानां मध्यदेशत्वं पूर्वं वर्णितम् । मध्यदेशाऽपेक्षयोद्याननगरस्योत्तरत्वं सर्वैश्चक्षुष्मद्भिर्मन्तव्यमेव । एष एवोद्यानदेशो राजतरङ्गिण्याम् 'उज्जानक' इत्युक्तः; तस्यास्य विद्यानिवासत्वेन स्तुतिरन्यत्राऽपि । स एष काश्मीरसन्निहित 'उद्यान' नामजनपदोऽत्रेष्टो विद्यानिलय इति कथं धावेम हिमवतोऽप्युत्तरमिति ।

( ७ ) श्रूयते हि—'तोकं पुष्येम तनयं शतं हिमाः' ( ऋ० सं० १, ६, ९४ ) इति आशीर्मन्त्रः । तदत्र विवेचनीयम्; हिमर्त्तुतोऽब्दपरिगणनन्तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपातस्यातिशय्यं विद्यते सदैव; नाऽत्र तथोपलभ्यते; अपितु 'आसिया'-( एशिया)-मध्यभूभागस्थो 'बेलुर्त्ताग्-मुश्ताग्'-पर्वतयोरन्तरालप्रदेशस्तु नूनं तादृश इति. तेषां तत्र प्रबलोऽयं हेतुः सप्तमः ।

अत्र ब्रूमः—यदि हि हिमर्त्तुवाचि 'हिम'शब्देन अब्दपरिगणनश्रवणाद्, 'हिम'शब्दस्याब्दवाचित्वेन व्यवहाराद्वा, स्यादस्मत्पूर्वपुरुषाणां हिमर्त्तुप्रधानदेशवासित्वाऽनुमानं; तर्हि शरदृतुवाचिशरच्छब्देनाऽब्दपरिगणनश्रवणात्, शरच्छब्दस्याऽब्दवाचित्वेन व्यवहाराद्वा, किं न स्यात्तेषां शरदृतुप्रधानदेशवासित्वाऽनुमानम् ? अस्ति तथाऽपि श्रवणं बहुत्रैव; तद्यथा—'तिस्रो यदग्ने, शरदस्त्वामिद्' इति ऋ० सं० १, १२, ७२; 'शतमिन्नु शरदो अन्तिदेवाः' इति ऋ० सं० १, १४, ६०; शतं नो रास्व शरदो०-०ऽद्यामायूंषि' ऋ० सं० २, ३, २७; 'अस्मै शतं शरदो जीवसे धाः' इति ऋ० सं० ३, ३, ३५; 'पतिर्जीवाति शरदः शतम्' इति च ऋ० सं० १०, ८६, ३९ । वस्तुतस्तु आर्याणां न कदाऽपि हिमर्त्तुमात्रभोगौकस्त्वमासीत्, न च कदाऽपि शरदृतुमात्रभोगौकस्त्वम्; अपि नाम 'शरत्कृता अस्यामोषधयो

भवन्ति. शीर्णा आप इति वा' इति यास्कोक्तेः ( ४, ४, ४ ) शृणाति' हिनस्ति, प्राणिनः' इति शरच्छब्दव्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्वमासीदर्याचार्यसम्मतमिति तस्य ऋतोरब्दान्यत्वममानि तैरिति प्रतीयते। सति चैवं तस्याऽब्दान्ताऽवयवत्वे, हिमर्तोरब्दाद्यवयवत्वं सुतरां सम्पन्नम्। अत एवाऽब्दगण-नाप्रसङ्गे शरच्छब्दहिमशब्दयो'रन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे; सङ्गच्छते च तयोः शब्दयोर्गौण्या वृत्त्याऽब्दवाचित्वमपीति।

( ८ ) अपि श्रूयते—'उत्तरं गिरिमतिदुद्राव' इति ( शत० ब्रा० १, ८, १ )। 'उत्तरं गिरिं' हिमालयम्, 'अति' अतिक्रम्य, उल्लङ्घ्य 'दुद्राव' द्रुतगमनं कृतवानिति च तस्य तत्सम्मतोऽर्थः। तस्मादपि वचनाद् हिमालयमुल्लङ्घ्य इहागमनं सुव्यक्तमिति तेषां तादृशाऽनुमानेऽष्टमो हेतुः।

अत्र ब्रूमः—तस्याः श्रुतेराद्यन्तपर्यालोचनया, 'अति' शब्दार्थालोचनया च, एतद्विपरीत एवार्थः प्रतीयते। तथा हि—'स औघ उत्थिते नावमापेदे; तं स मत्स्य उपन्यापुप्लुवे; तस्य शृङ्गे नावः पाशं प्रतिमुमोच; तेनैतमुत्तरं गिरिमतिदुद्राव। स होवाच, अपीपरं वै त्वा; वृक्षे नावं प्रति-बध्नीष्व; तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीत्; यावद्यावदुदकं समवायात्, तावत्तावद-न्ववसर्पासीति। स ह तावत्तावदन्ववससर्प; तदप्येतदेवोत्तरस्य गिरेर्मनोरन्ववसर्पणम्' इति पूर्णं तच्छतपथवचनम्। तदेतत्पर्यालोचनया गम्यते—कदाऽप्येकदा सम्भूतेऽत्र जलप्लावने, अस्मादेवार्या-वर्त्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालयशृङ्गाऽधिरोहणम्; उपशान्ते च तदुपद्रवे, ततः क्रमादभिसर्पण-ञ्चेत्येवेति सत्यमताऽनुकूलैवैषा श्रुतिः। अत एव 'अतिदुद्राव' इति पदस्य 'अधिजगाम' इत्यर्थः कृतस्त-द्व्याख्याकृता हरिस्वामिना। वेदार्थनिर्णयायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थे 'अति' शब्दो निर्णीतः—'अति, सु, इत्यभिपूजिते' इति ( १, १, ५ )। 'अतिधनः' इति, 'सुब्राह्मणः' इति च तदुदाहरण-द्वयम्। अतिशयोऽपि अर्थोऽप्यस्ति 'अते'र्यास्कीयः; अत एव—'अतिमृत्युमेति' ( श्वेता०उ०६, १५ ) इत्यादौ अतिशयोऽर्थ एव प्रतीयते, नोल्लङ्घनार्थः। 'अतिरतिक्रमणे च' ( १, ४, ५० ) इति पाणिनि-सूत्रस्य व्याख्यायां ह्याहैवं ज्ञानेन्द्रसरस्वती—'अतिक्रमणम्' 'उचिताऽवधिकस्याऽनुष्ठानमिति'। प्रकृतौ अतेरुल्लङ्घनार्थत्वस्वीकारेऽपि, हिमालयोत्तरवासिनां तेषां दृष्ट्याऽस्य हिमालयस्य 'उत्तर-गिरित्वं'† कथं संभवेन्नामेति च तैरेव विचारणीयं स्वयमिति दिक्" [ऐतरेयालो० पृ० ४८—५५]

इतः परम्—"एवमस्मत्पूर्वपुरुषाः खल्वासन् पुरा सुमेरुप्रदेशवासिन एवेति बाल-सिद्धान्तोऽपि बालसिद्धान्तः" इत्युपक्रम्य,—"तदेवमिदं स्वप्रदृष्टाऽश्रुतपूर्वरत्नोद्धरणाय, 'वेदा-ऽवेत्ता' दिजलधिप्लवमानस्याऽऽश्रयहीनस्य तस्य कुशकाशाऽवलम्बनं सर्वथानिरर्थकमेवेति किमु तत्राऽस्ति शोच्यमिति दिक्" इत्यन्तेन ग्रन्थ-सन्दर्भेण ऐतरेयालोचने ( पृ० ५५—६९ ) वैदिकप्रत्नतत्त्ववित्तमेन श्रीसत्यव्रतसामश्रमिणा, महत्यारभव्या, मीमांसक-नैरुक्तैतिहासिकविचारपद्धत्या, सत्तर्काऽनुप्राणित-वेदशास्त्रार्षवाक्योच्चयप्रमाणेन च, आर्याऽऽदिदेशविषयकं लोकमान्य-बालगङ्गाधर-तिलकस्य मतं सम्यगालोचितं, भृशं निरस्तञ्चेति तत्रैव मनोहृत्य द्रष्टव्यम्; विस्तरभयादत्र नोदाहृतमिति।

एतद्विषये विशेषतो द्रष्टव्यम्—१. ऐतरेयालोचने (श्रीसत्यव्रतसामश्रमिणः) अं०३ पृ० २०–७१। २. वैदिकसाहित्यचरित्रे ( पि० पि० सुब्रह्मण्यशास्त्रि–के० यल्० व्यासरायशास्त्रिणोः ) षष्ठोऽध्यायः। ३. महाभारतमीमांसायां ( रा० ब० चि० वि० वैद्यकृतौ ) प्र० ५ पृ० १४१—१६८। ४. वैदिकसम्पत्तौ (श्रीरघुनन्दनशर्म्मणः) खं० २ पृ० २३१—२५७। ५. 'दि आर्क्टिक होम इन दि वेदज़' (लो० तिलकस्य)। ६. 'ऋग्वेदिक इण्डिया (श्रीमदविनाशचन्द्रदासस्य)। ७. 'मानवेर–आदिजन्मभूमिः' (श्रीमदुमेशचन्द्रविद्यारत्नकृता) ८. 'आर्यावर्तातील आर्यांची जन्मभूमिः' ( श्रीनाना पावगीप्रणीता )। 'हिन्दुत्व'ग्रन्थे (श्रीरामदास गौडस्य) अ० ७८। १०. 'आर्यों का आदिदेशः' ( श्रीसम्पूर्णानन्दस्य ) सम्पूर्णः; इत्यादि।

†"उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणाऽन्विते, पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते।... उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः; इहस्थास्तत्र जायन्ते, ये वै पुण्यकृतो जनाः"

[ म० भा० शां० अ० १९२ ]

उद्देशमात्रतः साराद् यन्मूले मनुना स्मृतम् आर्यावर्त्तादिसंस्थानं, तद्भाष्ये किञ्चिदास्तृतम्।
अत्र पौरस्त्य-पाश्चात्यप्रत्नतत्त्वविदां मतं दिङ्मात्रं दर्शितं प्रायस्तत्तद्वाक्यैरनाग्रहात्।
आद्यार्यावासदेशस्य, तथाऽऽर्यत्वस्य, निर्णये, विवदन्ते चिरादेव पुरातत्त्वविमर्शकाः।
नाद्यापि निर्णयस्त्वत्र सर्वमान्योऽस्ति कश्चन, सर्वेषां सभ्यदेशानामार्यभूत्वाऽभिमानतः।
स्व-स्वदेशाऽभिमानेन, तत्तदुत्कर्षवादिनां प्रत्नतत्त्वविदां बुद्धिः पक्षपाताद्विपद्यते।
देश-राष्ट्राऽभिमानात्मा जात्यहङ्काररूपधृक्, अर्वाक्काले मनुष्याणामहम्भावो विजृम्भते;
तद्वशादार्यमानित्वं स्वसभ्यत्वाऽभिमानिनां, प्रायः सर्वमनुष्याणां जगत्येवाद्य दृश्यते।
स्वोत्प्रेक्षितार्यवंश्यत्व-ग्रहाऽहङ्कारदर्पिताः स्वेतरानभिमन्यन्तेऽनार्या-ऽसभ्या-ऽतिबर्बरान्।
एषाऽन्धधारणा, मूढग्राहो वा जर्मनादिषु स्वीयार्यत्वं प्रजल्पत्सु सर्वोत्कर्षेण वर्तते।
तद्विरुद्धं त्विहत्यानां स्वस्यैवार्यत्वमिच्छतां, म्लेच्छत्वमतिरद्यापि बाह्यदेशनिवासिषु।
कियच्छताब्दात्पूर्वं ये चाऽर्धनग्ना वनेचराः आसन्, तेऽप्यद्य दृश्यन्ते परमार्यत्वमानिनः।
आर्यत्वमपि चैतेषां जन्मनैव स्वरूपतः, देहरङ्ग-शिरोमान-नासोच्चत्वादिसंस्थितं,
न त्वार्याचारसम्भूतं, गुण-कर्माऽनुसारि वा; तस्माद् आर्यत्वमप्येतैर्जातिरूपत्वमापितम्।
इत्थं मिथ्याऽभिमानेन कल्पितार्यत्वजातिभिः जन्मनैव कृतार्थैस्तैस्तृणवन्मन्यते जगत्।
"अस्म्यहं जन्मनैवार्यो ब्राह्मणो द्विज एव वा, त्वं तु शूद्रोऽसि जात्यैव म्लेच्छो दस्युरनार्यकः,
यस्माल्लम्बशिराश्चाऽहं दीर्घकायो महोदरः, उन्नसः श्वेतवर्णाङ्गः, तस्मादार्योऽस्मि जातितः;
त्वं तु ह्रस्वशिरो-ग्रीवः कृष्णश्चिपिटनासिकः, इत्यनार्यः प्रकृत्यैव निर्मितोऽसि जगत्कृता"
इत्येषा धारणा तेषां, येषां स्वोत्प्रेक्षितार्यता; यद्यप्याचारतस्ते स्युः स्वयं म्लेच्छतमाऽधमाः।
एवम्भूतमनोवृत्त्या, मिथोजात्यपमानजात् लोकविग्रहतो, विश्वस्वर्गोऽपि नरकायते।
"मानुषा मानुषानेव दासभावेन भुञ्जते; वध-बन्ध-निरोधेन खादयन्ति परस्परम्"
तस्माद् हेया जनैरेषा मनोवृत्तिरनर्थसूः, मिथ्याजातिमदोद्भूता विश्वशान्तिविनाशिनी।
आर्या-ऽनार्यप्रभेदस्तु वस्तुतो नाऽस्ति जातितः, न कोऽप्यार्योऽथवाऽनार्यो जन्मनेह प्रजायते।
कस्याश्चित्सर्वशो जातेर्नाऽतः स्याज्जन्मनार्यता; एतदेव मनुः प्राह-पुमान् "आर्यो भवेद्गुणैः"
तस्मादार्यमनार्यं वा "कर्मभिः स्वैर्विभावयेत्" न जात्या, न च रङ्गेन, नोच्चनासादिदर्शनैः।
गुण-कर्माऽनुसारेण म्लेच्छा आर्याश्च मानवाः सर्वदेशेषु सन्त्येव, संभवेयुश्च सर्वदा।
पूर्वमप्यार्यसन्ताना बहवोऽनार्यतां गताः; वैश्वामित्रा हि दस्यूनां भूयिष्ठा ब्राह्मणे श्रुताः।
"यदोस्तु यादवा जाताः, तुर्वशोर्यवनाः स्मृताः, द्रुह्योः सुतास्तु वै भोजा, अनोस्तु म्लेच्छजातयः"
"नरिष्यतः शकाः पुत्रा" इत्येवं गुणकर्मभिः, भारतीयार्यसन्ताना भूयांसोऽनार्यतां गताः।
"शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः वृषलत्वं गता लोके ब्राह्मणाऽदर्शनेन च।
पौण्ड्रकाश्चौड्र-द्रविडाः काम्बोजा यवनाः शकाः, पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः"
आर्यम्मन्यास्तु ये चाऽद्य भारतीया द्विजातयः, तेषु शूद्रत्वभूयस्त्वं साक्षादेवाऽत्र दृश्यते।
जात्यार्यत्वाऽभिमानेन चोद्धतेष्विंग्लिशादिषु पाश्चात्त्येष्वपि भूयःसु दृश्यते कर्म राक्षसम्।
कथं साङ्खिकरूपेण तज्जातीनामशेषतः, आर्यत्वमनुमन्येत चक्षुष्मानप्रमत्तकः?
तस्मात्सद्भिरुपेक्ष्येत जन्म-देशादिमूलकः आर्या-ऽनार्यत्वशास्त्रार्थो व्यर्थोऽनर्थप्रवर्त्तकः।२४।
इत्यार्षे मनुभाष्येऽस्मिन् इन्दिरारमणोच्चिते वेदसारोच्चयप्राये पूर्वखण्डः समाप्यते।

---

"कैलासो, हिमवांश्चैव दक्षिणे ( मेरोः ) वर्षपर्वतौ,
पूर्व-पश्चिमगावेतावर्णवान्तरुपस्थितौ" [ ब्रह्माण्डपु० ]
"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाऽधिराजः
पूर्वापरौ तोयनिधी वगाह्य, स्थितः पृथिव्या इव मानदण्डः" ( कु० सं० )
'रघौ' चतुर्थसर्गेऽपि रघुदिग्विजयप्रसङ्गेन वर्णितेषु देशेषु हिमवत उत्तरगिरित्वमेव द्योतितम्।

## सङ्केत-विवरण-परिशिष्टम्

[ ग्रन्थसङ्केतसूच्यां ४०-तम-पृष्ठतोऽनुशिष्टम् ]

| सङ्केतः | विवरणम् |
| --- | --- |

अ० ब्रा०—अद्भुत-ब्राह्मणं [ वेबर-ए०-सम्पादितम् ]
अ० सि०—अद्वैतसिद्धिः [मधुसूदनसरस्वतीकृता]
अधि० मा०—अधिकरणरत्नमाला, परमार्थदर्शनीया, सवार्तिका [ श्रीरामावतारशर्म्म–एम. ए. साहित्याचार्य-प्रणीता ].
अ० रा०—अध्यात्म-रामायणम्.
अन० रा०—अनर्घराघवं [ मुरारेः ].
अ० गी०—अनुगीता [ महाभारत आश्वमेधिकेऽन्त्यम् ( अ० १६—९२ ) अनुगीतापर्व ].
आ० पु०—आत्मपुराणम्.
आदिपु०—आदिपुराणम् [ वैयासिकम् ]
आदित्यपु०—आदित्यपुराणम्.
आ० वि० सु०—आर्यविद्यासुधाकरः [ यज्ञेश्वरभट्टस्य ].
ईशान० प०—ईशानशिवगुरुदेवपद्धतिः.
ई० प्र०—ईश्वर-प्रत्यभिज्ञा [ उत्पलदेव कृता ].
ई० प्र० वि०—ईश्वरप्रत्यभिज्ञा-'विमर्शिनी' [अभिनवगुप्त-विरचिता].
उ० गी०—उत्तरगीता, गौडपाद-भाष्य-संवलिता.
उप० सू०—उपग्रन्थसूत्रं [श्रीसत्यव्रत-सम्पादितम्].
ऋ० खि०—ऋग्वेद-खिलप्रकरणम्.
क० वि०—कलिविलासः [ तान्त्रिक-टेक्स्ट्स् ].
क० पु०; कल्किपु०—कल्किपुराणम्.
का० ब्रा०—काठक-ब्राह्मणम्.
का० पु०—कालिका-पुराणम्.
का० ख०—काशीखण्डः.
कि० अर्जु०; किरात०—किरातार्जुनीयम् [भारवेः]
कु० सं०—कुमारसंभवम्.
कु० चू०—कुलचूडामणि-तन्त्रम्.
कु० तं०—कुलार्णवतन्त्रम्.
के० क०—केदारकल्पः [ रुद्रयामलान्तर्गतः ].
के० ख०—केदारखण्डः.
क्र० दी०—क्रमदीपिका [श्रीकेशवकाश्मीरिभट्टकृता]
क्र० दी० वि०—क्रमदीपिका-विवरणं [ गोविन्दभट्टीयम् ].
ग० गी०—गणेशगीता.
ग० गी० टी०; ग० गी० नी०—गणेशगीताया नीलकण्ठी टीका.
गणेश० पु०—गणेशपुराणम्.
गो० गृ० प०—गोभिलीयगृह्यपरिशिष्टविशेषः [ श्रीसत्यव्रत-सामश्रमि-सम्पादितः ].
गौ० तं०—गौतमीय-तन्त्रम् [वामनशास्त्रिसम्पादितं].
ज़े० अ०—ज़ेन्द-अवेस्ता, Zend avesta (The Sacred Books of the East. Vol. IV.)
जै० त० भा०—जैन-तर्कभाषा [ पं० श्रीसुखलालजी-संघवी-सम्पादिता ].
जै० पु०—जैमिनि-पुराणम् [ उपपुराणम् ].
त० त्र०—तत्त्वत्रयं [ लोकाचार्यकृतम् ].
त० प्र०—तत्त्वप्रकाशः [ श्रीभोजदेवकृतः ].
त० प्रदी०—तत्त्वप्रदीपिका [ चित्सुखी ].
त० मु० क०—तत्त्वमुक्ताकलापः [श्रीवेङ्कटनाथस्य]
त० शे०—तत्त्वशेखरः [ श्रीलोकाचार्यकृतः ].
त० सू०—तत्त्वार्थसूत्रं [वाचक-उमास्वातिप्रणीतम्].
त० सू० वि०—तत्त्वार्थसूत्रविवेचनं [ पं० श्रीसुखलालजी-संघवी-शास्त्रिकृतं हिन्दीवाङ्मयम् ].
त० अभि०—तन्त्राऽभिधानम् [ तान्त्रिक-टेक्स्ट्स् ].
त० स०—तन्त्र-समुच्चयः [ त. गणपतिशास्त्रिसम्पादितः ].
ता० तं; तारा०—तारातन्त्रं [ श्रीगिरीशचन्द्रसङ्कलितम् ].
ता० ब्रा० भा०; ता०सा०—ताण्ड्य-ब्राह्मण-सायणभाष्यम्.
तै० वा०; तै० उ० वा०; तै० भा० वा०—तैत्तिरीयोपनिषद्भाष्यवार्तिकम् [श्रीसुरेश्वराचार्यप्रणीतम्]
द० च०—दत्तकचन्द्रिका [ कुबेरस्य ].
द० मी०—दत्तक-मीमांसा [ नन्दपण्डितकृता ].
द० प्र०—'दर्शन का प्रयोजन' हिन्दी वाङ्मयं, श्रद्धेय-डॉ०-श्रीभगवद्दास-प्रणीतम्.
दा० त०—दायतत्त्वम्. [ स्मृतितत्त्वे रघुनन्दनस्य ].
दा० भा०—दायभागः [ जीमूतवाहनस्य ].
दा० नि०—दायभाग-निर्णयः [भट्टोजिदीक्षितकृतः]

| सङ्केतः | विवरणम् |
|---|---|

दी० त० प्र०—दीक्षातत्त्वप्रकाशिका.

दी० क०—दीपकलिका [ धर्मकोश-निर्दिष्टा ].

ध० को०—धर्म-कोशः; व्यवहारकाण्डं [ श्रीलक्ष्मणशास्त्रिजोशीसम्पादितः ].

न० म० मा०—नयमणि-माला [ ब्रह्मसूत्र-श्रीकण्ठभाष्याऽधिकरणमाला ] अप्पयदीक्षित-विरचिता.

ना० म० भा०—नारदीय-मनुसंहिता-भाष्यम्.

न्या० मु०—न्यायसिद्धान्तमुक्तावली.

न्या० सि०—न्यायसिद्धाञ्जनम् [ वेंकटनाथस्य ].

न्या० परि०—न्यायपरिशुद्धिः ,, ,,

प० द०—पञ्चदशी, ( विद्यारण्यकृता )

प० ब्रा०—पञ्चविंशब्राह्मणम्.

पञ्च० सू०—पञ्चविधसूत्रं [ श्रीहितव्रतशर्म-सं० ].

पि० सू०—पिङ्गल-छन्दःसूत्रम्.

पू० द०—पूर्णप्रज्ञदर्शनम्.

पू० द० भा०—पूर्णप्रज्ञदर्शनभाष्यम् [आनन्दतीर्थकृतं 'माध्वभाष्यं' नाम].

प्र० हृ०—प्रत्यभिज्ञाहृदयम् [ क्षेमराजकृतम् ].

प्र० च०—प्रबोधचन्द्रोदयं [ नाटकम् ].

बा० भा०—बालभारतम् [अमरचन्द्रसूरिविरचितम्]

बा० रा०—बालरामायणम् [ श्रीराजशेखरप्रणीतम् ].

बृ० दे०—बृहद्देवता edited by A. A. Macdonell.

बृ० वा० सा०—बृहदारण्यकवार्तिकसारः [श्रीविद्यारण्यस्वामिनः ].

बो० सा०—बोधसारः.

ब्र० सू० भा०—ब्रह्मसूत्र-भास्कर-भाष्यम्.

ब्र० सू० मा०—ब्रह्मसूत्र-माध्वभाष्यम् [ आनन्दतीर्थप्रणीतम् ].

ब्र० सू० अणु०—ब्रह्मसूत्रस्य 'अणुभाष्यं' [ बल्लभीयं ].

ब्र० सू० नि०—ब्रह्मसूत्र-निम्बार्कभाष्यम्.

ब्र० सू० वि०—ब्रह्मसूत्र-'विज्ञानामृत-भाष्यं'

ब्र० सू० श्रीक०—ब्रह्मसूत्र-श्रीकण्ठभाष्यम्[शैवम्]

ब्र० श्रीक० टी०—ब्रह्मसूत्र-श्रीकण्ठभाष्यटीका—'शिवार्कमणिदीपिका' [ अप्पयदीक्षित-कृता ]

भ० श०—भर्तृहरिशतकम्.

भा० म०—भागवत-मञ्जरी.

भा० मा०—भागवतमाहात्म्यम्.

म० म०—महार्थमञ्जरी [ महेश्वरानन्दकृता ].

म० भाग०—महाभागवतं [ देवीपुराणम् ].

म० भा० ता० नि०—महाभारततात्पर्यनिर्णयः.

म० भा० ता० प्र०—महाभारततात्पर्यप्रकाशः.

म० भा० अनु०—महाभारताऽनुक्रमणिका.

म० स्तो०—महिम्नस्तोत्रं-श्रीपुष्पदन्तविरचितम्.

म० स्तो० म०—महिम्नस्तोत्र-मधुसूदनी [ शिवविष्ण्वर्थ-व्याख्या ].

रा० गी०—रामगीता [वासिष्ठ-तत्त्वसारायणान्तर्गता]

वि० प०—विनयपत्रिका, श्रीतुलसीदासविरचिता.

वे० र०—'वेदान्त-रहस्य' [श्रीहीरेन्द्रनाथदत्तकृतस्य वंगवाङ्मयस्य हिन्द्यनुवादः, श्रीलल्लीप्रसादपाण्डेयकृतः].

शि० गी०—शिवगीता.

शि० भा०—शिवभारतम्.

श्री० वा०—श्रीभाष्य-वार्तिकम्.

The Sacred Books of the East.

Indian Antiquities.

एशियाटिक-रिसर्चेज़.

ए० वी० सेण्टः—'ईशूटेडिक-हेनरम्'.

## मानवार्षभाष्योत्तमर्णीभूताः ( एतद्भाष्योपजीव्याः ) आर्षभावोत्तेजकाः, श्रद्धेय-श्रीभगवद्दास-( डॉ॰ श्रीभगवान्दास )-प्रणीताः कतिपये ग्रन्थाः

The Science of the Self.

The Science of Peace.

The Science of Social Organisation, or the Laws of Manu.

The Science of the Emotions.

Ancient Versus Modern Scientific Socialism.

The Principles of Sanatana Vaidika Dharma, or the Science of Religion.

The Essential Unity of All Religions.

World War and Its Only Cure—World Order and World Religion.

# कृतज्ञता-प्रकाशनम्

यस्मिन्महाजनप्रत्तं 'श्रद्धेय'पदमादरात्, 'श्रत्' सत्यं, तस्य सन्धानाद्यत्नतोऽन्वर्थतामगात्;
यस्मै काशी-प्रयागस्थविश्वविद्यालयावुभौ आचार्य-(डाक्टर)-पदवीं दत्त्वा गुणज्ञत्वमवापतुः;
सेवायज्ञैश्च, सद्ग्रन्थैः, सन्तानैश्च महोदयैः, देवाद्यृणत्रयोद्धारः कृतो येनाश्रमक्रमात्;
हिन्दूकालेज-निर्माणे, तस्य सञ्चालने च, यः कर्त्तृष्वन्यतमो गण्यः साक्षात्तादर्थ्यकर्मकृत्;
हिन्दूकालेजमूलस्य विश्वविद्यालयस्य च निर्माणे भूयसी चापि यस्यासीदुपकारिता;
प्रख्यात-यशसः, कीर्त्या चाऽमरत्वमुपेयुषः शिवप्रसाद-गुप्तस्य, दाक्षिण्यात्स्थापितस्य च
विख्यात-कर्मणः काशीविद्यापीठस्य चाऽभवत् जन्म-स्थेमादि यद्ध्यान-प्रेरणा-ऽऽशीः-प्रयत्नतः;
दुष्कालेऽस्मिन्यथाशक्ति मनोराज्ञाऽनुवर्तिना येन, मानववंश्यानां सत्सेवार्थमहर्निशं,
घुष्यते मानवो धर्मः प्रायेणाऽर्धशताब्दतः सद्वादेषु निबन्धेषु लेखेषु वक्तृतासु च;
सर्वेषां सम्प्रदायानामविरोधः प्रदर्श्यते अध्यात्मविद्यया येन, सर्वधर्मसमन्वयात्;
'कर्त्तव्यस्याऽधिकारस्य वृत्तेश्च सुव्यवस्थया सम्यग्व्यूढे समाजे स्याद् योगक्षेमो, न चाऽन्यथा',
इत्थं निश्चित्य यो भूयः संस्कर्त्तुं यतते भृशम् आर्षं वर्णाश्रमव्यूहं गुणकर्माऽनुसारतः;
येनांग्लवाङ्मये हिन्दी-भाषायाञ्च विनिर्मिताः सद्ग्रन्था बहवः, केचित्संस्कृतेऽपि प्रकाशिताः,
आमनोरार्षशास्त्रार्थ-तत्त्वं संगृह्य च स्फुटं प्रथयन्तीह सज्ज्ञानं चतुर्वर्गस्य साधनम्;
"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः"
एतन्मनूक्तमद्याऽपि यः कर्त्तुमिव सार्थकं सन्दर्शयति सद्वृत्तं स्वग्रन्थैर्विश्वमानवान्;
विद्या-कर्मवयोवृद्धोऽध्यात्मविद्यापरायणः, समन्वयैकबुद्धिश्च, विरोधपरिहारकः,
सर्वसंवादसद्भावो, लोकसंग्रहणैषणः, श्रद्धेयो भगवान्दासः काश्यां वसति यः सुधीः;
तन्नियोगान्मनोः शास्त्रे चतुर्वर्गाऽनुशासने, आर्षवाक्योच्चयप्रायं भाष्यमेतद्विनिर्मितं,
मनुसन्तानसेवार्थं; तस्मादाद्यः प्रजापतिः स्वप्रजावत्सलोऽनेन प्रीयतां भगवान्मनुः॥
बिड़ला-युगलकिशोरः पुण्यैरस्याऽभिवर्द्धतां भूयः; सत्कर्मसु प्रवर्त्तेन्नर्थं वर्षाः शतं जीयात्।

---

## काशी विद्यापीठ द्वारा प्रकाशित पुस्तकें

१—मनुपादाऽनुक्रमणी ( सम्पादक—डाक्टर श्रीभगवान् दास, तथा श्रीराजाराम शास्त्री ) मूल्यम् ॥)

२—मानव-धर्मसारः ( डॉ॰ श्रीभगवद्दास-(भगवानूदास)-कृतः ) मूल्यम् ॥)

३—योग-सूत्र-भाष्यकोषः [ योगसूत्राणां, व्यासभाष्यस्य च, अशेष-शब्दानां वर्णक्रमादनुक्रमणी, आंग्ल-विवरण-संवलिता, डॉ॰ श्रीभगवद्दासकृता ] मूल्यम् ३)

4—The Essential Unity of All Religions, by Dr. Bhagavan Das.

5—World War and Its Only Cure—World Order and World Religion.

६—हिन्दी-शब्द-संग्रह (हिन्दी भाषा का एक बहुमूल्य कोष) नूतन और परिवर्द्धित संस्करण (सम्पादक—श्री मुकुन्दीलाल श्रीवास्तव तथा श्री राजवल्लभ सहाय,) मूल्य अजिल्द का ३॥), सजिल्द का ४)

७—अफलातूनकी सामाजिक व्यवस्था (लेखक—श्रीगोपाल दामोदर तामस्कर एम॰ ए॰, एल॰ टी॰) सुन्दर मोटे कागजपर छपी सवा दो सौ पृष्ठोंकी सजिल्द पुस्तकका मूल्य १।=)

८—अंग्रेज़ जातिका इतिहास (संशोधित और परिवर्धित द्वितीय संस्करण) लेखक—श्री गंगाप्रसादजी, एम॰ ए॰ पृष्ठसंख्या ४५७, मूल्य सजिल्दका २॥)

९—पश्चिमी यूरोप ( दूसरा भाग ) अनेक मानचित्रों और अनुक्रमणिकायुक्त सजिल्द पुस्तकका मूल्य २)

१०—ग्रीस और रोमके महापुरुष ( अनु॰—श्री मुकुन्दीलाल श्रीवास्तव तथा श्री राजवल्लभ सहाय; भूमिका-लेखक—डॉ॰ भगवानूदासजी ) सात सौ पृष्ठोंकी सजिल्द और सचित्र पुस्तकका मूल्य ३॥)

११—हिन्दू भारतका उत्कर्ष, या राजपूतोंका आरम्भिक इतिहास ( लेखक—श्री चिन्तामणि विनायक वैद्य, एम॰ ए॰, एल॰ एल॰ बी॰ ) मूल्य ३॥)

१२—मीर क़ासिम ( लेखक—श्री हरिहरनाथ शास्त्री; भूमिका-लेखक—अध्यापक बेनीप्रसाद एम॰ ए॰, डी॰ एस-सी॰ ) सुन्दर जिल्ददार पुस्तकका मूल्य १॥)

१३—इब्नबतूताकी भारतयात्रा, या चौदहवीं शताब्दीका भारत. पृ॰ ४००, मूल्य अजिल्दका २), सजिल्दका २।=)

१४—जापान-रहस्य ( लेखक—श्री चमनलाल ) मूल्य १॥)

१५—समाजवाद ( लेखक—माननीय श्री सम्पूर्णानन्द, शिक्षामन्त्री, युक्तप्रान्त ) मूल्य १॥), सजिल्दका २)

१६—साम्राज्यवाद ( भूमिका-लेखक—पं॰ जवाहरलाल नेहरू, रचयिता—श्री मुकुन्दीलाल श्रीवास्तव ) सात सुन्दर मानचित्रोंवाली ४५० पृष्ठोंकी सजिल्द पुस्तकका मूल्य २॥)

१७—संसारकी समाज-क्रान्ति ( लेखक—डॉ॰ जी॰ एस॰ खेर, पी-एच॰ डी॰ ) मूल्य १॥)

१८—ट्राटस्कीकी जीवनी (बोलशेविक क्रांतिका मनोरंजक इतिहास) मूल्य अजिल्दका १॥=)-सजिल्दका २)

१९—राष्ट्रीय शिक्षाका इतिहास ( लेखक—श्री कन्हैयालाल शास्त्री ) बढ़िया ग्लेज़ कागजपर छपी है। मूल्य २)

२०—भारतका सरकारीऋण; मूल्य १=)

२१—सौन्दर्यविज्ञान ( भूमिका-लेखक—श्री सम्पूर्णानन्द, रचयिता—श्री हरिवंश सिंह शास्त्री ) मूल्य ॥)

२२—अभिधर्मकोशः ( सम्पादक—श्री राहुल सांकृत्यायन ) [ बौद्ध दर्शनका अपूर्व ग्रन्थ ] मूल्य ५)

२३—Cosmogony in Indian Thought ( लेखक—श्री सम्पूर्णानन्द मूल्य ॥) )

---